**श्रीध० लिम्पन्त्य** इति। अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादि कुर्वत्यः । काश्च काश्चित् कृष्णतुष्टयर्थं कर्म तदासक्तमनसामन्यथा कृतमपि फलत्येवेति द्योतयन्नाह- व्यत्यस्तेति। स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्रापानि वस्त्राभरणानि यासां ताः ॥ ६, ७ ॥

न च कृष्णाकृष्टमनसां विघ्ना: प्रभवन्तीत्याह- **ता वार्यमाणा** इति॥ ८ ॥

**अन्तरिति**। न लब्धो विनिर्गमो याभिस्ताः प्रागपि तद्भावनायुक्ता: तदा नितरां दध्युरित्यर्थः॥ ९॥

किञ्च, तदानीम् एवं[1] तं परमात्मानं कृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरित्याह-**दुस्सहेति श्लोकद्वयेन**। **तमिति**। ननु कथं जहुः परमात्मेति ज्ञानाभावादित्याह-जारबुद्ध्यापीति। न हि वस्तुशक्ति र्बुद्धिमपेक्षते अन्यथा मत्वाऽपि पीतामृतवदिति भावः। ननु तथाऽपि[2] प्रारब्धकर्मबन्धने सति कथं जहुः? तत्राऽऽह-सद्यः प्रक्षीणबन्धना इति। ननु कथं भोगमन्तरेण प्रारब्धं[3] कर्म क्षीणम्? भोगेनैव सद्यः क्षीणमित्याह-दुस्सहेति। दुस्सहो यः प्रेष्ठस्य[4] विरहः तेन यः[5] तीव्रः तापः तेन धुतानि गतान्यशुभानि पापानि[6] यासां ताः। तदप्राप्तिपरमदुःखभोगेन पापं क्षीणमित्यर्थः। तथा ध्यानेन प्राप्ता अच्युतस्य आश्लेषेण या निर्वृतिः परमसुखभोगः तया क्षीणं मङ्गलं पुण्यबन्धनं यासां ताः। अतो ध्यानेन परमात्मप्राप्तेः तत्कालसुखदुःखाभ्याञ्च निश्शेषकर्मक्षयात् गुणमयं देहं जहुः॥ १०,११ ॥

---

1. B.P एव 2 B.J तदपि 3 P. V. ° ब्धकर्म 4. B.J प्रेष्ठवि० 5 B.J omit यः 6 B.J omit पापानि

**वीर०** काश्चि त्परिवेषयन्त्यः पत्यपत्यादीन् भोजनार्थं निवेश्य अन्नादिकं पात्रेषु ददत्यः तत्परिवेषणं हित्वा, अपरास्तु शिशून् पयः पाययन्त्यः तद्धित्वा, अन्यास्तु पतीन् शुश्रूषन्त्यः उपचरन्त्यः शुश्रूषां हित्वा, परास्तु अश्नन्त्यो भाजनं पात्रमपास्य हित्वा॥ ६ ॥

एवमन्या लेपनमार्जनाञ्जनादीन् कुर्वाणा लेपनादीन् विहाय, लोचने अञ्जन्त्य इत्यन्वयः। काश्चित्तु व्यत्यस्तानि विपरीतस्थानानि वस्त्राभरणानि[1] यासां तथाभूताः सत्यः[2] कृष्णसमीप माययुः॥ ७ ॥

एवं गच्छन्त्यः पित्रादिभिः वार्यमाणा अपि कृष्णगृहीतमानसत्वात् काश्चि न्न न्यवर्तन्त गृहानाजग्मुः॥ ८ ॥

काश्चिद्गोप्यस्तु अन्तर्गृहगताः पतिभिरन्तर्गृहनिरुद्धा इत्यर्थः। अत एव न लब्धो निर्गमो यासां ताः, प्रागपि कृष्णभावनायुक्ताः तदा नितरां कृष्णं दध्युः ध्यातवत्यः। कथम्भूताः? मीलिते लोचने यामि स्तथाभूताः॥ ९ ॥

एवं ध्यातवतीनां प्रारब्धकर्मक्षयपूर्वकभगवत्प्राप्तिमाह-**दुस्सहेति** द्वाभ्याम्। दुःखेनाऽपि सोढु मशक्यो यः प्रियतमस्य कृष्णस्य विरहस्तेन य स्तीव्रतापः तेन धुताः निरस्ता अशुभाः प्रारब्धपापकर्माणि यासां, ध्यानेन प्राप्तो यः अच्युतस्याऽऽश्लेषः तेन या निर्वृतिरानन्दः तया क्षीणानि मङ्गलानि प्रारब्धपुण्या[3] यासां ताः॥ १० ॥

एवं सद्य एव प्रक्षीणानि बन्धनानि संसृतिबन्धनिमित्तानि पुण्यपापात्मकानि यासां ताः, परमात्मानं कृष्णमेव जारबुद्ध्याऽपि सङ्गताः सत्त्वादिगुणप्रचुरं देहं तत्यजुः। एवकाराऽपिशब्दाभ्यां कोऽपि भावो भगवदनन्यविषयो मुक्त्येऽवकल्पत इत्यभिप्रेतम्॥ ११॥

---

1. B, वस्त्राण्याभ०2. T.W omit सत्यः 3. B तथाभूताः।

**विज०** परिवेषयन्त्यः भुञ्जानानां पात्रेषु भोक्तव्यं विनिक्षिपन्त्यः तत्परिवेषणं, पाययन्त्यः, स्तनादिकमिति शेषः। पादमर्दनादिना शुश्रूषन्त्यः॥ ६ ॥

प्रमृजन्त्यः शरीरोन्मार्जनं कुर्वन्त्यः, स्थानसम्मार्जनं वा। अञ्जन्त्यो मष्यादिना, मुखकण्ठादिषु आभरणादि दधानाः कण्ठादिषु वस्त्राणि वसाना इति व्यत्यस्तवस्त्राभरणाः॥ ७ ॥

वार्यमाणा निरोध्यमाना गोविन्देनाऽपहृता आकृष्टा आत्मानो मनांसि यासां तास्तथा॥ ८ ॥

अलब्धविनिर्गमाः न लब्धं विनिर्गमनं याभि स्तास्तथा। तस्य कृष्णस्य भावनया भक्तिसंस्कारेण युक्ताः॥ ९ ॥

काश्चन ताः स्त्रियः गुणमयं सत्त्वादिगुणविकृतदेहं जहुरित्यन्वयः। अयं देहत्यागः संसारिण इव न, किन्तु मुच्यमानस्येव इत्याह- सद्य इति। बन्धनध्वंसोऽपि प्रारब्धपुण्यपापप्रणाशेन दृष्टत्वात्. तत्राऽपि तथैवेत्याह **दुस्सहेति**। दुस्सहः सोढु मशक्यः प्रेष्ठस्य कृष्णस्य विरहः सांसारिको वियोगः तेनोत्पन्नस्तीव्रतापः समुत्कटज्वरानुभवः, तेन धुताशुभाः निरस्तपापाः ध्यानेन प्राप्तः अच्युतस्याऽऽश्लेषः ध्यानप्राप्ताऽच्युताश्लेषः, तेन उद्भूतया निर्वृत्या स्वरूपानन्दाविर्भावविलक्षणया क्षीणानि प्रारब्धानि मङ्गलानि पुण्यानि याभिस्तास्तथा॥ १० ॥

अनारब्धफलानां कुतो निवृत्तिरिति तत्राऽऽह-**तमिति**। जार उपपतिः पत्युरप्यधिक इति सम्भावितः। तं कृष्णं परमात्मानं नारायणमेव सङ्गताः सम्यग्ज्ञातवत्यः । अनेन बिम्बभूतहरिज्ञानेन प्रारब्धप्राणाश इति सूचितम्॥ ११ ॥

## [1-]राजोवाच[-1]

**कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने।**
**गुणप्रवाहोपरमस्तासां गुणधियां कथम्?॥ १२ ॥**

## श्रीशुक उवाच

**उक्तं पुरस्तादेतत्ते चैद्य स्सिद्धिं यथा गतः।**
**द्विषन्नपि हृषीकेशं किमुताऽधोक्षजप्रियाः॥ १३ ॥**

**नृणां निःश्रेयसार्थाय व्यक्ति र्भगवतो नृप[2]!।**
**अव्यक्तस्या[3]ऽप्रमेयस्य निर्गुणस्य गुणात्मनः॥ १४ ॥**

**कामं क्रोधं भयं [4]स्नेहमैक्यं[4] सौहृद मेव च[5]।**
**नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते॥ १५ ॥**

---

1- -1 B परीक्षिदुवाच 2. V भुवि 3. B, G, J, V °य° 4- -4 M, Ma मोहं मैत्रीं 5. M, Ma वा।

**श्रीध०** ननु, यथा पतिपुत्रादीनां वस्तुतो ब्रह्मत्वेऽपि न तद्भजनान्मोक्षः , तथा बुद्ध्यभावात्। एवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्सङ्गतिः कथं मोक्षहेतुरिति शङ्कते - **कृष्णं विदुरिति।** परं केवलं कान्तं कमनीयम्॥ १२ ॥

परिहरति - **उक्तमिति।** अयं भावः - जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतम्। अतो न तत्र बुद्ध्यपेक्षेति। ॥ १३ ॥

ननु देही कथमनावृतः स्यात्, अत आह - **नृणामिति।** गुणात्मनो गुणनियन्तुः भगवत एवंरूपा अभिव्यक्तिः; अतो न देहिसादृश्यं अत्र वक्तुं युज्यत इति भावः ॥ १४ ॥

अतो यथाकथञ्चित् तदासक्तिः मुक्तिकारणमित्याह- **काममिति।** ऐक्यं सम्बन्धम्। सौहृदं भक्तिम्, [1-]विदधतः कुर्वन्तः[-1] ॥ १५ ॥

---

1- -1 B, J Omit.

**वीर०** तदेव तन्मुखेन विशदयितुं पृच्छति राजा **कृष्णमिति।** हे मुने! कृष्णं परं केवलं कान्तमेव विदुः, न तु परब्रह्मत्वेन, तासाम् एवम्भूतानां गुणधियां विषयासक्तधियां गोपीनां कथं गुणप्रवाहस्य सत्त्वादिगुणमयदेहपरम्परायाः उपरमो निश्शेषक्षयः ॥ १२ ॥

अस्य प्रश्नस्योत्तरं सप्तम एव अभिहितमित्याह- **उक्तं पुरस्तादेतत्ते** इति। एतदत्र वक्तव्यमुत्तरं तुभ्यं पुरस्तात् सप्तमस्कन्ध एवोक्तं "गोप्यः कामाद्भयात्कंसः (भाग० 7-1-30) इत्यादिना। कोऽपि भगवत्यनन्यभावो मुक्तिहेतुरेव इत्युक्तमेवेत्यर्थः। उक्तेऽप्युत्तरे कैमुत्यनयेनोपपत्तिमाह - चैद्य इत्यादिना। चैद्यश्शिशुपालो हृषीकेशं द्विषन्नपि यथा [1]सिद्धिं पुनर्द्वाःस्थतां गत,ः यथेति निदर्शनं वा। द्विषन्नपि सिद्धिं गतः, किमु तस्य प्रिया गोप्यस्सिद्धिं ययुरिति॥ १३ ॥

किञ्च, केनापि स्वानन्यविषयकनिरन्तरभावेन भावितमानसाननुग्रहीतुमवतीर्णे कामाद्यन्यतमं भावं ये कुर्वन्ति न तेषां मुक्तौ विस्मयः कार्य इत्याह - **नृणामिति।** अव्ययस्य जीववत्कर्मायत्तोत्पत्त्यादिविकाररहितस्य अप्रमेयस्य अपरिच्छिन्नस्य वाङ्मनसागोचरस्य वा, सत्त्वादिप्राकृतगुणरहितस्यानन्तकल्याणगुणाश्रयस्य भगवतो भुवि लोके व्यक्तिः नृणां निःश्रेयसार्थायैव। अव्ययस्येत्यादिविशेषणैः एवम्भूतस्याप्युत्पत्त्यादिविकाराश्रयत्वादिवद्भावं केवलं लोकानुग्रहार्थमेवेत्युक्तम्, तद्व्यक्तेः जीवव्यक्ति-वैलक्षण्यं च ॥ १४ ॥

नित्यं कामाद्यन्यतमं भावं ये हरौ विदधतः कुर्वाणाः, वर्तन्त इति शेषः । कामादि विदधज्जनसंसृतिबन्धहारिणि प्रीतिं[2] कुर्वन्तीत्यर्थः । ते तन्मयतां यान्ति। स्वार्थेऽत्र मयट्। तत्प्रकारतां तत्साधर्म्यं यान्तीत्यर्थः । हीति प्रसिद्धि: चैद्यादिषु द्योत्यते। प्राचुर्ये वाऽत्र मयट्। ये कामाद्यन्यतमं कुर्वन्ति ते ततः तज्ज्ञान प्रचुरतां यान्ति तद्द्वारा मुक्ता भवन्तीत्यर्थः। कामादीन्कुर्वाणा नित्यं तत्सौन्दर्यचिन्ताप्राचुर्येण कामादीनपि विस्मृत्य मुक्ता भवन्तीति भावः । शिशुपालो हि कृष्णसौन्दर्यचिन्ताप्राचुर्येण द्वेषं विस्मृतवान्। तत्र कामो मन्मथप्रयुक्ताभिलाषविशेषः । ऐक्यमेककुलप्रसूतत्वानुसन्धानम्। स्नेहस्सख्यम्। सौहृदं भक्तिः । "गोप्यः कामात्" (भाग 7-1-30) इत्यादिस्थानप्रामाण्यात्। हरौ इत्यनेन कामाद्यन्यतमभावविधायिजनबन्धहरत्वरूप वस्तुस्वभावोऽभिप्रेतः । अज्ञानेनापि स्पृष्टस्याऽग्नेर्दाहकत्ववत्। तत्र वस्तुस्वभावात् मुक्तिप्रतिबन्धकप्रारब्धकर्मक्षयाभावः उद्देशान्तर[3]प्रतिपत्तिश्च। अत एव उद्देशान्तर[4]प्रतिपत्तेः दशाननस्य मोक्षाभावः । गोपीनां तु दुस्सहेत्यादिना प्रारब्धकर्मक्षयोक्तेः[5] भगवद्व्यतिरेकेणोद्देश्यान्तराभावेन तत्प्रतिपत्त्यभावाच्च वस्तुस्वभावायत्तो मोक्ष उपपन्नः। वस्तुतस्तु गोपीनामपि गोवर्धनोद्धरणादिभिरीश्वरत्वज्ञानमस्त्येव॥ १५ ॥

---

1. B. प्रायः 2. T. W. Omit प्रीतिं 3. B, K. °श्या° 4 B.K °श्या° 5. B. °क्तिः

**विज॰** जारबुद्ध्याऽपि सङ्गता इत्युक्तं तस्य तात्पर्यमजानन्निव राजा पृच्छति - **कृष्णमिति**। गोप्यः कृष्णं परं कान्तं जारं पतिं विदुः । ब्रह्मतया श्रुतिशतगीतपरब्रह्मत्वेन न विदुः अनधिकारित्वात्। या एवंविधास्तासां गुणेषु विषयेषु धीर्बुद्धिः यासां तास्तथा। गुणप्रवाहोपरमः संसारप्रवाहनिवृत्तिः कथं सम्भाव्यते? निवृत्तिमार्गलभ्या प्रवृत्तिमार्गेण कथं संसारनिवृत्तिः स्यादिति "उत्तिष्ठत जाग्रत" (कठ. उ. 3-14) इति श्रुतेः ॥ १२ ॥

भक्त्या सन्ततमधुमथनमहिमसंस्मरणसमुदितसंविदा निवृत्तियोग्या मुक्तिः , न तु कामादिना। तेन स्वर्गादि प्राप्तिरेव-"कृष्णकामाः तदा गोप्यः त्यक्त्वा देहं दिवं गताः " (स्कान्दे) इत्यादिस्मृतेः, इत्यभिप्रायं हृदि कृत्वा अर्थवादस्याऽपि स्वार्थसाधनसमर्थकत्वात्तेन चोद्यं परिहरति शुकः - **उक्तमिति**। द्वे मुक्ती ह्यानन्दानुभवलक्षणा, नित्यदुःखानुभवलक्षणेति। ते उभे अपि सिद्धिशब्दोक्ते तत्र यथाशास्त्रविहितमङ्गीकर्तव्यमिति। तदुक्तम् - (अथोदकत्वेन) "सदा द्वेषिणामधरं तमः इति मुक्तिशब्दोदितं चैद्यप्रभृतौ" (स्कान्दे) इत्यादि लोकसङ्ग्रहार्थं किमुत अधोक्षजप्रिया इति। अन्यथा "कामस्त्वशुभकृच्चापि भक्त्या विष्णोः प्रसादकृत्" (स्कान्दे) इत्यादिनोदाहरिष्यत्। जगत्प्रपितामहे विष्णौ जारबुद्धिः कथं घटते इति चेत्, अत एव जारबुद्ध्याऽपीत्यत्र अपिपदेन जारबुद्धिं गर्हयामास, स्त्रीणां जारे हि प्रेष्ठत्वबुद्धिः सापि न घटत इति चेत् न। सर्वेषां हरौ प्रेष्ठत्वबुद्धेः अविगाहतया वृत्तेः "तदेतत्प्रेय:" ( बृह. उ. 1-4-8) इति श्रुतेः। अयं भावः कुतोऽवगत इति अविगाहतया चे न्न। जगत्प्रपितामहे जारबुद्धिः न युक्ता इत्याचार्यवचनात् ॥ १३ ॥

ननु आचार्यस्यापि यथास्थितग्रन्थाभिप्रायकथनं विना वक्रगत्या व्याख्याने कोऽभिप्राय इत्याशङ्क्योत्तरग्रन्थानुकूल्यादित्याशयेनाह- **नृणामिति**। व्यक्तिरवतारः । अन्यथाऽवतारो न घटत इत्यत्र हेतुमाह-अव्यक्तस्येति। ज्ञानादिगुणात्मनः भगवतो व्यक्तिर्न केवलमसुरनिर्हरणार्थाय किन्तु मोक्षलक्षणपुरुषार्थाय। पुरुषार्थस्तु भगवत्प्रसादेन स्यात्, स च भक्त्या। सा हरेः यथा स्वरूपविज्ञानेन। विज्ञानं च गुणोत्कर्ष ज्ञानपूर्वकम्, न त्वन्यथा। "गुणोत्कर्षज्ञातरि यादृशी स्यात्" इति श्रुतेः । तस्मात् द्वेषादिना नित्यसुखानन्दानुभवलक्षणमोक्षो वर्षानन्त्येनापि न स्यात्॥ १४ ॥

नन्वेवं तर्हि द्वेषादिना कां सिद्धिमाप्नोतीति तत्राऽह **काममिति।** ये हरौ कामादिकं विदधत उपासते ते तन्मयतां यान्ति कामाद्यात्मतामाप्नुवन्ति न तु भगवन्मयताम्। नित्यस्तिमितानन्दवारिधेः हरेः कामाद्यभावात् हिशब्दो "यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" ॥ (भ. गी 8-6)इत्यादि स्मृतिं सूचयति। अवधारणार्थो वा "कामिनः कामित्वमेव क्रोधिनः क्रोधित्वमेव" इत्यादि। तदुक्तम् - "विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः । द्वेषिणश्च हरौ नित्यं द्वेषिणस्तमसि स्थिता:" (स्कान्दे) इति विशेषद्योतको वा। । तदुक्तम्- "भक्त्या हि नित्यकामित्वं न तु भक्तिं विना भवेत्। अन्तः कान्ततया वाऽपि मुक्तिर्भक्तिमतां हरौ" (पाद्मे) इति च। मनुष्यविशेषवद्देवविशेषद्योतनार्थोऽपि भवति। "स्नेहभक्ताः सदा देवाः कामित्वेनाप्सरस्त्रियः (पाद्मे) इत्यादेः। भक्त्यैव मोक्षो नान्येन साधनेन। इममर्थविशेषं च वक्ति। "भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित्" (भद्रिकायाम्) इत्यतः कामभक्त्या मोक्षं स्त्रीणां वक्ति- "कामभक्त्याऽप्सरस्स्त्रीणाम्" इत्यादेः। उपासनायाः विशेषोऽस्तीति सूचयति। "उपास्यः श्वशुरत्वेन देवः स्त्रीणां जनार्दनः " (भद्रिकायाम्) इत्यादेः । तत्तद्योग्यतोपासनामन्तरेण मुक्तिः कस्यापि न स्यादिति इमं व्याचष्टे। "योग्योपासां विना नैवं मोक्षः कस्यापि सेत्स्यति" (भद्रिकायाम्) इत्यादेः । पतित्वपितृत्वादि विशेषं सूचयति। "पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च" (वाराहे) इत्यादेः । गुरुत्वविशेषमपि ब्रूते "गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः " (वाराहे) इत्यादेः सर्वेषामपि ज्ञानेन गुरुत्वं ब्रह्मणः, उपास्यदैवत्वं विष्णोरिति इमं, चाह- "गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णुः सनातनः " (वाराहे) इत्यादेः ॥ १५ ॥

**न चैवं विस्मयः कार्यो[1] भवता भगवत्यजे।**
**योगे[2]श्वरेश्वरे कृष्णे यत एतद्विमुच्यते॥ १६ ॥**

**ता दृष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषितः।**
**[3]अवदत् वदतां श्रेष्ठो वाचः [4]पेशैर्विमोहयन्॥ १७ ॥**

**[5]श्रीभगवानुवाच[-5]**

**स्वागतं वो महाभागाः प्रियं किं करवाणि[6] वः।**
**व्रजस्यानामयं कच्चिद् ब्रूताऽऽगमनकारणम्॥ १८ ॥**

**रजन्येषा घोररूपा घो[7]रसत्त्वनिषेविता।**
**प्रतियात व्रजं नेह स्थेयं स्त्रीभिस्सुमध्यमाः॥ १९ ॥**

**मातरः पितरः पुत्रा भ्रातरः पतयश्च वः।**
**विचिन्वन्ति[8] ह्यपश्यन्तो मा कृ[9]द्ध्वं बन्धुसाध्वसम्॥ २० ॥**

---

1. K.T.W. योऽधोक्षजे भ० 2. V. ०गी० 3. K.W. उवाच 4. M.Ma ०पा० 5- -5 M.Ma श्रीकृष्ण उवाच 6.K.T.W. ०म 7. V. क्रू० 8 M.Ma ०न्तो 9. B.G.J. कृध्वं

**श्रीध०** न च भगवतोऽयमतिभार इत्याह - **न चैवमिति।** यतः श्रीकृष्णादेतत्स्थावरादिकमपि विमुच्यते॥ १६ ॥

प्रस्तुतमाह-**ता** इति। वाचःपेशैः वाग्विलासैः ॥ १७ ॥

**स्वागतमिति।** सर्वाः ससम्भ्रममागता विलोक्य सभयमिवाऽऽह - **व्रजस्येति॥** १८ ॥

लज्जया मन्दहसिता[1] आलक्ष्याऽऽह **रजनीति॥** १९ ॥

किञ्च, **मातर** इति। विचिन्वन्ति मृगयन्ते। बन्धूनां साध्वसं भयं[2] कृच्छ्रं मा कृढ्वं मा कुरुतेत्यर्थः ॥२०॥

---

1. B.J ०तमाल० 2. B.J. Omit भयं

**वीर० न चेति।** एवमेवं सति कृष्णे[1] विषये न भवता विस्मयः कार्यः। विस्मयासम्भावनां द्योतयितुं विशिनष्टि। अधोक्षजे अधःकृता अनितरविषया अक्षजा इन्द्रियवृत्तयो यस्मात् तस्मिन् स्वविषयककामक्रोधादिमज्जनेन्द्रियाणाम् अन्यविषयानाभिमुख्यावहे तथा कर्तुं समर्थानामपीश्वरे नियन्तरि कामादिप्रयुक्तसमाधिनिर्वाहकजनेश्वरे वा। भगवति तदुपयुक्तज्ञानादिगुणाश्रये यतः कृष्णाद्धेतोः एतत्स्थावरादिकमपि विमुच्यते, तस्मिन्॥ १६ ॥

प्रस्तुतमाह - **ता दृष्ट्वेति।** ताः आगताः गोपीः दृष्ट्वा वदतां निपुणवादिनां मध्ये श्रेष्ठो भगवान् वाग्विलासैः विमोहयन् उवाच तन्मनःपरीक्षार्थमाहेत्यर्थः॥ १७ ॥

उक्तमेवाह - **स्वागत**मित्यादिना "[2-]इति विप्रियम्" (भाग 10.29.28) इत्यतः प्राक्तनेन[-2]। मत्प्रेष्ठानां वो भाग्यं वाचामगोचरमित्यभिप्रायेण सम्बोधयति महाभागा इति। वो युष्माकमागतमागमनं शोभनं जातम्। किन्तु व्रजस्थानामयमाधिव्याधिराहित्यं[3] इति प्रश्नः । तत्कच्चिदस्मदिष्टमित्यर्थः । यद्यनामयं तर्ह्यागमनकारणं ब्रूत। तदनामयापादनादन्यद्वः किं प्रियं करवाम॥ १८ ॥

लज्जाप्रयुक्तमन्दहासमालक्ष्याऽऽह - **रजनीति।** एषा रात्रिः स्वयं भयङ्करा, भयङ्करैः सत्त्वैः व्यालव्याघ्रादिभिः निषेविता सञ्चरिता च। अतो व्रजं प्रति गच्छत। हे सुमध्यमाः! इहाऽस्मिन् वने रात्रौ स्त्रीभिः न स्थातुं युक्तम्॥ १९ ॥

किञ्च मात्रादयो युष्मानपश्यन्तो मृगयेयुः । अतो बन्धूनां मात्रादीनां साध्वसं भयं मा कृढ्वं नोत्पादयत॥ २० ॥

---

1. B. कृष्ण 2- -2 T.W. Omit 3. B. adds किल

**विज०** यथा हिशब्दोपक्षिप्ता बहवो विशेषाः शास्त्रान्तरसिद्धाः सन्ति तस्मात् भगवति विस्मयो न कार्य इत्युपसंहरति- **न चैवमिति।** विस्मयः आश्चर्यबुद्धिः भगवताऽप्येवमकारि, किमुत अस्माभिः इति दर्पो वा। "चित्रे दर्पे च विस्मयः" (वैज.को. 7-1-65) इति यादवः। भगवत्यैश्वर्यादिगुणसामग्रीमतीत्ययं हेतुरौत्पत्तिकलक्षण इत्याह अज इति। न जायते

इत्यजः। सौभर्यादियोगेश्वरा अपि योगबलेनाऽतिमानुषं कुर्वन्ति, किमुत तदीश्वरोऽयमिति भावेनाऽऽह — योगेश्वरेश्वर इति। कृष्णविषयः प्रश्नः, परिहारोऽन्यविषय इवेयते। अतः कथं संशयनिस्तार इति शङ्कानिरासाभिप्रायेणाह कृष्ण इति। हेत्वन्तरमाह यत इति। यतो यस्मात् कृष्णादेतज्जग द्विमुच्यते संसारमुक्तं भवति। "यस्य प्रसादात् परमार्तिरूपादस्मात्संसारान्मुच्यते नाऽपरेण" इति श्रुतेः ॥ १६ ॥

परीक्षित्प्रश्नं परिहृत्य बुभुत्सितकथाशेषं वक्ति - **ता** इति। वाचः परिभाषणादुदितैः पाशैः स्नेहलक्षणैः वदतां व्यक्तवाचां कवीनां श्रेष्ठः प्रशस्ततमः ॥ १७ ॥

वः किं प्रियं करवाणि? युष्माकं मयाऽभीष्टं कर्तव्यं, तत्किम्? तदभीष्टं जानन्नपि अज्ञ इव पृच्छति व्रजस्येति। कच्चिद्व्रजस्य स्थानं अनामयं, न आमयो रोगो यस्मिन् तत्तथा॥ १८ ॥

ननु यत्किञ्चिन्निमित्तमपेक्षते भवदागमनम्, अन्यथाऽस्यामवस्थायां नोचितमिति तत्राह — **रजनीति**। घोरसत्त्वा राक्षसादयः ॥ १९ ॥

विचिन्वन्तः मृगयन्तः कृद्ध्वं कुरुध्वं साध्वसं भयम्॥ २० ॥

**दृष्टं वनं कुसुमितं राकेशकररञ्जितम्।**
**यमुनानिललीलैज[1]त्तरुपल्लवशोभितम्॥ २१ ॥**

**तद्यात मा चिरं घोषं[2] शुश्रूषध्वं पतीन्सतीः ।**
**क्रन्दन्ति बाला वत्साश्च तान्पाययत दुह्यत॥ २२ ॥**

**अथवा मदभिस्नेहाद्भवत्यो[3] यन्त्रिताशयाः ।**
**आगता ह्युपपन्नं तत्[4] प्रीयन्ते मयि[5] जन्तवः ॥ २३ ॥**

**भर्तृ[6]शुश्रूषणं स्त्रीणां परो[7] धर्मो ह्यमायया।**
**तद्बन्धूनां च कल्याण्यः[8] प्रजानां चानुपोषणम्॥ २४ ॥**

**दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा।**
**पतिः स्त्रीभि र्न हातव्यो लोकेप्सुभि[9]रपातकी॥ २५ ॥**

---

1. M.Ma नीलैज० 2 BG.J.K. M.Ma गोष्ठं 3. M.Ma °न्त्यो० 4. B.G.J. वः 5. M.Ma मम 6. B.G.J.M.Ma भर्तुः 7. K.T.W. परमो; V. पर 8. M.Ma कल्याणं 9. M.Ma शुचि°

**श्रीध०** ईषत्प्रणयकोपेनान्यतो विलोकयन्तीः प्रत्याह - **दृष्टमिति**। राकेशस्य पूर्णचन्द्रस्य करैः रञ्जितम्। यमुनास्पर्शिनोऽनिलस्य लीला मन्दगतिः तया एजन्तः कम्पमानाः तरूणां पल्लवास्तैः शोभितम्॥ २१ ॥

**तदिति**। सतीः हे सत्यः ॥ २२ ॥

संरम्भक्षुभितदृष्टीः प्रत्याह-**अथवेति**। यन्त्रिताशया वशीकृतचित्ताः । उपपन्नं युक्तम्। प्रीयन्ते प्रीता भवन्ति॥ २३ ॥

दृष्टादृष्टभयप्रदर्शनेन निवर्तयति भर्त्रित्यादि[1] श्लोकत्रयेण॥ २४, २५ ॥

---

1 BJ भर्तुरित्यादि

**वीर०** एवं प्रत्याचक्षाण ईषत्प्रणयकोपान्विता विलोकयन्तीः प्रत्याह - **दृष्टमिति**। राकेशस्य पूर्णचन्द्रस्य करैः रञ्जितम्, यमुनास्पर्शिनोऽनिलस्य लीलया मन्दगत्या कम्पमानैः तरूणां पल्लवैः शोभितं वनं दृष्टं हि॥ २१ ॥

अतोऽत्राऽऽगमनप्रयोजन जातमति, [1]व्रजं प्रति[1] यात, चिरं विलम्बं मा [2]कुरुत। गत्वा किं विधेयं, तत्राऽऽह - सतीः हे सत्यः ! विभक्तिव्यत्ययः आर्षः । पतिव्रतानामेवंविधमागमनमनुचितमिति साक्षेपं [3]सम्बोधनम्। पतीन् शुश्रूषध्वं परिचरत। किञ्च, वत्साः गवामिति शेषः । बालाश्च क्रन्दन्ति क्रन्देयुः । अतः तान् वत्सान् बालांश्च पाययत, क्षीरमिति शेषः। दुह्यत, गा इति शेषः । तदर्थं गा दुह्यतेत्यर्थः ॥ २२॥

ननु त्वयि स्नेहाद्वयमागताः , अतः कथमेवं वक्तुमर्हसीत्यत्राऽऽह- **अथवेति**। मयि प्रेमप्रकर्षाद्वशीकृतचित्ता यदि यूयमागताः तर्हि इदमागमनमुपपन्नं युक्तमेव। कुतः ? हि यस्मात् जन्तवो मयि प्रीयन्ते मयि प्रीतियुक्ता भवन्ति। सर्वान्तर्यामिणि सर्वसुहृदि मयि सर्वजन्तुसाधारण पीतिमात्रं भवतीनामप्यविरुद्धम्॥ २३ ॥

न केवलं त्वदभिस्नेहमात्रादागताः , किन्तु त्वया सह रन्तुमिच्छयेत्यत्र दृष्टादृष्टभयप्रदर्शनेन प्रत्याचष्टे - भर्तृशुश्रूषणमिति त्रिभिः । यदमायया निष्कापटयेन भर्तुः शुश्रूषणं परिचरणं तदेव स्त्रीणां परो मा यस्मात्तथाविधः धर्मः । तथा हे कल्याण्यः! । तस्य भर्तुः बन्धूना पितृभ्रात्रादीनां, प्रजानां स्वापत्यानां च यथार्हं शुश्रूषणम् [4]अनुपोषणं[4] च परमो धर्मः ॥ २४ ॥

**दुश्शील** इति। दुश्शीलो दुराचाररतः दुर्भगः [5]कुरूपः , वृद्धो जरितो रोगोऽस्यास्तीति तथा, न विद्यते धनं वित्तं यस्य, तथाभूतोऽपि पतिः लोकेप्सुभिः पुण्यलोकानिच्छन्तीभिः [6]स्त्रीभिः न त्याज्यः । महापातकसंयुक्तस्तु हातव्य इत्यभिप्रायेण विशिनष्टि- अपातकीति। यद्वा [7]एवंविधोऽपि पतिरपातकी स्त्रीणां निर्दुष्ट एव। अतः सं न हातव्य इत्यर्थः। लोकेप्सुभिरित्यनेन अदृष्टं भयं प्रदर्शितम्॥ २५ ॥

---

1- -1 K.T.W Omit 2 B कार्ष्ट 3 B सम्बोधयति 4- -4 B Omits 5 B ०पी 6 TW Omit- स्त्रीभिः 7 B भूतोऽपि

**विज०** राकेशश्चन्द्रः यमुनाया अनिलेन वायुना निर्भयेन एजद्भिः कम्पमानैः तरुपल्लवैः शोभितं, यद्वा यमुनानिलानीत नीरैणैजद्भिः ॥ २१ ॥

ततो युष्मानपश्यन्तो बन्धवो भयमवाप्नुवन्ति यस्मात् तस्मात् सतीः सत्यः ॥ २२ ॥

"ब्रूताऽऽगमनकारणम्" (भाग 10-29-18) इत्ययुक्तमुक्तं रागमूलत्वात्प्रवृत्तेरिति तत्राह **अथवेति**। मदभिस्नेहात् मदधिकरणस्नेहात् यन्त्रिताशयाः बद्धान्तःकरणाः नियमिताभिप्राया वा। हि यस्मात् तस्मात् आगमनमुपपन्नं, तत्कथमत्राऽऽह - प्रीयन्त इति। मम प्रीयमाणस्य सतः सर्वेऽपि प्रीणन्ति न चेत् तवेत्यन्वयव्यतिरेकाभ्यां प्रमितत्वात्॥ २३ ॥

किञ्च, अन्यदेकं शास्त्रविहितं वदामीत्याशयेनाऽऽह- **भर्तुरिति**। स्त्रीणाममायया अवञ्चनया भर्तुः पत्युः शुश्रूषणं धर्मो हि लोकवेदसिद्धः, भर्तरि सन्निहितो नारायण इति बुद्ध्या शुश्रूषणं परो धर्मो हि यस्मात्तस्मात् तस्य भर्तुः बन्धूनां कल्याणं च श्रेय इति च। न केवलं तद्बन्धूनां श्रेयः अपि तु प्रजानां सन्ततिलक्षणानां च अनुपोषणं समृद्धिकरणंच भवतीत्यर्थः ॥ २४ ॥

पत्युः दौश्शील्यादिदोषसद्भावेऽपि स्त्रीभिस्तत्त्यागो न विहित इत्याह - **दुश्शील** इति। दुश्शीलः कलहादिशीलसम्पन्नः दुर्भगो निर्वीर्यः कान्तिविहीनो वा। वृद्धः गतवयाः जडः स्वकार्यमूढः रोगी भग्नाङ्गोऽल्पाङ्गः कुष्ठादिव्याधिपीडितो वा, ब्रह्महत्यादि दोषसद्भावे कथं न हातव्य इति तत्राह- लोक इति। दौश्शील्यादिदोषसद्भावेऽपि ब्रह्महत्यादिपञ्चमहापातकरहितश्चेत् पतिः शुचिरेव न हातव्योऽन्यथा विदोष इति भावेन लोक इत्युक्तम्॥ २५ ॥

**अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्।**
**जुगुप्सितं हि[1] सर्वत्र ह्यौपपत्यं[2] कुलस्त्रियाः[3] ॥ २६ ॥**

**श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्।**
**न तथा सन्निकर्षेण, प्रतियात ततो गृहान्॥ २७ ॥**

**श्रीशुक उवाच**

**इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम्।**
**विषण्णा भग्नसङ्कल्पा श्चिन्तामापु र्दुरत्ययाम्॥ २८ ॥**

**[4-]कृत्वा मुखान्यव शुचः श्वसनेन[-4] शुष्यद्बिम्बाधराणि चरणेन भुवं[5] लिखन्त्यः ।**
**[6]अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः[7] स्म तूष्णीम्॥ २९ ॥**

**प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ।**
**नेत्रे विमृज्य रुदितोपहते स्म किञ्चित् संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३० ॥**

---

1. BG JM.Ma V. च 2. BG.J.M Ma औ० 3. M.Ma V. °यः 4- -4 M Ma. न्यक्कृत्यवक्त्र वनजान्यतिताप 5 M Ma मही 6. M.Ma आ० 7. B.G.J.M.Ma °राः स्म

**श्रीध० अस्वर्ग्यमिति।** फल्गु तुच्छम्। कृच्छ्रं दुस्सम्पाद्यम्। औपपत्यं जारसौख्यम्॥ २६ ॥

किञ्च, **श्रवणादिति॥** २७, २८ ॥

[1]चिन्तां प्राप्तानां स्थितिमाह- **कृत्वेति।** शुचः शोकादुद्गतेन श्वसनेन शुष्यन्तो [2]बिम्बफलसदृशा अधरा[-2] येषु मुखेषु तानि अव अवाञ्चि कृत्वा [3]तथाऽङ्गुष्ठेन महीं लिखन्त्यः । तथा गृहीतकज्जलैरश्रुभिः कुचकुङ्कुमानि क्षालयन्त्यः तूष्णीं स्थिताः । यत [4-]उरुदुःखस्य भरो भारो[-4] यासां ताः ॥ २९ ॥

किञ्च **प्रेष्ठमिति।** किञ्चित्संरम्भेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म। संरम्भे कारणं-प्रेष्ठमित्यादि। [5-]प्रियेतरमिव वैरिणमिव[-5] प्रतिभाषमाणं प्रत्याचक्षाणम्॥ ३० ॥

---

1. P.V. चिन्ता० 2- -2 P.V. बिम्बाधराः 3. P.V. अ० 4- -4 P.V. उरुः दुःखभरो 5- -5 B J. Omit

**वीर०** अथ दृष्टभयप्रदर्शनेन प्रत्याचष्टे **अस्वर्ग्यमिति।** कुलस्त्रियाः औपपत्यं भर्तरि सत्यसति वा योऽन्यः सङ्गम्यते स उपपतिः तस्य कर्म औपपत्यं तत्सङ्गमनम्। "पत्यन्तपुरोहितादिभ्यो यक्" (अष्टा 5-1-128) इति कर्मणि यक्। उपपतिमत्त्वम्। तदस्वर्ग्यमसुखकरमयशस्करं तुच्छं दुःखावहं भयावहं च सर्वत्र निन्दितं च॥ २६ ॥

"पतिं विश्वस्य" (मना-उ 9-3) "एष भूताधिपतिः " (बृह उ: 4-4-22) "माता पिता भ्राता निवासश्शरणं सुहृद्गतिश्च नारायणः" (सुबा.उ. 6-2-1) इत्युक्तरीत्या नित्यो निरुपाधिकश्च पतिर्बन्धुश्च त्वमेव इत्याशयवतीः आलक्ष्याऽऽह- **श्रवणादिति।** न च, गोपीनामेवंविधाभिप्रायसङ्गतिः तस्मिन् तासां परब्रह्मत्वज्ञानाभावादिति शङ्क्यम्। अनुपदं वक्ष्यमाणैरेव तासां वचोभिः "प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा" (भाग 10-29-32) "यर्ह्यम्बुजाक्ष तव पादतलं रमायाः" (भाग. 10-29-36) "श्रीर्यत्पदाम्बुजरजश्चकमे" (भाग. 10-29-37) इत्यादिभिरेव तज्ज्ञानाविष्कारात्। मयि नित्ये निरुपाधिके पत्यौ बन्धौ च मयि श्रवणादिभिः यादृशो भावो भवति, न तथा सन्निकर्षेणाऽङ्गसङ्गेन भवति। अतो गृहान्प्रति यात गच्छत। भावः प्रीत्यात्मकोऽभिप्रायविशेषः । तत्र श्रवणं मत्स्वरूपगुणवि[1-]भूत्यादि[-1]श्रवणम्। कीर्तनं गुणनामकीर्तनम्। ध्यानं तत्पूर्वकमनुचिन्तनम्। तद्दर्शनं तत्पूर्वकसाक्षात्कारः ॥ २७ ॥

इत्थं स्वमनोरथाननुगुणं गोविन्दस्य वचो निशम्य गोप्यो भग्नः सङ्कल्पो यासां ताः । अत एव विषण्णा दुःखिताः । अत एव अनवधिकां चिन्तां प्रापुः ॥ २८ ॥

चिन्तां प्राप्तानां स्थितिमाह- कृत्वेति। अव अवाक् मुखानि कृत्वा। कथम्भूतानि? [1]शुचः शोकात् यः श्वसनः सोष्णो निश्श्वासमारुतः तेन शुष्यन्तो बिम्बफलवदधरा येषु तथाभूतानि तथा वामचरणाङ्गुष्ठेन महीं लिखन्त्यः तथा गृहीतानि कज्जलानि यैस्तैरश्रुभिः कुचयोः कुङ्कुमानि क्षालयन्त्यः उरुः दुःखभारो यासां तथाभूताः तूष्णीं स्थिता बभूवुः ॥ २९ ॥

किञ्च प्रेष्ठमिति। ततः शनैः रुदितेन रोदनेनोपहते शोकाश्रुपूर्णतया लुप्तदर्शनि नेत्रे विमृज्य [2]प्रमृज्य किञ्चित् [3]संरम्भेण कोपावेशेन गद्गदाः गिरो यासां तथाभूताः अनुरक्ताः तस्मिन् [4]अनुरागयुक्ताः, अत एव तदर्थं [5]कृष्णार्थमिव[5] त्यक्ताः सर्वे मनोरथा याभिः तथाभूताः गोप्यः कृष्णमूचुः । कथम्भूतम्? प्रेष्ठं तथाऽपि प्रियेतरं वैरिणमिव भाषमाणम्। इदं विशेषणद्वयं संरम्भकारणम्॥ ३० ॥

---

1- -1 T.W. Omit 2 T.W. Omit प्रमृज्य 3. T.W. Omit संरम्भेण 4. B. adds एव 5- -5 T.W. Omit

**विज०** कामस्य पुरुषार्थत्वेन पतिदोषेण तदप्राप्त्या जन्मनो निष्प्रयोजनत्वमापन्नमिति प्रकारान्तरेण साफल्यमापादनीयं हीति। विपक्षे बाधकमाह **अस्वर्ग्यमिति**। चशब्दः एवार्थे। उपपतिः पत्युः प्रतिनिधिः उपपतिः जारः तत्सम्बन्धि कर्म ग्राम्यलक्षणं तत्कुलस्त्रियः सर्वत्र पत्युरुत्तमाधममध्यमेषु पुरुषेषु जुगुप्सितमेवेत्यन्वयः । कथं तदुच्यते? अस्वर्ग्यं स्वर्गविरोध्येव न भवति। किन्तु अयशस्यं इहामुत्र च दुष्कीर्तिकरं च। तथापि न बहुलं, फल्गु तुच्छफलं अल्पकालविषयत्वात् कृच्छ्रं कष्टं "स्यात्कष्टं कृच्छ्रम्" (अम.को.1-235) इत्यमरः। कृच्छ्रं कर्तुः श्रमसाधनं वा मरणादिभयजनकम्॥ २६॥

ननु तव मुख्यभर्तृत्वात् त्वत्सेवनं जारसेवनवदस्वर्ग्यं न भवति। किन्तु पतिसेवनात् मुख्यसाधनमेव स्यादित्याशङ्क्य, सत्यम्, तथापि मच्छ्रवणादिना युष्माकं मयि भक्तिः स्यात् न तथा मम सन्निकर्षनिषेवणेन यस्मात्तस्मात् भवतीभिः गृहानवाप्य मयि भक्तिः कर्तव्येत्याह **श्रवणादिति**॥ २७ ॥

"प्रतियात व्रजं, नेह स्थेयं स्त्रीभिः सुमध्यमाः!" इति गोविन्दभाषितम् अधुना विप्रियं पश्चाद्विशेषतः प्रियं चिन्तां मनसि दुःखचर्यां विचारं "चिन्ता चार्चिक्ययोश्चर्चा" (वैज. को 6-2-12) इति॥ २८ ॥

दुःखं लक्षयितुमाह -न्यक्कृत्येति। वक्त्रवनजानि मुखकमलानि न्यक्कृत्य अधः कृत्वा बिम्बफलतुल्यान्यधराणि बिम्बाधराणि अन्तर्गतशोकाम्यतितापेन शुष्यन्ति बिम्बाधराणि येषु तानि तथा। "कामबाणप्रविद्धाङ्गा स्विन्नयोनिवराङ्गना। पादाङ्गुष्ठनखेनाधोवदना लिखती क्षितिम्" इति कामशास्त्रात्प्रसिद्धभावं दर्शयति चरणेनेत्यादिना। उपात्तमषिभिरङ्गीकृताञ्जनैरास्रैः बाष्पैः उरूणां दुःखानां भारो यासां तास्तथा स्म कृष्णवाक्याभिप्रायं संस्मृत्य "कामस्य दहनास्त्रैस्तु दग्धाङ्गोत्पादिताश्रुभिः। नेत्रद्वारेण निर्याति दुःखमन्तर्गतं स्त्रियाः " इति॥ २९ ॥

**तदर्थे कृष्णकृते विनिवर्तितः सर्वकामो यासां तास्तथा। रुदितेन रोदनेन उपहते क्लिष्टे संरम्भेण प्रणयकोपेन** गद्गदपदं स्खलदक्षरपदं यासां तास्तथा॥ ३० ॥

## गोप्य ऊचुः

मैवं विभोऽर्हति भवान्गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलम्।
प्रा[1]प्ता भ[2]जस्व दुरवग्रह! मा त्यजाऽस्मान् देवो यथाऽऽदिपुरुषो भजतो[3] मुमुक्षून्॥ ३१ ॥

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग! स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम्।
अ[4]स्त्वेवमेत दुपदेशपदे[4] त्वयीशे[5] प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा॥ ३२ ॥

कुर्वन्ति हि त्वयि रतिं कुशलास्स्व आत्मन् नि[6]त्यप्रिये पतिसुतादिभिरार्तिदैः किम्?
तन्नः प्रसीद व[7]रदेश्वर[7]! मा स्म छिन्द्या आशां धृ[8]तां त्वयि चि[9]रादरविन्दनेत्र॥ ३३ ॥

चित्तं सु[10]खेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये।
पादौ पदं न चलतस्तव पादमूलात् यामः कथं व्रजमहो[11] करवाम किं वा॥ ३४ ॥

सिञ्चाऽङ्ग! नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम्।
नो चेद्वयं विरहजाग्न्युपयुक्तदेहाः ध्यानेन याम पदयोः पदवीं सखे! ते॥ ३५ ॥

---

1. B,G,J,V भक्ताः M, Ma भक्त्या 2. M, Ma भजेम 3. B,G,J °ते 4--4 M, Ma अस्त्येव तत्तदपि देववरे 5. K, T, W श ! 6. M, Ma नित्याऽप्रियैः ; V नित्यं प्रियैः 7--7 B, G,J,V परमेश्वर ! 8. B,G,J, भृ° 9.M,Ma परामर° 10.M,Ma सखे ! न 11. B,G,J,K,M,Ma °थो

**श्रीध° मेति**। नृशंसं क्रूरम्। हे दुरवग्रह! स्वच्छन्द! त[1]व पादमूलं भक्ताः सेवितवतीरस्मान् भजस्व, त्वं[2] मा त्यजेति॥ ३१ ॥

**यदिति**। अपि च। यदुक्तं 'पत्यपत्य' इत्यादि त्वया, धर्मविदेति सोपहासमेवम्, एतदुपदेशानां पदे विषये त्वय्येवाऽस्तु। उपदेशपदत्वे हेतुः ईश इति। विविदिषा वाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । ईशत्वे हेतुः - आत्मा किल भवानिति। "भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश" इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवाऽस्तु इ[3]त्यर्थः । अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सति अस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु, न तु त्वं धर्मोपदेष्टा किन्तु भवानात्मेति। अथवा, यदुक्तम् ए[4]तदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सति एवम्, काक्का नैवमित्यर्थः । यतः तनुभृतां त्वमात्मा फलरूप इति। यद्वा, यदुक्तं 'पत्यादिशु[5]श्रूषणं धर्मः' इति एवमेतत्त्वय्येवाऽस्तु। कुतः उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने। कुतः ? ईशे। ईश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नाम ना[6]स्ति। अन्यत्समानम्। अलमतिविस्तरेण ॥ ३२ ॥

एतत्सदाचारेण द्रढयन्त्यः प्रार्थयन्ते - कुर्वन्तीति[1] कुशलाः शास्त्रनिपुणाः। तथा च शास्त्रम् - "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं च लोकः " इत्यादि[7- -7] ॥ ३३ ॥

किञ्च 'प्रतियात, इति यदुक्तं तदशक्यं, त्वयैव चित्तादीनामपहृतत्वादित्याहुः। **चित्तमिति**। यदस्माकं चित्तम् एतावन्तं कालं सुखेन गृहेषु निर्विशति, तत्त्वयाऽपहृतम्। करावपि यौ गृह[8]कृत्ये निर्विशतस्तावपि। सुखात्मना त्वयेति वा॥ ३४ ॥

**सिञ्चेति**। अतोऽङ्ग! हे कृष्ण! नोऽस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिञ्च। नो चेद्वयं तावत्, एकोऽग्निः, तथा विरहाज्जनिष्यते योऽग्निः तेन चोपयुक्तदेहा दग्ध शरीरा योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयाम॥ ३५ ॥

---

1. P, V Omit तव 2. B, J Omit त्वं 3. P, V °इति भावः 4. P,V तदुप० 5 B.J add न हि 6. B, J इति 7- -7 B, J इति 8.B, J °ह

**वीर०** उक्तिमेवाऽऽह- मैवमित्येकादशभिः । हे विभो! इत्थं नृ[1]शंसं क्रूरं यथा[2] तथा वक्तुं भवान्नार्हति, हे दुरवग्रह! स्वच्छन्द! सर्वान् विषयान्. भोग्यान् पत्यपत्यादीन् विहाय 'सर्वनिगमम्' इति पाठे सर्वेषां पत्यादीनां निगममाज्ञां सन्त्यज्य तव पादमूलं प्राप्ताः। 'भक्ता' इति पाठे भजमानाः अतोऽस्मान्न त्यज, किन्तु भजस्व अनुकूलो भव, मुमुक्षून्भजमानान् भक्तान् आदिपुरुषो भगवान् यथा न त्यजति, तद्वत्॥ ३१ ॥

यदुक्तं "[3]भर्तृशुश्रूषणं स्त्रीणाम्" (भाग 10.29 24) इत्यादि, तदनूद्य तत्रोत्तरमाहुः - **यदिति**। अङ्ग! हे कृष्ण! धर्मविदा त्वया पत्यादीनामनुवृत्तिरेव स्त्रीणां स्वधर्मः स्वानुरूपो धर्मः इत्युक्तम्। तदेतत्त्वय्युपदेशपदे सति, पद्यते गम्यते इति पदम्, त्वय्युपदेशार्थं गन्तव्ये सति एवमेवाऽस्तु। उपदेशपदत्वाभिप्रायेण सम्बोधयन्ति ईशेति। 'ईशे' इति सप्तम्यन्तोऽपि पाठः , न वयमुपदेशार्थं प्राप्ताः । किन्तु त्वत्सङ्गतय इति भावः । तदेवाऽऽविश्रब्धुः, भवान् प्रेष्ठः प्रियतम इति बुद्ध्या प्राप्ता इत्यर्थः । प्रेष्ठत्वे हेतुः - तनुभृतामात्मा निरुपाधिकबन्धुश्च। किलेति श्रौतीं प्रसिद्धिं द्योतयन्ति। यद्वा, यत् पत्यपत्याद्यनुवृत्तिरेव स्त्रीणां स्वधर्म इत्यु[4]क्तम्। तदेतत्पत्यादिषु कर्तव्यमनुवर्तन मुपदेशपदे, उपदिश्यते इत्युपदेशः, अनुवर्तनीयत्वेनोपदेष्टव्यपत्यादिरूपेणावस्थिते साक्षात्त्वय्येवाऽस्तु, पत्यादीन् प्रीतिविषयान् बन्धूंश्चापादयति तदन्तरात्मतया तद्रूपेणावस्थिते[-4] नित्यनिरुपाधिकपत्यादिरूपे सर्वविधबन्धौ त्वय्येव तेषु कर्तव्यत्वेन उपदिष्टाऽनुवृत्तिरस्तु इत्यर्थः । तदेवाभिप्रेत्य विशिंषन्ति प्रेष्ठ इत्यादिना॥ ३२ ॥

अत्र सदाचारं प्रमाणयन्त्यो विज्ञापयन्ति - **कुर्वन्तीति**। कुशलाः शास्त्रनिपुणाः आत्मन् आत्मनि अत एव नित्यप्रिये त्वय्येव रतिं कुर्वन्ति, नित्यप्रिय इत्यनेन सोपाधिकपत्यदीनामनित्यप्रियत्वं सूचितम्। तथा चोक्तम् - "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते" (विष्णु पु: 2-6-48) "तस्माद्दुःखात्मकं

नास्ति न च किञ्चित्सुखात्मकम्" (विष्णु. पु. 2-6-49) इति। कुशला इत्यनेन "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय" (बृह.उ. 2-4-5) इत्यादि शास्त्रार्थाभिज्ञत्वमभिप्रेतम्। यत एवम्, अतोऽन्ततो दुःखदैः सोपाधिकैः पत्यादिभिः किम्? न किञ्चित्साध्यमस्तीति भावः । तत्तस्मान्नोऽस्माकं प्रसीद। त्वयि चिरं धृतां बद्धामस्माकमाशां मा स्म च्छिन्द्याः विफलं न कुर्याः, आत्मपर्यन्तवदान्यस्य तव इदमाशाच्छेदनमनुचितमित्यभिप्रायेण वरदेश्वरेति सम्बोधनम्। त्वत्सौन्दर्यावलोकनेन त्वय्येवाऽऽशा धृतेत्यभिप्रायेण सम्बोधयन्त्यरविन्दनेत्रेति॥ ३३॥

यदुक्तं "तद्यात मा चिरं गोष्ठम्" (भाग 10-29-22) इत्यादि, तत्रोत्तरमाहुः - **चित्तमिति।** यच्चित्तं गृहेषु[5] निर्विशति निर्विवेश गृहाभिनिविष्टं यच्चित्तमित्यर्थः । तत्सुखेन अनायासेन भवता अपहृतम्, तथा उत अपि च यौ गृहकृत्ये गृहकार्ये अभिनिविष्टौ करौ तावपि भवता अपहृतौ व्यापाररहितौ कृतावित्यर्थः । तथा पादावपि तव पादमूलात् पदमात्रमपि न चलतः अतः[6] कथं व्रजं यास्यामः ? अथो अनन्तरं वा किं करवाम? ॥ ३४॥

तर्हि किं मया विधेयमित्यत्राऽऽहुः - **सिञ्चेति।** अङ्ग! हे कृष्ण! तव अधरामृतस्य पूरकेण प्रवाहेन नोऽस्माकं हासयुक्तेन तवावलोकेन मधुरवेणुनादेन च जातं हृच्छयाग्निं कामाग्निं सिञ्च शमय, नो चेत् यद्येवं न करोषि तर्हि हे सखे! वयं भवद्वियोगजाग्निना दग्धदेहास्सत्यः त्वद्ध्यानेन साधनेन तव पदयोः पदवीं याम प्राप्नुयम। त्वयाऽनुपभुक्तं व्यर्थमिदं शरीरं त्वद्विरहाग्निना दग्ध्वा त्वद्ध्यानेन त्वत्सन्निधिमेव प्राप्स्यामः , मृत्वाऽपि त्वां न त्यजेमेति भावः ॥ ३५ ॥

---

1. K, T, W Omit नृशंसं 2. B adds भवति 3. T, W भर्तुः 4- -4 T, W Omit 5. T, W. °हे 6. T, W Omit अतः

**विज०** तथा विचार्य किमब्रुवन्निति तत्राह- **मैवमिति।** नृशंसं परुषं वचनमेवं गदितुं वक्तुं नार्हसि कुत इत्यत्राऽऽह-सन्त्यज्येति। हे दुरवग्रह! अवग्रहो वर्षविघातः तद्रहितः भक्ताभीष्टवर्षणशीलेत्यर्थः । शब्दादिसर्वविषयान् सन्त्यज्य भक्त्या तव पादमूलं भजेम सेवितुमवाप्ता इति यत् तस्मात् माऽस्मान् त्यज। अत्र दृष्टान्तमाह-देव इति॥ ३१ ॥

शुश्रूषध्वं पतीनिति यदुदितं तत्राहुः **यत्पतीति।** हे अङ्ग! स्त्रीधर्मशास्त्रविदा त्वया स्त्रीणां पत्यादीनां अनुवृत्तिः[1] अनुवर्तनं स्वधर्म इति यत्तदस्त्येव, न सन्दिग्धम्। तर्हि तान्विसृज्य अत्र किमर्थमागतमिति तत्राह-तदपीति। देववरे अस्मत्पित्रादीनां जामातृस्थानीये त्वयि तदपि क्रियत इति शेषः । देवानां वरणीये वा देवाद्यभीष्टदातरि वा न केवलं पतिस्थानीये ईशे ऐश्वर्यादिगुणसम्पन्ने तस्माद्वरणीय इत्यर्थः । परमानन्दविषयोऽपि हि पतिरयं कथं तद्विषय इत्याशङ्क्य न केवलमस्माकमेव परमानन्दगोचरः अपि तु सर्वेषामिति भावेनाह-प्रेष्ठ इति। अस्माकं विशेषतोऽपि प्रेष्ठ इत्याह - बन्धुरिति। बन्धुरूपः परमात्मा। किल तथा पुरातनवार्ता 'वार्ता सम्भाव्ययोः किल" (अम.को. 3-409) इति। यद्वा आत्मभूतो बन्धुः ॥ ३२ ॥

इतोऽपि त्वमेव अस्माकं मुख्यः पतिः इत्याशयेनाहुः - **कुर्वन्तीति**। कुशलाः सारासारविवेकपटवः स्वे आत्मन् अनिमित्तबन्धावात्मनि, स्वामिनि वा त्वयि रतिं कुर्वन्ति। नोऽस्माकं नित्याप्रियैः पत्यादिभिः किं प्रयोजनमिति शेषः। नित्यप्रियत्वं कथमिति तत्राहुः - आर्तिदैरिति। अनेन क्रन्दन्ति वत्साः इत्येतत् परिहृतम्। ततः किमत्राऽऽहुः तन्न इति। यस्मात्त्वं मुख्यो भर्ता अतस्तस्मात्। तर्हि किंरूपः प्रसाद इत्यत्राऽऽहुः -मा स्मेति। आशामतितृष्णां, "आशा दिगतितृष्णयोः" (वैज:को:6-2-3) इति यादवः ॥ ३३ ॥

प्रतियातेत्यस्य उत्तरमाहुः **चित्तमिति**। हे सखे! नो यच्चित्तं उत तदपि गृहेषु न निर्विशति उपभोगत्वेन न स्मरति। कुत इत्यत्राऽऽहुः - भवतेति। भवताऽपहृतं तस्मादिति शेषः । "स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः " इति वचनात्। करावपि कर्मसाधनेऽपि गृह्यकृत्ये गृहयोम्यकार्ये सम्मार्जनोपलेपनादिलक्षणे न तिष्ठत इति शेषः । अस्मत्पादौ गमनसाधनेऽपि तव पादमूलात् पदं एकपादन्यासमात्रमपि न चलत इत्यथो तस्मात् कथं व्रजं यामः, किं वा करवाम इति न ज्ञायते इति शेषः ॥ ३४ ॥

तर्हि भवतीनां किमभीष्टमित्यत्राऽऽहुः **सिञ्चेति**। पूरकेण प्रवाहेण हाससहितावलोकेन कलगीतेन मधुरगानेन जातो हृच्छयः कामः स एवाग्निः तं सिञ्च अभिषिञ्च, शमय, नो चेत् न शमयसि चेत् विरहाज्जातेनाग्निना उपयुक्तो गृहीतो देहो यासां तास्तथा। ३५ ॥

---

1. B, M Omit अनुवृत्तिः

**यर्ह्यम्बुजाक्ष! तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य।**
**अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग[1]! स्थातुं त्वयाऽ[2]भिरमिता बत पारयामः ॥ ३६ ॥**

**श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम्।**
**यस्यास्स्ववीक्षणकृतेऽन्यसुरप्रयासः तद्वद्वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥**

**तन्नः प्रसीद वृजिनार्दन! तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।**
**त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण ! देहि दास्यम्॥ ३८ ॥**

**वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम्।**
**दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षश्श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥**

**का स्त्र्यङ्ग! ते कलप[3]दायतमूर्छितेन सम्मोहिताऽऽर्यचरिता न्न चले त्रिलोक्याम्।**
**त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥ ४० ॥**

---

1. T, W. मङ्गः ; 2. M, Ma या विरहिता 3. M, Ma पदामृतवेणुगीतं

**श्रीध०** ननु स्वपतीनेवोपगच्छत, त एनमग्निं सिञ्चेयुरिति चेत्तत्राऽऽहुः **यर्हीति**। रमाया लक्ष्म्याः दत्तक्षणं दत्तोत्सवं दत्तावसरं वा। तदपि क्वचिदेव न सर्वदा। अरण्यजनाः प्रिया यस्य तस्य तव। अरण्यजनप्रियत्वादरण्ये **क्वचिद्यर्हि अस्प्राक्ष्म** स्पृष्टवत्यो वयं तत्र च त्वया अभिरमिता आनन्दिताःस्सत्यः तदारभ्यान्यसमक्षं स्थातुमपि न पारयामः [1-]नं शक्नुमः[-1] तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥

त्वत्पादसौभाग्यं तु अतिचित्र मित्याहुः **-श्रीरिति**। वक्षस्यसापत्न्यं स्थानं लब्ध्वाऽपि तुलस्या सपत्न्या सह [2]यत् तव पादाम्बुजरजः कामयते स्म। भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः । यस्याः स्ववीक्षणकृते श्री रात्मानं विलोकयत्वित्येतदर्थ मन्येषां ब्रह्मादीनां तपोभिः प्रयासः, सा तद्रजः तद्बद्वयमपि प्रपन्ना इति॥ ३७ ॥

**तदिति**। हे वृजिनार्दन! दुःखहन्तः! त्वदुपासने त्वद्भजन एवाऽऽशा यासां ता वयं वसतीः गृहान्विसृज्य [3]हित्वा योगिन इव प्राप्ताः । तव सुन्दरस्मितविलसितनिरीक्षणेन यस्तीव्रः कामः तेन तप्तचित्तानाम् [4]नः, हे पुरुषरत्न! दास्यं देहि॥ ३८ ॥

ननु [5]गृहादिस्वाम्यं विहाय [6]मद्दास्यं किमिति प्रार्थ्यते? अत आहुः **-वीक्ष्येति**। अलकावृतमुखं केशान्तैरावृतमुखम्। तथा कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन्, अधरे सुधा यस्मिन् तच्च तच्च [7] [8]तव मुखं वीक्ष्य दत्ताभयं भुजदण्ड[9]युग्मं वक्षश्च श्रिया एकमेव रमणं रतिजनकम्। [10-]अत्र विसर्गलोपे सन्धिरार्षः[-10] । वीक्ष्य दास्य एव भवामेति॥ ३९ ॥

ननु जुगुप्सितमौपपत्यमित्युक्तम्। तत्राऽऽहुः **का स्त्रीति**। अङ्ग! हे कृष्ण! कलानि पदानि यस्मिन् तदायतं दीर्घं मूर्च्छितं स्वरालापभेदस्तेन। कलपदामृतेति पाठान्तरे [11-]कलपदामृतमयं[-11] वेणुगीतं तेन सम्मोहिता [12]सती का वा स्त्री आर्यचरितात् निजधर्मात् न चलेत्। यन्मोहिताः पुरुषा अपि चलिताः , किञ्च त्रैलोक्यसौभगमिति यद्यतः अबिभ्रन् अबिभरुः । त्वद्द्योतकशब्दश्रवणमात्रेणापि तावत् निजधर्मत्यागो युक्तः । किं पुनः ? त्वदनुभवेनेति भावः ॥४०॥

---

1- -1 B.J Omit 2. B, J Omit यत् 3. P, V Omit हित्वा 4. B, J Omit नः 5. B, J °हस्वा° 6. J Omits मत् 7. B adds एवं 8. P, V Omit तव 9. B युगं 10- -10 B.J Omit 11- -11 B पदं यदमृतमयं 12. J, P, V Omit सती

**वीर०** ननु [1]स्वपतय एवाधरामृतं सिञ्चेयुः, तत्राऽऽहुः **यर्हीति**। हे अम्बुजाक्ष। अरण्यजनानां मुनीनां प्रियस्य तव रमायाः लक्ष्म्याः दत्तक्षणं दत्तोत्सवं दत्तावसरं वा [2]तदपि कदाचिदेव न सर्वदा अरण्यजनप्रियत्वादिति भावः । एवंविधं पादतलं यर्हि यदा वयमस्प्राक्ष्म स्पृष्टवत्यः , अरण्यजनप्रियत्वादरण्ये क्वचिद्यदा स्पृष्टवत्यः , तत्र च त्वया अभिरमिता अभिनन्दितास्सत्यः तत आरभ्य अङ्ग! हे कृष्ण! अन्यसमक्षं स्थातुमपि न पारयामः , पुरुषान्तरसमक्षमवस्थातु[3]मपि न शक्नुमः । तुच्छास्ते न रोचन्ते इत्यर्थः ॥ ३६ ॥

त्वत्पादसौरभ्यं तु अतिविचित्र मित्याहुः **श्रीरिति**। श्रीः लक्ष्मीः तव वक्षसि [4]असापत्न्यम् उन्नतं च पदं स्थानं लब्ध्वाऽपि तुलस्या सपत्न्या सह यत्तव पदाम्बुजरजः कामयते स्म। कथम्भूतम्? भृत्यैस्सर्वैर्जुष्टमिति सौभाग्यातिशयोक्तिः।

कथम्भूता श्रीः? यस्याः श्रियः स्ववीक्षणकृते स्वावलोकनार्थं श्री रस्मानवलोकत्वित्येतदर्थम् अन्येषां मुराणां ब्रह्मादीनां प्रयासः[5]। 'अन्यतपःप्रयासः, इति पाठे अन्येषां ब्रह्मादीनां तपःक्लेश इत्यर्थः । सा श्रीश्चकमे इत्यन्वयः । तद्वत्, श्रीवत् वयमपि तव पादरजः प्रपन्नाः ॥ ३७ ॥

हे वृजिनार्दन! दुःखहन्तः ! त्वदुपासने त्वद्भजन एवाऽऽशा यासां ताः वयं वसतीः गृहान् विसृज्य योगिन इव तवाङ्घ्रिमूलं प्राप्ताः । तत्तस्मान्नोऽस्माकं प्रसन्नो भव। कीदृशः प्रसादः कार्य इत्यत्राऽऽह - तव सुन्दरं स्मितं यस्मिन् तेन निरीक्षणेन यस्तीव्रः स्मरतापः तेन तप्ता आत्मानो देहाः यासां ताः , तासामस्माकं हे पुरुषरत्न! त्वद्दास्यं देहि॥ ३८॥

ननु भोग्यं गृहादिकं विहाय किमिति मद्दास्यं प्रार्थ्यते इत्यत्राऽऽहुः - **वीक्ष्येति**। कुण्डलयोः श्री र्ययोस्ते गण्डस्थले यस्मिन्, अधरे सुधा यस्मिन्, हसितयुक्तोऽवलोको यस्मिन्, तथा अलकैश्चूर्णकुन्तलैः आवृतं मुखम् आश्रिताना मभयप्रदं भुजदण्डयोः युग्मं श्रियो लक्ष्म्या एकं मुख्यं रतिजनकं क्रीडायोग्यं वा, वक्षश्चावलोक्य तवैवं दास्यो भवाम त्वद्रूपस्य निरतिशयभोग्यत्वादिति भावः ॥ ३९ ॥

यदुक्तं "जुगुप्सितं च सर्वत्र ह्यौपपत्यम्" ( भाग 10-29-26) इति तस्योत्तरमाहुः - **का स्त्रीति**। **अङ्ग**! हे कृष्ण! कलानि मधुराणि पदानि यस्मिन् तदायतं दीर्घं मूर्च्छितं स्वरालापभेदः तेन सम्मोहिता सती। 'कलपदामृतवेणुगीतसम्मोहिता' इति पाठे स्पष्टोऽर्थः। लोकत्रयसुन्दरमिदं रूपं निरीक्ष्य च त्रिलोक्यामपि का वा स्त्री आर्यचरितात् सदाचारान्निजधर्मा न्न चलेत्? सर्वाऽपि चलेदेवेत्यर्थः । यद्यतो गावो द्विजाः पक्षिणो मृगाश्चापि पुलकानि रोमाञ्चान् अबिभ्रन् अबिभरुः। त्वद्द्योतकशब्दश्रवणमात्रेणापि तिरश्चामपि निजधर्मत्यागो दृष्टः , किं पुनः मादृशामिति भावः ॥ ४० ॥

---

1.B adds स्व 2. K तदापि 3. T, W Omit अपि 4. B पत्न्यं 5. T, W Omit प्रयासः

**विज०** यर्हि यदा क्वचिद्वने दत्तक्षणं दत्तावसरं अस्प्राक्ष्म स्पृष्टवत्यः अरण्यजनः सन्न्यस्तजनः तत्प्रभृति तदानी मारभ्य अन्यसमक्षं अन्यजनाभिमुखं न पारयामः न शक्नुमः । बत अद्भुतमाश्चर्यं तव महिमा। अनेन त्वदङ्गस्पर्शनानन्तरम् अन्याङ्गस्पर्शनशङ्का निवारिता॥ ३६ ॥

अद्यापि लक्ष्म्या तव पादपद्मद्वन्द्वधूलिनिषेवणं काङ्क्षितं, किमुतास्माकमिति भावेनाऽऽहुः **श्रीरिति**। अन्येषां सुराणां ब्रह्मादीनां प्रयासः प्रयत्नः यस्याः श्रियः स्ववीक्षणकृतः स्वनिरीक्षणार्थं कृतः सा श्रीः वक्षसि पदं लब्ध्वाऽपि तुलस्याः पदं यस्य तव पदाम्बुजरजः चकमे कामितवती यथा, वयं च तद्वत् तथा तस्य तव पादरजोनिषेवणाय प्रपन्ना इत्यन्वयः। 'स्ववीक्षणकृते' इति पाठे स्वदर्शनार्थमित्यर्थः ॥ ३७ ॥

वृजिनार्दन! दुःखनाशन! वसतीः गृहान् त्वदुपासने आशा श्रद्धा यासां तास्तथा। सुन्दरं च तत्स्मितं च सुन्दरस्मितं ते[1]न, सुन्दरं स्मितं यस्य तत्[-1] (तेन) तन्निरीक्षणेन उद्भूतेन तीव्रेण कामाग्निना तप्त आत्मा देहो यासां ताः। पुरुषभूषण! पुरुषतिलक!॥ ३८ ॥

हे वीक्ष्य! दर्शनीय! वयं तव दास्यो भवामेत्यन्वयः। 'आशिषि लिङ् लोटौ' इति आशिषि लोट्। दासीभूत्वा आशिषं कामयामहे इत्यर्थः । दासीभावे कारणमाहुः अलकेति। कुण्डलश्रिया युक्तं गण्डस्थलं अधरसुधा च यस्य तत्तथा। हसितेन युक्तमवलोकं च प्रतिजनं दत्ताभयं भुजदण्डयोर्युगं च श्रिय एकरमणं प्रधानरतिस्थानं वक्षश्च विलोक्य दृष्ट्वा विचार्य वीक्ष्येति वा॥ ३९ ॥

अस्मत्स्मरशमनं च न चित्रमिति भावेनाऽऽहुः - का स्त्रीति। ते तव कलपदैः अव्यक्तमधुरशब्दावयवैः अमृतं श्रवणानन्दकरं यद्वेणुगीतं वंशगानं तेन सम्मोहिता त्रिलोक्यां त्रैलोक्ये का स्त्री त्रैलोक्यसौभग मलङ्कारभूलमिदं रूपं सुन्दरतरावयवोपक्लृप्तमाकारं च नितरां दृष्ट्वाऽऽर्याणां सतां चरितात् मार्गादिति शेषः। न चलेत् स्खलिता न भवतीत्यन्वयः। इदं न चित्र मित्याहुः - यदिति। यद्यस्मात् वेणुगानात् यस्य रूपस्य स्पर्शादिना वा गवादयोऽन्तःप्रज्ञाः चेतनराशयः पुलकानि रोमाञ्चानि अबिभ्रन् दधुरिति॥ ४० ॥

---

1- -1 B, M Omit

व्यक्तं भवान् व्रजजनार्ति[1]हरो[2]ऽभिजातो देवो यथाऽऽदिपुरुषस्सुरलोकगोप्ता।
तन्नो निधेहि करपङ्कजमार्तबन्धो! तप्तस्तनेषु च शिरस्सु च किङ्करीणाम्॥ ४१ ॥

श्रीशुक उवाच

इति विक्लबितं तासां श्रुत्वा योगी[3]श्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामो[4]ऽप्यरीरमत्॥ ४२ ॥

ताभिस्समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधितिः व्य[5]रोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥

उपगीयमान उद्गायन् वनिताशतयूथपः ।
मालां बिभ्रद्वैजयन्तीं व्यचरन्म[6]ण्डयन्वनम्॥ ४४ ॥

नद्याः पुलिनमा[7]विश्यगोपीभिर्हि[8]मवालुकम्।
[9]जुष्टं तत्तरला[10]ऽसङ्गि कुमुदामोदवायुना॥ ४५ ॥

बाहुप्रसारपरिरम्भकरालको[11]रु नीवीस्तनालभननर्मन[12]खाग्रपातैः ।
[13]क्ष्वेल्याऽवलोकहसितै र्व्रजसुन्दरीणा मुत्तम्भयन्रतिपतिं रमयाञ्चकार॥ ४६ ॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ।
[14]स्वात्मानं मेनिरे स्त्री[15]णां मानिन्योऽभ्यधिकं भुवि॥ ४७ ॥

**तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।**
**प्रशमाय प्रसादाय तत्रैवान्तरधीयत॥ ४८ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां
अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे रासक्रीडावर्णनं नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

1. B.G.J.M.Ma मयार्ति 2. K.T.W °रो हि 3. B.G.J.M.Ma.T °गे० 4. M, Ma °मो न्य० 5. T, W व्यराज० 6. V. °त्स वनाद्गम् 7. K.T.W °मासाद्य 8. B.G.J.M.Ma °र्हि० 9. B.G.J.M.Ma रेमे 10. B.G.J °लाऽऽनन्द; M, Ma °लाऽऽनन्दि V °लाऽम्भोज 11. M.Ma केली 12. M.Ma कराग्र 13. M.Ma °ला° 14. B.G.J.K.T.W आ० 15. M.Ma °णामाधिक्या०

**श्रीध० व्यक्तमिति।** व्यक्तं निश्चितम् ॥ ४१ ॥

**इतीति।** विक्लवितं पारवश्यप्रलपितम्। गोपीः अरीरमत् रमयामास ॥ ४२ ॥

**ताभिरिति।** प्रियस्येक्षणेनोत्फुल्लानि मुखानि यासां ताभिः उदारहासश्च द्विजाश्च तेषु कुन्दकुसुमवद्दीधितिः यस्य सः। एणाङ्कश्चन्द्रः ॥ ४३-४५ ॥

**बाह्विति।** बाहुप्रसारश्च परिरम्भश्च करादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः। क्ष्वेल्या क्रीडया च अवलोकैश्च[1] हसितैश्च कामं तासामुद्दीपयन् ता रमयामास ॥ ४६ ॥

**एवमिति।** महात्मनः [2-]अनासक्तचित्तत्वात्[-2] इति भावः ॥ ४७ ॥

**तासामिति।** [3-]तत्सौभगमिदं[-3] सौभाग्येन मदम् अस्वाधीनताम्। मानं गर्वम्। केशवः कश्च ईशश्च केशौ[4] तौ वशयतीति तथा सः ॥ ४८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

1. P,V लोकनैः 2- -2. B,J विमुक्तचित्तात् 3- -3. J,P,V omit 4. B,J omit केशौ

**वीर०** व्रजजनार्त्यपाकरणायाऽवतीर्णस्य पुनः तदार्त्यापादनमनुचित मित्यभिप्रायेणाऽऽहुः — **व्यक्तमिति।** यथा आदिपुरुष उपेन्द्रादिरूपेण सुरलोकार्तिनिरसनेन तद्रक्षणार्थमवतीर्णः तथा त्वमपि व्रजजनस्याऽऽर्तिहरो नूनं जातः, तत्तस्मात् हे आर्तबन्धो! किङ्करीणां नोऽस्माकं तप्तेषु स्मरतापतप्तेषु स्तनेषु शिरस्सु च पङ्कजवच्छीतलं कोमलं करं निधेहि, निधायाऽऽर्तिं शमयेति भावः। आर्तबन्धो! इति तदनुगुणं सम्बोधनम्। किङ्करीणामित्यपेक्षणीयसम्बन्धाविष्कारः ॥ ४१ ॥

इत्थं तासां विक्लबितं पारवश्यप्रलपितमाकर्ण्य योगीश्वरेश्वरोऽप्यात्मारामोऽपि गोपीः अरीरमत् रमयामास। आत्मारामत्वाद्विषयविमुखोऽप्यार्तिहरस्वभावत्वात् ताभिस्सह रेमे इत्यर्थः ॥ ४२ ॥

तदेव प्रपञ्चयति — **ताभिरित्यादिना।** प्रियस्य स्वस्य ईक्षणेन उत्फुल्लानि मुखानि यासां ताभिः सङ्गताभिः गोपीभिस्सह अच्युतः उदारहासश्च द्विजा दन्ताश्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य तथाभूतो व्यरोचत रराज। उडुभिः वृतश्चन्द्र इव ॥ ४३ ॥

गोपीभिरुद्गीयमानः स्वयं च उद्गायन् वनिताशतानां यूथपः [1-]करिणीयूथप[-1]इवेति भावः। वैजयन्तीं मालां बिभ्राणो वनमलङ्कुर्वन् व्यचरत् ॥ ४४ ॥

हेममय्यो वालुकास्सिकता यस्मिंस्तत् नद्या यमुनायाः पुलिनं, कथम्भूतम्? तस्या यमुनायाः तरलानां तरङ्गाणां सम्बन्धिनां कुमुदानामामोदो यस्य तेन वायुना जुष्टम् आसाद्य अधिष्ठाय रमयाञ्चकारेत्युत्तरेणान्वयः[2] ॥ ४५ ॥

किं कुर्वन्? बाहुप्रसारः स्कन्धस्योपरि बाहुप्रसारणम्। परिरम्भः आलिङ्गनम्। करेणालकादीनामालभनं संस्पर्शश्च, नर्म परिहासश्च, नखाग्रपाताः नखक्षताश्च तैः क्ष्वेल्या क्रीडया चावलोकनैश्च हसितैश्च मन्मथं तासा मुद्दीपयन्॥ ४६॥

इत्थं महात्मनः आसक्तचित्ताद्भगवतो हेतोः लब्धो मानो गर्वो याभिस्ताः मानिन्यो गोप्यः आत्मानं भुवि स्त्रीणां मध्ये अभ्यधिकं सर्वोत्कृष्टं मेनिरे ॥ ४७ ॥

ततः किम्? अत आह — **तासामिति।** तासां गोपीनां स चासौ सौभगेन सौन्दर्याभिमानेन यो मदः तं मानं चित्तसमुन्नति मस्वाधीनतामिति यावत्। तं च वीक्ष्य केशवः ब्रह्मरुद्रयोरपि नियन्ता भगवान् प्रशमाय तासां मदमानयोः प्रशान्तये प्रसादाय उत्तरोत्तराभिनिवेशापादनरूपानुग्रहाय च तत्रैव पुलिने अन्तर्हितवान् ॥ ४८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

1- -1. B omits 2. B,T,W °याम्बभूवे०

**विज०** सर्वस्य स्वामित्वेन भर्तृगुणयोगादस्मत्कुलेऽभिजातत्वेन बन्धुत्वेन सम्बन्धयोग्यत्वात् अस्माकं त्वत्सम्बन्धेन जारसंसर्गदोषागमनेन निन्द्यत्वं दूरोत्सारितं स्यादिति भावेनाऽऽहुः — **व्यक्त**मिति। **भगवान्** यथा सुरलोकगोप्ता वामनतयाऽभिजातः, तथाऽऽदिपुरुषो देवो भवान् व्रजभयार्तिहरोऽभिजात इति व्यक्तम्। इदमसन्दिग्धमिति यत्तत् तस्मा द्यथा यस्मादिति वा। कामाग्नितप्तेषु उभयत्र योज्यम् ॥ ४१ ॥

विक्लबं चिन्तां कामार्तवचनं न्यरीरमत् नितरां रमयामास ॥ ४२ ॥

**समेताभिः** मिलिताभिः **उदारः** उत्कृष्टः **हासः** द्विजा दन्ताः कुन्दा मल्लिकाः आसां दीधितिः कान्तिर्यस्य सः द्विजा एव कुन्दाः द्विजकुन्दाः, उदारहासेन विवृतानां द्विजकुन्दानां दीधितिर्यस्य सः इति वा। **एणाङ्कः** चन्द्रः "एणः कुरङ्गो हरिणः" (हला. को. 2-75)) इति हलायुधः ॥ ४३ ॥

शतशब्दोऽनेकवाची। वैजयन्तीं विजयावहाम् ॥ ४४ ॥

हिमवालुकं शीतलसैकतं तस्या नद्याः **तरलैः** मन्दकल्लोलैः आनन्दयितुं शीलमस्यास्तीति तरलानन्दी, कुमुदानामामोदस्य वायु स्तत्तरलानन्दी कुमुदामोदवायुः तेन। यद्वा तया नद्या तरलानि नृत्यन्तीव स्थितानि च तानि आनन्दीनि उत्फुल्लानि कुमुदानि तत्तरलानन्दिकुमुदानि तेषामामोदेन सौरभेण संपृक्तेन वायुना ॥ ४५ ॥

परिरम्भ आलिङ्गनं तदेव करालकेली तीव्रक्रीडा तस्यां नीवी वस्त्रग्रन्थिः तस्यां, स्तनेषु आलभनेन मोचनस्पर्शलक्षणेन नर्मणा हास्योक्त्या च कराग्राणां नखानां पातैः उल्लेखलक्षणैश्च[1] क्ष्वेलावलोकहसितैः बालसिंहनादनिरीक्षणमन्दहासैश्च रतिपतिं काममुत्तम्भयन् उज्जृम्भयन् उल्लोलयन्नित्यर्थः। रमयाञ्चकार रेमे। "बाहुपीडनकुचग्रहणाभ्यामाह तेन नखदन्तनिखातैः (शिशुपा.वध. 10-72) बोधित स्तनुशयस्तरुणीनामुन्मिमील शनकैरपि मारः" इति माघः ॥ ४६ ॥

भुवि स्त्रीणां मध्ये स्वात्मानमाधिक्येन अभ्यधिकं मेनिरे ॥ ४७ ॥

सौभगमदं सौभाग्यनिमित्तं मदं मानमहङ्कारं मदाहङ्कारयोः प्रशमाय नाशाय प्रसादाय अनुग्रहाय च प्रकर्षेण प्रसादजननाय च अन्तरधीयत तासां दृष्ट्या अदृश्योऽभवदित्यर्थः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां<br>
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां<br>
टीकायां दशमस्कन्धे पूर्वार्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥<br>
**(विजयध्वजरीत्या सप्तविंशोध्यायः)**

---

1. Ma °खन०

# त्रिंशोऽध्यायः

(विजयध्वजरीत्या अष्टाविंशोऽध्यायः)

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

गत्याऽनुरागस्मित[1-]विभ्रमेक्षणै[-1]ः मनोरमालापविहारविभ्रमैः।
आक्षिप्तचित्ताः प्रमदा रमापतेः तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥

गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः।
असावहन्[2]त्वित्यबलास्तदात्मिका न्य[3]वेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥

गायन्त्य उच्चैरमुमेव सं[4]हता वि[5]चिक्युरुन्मत्तकवद्वनाद्वनम्।
पप्रच्छु राकाशव दन्तरं बहिः भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥

दृष्टो वः कच्चिदश्वत्थ! प्लक्ष! न्यग्रोध! [6-]नो मन[-6]ः।
नन्दसूनु[7-]र्गतो हृत्वा [-7]प्रेमहा[8-]साव[-8]लोकनैः ॥ ५ ॥

---

1- -1. G.J. Va विभ्रमेक्षितैः; M.Ma रञ्जितेक्षितैः 2. M.Ma न्वि° 3. M. Ma ना० 4. G.J.Va संहता 5. M.Ma चेरु° 6- -6. किंशुक!
7- -7. M.Ma. °रिहागात्किं सह 8- -8. K. हासवि०

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रिंशे विरहसन्तप्तगोपीभिः कृष्णमार्गणम्। उन्मत्तवन्नियतं भ्रमन्तीभि र्वने वने ॥

**अन्तर्हिते** इति। अचक्षाणा अपश्यन्त्यः ॥ १ ॥

**गत्येति**। गत्या च अनुरागस्मिताभ्यां विभ्रमेक्षितानि [2-]सविलासनिरीक्षणानि[-2] तैश्च मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासा स्तैश्च रमापतेः गत्यादिभिः एतैराक्षिप्तानि आकृष्टानि चित्तानि यासां ताः। अतस्तस्मिन्नेव आत्मा यासां ताः तस्य विविधा श्रेष्टा जगृहुः तदनुकर[3]णैः आक्रीडन् ॥ २ ॥

अपि च **गतीति**। प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मूर्तयो यासां ताः, अतः कृष्णविहारविभ्रमाः कृष्णस्येव विहाराः क्रीडाः विभ्रमाः विलासा यासां ताः। अहमेव कृष्ण इति परस्परं निवेदितवत्यः॥ ३ ॥

किञ्च **गायन्त्य** इति। वनाद्वनान्तरं गच्छन्त्यो विचिक्यु रमृगयन्। उन्मत्ततुल्यत्वमाह - वनस्पतीन्पप्रच्छुः। भूतेष्वन्तरं मध्ये सन्तं पुरुषं बहिश्च सन्तमिति ॥ ४ ॥

तत्प्रपञ्चयति नवभिः। तत्र महत्त्वादेते पश्येयुरित्याशया[4] दश्वत्थादीन् पृच्छन्ति-**दृष्ट** इति। प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोर इव गतो व[5]ः युष्माभिः किं दृष्ट इति ॥ ५ ॥

---

1. P. °ती 2- -2. P. सविलासनिरीक्षितानि ; V. विलासनिरीक्षितानि 3. J.Va णेन 4. J. °याऽश्व° 5. P.V. omit वः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ अन्तर्हितभगवद्दर्शनजतापतप्तानां भगवतो गत्यनुरागस्मित विभ्रमेक्षितालापविहार विभ्रमापहृत चित्तानां उन्मत्तायितानां च गोपीनां तच्चेष्टानुकरणं तावच्चेतनाचेतनाविभागेन प्रश्नपूर्वक मन्वेषणप्रकारमुपलक्षणतस्त्र्यन्तरासक्त्यध्यवसायप्रकारं स्त्र्य[1-] न्तरस्यापि तद्वन्मदमानप्रशमनार्थ मन्तर्धानं, तया सह पुनरन्वेषणप्रकारं[-1] चाऽऽह — त्रिंशेन **अन्तर्हित** इति। भगवत्यन्तर्हिते सति तमवीक्षमाणाः यूथपमपश्यन्त्यः करिण्य इव सहसा अविमर्शेनैव अन्वतप्यन्. ॥ १ ॥

**गत्येति**। रमापतेः गत्या अनुरागस्मिताभ्यां यानि विलासनिरीक्षणानि तैश्च मनोरमालापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासाश्च तैः आक्षिप्तानि आकृष्टानि चित्तानि यासां ताः, अत एव तदात्मिकाः तस्मिन्नेव आत्मा चित्तं यासां ताः, तज्ज्ञानप्रचुराः इत्यर्थः। अत एव भगवतः तास्ता विविधाश्चेष्टाः जगृहुः अनुचक्रुः ॥ २ ॥

तदेव प्रपञ्चयति - **गतीति**। तदात्मिकाः अत एव प्रियस्य कृष्णस्य गत्यादिषु प्रतिरूढमूर्तयः भगवद्गत्याद्यनुकारेषु चिकीर्षितेषु सत्सु हृदयारूढास्तस्य मूर्तयो यासां ताः। अतः कृष्णविहारा इव विभ्रमाः क्रीडा यासां ताः, तस्य प्रिया अबला गोप्यः असावहं कृष्णोऽहमिति मिथो निवेदितवत्यः ॥ ३ ॥

किञ्च **गायन्त्य** इति। सङ्गताः समुदिताः सङ्घीभूताः इति यावत्। अमुं कृष्णमेव गायन्त्यो वनाद्वनं गच्छन्त्यः उन्मत्तवद्विचिकिक्युरमृगयन्। वनस्पतीन् प्रति पप्रच्छुश्च। कथम्भूतम्? आकाशवद्भूतेषु चराचरात्मकेषु अन्तर्बहिश्च व्याप्य वसन्तं पुरुषं पुरुषाकारं पुरुषशब्दवाच्यं वा परमपुरुषं वा, एवम्भूतमपि प्राकृतमिव पप्रच्छुरित्यर्थः। वनस्पतीन् पप्रच्छुः इत्यनेन उन्मत्ततुल्यत्वं दर्शितम् ॥ ४ ॥

भगवद्विरहव्यथामुषितचेतनाचेतनतिर्यगतिर्यग्विवेकानां प्रश्नप्रकारमेवाऽऽह नवभिः। अश्वत्थादीनां प्रत्येकसम्बोधनेन प्रश्नोऽपि प्रत्येकमवगन्तव्यः। प्रेमहासविलोकनैः अस्माकं मनो हृत्वा चोर इव नन्दसूनुः गतः वो युष्माभिः किं दृष्टः?

अश्वत्थादीनां महत्त्वाद्यज्ञाङ्गत्वात्, तत्राश्वत्थस्य भगवद्विभूतित्वाच्च ते पश्येयुरित्यादावश्वत्थादीन् पृच्छति। ततो महान्तः पुष्पैर्बहूपकारिणश्चेति कुरवकादीन् पृच्छन्तीत्येवं यथासम्भवं केचिद्व्याचक्षते ॥ ५ ॥

1- -1. K. omits.

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हरेरेव योगैश्वर्यमौत्पत्तिकं, नान्यस्येति ज्ञापनभावेन गोपस्त्रीणां श्रीकृष्णे भक्त्यतिशयं कथयति अस्मिन्नध्याये। तत्र गोपीनां सन्तापादिप्रकारं प्रवक्ति शुकः **अन्तर्हित** इति। यूथपं गजेन्द्रम् ॥ १ ॥

गत्या बालसिंहखेलनगमनेन अनुरागेण स्नेहेन उदितानि स्मितानि तैः रञ्जितानि सम्पर्कगतानीक्षितानि तैः मनोरमौ आलापविहारौ तयोर्विभ्रमैः शृङ्गारैः आक्षिप्तचित्ताः आकृष्टमनसः, या या भगवता रचिता विशिष्टचेष्टाः तास्ताः जगृहु न्यरूपयन्, तस्मिन् कृष्णे आत्मा मनो यासां ता स्तथा, ग्रहणम् अनुकरणं यत्तदात्मिकाः। तदाकारमिता इति पाठार्थौ सुष्टु ता[1] मादधाते ॥ २ ॥

एतदेव विशिनष्टि — **गतीति**। प्रियस्य कृष्णस्य गत्यादिषु प्रतिरूढा अङ्कुरिता अङ्गीकृता मूर्तिः यासां तास्तथा। तत्र निमित्तं दर्शयति असाविति। असौ कृष्णोऽहं वा[2] नु, इति विकल्प्याऽन्योन्यं पृष्ट्वा वा तदात्मिकाः तद्गतचित्ताः। "प्रश्ने विकल्पे नु स्विच्च" (वैज.को. 8-7-6) इति यादवः। नाऽवेदिषुः आत्मानमिति शेषः कृष्णविहारविभ्रमवत् विभ्रमो यासां तास्तथा। अनेनापि तदात्मकत्वं विवृतम् ॥ ३ ॥

सङ्गताः मिलिताः आकाशवद्भूतेषु बहिरन्तरं सन्तं, बाह्याभ्यन्तरदेशयोर्वर्तमानम् "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (मना. उ. 9-5) इति श्रुतिः ॥ ४ ॥

उन्मत्तत्वं स्पष्टयति - **दृष्ट** इति। हे शब्दः प्रत्येकमभिसम्बध्यते। हे न्यग्रोध वट! न्यक् अधः रोधः आवरणं यस्य सः पादैः अधोभूमिमावृणोतीति। किंशुक पलाश! "पलाशे किंशुकः पर्णः" (अम.को. 2-75) इत्यमरः। रक्तपुष्पवान् ॥ ५ ॥

1. Ma °ता॰ न° (नि) 2. Ma न वा

**कच्चि त्कुरवकाशोक [1-]नागपुन्नागचम्पकाः[-1]।**
**रामानुजो मानिनीनां [2]गतो [3-]दर्पहरस्मितः[-3] ॥ ६ ॥**

कच्चि त्तुलसि! कल्याणि! गोविन्दचरणप्रिये!
सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

मालत्यदर्शि वः कच्चि न्मल्लिके! जातियूथिके!
प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ॥ ८ ॥

चूतप्रियाल[4] पनसासनकोविदार [5-]जम्ब्वर्क[-5] बिल्वबकुलाम्र[6-]क पारिजाता[-6]ः!
येऽन्ये परार्थ[7]भविका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥

किं ते कृतं क्षिति! [8]तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहै र्विभासि।
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा आहो वराहवपु[9]षः परिरम्भणेन ॥ १० ॥

---

1- -1. M,Ma नाग! पुन्नाग! चम्पक!; T,W. नीपोदुम्बरचन्दनाः 2. G,J,Va इतो; M,Ma दोग्धा 3- -3. M,Ma नन्दस्य चात्मजः 4. V. °लु 5- -5. M,Ma जम्ब्वक्ष; V. जम्बीर 6- -6. G,J,M,Ma, V,Va कदम्बनीपाः 7. G,J,K,Va भवका; M,Ma भविनो 8 M,Ma शुभं 9. M.Ma °षा

**श्रीध०** महान्तः स्वपुष्पैर्बहूपकारिणश्चेति कुरवकादीन् पृच्छन्ति - **कच्चिदिति**। हे कुरवकादयः! दर्पहरं स्मितं यस्य स इतो गतः कच्चिद्दृष्ट इति ॥ ६ ॥

**कच्चिदिति**। अलिकुलैस्सह त्वा त्वां बिभ्रत्तवातिप्रियः त्वया किं दृष्ट इति ॥ ७ ॥

गुणातिरेकेऽपि [1-]न प्रत्यात्[-1] इमाः पश्येयुः इति पृच्छन्ति - **मालतीति**। हे मालति! मल्लिके! जाति! यूथिके! वो युष्माभिः किमदर्शि दृष्टः। करस्पर्शेन वः प्रीतिं जनयन् किं यात इति। अत्र मालतीजात्योरवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥

फलादिभिः सर्वप्राणिनां सन्तर्पका एते पश्येयुरिति पृच्छन्ति - **चूतेति**। चूताम्रयोरवान्तरजातिभेदः, नीपकदम्बयोश्च। हे चूतादयः येऽन्येच परार्थभ[2]विकाः परार्थमेव भवो जन्म येषां ते। यमुनोपकूलाः तस्याः कूलसमीपे वर्तमानाः। तीर्थवासिन इत्यर्थः। ते भवन्तो रहितात्मनां शून्यचेतसां नः कृष्णपदवीं [3]कृष्णस्य मार्गं शंसन्तु कथयन्तु ॥ ९ ॥

**किमिति**। हे क्षिति! हे क्षिते! त्वया किं तपः कृतं, या त्वं केशवाङ्घ्रिस्पर्शोत्सवा केशवस्य अङ्घ्रिस्पर्शोत्सवो यस्यास्सा। कुतः? अङ्गरुहैः उत्पुलकिता रोमाञ्चिता विभासि शोभसे। तत्र विशेषं पृच्छन्ति-अपि किमयमुत्सवोऽङ्घ्रिसम्भवोऽधुना [4]तवैकदेशाङ्घ्रिस्पर्शसम्भूतः। यद्वा नैतावत्, किन्तु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात्। आहो अथवा। नैतावदेव, अपि तु ततोऽपि पूर्वं वराहस्य वपुषः परिरम्भणेनेति। अतः त्वया नूनं दृष्टः, तं दर्शयेति ॥ १० ॥

---

1- -1. P,V. नम्राः 2. J,Va °व° 3. P,V. कृष्णमार्गं 4. P.V. तदेक

**वीर० कच्चिदिति।** हे कुरवकादयः मानिनीनां दर्पहरं स्मितं यस्य स रामानुजः इहागतः। **कच्चिदितीष्टप्रश्नद्योतकमव्ययम्।** दृष्टः आगतश्च किम्? तदस्मदिष्टमित्यर्थः। एवमुत्तरत्रापि ॥ ६ ॥

हे तुलसि! हे गोविन्दचरणप्रिये! अत एव हे कल्याणि! अलिकुलैस्सह त्वां बिभ्राणः तवाऽतिप्रियश्च अच्युतः त्वया दृष्टः कच्चित्? ॥ ७ ॥

गुणातिरेकेऽपि नम्रा इतीमाः पश्येयुरिति पृच्छन्ति — **मालतीति।** हे मालति! हे मल्लिके! हे जाति! हे यूथिके! वो युष्माभिः अदर्शि कच्चिद्दृष्टः किम्? माधवः करस्पर्शेन युष्माकं प्रीतिं जनयन् किं यातः, अत्र मालतीजात्योः अवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥

फलादिभिः सर्वप्राणिसन्तर्पका इमे पश्येयुरिति पृच्छन्ति — **चूतेति।** चूताम्रयोः कदम्बनीपयोश्च अवान्तरभेदो द्रष्टव्यः। हे चूतादयः भवन्तः ये चान्ये परार्थमेव भविका जन्म येषां ते यमुनाकूलसमीपे वर्तमानाः तीर्थवासिन इत्यर्थः। रहितात्मनां शून्यचेतसामस्माकं कृष्णपदवीं शंसन्तु कथयन्तु ॥ ९ ॥

हे क्षिति! त्वया किं तपः कृतम्? अन्यथेदं न घटत इत्याहुः। या त्वं केशवस्याङ्घ्रिस्पर्शेनोत्सवो यस्यास्तथाभूता, कुतः अङ्कुरुहैः उत्पुलकिता रोमाञ्चिता विभासि शोभसे, उदञ्चितानि तृणान्यालक्ष्य तेन रोमाञ्चः? तत्र हेतुः केशवाङ्घ्रिस्पर्शः। तत्र च हेतुः प्राक्तनं तपश्चेति सम्भाव्य अथोत्सवे हेत्वन्तराण्यपि सम्भावयन्ति। अपि किमयमुत्सवोऽङ्घ्रिसम्भवः। अधुनैकदेशो भगवदङ्घ्रिस्पर्शसम्भवः। किं वा पूर्वमेव उरुक्रमस्य त्रिविक्रमस्य विक्रमात् पदा सर्वाक्रमणाज्जातः? अथवा ततोऽपि पूर्वं वराहवपुषः भगवतः परिरम्भणेनाऽऽलिङ्गनेन जातः ॥ १० ॥

**विज०** कुरवकः करञ्जः नागः, नागकेसरः। "पुन्नागे पुरुषस्तुङ्गः" (अम.को. 2-82) इति, दोग्धा जिह्मामधुरः॥ ६,७॥

मालती जातिभेदः, वो युष्माभिः अदर्शि दृष्टः। यूथिका शतपत्रिका ॥ ८ ॥

प्रियालो राजादनः देवदारुर्वा, कोविदारः काञ्चनारकः, असनः पीतसारकः, अक्षं शुकनासं, परार्थभविनः लोकोपकारार्थमुत्पन्नाः यमुनाकूलसमीपे जाताः, रहित आत्मा स्वामी कृष्णो यासां तास्तथा तासाम् ॥९॥

हे क्षिति! ते त्वया किं शुभं तपोलक्षणं कृतं, पर्याप्तमङ्गोपाङ्गपूर्णं शुभं ते तव किं बताऽऽमन्त्रितं सत्कारपूर्वकं व्यावृत्तमस्तीत्यर्थः। "युगेऽक्षपाते पर्याप्ते कृतं क्ली विहितेऽर्थवत्" (वैज; को 6-5-21) इति यादवः। "खेदानुकम्पा सन्तोष विस्मयामन्त्रणे बत" (अम.को. 3-399) इत्यमरः। अस्तीति कथमवगम्यते इत्यत्राऽऽह — केशवेति। केशवस्य सुकेशभारस्याऽङ्घ्र्योः स्पर्श एव उत्सवः तेन उत्पुलकितैः ऊर्ध्वमुखोल्लसितैः अङ्कुरुहैः रोमलक्षणैर्वृक्षैः विभासि यत्तस्मादिति शेषः। यद्वा केशवाङ्घ्रिस्पर्शेनोत्सवा प्रकृष्टप्रसवा सती त्वमङ्कुरुहैर्वृक्षैः उत्पुलकिता रोमाञ्चिता विभासि। यद्वा अङ्घ्रिस्पर्शनलक्षणेनोत्सवेन

उत्पुलकिताङ्गरुहैः अङ्कुरितपुष्पितफलितैर्वृक्षैः हे अङ्घ्रिसम्भवे नारायणश्रीपादसम्भवे उत्पन्ने अपि "पद्भ्यां भूमिः" (पु.सू. 13) इति श्रुत्या लोकसम्भाविते उरुक्रमस्य त्रिविक्रमस्य विक्रमात् पादविक्रमणात् अङ्गरुहैः उत्पुलकितैर्विभासि वा। आहो स्वित् वराहवपुषा नारायणेन कृतेन परिरम्भणेन अलिङ्गनेनोद्धृतिलक्षणेन "केशाद्वोऽन्यतरस्याम्"(अष्टा 5-2-109) इति सूत्रेण शेभमानाः केशा अस्य सन्तीति मत्वर्थे वप्रत्ययो विधीयते। अर्थान्तरविवक्षायां गोपीनामनभीष्टत्वम् ॥१०॥

अप्येणपत्न्युपगतः प्रिययेह गात्रैः तन्वन्दृशां सखि! सुनिर्वृतिमच्युतो[1] वः ।
कान्ताङ्गसङ्ग कुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलै र्मदान्धैः ।
अन्वीयमान इह वस्तरवः! प्रणामं किं वाऽभिनन्दति चरन्प्रणयावलोकैः ॥ १२ ॥

पश्यतेमा[2][3] लता बाहूनप्याश्लिष्टा वनस्पतेः ।
नूनं तत्करजस्पर्शा[4] बिभ्रत्युत्पुलकान्यहो! ॥ १३ ॥

[5-]श्री शुक उवाच[-5]

★ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् ।
तोकयित्वा रुदत्यन्या[6] पदाऽहन् शकटायतीम् ॥ १५ ॥

---

1. M,Ma °मीश्वरो 2. V. पृच्छ° 3. M,Ma °ह 4. G,J,V,Va स्पृष्टा 5- -5. G,J,V,Va omit ★ From the 14th verse beginning with इत्युन्मत्तवचो to the end of 23rd verse ending with भीतिविडम्बनम् i.e. 10 verses and the commentary of Vijayadhvaja there on are not found in M.Ma editions. 6. K,T,W रुदन्त्य°

**श्रीध०**[1] हरिण्या दृष्टिप्रसृत्या कृष्णदर्शनं सम्भाव्याऽऽहुः — अपीति। हे सखि! एणपत्नि! अपि किमुपगतः समीपं गतः। गात्रैः सुन्दैर्मुखबाह्वादिभिः। प्रियया सहेति यदुक्तं तद्द्योतकम्[2]। कान्ताया अङ्गस[3-] ङ्गस्तेन[-3] तत्कुचकुङ्कुमेन रञ्जितायाः कुन्दकुसुमस्रजो गन्धः। कुलपतेः श्रीकृष्णस्य वाति आगच्छति ॥ ११ ॥

फलभारेण नतान् तरून् कृष्णं दृष्ट्वा प्रणता इति मत्वा प्रियया सहितस्य[4] गतिविलासं सम्भावयन्त्यः पृच्छन्ति — **बाहुमिति।** तुलसिकाया अलिकुलैः अतः तदामोदमदान्धैः अन्वीयमानोऽनुगम्यमान इह चरन्निति ॥ १२ ॥

**पश्यतेति**। काश्चिदाहुः — हे सख्यः! इमा लताः कृष्णेन सङ्गता नूनम्। अत इमाः पृच्छत। ननु स्वपतिसङ्गतौ तत्सङ्गतिर्दुर्घटा? न। वनस्पतेः पत्युर्बाहून् शाखा आश्लिष्टा अपि अहो भाग्यं नूनं तन्नखैः स्पृष्टा यत उत्पुलकानि बिभ्रति। न हि स्वपतिसङ्गतावीदृक्पुलकसम्भव इति भावः ॥ १३ ॥

उन्मत्तकवत्प्रपच्छुरित्येतत्प्रपञ्चित मिदानीं "रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः" इति यदुक्तं तत्प्रपञ्चयति — **इतीति**। उन्मत्तवचोगोप्यः उन्मत्तवचसश्च ता गोप्यश्च। कृष्णान्वेषणेन कातरा अतिविह्वलाः। अनुचक्रुरनुकृतवत्यः ॥ १४ ॥

कस्याश्चिदित्यादिभिश्चतुर्भि रनुकरणं प्रपञ्चयते। ततश्चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः। **कस्या** इति। पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदाचरन्ती स्तनमपिबत्। तोकयित्वा तोकवत् [5-] शिशुवत् [-5] आत्मानं कृत्वा ॥ १५ ॥

---

1. J,Va प्रत्यासत्त्या 2. J,Va तत्र चो° 3- -3. P,V °सङ्गतः 4. J, Va °ह त° 5. J,Va omit

**वीर०** हरिण्या दृष्टिलालित्यस्य श्रीकृष्णदर्शनजहर्षयुक्ततां सम्भाव्य पृच्छन्ति — **अपीति**। हे एणपत्नि! वो युष्माकं दृशां सुनिर्वृतिं निरतिशयानन्दं गात्रैस्सुन्दरैः पाणिपादादिभिरवयवैः वितन्वन् विस्तरेण जनयन् अच्युतः प्रियया सह इहोपगतः अपि किम्? आगतः किम्? इत्यर्थः। नोपगत इति मा वोच इत्यभिप्रेत्य तत्र लिङ्गमाहुः। कापटचेन न ब्रूयुरिति सख्यमापादयन्तीभि स्सम्बोध्यते हे सखीति। कान्ताया अङ्गसङ्गेन आलिङ्गनेन यत्कुचकुङ्कुमं तेन रञ्जितायाः कुलपतेः गोकुलनाथस्य कृष्णस्य कुन्दस्रजो गन्ध इह वाति प्रसरति। अनेन कान्तया सह उपगतत्वे लिङ्गमुक्तं भवति ॥ ११ ॥

फलभारेण नतान् तरून् कृष्णदर्शनात् प्रणतान्मत्वा प्रियया सहितस्य गतिविलासं सम्भावयन्त्यः पृच्छन्ति — **बाहुमिति**! हे तरवः! रामानुजो गृहीतं दक्षिणपाणिना धृतं पद्मं येन तथाभूतः। प्रियायाः स्कन्धे बाहुं वामबाहुं निधाय तुलसिकाया अलिकुलैः तदामोदमदान्धैरन्वीयमानोऽनुगम्यमान इह चरन् प्रणयसहितैरवलोकै र्वो युष्माकं प्रणाममभिनन्दति किम्? ॥ १२ ॥

तत्र काश्चित् काश्चिद्गोपीराहुः — **पश्यतेति** हे सख्यः! इमा लताः कृष्णेन नूनं सङ्गताः पश्यत, पृच्छतेति पाठान्तरम् तदा इमाः पृच्छतेत्यर्थः। ननु स्वपतिसङ्गतौ तत्सङ्गतिः दुर्घटा, तत्राऽऽहुः। वनस्पतेः पत्युः बाहून् स्कन्धान् आश्लिष्टा अपि कर्तरि क्तः। 'आश्लिष्ये'ति पाठान्तरम्। तदा आश्लिष्यापि नूनं तस्य कृष्णस्य करजैः नखैः स्पृष्टाः कुतः? यत उत्पुलकानि बिभ्रति। न हि स्वपतिसङ्गतानामपि ईदृक्पुलकसम्भव इति भावः। उद्भिन्नतकोरकाणि पुलकत्वेन सम्भावयन्तीना मियमुक्तिः ॥ १३ ॥

उन्मत्तकवत् पप्रच्छुरित्येतत् प्रपञ्चितम्। अथ रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः इति यदुक्तम् तत्प्रपञ्चयति **इतीति**। इति उन्मत्तस्येव वचांसि यासां ताः गोप्यः कृष्णान्वेषणेनातिकातराः अतिविह्वलाः तदात्मिकाश्च भगवतः तास्ताः लीलाः अनुचक्रुः अनुकृतवत्यः ॥ १४ ॥

कस्याश्चिदित्यादिभिश्चतुर्भि रनुकरणं प्रपञ्च्यते। ततश्चतुर्भि स्तन्मयत्वम्। पुनरेकेनानुकरणमिति विवेकः। कस्याश्चिद्गोपिकायाः पूतनावदाचरन्त्याः काचित्कृष्णवदाचरन्ती स्तनमचुम्बत्। अन्या तु तोकयित्वा शिशुवदात्मानं कृत्वा रुदन्ती शकटासुरवदाचरन्तीं काञ्चि त्पदा चरणेन अहन् ताडयामास ॥ १५ ॥

**विज०** हे एणपत्नि! मृगजाये! ते ईश्वरः कयाचित्प्रियया प्रियतमया इहोपगतः सामीप्यमाप्तः किम्? कीदृशः? हे सखि! मृगभार्ये! गात्रैः आननादिशरीरावयवैः वो युष्माकं दृशां सुनिर्वृतिं तन्वन्नपि विस्तारयन्, प्रश्ने निमित्तमाह — कान्तेति। कान्तायाः कमनीयायाः अङ्गसङ्गात् आलिङ्गनलक्षणात् सङ्क्रान्तकुचकुङ्कुमेन रञ्जिताया अनुरागीकृतायाः अस्मत्कुलपतेः कृष्णस्य अंसावलम्बिन्याः कुन्दस्रजः कुन्दपुष्परचितमालाया गन्ध इह वाति आगच्छतीति यत्तस्मादिति शेषः। 'वा गति गन्धनयोः' इति धातुः। यद्वा कान्तस्य भगवतोऽङ्गसङ्गसंयोगो यस्यास्सा तथा। अत्र स्त्रीशब्दोऽध्याहार्यः। सा कान्ताङ्गसङ्गा स्त्री तस्याः कुचकुङ्कुमरञ्जितायाः कुलपतेः कुन्दस्रजः गन्धोऽस्यास्तीति मत्वर्थे अच् प्रत्ययात् गन्धवान् वायुरिह वाति वीजयतीति, गोपीनामेकवचनबहुवचनाभ्यां भक्त्यतिशयपिशाचीग्रहणं सूचयति। यद्वा, एणपत्नीतुल्यनेत्रत्वात् सखीत्युपचर्यते। वः ईश्वरो भर्ता, मृगः कयाचित्प्रियया हरिण्या उपगतः। आश्लिष्टोऽपि किं न भवति गर्हितत्वात्। अस्मत्कुलपतिरस्मान्विहाय कयाचिदालिङ्गित इत्याशयेनाऽऽहुः — कान्तेति। कान्ताया अङ्गे उरोवयवे सङ्गो ययोस्तौ कान्ताङ्गसङ्गौ तौ कुचौ च कान्ताङ्गसङ्गकुचौ तयोः कुङ्कुमेन रञ्जितायाः अरुणीभूतायाः कुलपतेः कुन्दस्रजो गन्ध इह वाति। स्वयं च न दृश्यते, तत्सद्भावो विज्ञायत इति व्यङ्ग्यालङ्कारोक्तिः ॥ ११ ॥

विटवृत्तिमनुवर्तमानस्य पुंसो मालत्यादिपुष्पादानेच्छया तत्समीपजिगमिषासम्भवेन तत्प्रश्न उपयुज्यते। अश्वत्थादि प्रश्नः क्वोपयुज्यते, इत्यतः सम्भवं दर्शयितुमाहुः — **बाहुमिति**। हे तरवः प्रणामप्रदक्षिणादिना? प्रसन्नाः संसारात्तारयन्तीति तरवोऽश्वत्थादयः भगवच्चरणप्रियतुलसिकापुष्पमकरन्दलोलैः अलिकुलैरन्वीयमानो रामानुज एकं बाहुं प्रियांऽसे उपधा यपरेण गृहीतपद्मः प्रणामं चरन् कुर्वन् प्रणयावलोकैः वः अभिनन्दति किं वेत्यन्वयः। प्रावण्याऽलङ्कारोक्तिः। यद्वा इह चरन् रामानुजः प्रणयावलोकैः वः प्रणाममभिनन्दति, किञ्चानेन स्थावराणां भक्त्युन्नतिः सूचितेति ॥ १२ ॥

नूनं निश्चयेन यास्तस्य कृष्णस्य करनखस्पर्शादुत्पुलकितानि पुष्पफललक्षणानि बिभ्रति ताः लताः वनस्पतेः बाहून् शाखा अश्लिष्टा अपि सम्भाव्याः पश्यत। अहो उन्मुख्यो भक्त्येत्यन्वयः। अयं रूपकालङ्कारः सुरतसुखस्मारकः ॥ १३ ॥

**दैत्ययित्वा जहारान्यामेका कृष्णार्भभावनाम्।**
**रिङ्ग[1]यामास काऽप्यङ्घ्री[2] कर्षन्ती घोषनिस्वनौ ॥ १६ ॥**

कृष्णरामायिते द्वे तु गोपवत्सायिताः[3] परा[3]ः ।
[4-]वत्सायितं गृहीत्वाऽन्या[-4] [5-]भ्रा मयित्वा न्यपातयत् ।
कृष्णायिता घ्नती वान्या[-5] तत्रैका तु बकायतीम् ॥ १७ ॥

[6-]आ ह्वयद्दू[-6] रगा यद्वत्कृष्ण[7-]स्तमनुकुर्वतीम्[-7] ।
वेणुं क्वणन्तीं क्रीडन्तीमन्याश्शंसन्ति साध्विति ॥ १८ ॥

[8]कस्याश्चित्स्वभुजं न्यस्य चलन्त्याहा[9]ऽपरा अ[10] नु ।
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मना[11]ः ॥ १९ ॥

मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ।
इत्युक्त्वैकेन हस्तेन वि[12-]तत्यो[-12]न्निदधेऽम्बरम् ॥ २० ॥

---

★ This half verse is not found in V Edn 1 G,J,Va °ङ्क° 2. G,J,Va °नैः 3- -3. G,J,Va गोपायन्त्यश्च काश्चन 4- -4. G,J,Va वत्सायतीं हन्ति चान्या 5- -5. G,J,Va omit two quarter verses. 6- -6. G,J,V,Va आहूय दू° 7. J,Va वर्तती‌म् 8. K कस्याश्चि° 9. J °ह परां; V °ह परां 10. G,J,Va ननु; V तु सा 11. V °या 12- -12. G,J,Va यतन्त्युन्नि°

श्रीध० दैत्ययित्वेति[1]। दैत्ययित्वा[2] दैत्यवत्तृणावर्तवदात्मानं कृत्वा एका कृष्णार्भभावनां कृष्णस्यार्भं बाल्यं भावयति या तामन्यां जहार ॥ १६,१७ ॥

[3-]आह्वयदिति[-3] । दूरगाः दूरे वर्तमानाः गाः। यद्वद्यथा कृष्णः तथाऽऽहूय तं कृष्णम् [4-]अनुकुर्वतीम् अनुवर्तमानाम्[-4]। [5-]अनुवर्ततीम्[-5] इति वा पाठः॥ १८, १९ ॥

मेति। यतन्ती प्रयत्नं कुर्वती अम्बरमुत्तरीयं वस्त्रमुन्निदधै ऊर्ध्वं धृतवती ॥ २० ॥

---

1. J,Va °त्या 2. J,Va °त्या° 3- -3. V आहूयेति 4- -4. J,Va (अनुवर्ततीम्) अनुवर्तमानाम्। 5- -5. J,Va अनुकुर्वतीम्

वीर० काचित्तु दैत्ययित्वा तृणावर्तवदात्मानं कृत्वा अन्यां काञ्चित्कृष्णस्यार्भं बाल्यं भावयन्तीं जहार हृतवती। काचित्तु घोषाणां ध्वनतां भूषणानां निस्स्वनो ययोस्तौ। भूषणस्वनौ इति पाठान्तरम्। तावङ्घ्री चरणौ कर्षन्ती रिङ्खयामास जानुचङ्क्रमणं चकार ॥ १६ ॥

द्वे गोप्यौ कृष्णरामाविवाऽऽचेरतुः। काश्चन गोपा वत्साश्च तद्वदाऽऽचेरुः। तत्र काचिद्वत्सासुरवदाचरन्तीं काञ्चित् गृहीत्वा भ्रामयित्वा न्यपातयत्। काचिद्बकासुरवदाचरन्तीं घ्नतीव बभूव ॥ १७ ॥

तदा दूरगा दूरे वर्तमानाः गोवदाचरन्तीः, काश्चित् यद्वत्कृष्णः तद्वदाह्वयत् आजुहाव, 'आहूय' इति पाठे यद्वत्कृष्णः तद्वद्दूरगा आहूय, पुनस्तमनुकुर्वतीं, 'कृष्णत्वम्' इति पाठे कृष्णभावमनुकुर्वतीम्। तदेव दर्शयति वेणुं क्वणयन्तीं केवलं मुखेन गायन्तीं, 'क्रीडन्तीम्' इति पाठान्तरम्। काश्चित्साधु साध्विति शंसन्ति प्रशशंसुः ॥ १८ ॥

काचित्तु तन्मनाः कृष्णाभेदाभिमानयुक्तमनाः कस्यांचित्स्वभुजं न्यस्य कस्याश्चिदंसे स्वभुजं निधायेत्यर्थः। चलन्ती पादविन्यासान्कुर्वती अपराः प्रत्याह, किमिति? ननु हे सख्यः! अहं कृष्णः मम ललितां सुन्दरतरां गतिं पश्यतेति ॥ १९ ॥

तथा काचित्कृष्णोऽहमिति वदन्ती वर्षवाताभ्यां मा भैष्ट भयं मा कार्ष्ट, ताभ्यां वर्षवाताभ्यां त्राणं रक्षणं मया विहितमित्युक्त्वा अम्बरमुत्तरीयमेकेन हस्तेन वितत्य विस्तृत्य उन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥

**आरुह्यैका[1] पदाऽऽक्रम्य [2-]शिरस्याहा[-2]ऽपरां नृप!।**<br>
**दुष्टाहे! गच्छ जातोऽहं खलानां ननु दण्डधृत्[3] ॥ २१ ॥**

**तत्रैका[4] चाऽऽह हे गोपाः! दावाग्निं पश्यतोल्बणम्।**<br>
**चक्षूंष्याशु[5] पिदध्वं वो विधास्ये क्षेममञ्जसा ॥ २२ ॥**

**[6-]बध्नन्त्येका स्रजा काश्चित्[-6] [7-]त्वा मद्योलूखले हरे[-7]।**<br>
**★ बध्नामि भाण्डभेत्तारं हैयङ्गवमुषन्त्विति।**<br>
**भीता सुदृक्पिधायाऽऽस्यं भेजे भीतिविडम्बनम् ॥ २३ ॥**

**एवं कृष्णं पृच्छमाना बृन्दावनलतास्तरून्।**<br>
**व्यचक्षत[8] वनोद्देशे पदानि परमात्मनः ॥ २४ ॥**

**पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः।**<br>
**लक्ष्यन्ते हि [9-]ध्वजाम्भोज[-9][10-]वज्राङ्कुशलतादिभिः[-10] ॥ २५ ॥**

---

1. V °कां 2- -2. शिर आहा° 3. G,J,Va,W धृक्; V भृत् 4. G,J,V,Va °कोवाच 5. G,J,V °ष्वपि° 6- -6 G,J,Va बद्धान्यया स्रजा काचित्; V बध्नन्त्यन्या स्रजैकाऽऽह 7- -7. G,J,Va तन्वी तत्र उलूखले ★ This half verse is not found in G,J,Va Edns. 8. M,Ma °क्षन्त 9- 9. V यदम्भोज 10- -10. G,J,Va वज्राङ्कुशयवादिभिः; V. ध्वजवज्राङ्कुशादिभिः

**श्रीध० तत्रेति।** पि[1]दध्वं निमीलयत ॥ २१, २२ ॥

**बध्नन्तीति।** सुदृक् सुनयनम् आस्यं पिधाय, सुदृक् वराक्षीति वा। भीतिविडम्बनं भयानुकरणम् ॥ २३ ॥

**एवमिति।** एवं पुनरपि बृन्दावने लतास्तरूंश्च कृष्णं पृच्छन्त्यो वनोद्देशे वनप्रदेशे। व्यचक्षत अपश्यन् ॥ २४, २५॥

---

1 J,Va अपि°

**वीर०** हे नृप! काश्चित्कालियायन्तीं शिरसि पदा आक्रम्य अपरा काचिदुवाच किमिति? हे दुष्टसर्प! गच्छ इतो ह्रदादपसर। ननु हे अहे! अहं खलानां दण्डधृत्[1] दण्डयिता जातः अवतीर्ण इति ॥ २१ ॥

तथा तत्र गोपीनां मध्ये काचिदुवाच — **किमिति।** हे गोपाः! उल्बणं दुस्सहं प्रभूतं वा दावाग्निं पश्यत। चक्षूंषि पिदध्वं निमीलयत। वो युष्माकमाशु क्षेममञ्जसा सुखेन विधास्ये करिष्यामीति ॥ २२ ॥

एका तु स्रजा काञ्चिद्बध्नन्ती प्रोवाच, किमिति? हे हरे! अधुना त्वां हैयङ्गवमुषं नवनीतचोरं तद्भाण्डभेत्तारं च, अतः उलूखले बध्नामीति। तथैवं बद्धोक्ता च सा भीतेव शोभने दृशौ तदास्यं पिधाय हस्ताभ्याम् आच्छाद्य सुदृक् वराक्षी वा सती मुखं पिधाय भीतिविडम्बनं भयानुकरणं भेजे चकार ॥ २३ ॥

इत्थं पुनरपि बृन्दावने लतास्तरूंश्च कृष्णं पृच्छमानाः वनप्रदेशे परमात्मनः कृष्णस्य पदानि व्यचक्षत अपश्यत् ॥ २४ ॥

तदा दृष्टभगवत्पादानां तासामुक्तिमाह — **पदानीति।** इमानि महात्मनो नन्दसूनोः पदानि व्यक्तं नूनम्। कुतः? हि यस्मात् ध्वजादिभीरेखात्मकैः लक्ष्यन्त इति ॥ २५ ॥

---

1 T,W °क्

**विज०** उपसंहरति — **एवमिति।** वनोद्देशे वनप्रदेशे ॥ २१-२४ ॥

परमात्मचरणाकृतित्वं कथमवगम्यते इति तल्लक्षणमुच्यते — **पदानीति।** लता कल्पलता आदिशब्देन चक्रादिकं गृह्यते। यवादीत्यपि पाठः ॥ २५ ॥

**तैस्तैः[1-]पदैस्त[-1]त्पदवी मन्विच्छन्त्योऽग्रतोऽबलाः।**
**वध्वाः पदैः सु[2]पृक्तानि विलोक्याऽऽर्तास्समब्रुवन् ॥ २६ ॥**

**कस्याः पदानि [3-]चैतानि यातायाः[-3] नन्दसूनुना ।**
**अंसन्यस्तप्रकोष्ठायाः [4]करेणोः करिणा यथा ॥ २७ ॥**

**अनयाऽऽराधितो नूनं भगवान्हरिरीश्वरः ।**
**यन्नो विहाय गोविन्दः प्रीतो या मनयद्रहः ॥ २८ ॥**

**धन्या अहो! अमी [5]आल्यो गोविन्दाङ्घ्र्यब्जरेणवः।**
**[6-]या न्ब्रह्मेशादयो देवा[-6]ः दधु[7-]र्मूर्ध्न्यघनुत्तये[-7] ॥ २९ ॥**

**तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत्।**
**[8]एकाऽपहृत्य गोपीनां [9]रहो भुङ्क्तेऽच्युताधरम् ॥ ३० ॥**

---

1- -1. V ततस्ततस्तं प॰ 2. K,T,W सं॰ 3- -3. V यातायाः पश्यध्वं 4. M,Ma करिण्याः 5 V ह्या॰ 6- -6. G,J,M,Ma,Va यान् ब्रह्मेशौ रमा देवी; V यान् ब्रह्मेशौ रमा देवाः 7- -7. M,Ma ॰मूर्ध्ना तदूतये 8. G,J,K,V,Va यै॰ 9 K,T,W धनं

**श्रीध॰ तैरिति।** सुपृक्तानि सम्मिश्राणि ॥ २६ ॥

**कस्या** इति। तेनांसे न्यस्तः प्रकोष्ठो यस्याः। करेणोः हस्तिन्याः ॥ २७ ॥

**अनयेति**। रह एकान्तस्थानम् ॥ २८ ॥

**धन्या** इति। हे आल्यः! सख्यः! अहो धन्या अतिपुण्या गोविन्दाङ्घ्र्यब्जरेणवः, तत्र हेतुः — यानीति। अस्माभिरप्येतद्रेण्वभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥

अन्या आहुः — **तस्या** इति। गोपीनां सर्वस्वम्। अयं भावः — भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुः तानि तु [1-]नः दुःखं[-1] कुर्वन्तीति ॥ ३० ॥

---

1- -1. P,V नः कथं दुःखं

**वीर॰ ततः** तैस्तैः ध्वजादिचिह्नितैः पदैः तस्य कृष्णस्य पदवीं पुरःपुरोऽन्विच्छन्त्यः अन्वेषयन्त्यः, **अबला** गोप्यः तदा कस्याश्चिद्वध्वाः पदैः सम्पृक्तानि अन्तराऽन्तरा युक्तानि भगवतः पदानि विलोक्याऽऽर्ता दुःखिता ऊचुः ॥ २६ ॥

तदेवाऽऽह — **कस्या** इत्यादिभिः सार्धैरष्टभिः। करिणा सह करिण्या इव नन्दसूनुना सह गच्छन्त्याः कस्याश्चिद्वध्वाः पदानि हे गोप्यः! पश्यत! कथम्भूतायाः? अंसे स्कन्धे न्यस्तः प्रकोष्ठो यस्याः तस्याः. अन्यथा एवंविधः पदानां सम्पर्को न स्यादिति भावः ॥ २७ ॥

अनया, कृष्णेन सह यातया भगवान् हरिरीश्वरो नूनम् आराधितः, पूर्वजन्मनीति शेषः। कुतः? यद्यस्मान्नोऽस्मान् सर्वाः विहाय गोविन्दः प्रीतियुक्तो रहः एकान्तं यामनयत्। न ह्यनाराधितेश्वराणां रहसि गोविन्दसङ्गस्सुलभ इति भावः ॥ २८॥

काश्चिदाहुः — **धन्या** इति। हे आल्यः सख्यः! अमी गोविन्दस्य पादाब्जरेणवः धन्याः। अहो! तत्र हेतुः यानिति। यान् गोविन्दाङ्घ्र्यब्जरेणून् ब्रह्मादयो देवाः अघनुत्तये गोविन्दप्राप्तिप्रतिबन्धकपापापनुत्तये मूर्ध्नि धृतवन्तः। अस्माभिरप्येतद्रेण्वभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥

अन्यास्त्वाहुः — **तस्या** इति। तस्याः गोविन्देन सह यातायाः अमूनि पदानि नोऽस्माकम् उच्चैः भृशं क्षोभं चित्तक्षोभं कुर्वन्ति, तत्र हेतुः — या स्वयमेकैव सर्वासां गोपीनां सम्बन्धि सर्वस्वभूत मच्युतस्याधरमधरामृतमपहृत्य रहसि भुङ्क्ते ॥ ३० ॥

**विज०** अन्विच्छन्त्यः अन्वेषणं कुर्वत्यः वध्वाः कस्याश्चिद्गोपस्त्रियः पदैश्चरणैः निक्षिप्तैः सुपृक्तानि अन्तराले मिश्रितानि ईर्षया (ईर्ष्यया) आर्ताः समब्रुवन् संलापमकुर्वन् ॥ २६ ॥

प्रकोष्ठः करतलमूलभागः करिणा सहितायाः करिण्याः पदानि यथा स्वांसन्यस्तहस्तायाः करिण्याः पदैः संपृक्तानि करिणा कृतानि पदानि वा ॥ २७, २८ ॥

हे आल्यः! सख्यः! धन्या निरपेक्षाः: "आलिः सेतौ सखीपङ्क्त्योः" (वैज.को. 6-2-3) इति यादवः। "निरपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः" इति च। ब्रह्माद्या मूर्ध्ना यान् दधुरिति यत्तस्मात् धन्या इत्यर्थः। तस्मात् विष्णोरूतये अभिप्रायसिद्धये रक्षासिद्धये वा ॥ २९ ॥

ननु धन्यानां कृष्णपादतलयुक्तानां रेणूनां सन्दर्शनं युष्माकमभूत्। इतःपरं शोकस्य किं कारणमित्याशङ्क्य, सत्यम्, अथापि तदीयपदसम्पृक्तमन्यस्त्रीपदं सन्दृश्य संस्मृत्य महाशोको जायत इत्याशयेनाऽऽहुः — **तस्या** इति। गोपीनां मध्ये एका गोपी कृष्णमपहृत्य वशीकृत्य अच्युताधरं अच्युतस्य हरेः, अच्युतं सन्ततस्यन्दमानामृतमधरोष्ठं रहो रहस्येकान्तदेशे भुङ्क्ते यत् ततस्तस्या गोप्या अमूनि पदानि सन्दृश्याऽधरपानं संस्मृत्य उच्चैः क्षोभं चित्तविक्षेपं कुर्वन्ति, तस्माच्छोक इत्यर्थः ॥ ३० ॥

**न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः।**
**खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥**

★ **इमान्यधिकमग्नानि[1] पदानि वहतो वधूम्।**
**गोप्यः! पश्यत कृष्णस्य भाराक्रान्तानि[2] कामिनः[3] ॥ ३२ ॥**

**अत्रावरोपिता[4] कान्ता पुष्पहेतोर्महात्मना।**
**अत्र प्रसूनापचयः[5] प्रियार्थे[6] प्रेयसा कृतः ॥ ३३ ॥**

**प्रपदाक्रमणे ह्येते[7] पश्यतासकले पदे।**
**केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ ३४ ॥**

**तानि चूडयता कान्तामुपविष्टमिह ध्रुवम्।**
**$ इत्येवं प्रलपन्त्यस्ता[8] गोप्यश्चेरुर्विचेतसः[9]॥ ३५ ॥**

---

★ Three half verses commencing with इमानि ....... and ending with ..... महात्मना are not found in Va.Edn. 1 K,T,W ल° 2. G,J क्रान्तस्य 3. K गा° 4. G,J,Va °व° 5. V प्रीत्यर्थे 6. V °से 7. G,J,K,M,Ma,Va एते 8 G,J,V,Va दर्शयन्त्यः

$ This half verse is printed after the half verse beginning with कामिनां दर्शयन् (V.36) in G,J,V,Va editions and before कामिनां दर्शयन् in M,Ma editions. 9. M,Ma,V °चेतनाः

**श्रीध०** तदसंपृक्तान् केवलकृष्णपादरेणूनेव विचिन्वत्य[1]ः तान्दृष्ट्वा पुनरत्यन्तं समतप्यन्[2]। तदाह श्लोकत्रयेण — **न लक्ष्यन्त** इति। खिद्यती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तामुन्निन्ये स्कन्धमारोपितवान् ॥ ३१ ॥

**प्रपदेति** प्रपदाभ्यामाक्रमणं क्षोणीमर्दनं[3] ययोः। अत एव असकले पदे पश्यतेति। तस्याः कृष्णजान्वन्तरुपविष्टाया[4]श्चिह्नं दृष्ट्वाऽऽहुः — केशप्रसाधनमिति ॥ ३२-३४ ॥

**तानीति**। कान्तामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकारेण बध्नता इह[5] ध्रुवमुपविष्टम् ॥ ३५ ॥

---

1. P,V,Va °न्त्यः 2. J,Va °तपन् 3. V सम्म० 4. P,V °न्त उप 5. J,Va omit इह

**वीर०** अन्या तु केवलमसंपृक्तानि कृष्णस्यैव पदानि दृष्ट्वा सामर्षमाह — **न लक्ष्यन्त** इति। तस्याः वध्वाः पदान्यत्र न दृश्यन्ते। कुतः? यतो नूनं तृणाङ्कुरैः खिद्यन्ती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तां प्रेयसीं प्रियः श्रीकृष्णः उन्निन्ये स्कन्धमारोपितवान् ॥ ३१ ॥

अपरास्तु सत्यम्, अत एव अधिकलग्नानि पदानि पश्यतेत्याहुः — **इमानीति**। हे गोप्यः। वधूं वहतो गामिनो गच्छतः, 'कामिन' इति पाठे कामिनः, अत एव वधूं वहतः कृष्णस्य, अत एव भाराक्रान्तानि अत एव अधिकलग्नानीमानि पदानि पश्यत ॥ ३२ ॥

काश्चित् क्षोणीसम्मर्दमालक्ष्याऽऽहुः - **अत्रेति**। महात्मना कामिना अत्र पुष्पहेतोः पुष्पापचयार्थं कान्ता अवरोपिता। अत्र तु प्रियार्थे प्रियामलङ्कर्तुं प्रेयसा कृष्णेन प्रसूनानामपचयः पुष्पलवनं कृतः ॥ ३३ ॥

अत एव प्रपदाभ्यां पादाग्राभ्याम् उच्चप्रसूनापचयार्थमाक्रमणं ययोस्ते अत[1] एव असकले अर्धमग्ने एते पदे पादाङ्कौ पश्यत। काश्चित्तस्याः कृष्णजान्वन्तरमुपविष्टायाः चिह्नं क्षोणीसम्मर्दनादिकमालक्ष्याऽऽहुः — केशप्रसाधनमिति। अत्र कामिना कृष्णेन कामिन्याः केशप्रसाधनं केशानामितस्ततो विश्लथतां प्रसाधनं पुनस्सीमन्तसमीकरणाभ्यां बन्धनं कृतम् ॥ ३४॥

कान्तामधिकृत्य तानि प्रसूनानि चूडयता शिरोभूषणं कुर्वता कृष्णेनेह नूनम् उपविष्टम्। इत्युक्तप्रकारेण, एवं प्रकारान्तरेणापि प्रलापं कुर्वत्यः। दर्शयन्त्य इति पाठे मिथः तच्चिह्नानि दर्शयन्त्यस्ता गोप्यः तत्र तत्र विचेतस उन्मत्तसदृश्यो विचेरुः ॥ ३५ ॥

---

1. W omits अत एव

**विज०** इदमधिकं शोककारणमित्याशयेनाऽऽहुः — **नेति**। नूनं तर्क एवं कथं तस्याः गोप्याः पदानि न लक्ष्यन्ते न दृश्यन्ते। अदर्शने कारणमूहयन्ति तृणाङ्कुरसम्बन्धेन। खिद्यत्परिघातमाप्नुवत् सुजातं ललितमङ्घ्रितलं यस्याः सा तथा। प्रेयसीं उन्निन्ये उद्धृत्य नीतवान्। उदू(दु)ह्य नयनेन भूमिसम्बन्धाभावात् पदादर्शनमपि, अत एव तादृशप्रेम नाऽस्माकं प्राप्तमिति शोकोऽस्माकम् ॥ ३१ ॥

युष्मत्परित्यागव त्प्रेयसीपरित्यागेन गमनात् पत्पदादर्शनं किं न स्यादित्यतः कुत उद्धृत्य गमनमनुमीयत इत्यत एतल्लिङ्गमप्रतिहत मित्याहुः — **इमानीति**। धूमाग्न्योरविनाभावात् भारवहपुरुषपदमज्जनं भारवहनाविनाभूतं प्रत्यक्षसिद्धत्वा दुदू(दु)ह्यगमनमनुमीयत इत्यर्थः। मानयितुं शीलमस्यास्तीति मानी। तस्य अधिकशृङ्गारोक्तिरियम् ॥ ३२ ॥

अवरोहणं स्नेहाधिक्यादित्याशयेनाऽऽहुः — महात्मनेति। कथमिदमवगतं, पुष्पनिमित्तादित्यत्राहुः — **अत्रेति**। अपचयः नखादिसंयोगेन यथा म्लानं न भवति तथा प्रलूनम्। इदमपि प्रेयसां प्रेमातिशयप्रकटनम् ॥ ३३ ॥

इदमपि चित्रमित्याहुः — **प्रपदेति**। हे गोप्यः! प्रपदयोः पादाग्रयोराक्रमणं ययोरस्ति ते प्रपदाक्रमणे एते पदे पादलाञ्छने असकले असम्पूर्णे उन्नतशाखापुष्पापचये प्रियकृष्णकरावनमितशाखाग्रहणे दुःस्थपदत्वाद्यावत्पादप्रमाणरहिते, पश्यतेत्यन्वयः। केशमार्जन्या केशप्रसाधनं केशसंस्कारः: 'कमु गतौ' इति धातोः काम आनन्दः, कामो गतिर्ज्ञानं चाऽस्य स्त इति कामी पूर्णानन्दज्ञानवानित्यर्थः। तेन कामिना प्रशस्तेच्छावता वा ॥ ३४ ॥

कान्तां स्त्रियं तानि पुष्पाणि चूडयता संस्कृतकेशपाशे सुदर्शनीयं निदधता कृष्णेनेह स्थले उपविष्टं, पश्यतेति शेषः। इदं ध्रुवं निश्चितं, सन्देहं न कुरुतेत्यर्थः। इतिशब्द आदिवचनः। प्रकृष्टं कृष्णविषयं प्रलापं कुर्वन्त्यः विटविषयमनर्थवचनं कुर्वन्त्यश्च[1] ॥ ३५ ॥

---

1. M,Ma add अविशिष्टचेतना अविपरीतचेतनाश्च।

★ रेमे तया चाऽऽत्मरत आत्मारामोऽप्यखण्डितः।
कामिनां दर्शयन्दैन्यं स्त्रीणां चाऽपि[1] दुरात्मताम् ॥ ३६ ॥

यां गोपीमनयत्कृष्णो विहायाऽन्याः स्त्रियो वने।
सा च मेने तदाऽऽत्मानं वरिष्ठां[2] सर्वयोषिताम् ॥
हित्वा गोपीः कामयाना मामसौ भजते प्रियः[3] ॥ ३७ ॥

ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत्।
न पारयेऽहं चलितुं[4] नय मां यत्र ते मनः ॥ ३८ ॥

एवमुक्तः प्रियामाह स्कन्ध[5] आरुह्यतामिति।
ततश्चान्तर्दधे कृष्णस्सा वधूरन्वतप्यत ॥ ३९ ॥

हा नाथ! रमण! प्रेष्ठ! क्वासि क्वासि महाभुज।
दास्यास्ते कृपणाया मे सखे! दर्शय सन्निधिम् ॥ ४० ॥

---

★ This half verse is printed after तानि चूडयता etc. in G,J,M,Ma,V,Va 1 M चैवं G,J,Ma,V चैव 2. G,J,K,M,Ma,Va °ष्टं 3 M, इह; Ma °ति ह। 4 K,T,W °रि° 5. K,T,W °न्धमार°

**श्रीध०** **रेमे** इति। रेमे तयेत्यादि शुकोक्तिः। आत्मरतः स्वतस्तुष्टः। आत्मारामः आत्मक्रीडः[1]। अखण्डितः स्त्रीविभ्रमैरनाकृष्टोऽपि। तथा चेत्किमिति रेमे[2] ऽत आह — कामिनामिति ॥ ३६ ॥

स्त्रीणां दुरात्मतामाह — सा चेति द्वाभ्याम्। कामो यानमागमनसाधनं यासां ता गोपीर्हित्वा मां भजते इति हेतोरात्मानं वरिष्ठां[3] मेने इति ॥ ३७, ३८ ॥

कामिनां दैन्यं दर्शयति — **एवमुक्त** इति। अखण्डितत्वमाह — ततश्चेति। तस्यां स्कन्धारोहोद्यतायामन्तर्हित इत्यर्थः ॥ ३९ ॥

अनुतापमाह — **हा नाथेति** ॥ ४० ॥

---

1. J स्वक्रीडः, Va स्वाक्रीडः 2. P,V. °मेत्यत 3. J,Va ष्ठं

**वीर०** किं विचेतोभिर्गोपीभिः केवलमित्थं सम्भावनामात्रं कृतम् उत तत्सत्यमेवेति राज्ञः संशयं निराह मुनिः — **रेम** इति। तया गोपीभिरुद्भावितया कयाचिद्गोप्या सह भगवान् रेमे। कथम्भूतः? आत्मारामोऽप्यखण्डितोऽपि

अवाप्तसमस्तकामत्वेन स्त्रीविभ्रमैरखण्डितचित्तोऽपि। तथा चेत्किमिति रेमेऽत आह- **कामिनामिति।** कामिनां विषयासक्तचित्तानां दैन्यं तत्पारवश्यात्मकं स्त्रीणां दौर्जन्यं च दर्शयन् दर्शयितुमित्यर्थः ॥ ३६ ॥

स्त्रीणां दुरात्मतामाह — **यामिति।** अन्यास्स्त्रियो विहाय कृष्णो यां **गोपीमनयत्,** सा च तदा सर्वयोषितां मध्ये आत्मानं वरिष्ठा[1] ममन्यत। मननप्रकारमेवाऽऽह — हित्वेति। कामो यानमागमनसाधनं यासां ताः सर्वा गोपीः विहायाऽसौ प्रियां[2] मामेव भजते अनुवर्तते। अतोऽहं सर्वयोषितां श्रेष्ठेति मेने इत्यर्थः। तत एवमभिमत्यनन्तरं किञ्चिद्दूरं गत्वा गर्विता सती केशवं सर्वेश्वरं[3] कृष्णमब्रवीत्। किमिति? अहं गन्तुं चरितुं न शक्नोमि। अतो यत्र ते मनः यत्र[4] जिगमिषसि, तत्र मां नयेति ॥ ३७ ३८ ॥

कामिनां दैन्यं दर्शयति — **एवमिति।** इत्थमुक्तौ भगवान् प्रियामाह — किमिति? स्कन्धे[5] आरुह्यतामिति त्वयेति शेषः। अखण्डितत्वमाह — ततश्चेति। ततः तस्यां स्कन्धारोहोद्यतायां सत्याम् अन्तर्हितवान्। ततस्तदैव सा वधूरनुतप्तवती ॥ ३९ ॥

अनुतापप्रकारमेवाऽऽह — **हा नाथेति।** हेति खेदे। हे नाथ! हे प्रियतम! हे महाभुज! क्वासि। तव किङ्कर्याः कृपणायाः दीनायाश्च मम हे सखे! तव सन्निधिं दर्शय ॥ ४० ॥

---

1. K °ष्ठ° 2. T,W °यो 3 T,W omit सर्वेश्वरं T,W omit यत्र 5 K °न्धमारु०

**विज०** अयं सर्वस्मादधिकशोकतम इत्याहुः — **रेम** इति। तया कामिन्या रेमे च सुरतशीलामप्यनुबभूव, न स्वार्थमिति सूचयन्ति आत्मरत इति। आत्मनि स्वरुपानन्दे रतः आत्मन्येवाऽऽरामः क्रीडा यस्य स तथा। "आत्मरतिआत्मक्रीडः" (छान्दो.उ. 7-25-2) इति श्रुतिः। अनेन विशेषणद्वयेन हरेर्विटवृत्तिं निषिध्यन्ति। भगवत्प्रीतिसाधनभक्तिज्ञानादितारतम्यात् प्रीतितारतम्यमसूचि इति ज्ञायते। तथा चान्या गोप्य इन्द्रियवृत्तयः कृष्णनीता कामिनी भक्ति र्बुद्धिर्वा ग्राह्येति, बुद्धिमता तत्तत्पदानि तत्तदर्थबोधकत्वेन योजनीयानीति सङ्ग्राह्यमिति सन्तोष्टव्यम्। शोकादिकं च गुणनिमित्तमिति। अत एव अखण्डितः कामेनेति शेषः। कामिनां दुरात्मतां स्त्रीणामेवं दैन्यं दर्शयन् दर्शयन्त्यश्च ॥ ३६ ॥

अहम्भावः सर्वथा त्याज्य इति दर्शयितुमाह — **यामिति।** अनेन राक्षस्याः बुद्धेः स्वभावो दर्शितः। अत्यधिकं भजतेति, हेत्यनेन विषयलोलुपानां प्रवृत्तिरीदृशी इति दर्शयति ॥ ३७ ॥

कथान्तरारम्भं वा। तमाह — **तत** इति। "प्रत्यारम्भे प्रसिद्धे ह" (वैज.को. 8-7-8) इति यादवः। वनोद्देशं विषयप्रदेशं, केशवं प्रशस्तकेशपाशं वने कामिनम्। पारये समर्थये पारं गन्तुं न शक्नोमीति वा ॥ ३८ ॥

यत्र गन्तुं विटगतस्वभावं दर्शयितुमाह — **एवमिति।** भक्त्या लभ्यो नान्यथेति भावं दर्शयति तत इति। शुद्धबुद्धेः स्वभावोऽयमिति दर्शयितुमाह सा वधूरिति ॥ ३९ ॥

हा विषण्णास्मि वने। "हा विषादशुगार्तिषु" (वैज.को. 8-7-8) इति च। हे नाथ! आशाप्रद! हे रमण! रतिप्रद! हे प्रेष्ठ! प्रियतम! दास्याः शिक्षायोग्यायाः, "दासु हिंसायाम्" इति धातुः। कृपणायाः कृपाविषयायाः ॥ ४० ॥

---

1. Ma ली

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः।
ददृशुः प्रियविश्लेषमोहितां[1] दुःखितां सखीम्[2] ॥ ४१ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात्।
अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४२ ॥

[3-]ततोऽविशन्वनं[-3] चन्द्रज्योत्स्ना यावद्विभाव्यते।
तमः प्रविष्टमालक्ष्य ततो निववृतुस्स्त्रियः ॥ ४३ ॥

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४४ ॥

पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः[4]।
समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः[5] ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्रयां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
रासक्रीडायां कृष्णान्वेषणं नाम त्रिंशोऽध्यायः॥ ३० ॥

---

1. M,Ma °श्लिष्टां मो° 2. G,J,Va — °खीम् 3- -3 M,Ma गत्वा वनाद्वनं 4. V °विताः 5. M,Ma °णीः

**श्रीध० अन्विच्छन्त्य** इति। अन्विच्छन्त्यो मृगयमाणाः। अविदूरतः समीपे ॥ ४१, ४२ ॥

**तत** इति। ततस्तयापि सहिताः कृष्णान्वेषणाय वनमविशन्। ततो हरेः अन्वेषणान्निवृत्ताः ॥ ४३ ॥

**तन्मनस्का** इति। एवं तमःप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः। तदात्मिकाः स एवाऽऽत्मा यासां ताः। तन्मय्य[1] इत्यर्थः ॥ ४४ ॥

**पुनरिति**। किन्तु पूर्वं यत्र श्रीकृष्णेन सङ्गतिरासीत् तदेव कालिन्द्याः[2] पुनः पुलिनमागत्य कृष्णं भावयन्ति ध्यायन्तीति तथा ताः कृष्णस्याऽऽगमनं काङ्क्षितं यासां ताः मिलिताः [3-]सम्मिलिताः[-3] सत्यः कृष्णमेव जगुरिति ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे।
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
त्रिंशोऽध्यायः ॥ ३० ॥

---

1 P,V °मयाः 2. J,Va omit 3- -3. J,Va omit

**वीर०** इत्थं प्रियस्य विश्लेषणमोहितां विचित्तां दुःखितां च तामविदूरतः ता गोप्यो ददृशुः। कथम्भूताः? भगवतो मार्गमन्वेषयन्त्यः ॥ ४१ ॥

ततस्तया स्वस्याः माधवात् मानप्राप्तिं सम्मानप्राप्तिं तथा आत्मनो दौरात्म्याद्धेतोः अवमानं च कथितमाकर्ण्य सर्वा गोप्यः परमं विस्मयं प्रापुः ॥ ४२ ॥

ततस्तया सहिताः कृष्णान्वेषणाय यावच्चन्द्रिका प्रकाशते तावद्वनं चेरुः। ततस्तमसा सान्द्रतरुच्छायाकृतेन प्रविष्टं व्याप्तं वनमालक्ष्य ततोऽ[1]न्वेषणान्निवृत्ताः ॥ ४३ ॥

एवं तमःप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः। तत्र हेतुं वदन् विशिनष्टि। तस्मिन् कृष्ण एव मनो यासाम्, अत एव तदात्मिकाः तज्ज्ञानप्रचुराः, अत एव तस्यैवाऽऽलापो यासां, तस्यैव विविधा चेष्टा यासां, ताः तस्यैव गुणान् गायन्त्यः ॥ ४४ ॥

किन्तु पूर्वं कृष्णेन यत्र सङ्गताः तदेव कालिन्द्याः पुलिनमागत्य समवेताः समुदिताः कृष्णभावनायुक्ताः कृष्णस्याऽऽगमने काङ्क्षितं काङ्क्षा यासां ताः कृष्णमेव जगुः ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीविरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रिंशोऽध्यायः ॥ ३० ॥

---

1 t,W Omit अन्वेषणात्

**विज०** गां दृष्टिं पान्ति रक्षन्ति दुर्विषयगमनराहित्येनेति गोप्य इन्द्रियवृत्तयः शास्त्रविषयाः अविदूरतः ज्ञात्वा समीपे स्थिताः मुक्तेः पूर्वमपरोक्षबुद्धेः आविर्भावतिरोभावौ क्वचित्स्याता मिति भावदर्शनायोच्यते प्रियेत्यादिना ॥ ४१ ॥

मानप्राप्तिं अपरोक्षलक्षणमानप्राप्तिम् ॥ ४२ ॥

यावच्चन्द्रज्योत्स्ना विभाव्यते तावत् वनाद्वनं गत्वा ततश्चन्द्रचन्द्रिकास्तमयानन्तरं प्रविष्टं प्राप्तं तम आलक्ष्य दृष्ट्वा निववृतुः, निवृत्ता इत्यनेन दुश्शास्त्रान्निवृत्त्य सच्छास्त्राभ्यसनाय यत्नं चक्रुरिति सूच्यते। 'स्त्यै ष्टचै शब्दसङ्घातयोः' इति धातोः शास्त्रविषया बुद्धयः ॥ ४३ ॥

सत्त्वबुद्धीनां स्वभावं दर्शयति **तन्मनस्का** इति ॥ ४४ ॥

समवेताः एकविषयीकृताः तस्य कृष्णस्य अगमनकाङ्क्षिण्यः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां दशमस्कन्धे पूर्वार्धे त्रिंशोऽध्यायः ॥ ३० ॥

(श्रीविजयध्वजरीत्या अष्टाविंशोऽध्यायः)

---

# एकत्रिंशोऽध्यायः

## (विजयध्वजरीत्या एकोनत्रिंशोऽध्यायः)

### गोप्य ऊचुः

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र[1] हि।
दयित दृश्यतां दिक्षु[2-] तावकाः[-2] त्वयि धृतासवस्[3]त्वां[4] विचिन्वते ॥ १ ॥

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा।
सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥

विषजलाप्ययाद्[5]व्यालराक्षसात् वर्षमारुताद्वैद्युतानलात् ।
वृषमयात्[6]मजाद्विश्वतो भयात्[7] ऋषभ[8] ते वयं रक्षिता मुहुः ॥ ३ ॥

न[9] खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो[10][11] विश्वगुप्तये सख उदेयिवान् सात्त्वतां कुले ॥ ४ ॥

विरचिताभयं वृष्णिधुर्य[12]! ते चरणमीयुषां[13] संसृतेर्भयात् ।
करसरोरुहं कान्त! कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥

---

1. M,Ma साधु तत्र° 2- -2 M,Ma त्वा दिदृक्षतां 3 M ग° 4 M,Ma स्त्वा वि° 5. M.Ma V °श° 6 M,Ma भयाद्भयाद्वि 7 M,Ma मुखात् 8 T,W वृ° 9 M,Ma स 10 T,W,V °घ° 11 M,Ma °र्चि° 12 M,Ma वर्य 13 M,Ma,V श°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकत्रिंशे निशायां[1] ताः पुनः पुलिन मागताः। कृष्णमेवाऽनुगायन्त्यः प्रार्थयन्ते तदागमम्॥

**जयतीति**। हे दयित! ते जन्मना व्रजः अधिकं यथा भवति तथा जयति अत्युत्कर्षेण[2] वर्तते। यस्मात् त्वमत्र जातः तस्मात् इन्दिरा लक्ष्मीः अत्र हि श्रयते[3] व्रजमलङ्कृत्य वर्तते। एवं व्रजे[4] सर्वस्मिन् मोदमाने अत्र तु तावकाः त्वदीयगोपीजना:[5] त्वयि त्वदर्थमेव कथञ्चित् धृता असवो यै स्ते त्वां विचिन्वते, मृगयन्ते[6]। अतस्त्वया दृश्यतां प्रत्यक्षीभूयतामिति। यद्वा अस्माभि र्भवान् दृश्यताम्। यद्वा, एवं त्वया दृश्यता मेते विचिन्वते इति, अत्र स्वतन्त्राणां बहूनां च वक्तृत्वात् अपरा आहुरिति[7] सर्वश्लोकेष्ववतारणा[8]। तथाऽपि स्सङ्गतिरुच्यते ॥ १ ॥

तत्र विचिन्वन्तु, मम किमितिचेत् तत्राहुः — **शरदिति,** शरादुदाशये शरत्कालिके सरसि [9]सा[10-]धुजात सत्सरसिजोदर श्रीमुषा[-10] साधु जातं सम्यग्जातं यत्सरसिजं [11]सुविकसितं पद्मं तस्योदरे गर्भे या श्री स्तां मुष्णाति हरतीति तथा। तथा दृशा नेत्रेण हे सुरतनाथ! सम्भोगपते! वरद! अभीष्टप्रद! अशुल्कदासिकाः अमूल्यदासीः [12]नः निघ्नतो मारयतः ते तव त्वया क्रियमाणः इहलोके अयं वधो न भवति किम्? [13]किं शस्त्रेणैव वधो वधः? किं दृशा [14]वधो वधो न भवति? किन्तु भवत्येव। अत स्तव दृशा अपहृतप्राणप्रत्यर्पणाय त्वया दृश्यता मिति भावः। त्वया दृश्यतामिति यथासम्भवं सर्वत्र वाक्यशेषः ॥ २ ॥

किञ्च बहुभ्यो मृत्युभ्यः कृपया रक्षित्वा किमिति इदानीं दृशा मन्मथं प्रेष्य घातयसीत्याहुः — **विषेति**। हे ऋषभ! श्रेष्ठ! विषमयाज्ज[15-]लाशयात्[-15] तथा व्यालराक्षसात् अघासुरात्, वर्षात् मारुतात् वैद्युतानलात् अश[16]निनिपातात्। वृषोऽरिष्टः तस्मात् मयात्मजात् व्योमात् विश्वतः अन्यस्मादपि सर्वतोभयाच्च [17]बककालियदमनादिना रक्षिताः किमिदानी मुपेक्षसे इति भावः ॥ ३ ॥

अपि च विश्वपालनायाऽवतीर्णस्य तव भक्तोपेक्षा अत्यन्तमनुचितेत्याशयेनाऽऽहुः — **न खल्विति**। हे सखे! भवान् खलु निश्चितं यशोदासुतो न भवति, किन्तु सर्वप्राणिनां बुद्धिसाक्षी। ननु स किं दृश्यो भवति? तत्राऽऽहुः विघनसा ब्रह्मणा विश्वपालनाय प्रार्थितस्सन् सात्त्वतां कुले उदेयिवान् उदित इति ॥ ४ ॥

तस्मात्त्वद्भक्तानामस्माक मेतत्प्रार्थनाचतुष्टयं सम्पादयेत्याहुः चतुर्भिः — **विरचितेति**। हे वृष्णिधुर्य! संसृतेर्भयात् ते [18]चरणमीयुषां [19]शरणं [20]प्राप्तानां प्राणिनां विरचितं दत्त मभयं येन तत्तथा। हे कान्त! कामदं वरदं तथा श्रियः करं गृह्णातीति तथा, तद्भवतः करसरोरुहं नः शिरसि धेहि ॥ ५ ॥

---

1. J,Va निराशाः 2. J,Va omit अति 3. P.V, omit श्रयते 4. Va omits व्रजे 5. J,Va याः 6 J,Va omit मृगयन्ते 7. P,V धा° 8. J,Va अ° 9. J,Va कलीने 10- -10. J,Va omit 11. J,Va omit सु 12. V omits नः 13 J,Va omit किं 14 J,Va omit वधो 15- -15 J,Va जलात् यः अप्ययः नाशः तस्मात् 16 J,Va omit नि 17 J,Va omit बक° 18 P,Va °श 19 Va omits प्राप्तानां 20 J,Va °वत्क°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"तद्गुणानेव गायन्त्यः" (भाग 10-30-44) कृष्णं जगुः इति चोक्तं, तदेव गानं प्रपञ्चयत्येकत्रिंशेन **जयतीति**। व्रजस्ते तव जन्मना हेतुना नितरां जयत्युत्कर्षं प्राप्नोति। किञ्च तव जन्मना इन्दिरा लक्ष्मीरपि नित्यमत्र व्रजे श्रयते व्रजमलङ्कुर्वती अस्माभिरलक्ष्यमाणा च अत्रैव वर्तत इत्यर्थः। यद्वा अत्र व्रजे श्रयते त्वामिति शेषः। नित्यानपायित्वादिति भावः। इन्दिरा महती समृद्धिर्वा। एवं सर्वस्मिन् व्रजे मोदमानेऽत्र त्वदीया वयन्तु त्वयि निमित्ते त्वदर्थमेवेत्यर्थः। कथञ्चिद्धृताः असवः प्राणाः याभिस्तथाभूता स्त्वामेव मृगयन्ते अतस्त्वया दृश्यताम् प्रायक्षीभूयताम् अस्माकमिति शेषः। अत्र वक्तृबाहुल्यात् प्रतिश्लोक 'मपरा आहु' रित्यवतारणा द्रष्टव्या। तत्र यथासम्भवं पूर्वोत्तरवचसां सङ्गति रुच्यते ॥ १ ॥

**तत्र विचिन्वन्तु**, मम किं तत्राऽऽहुः **शरदिति**। शरत्कालिके सरसि सम्यक् जातस्य, अनेन गम्भीरारम्भस्समुद्भूतत्वमभिप्रेतम् सत्सरसिजस्य सत्त्वमत्र सुमृष्टनालत्व रविकरविकसितत्त्वादिकं विवक्षितम्। उदरे गर्भे या श्रीः ताम् **मुष्णाति** हरति तिरस्करोतीति यावत्। तथा तया दृशा नेत्रेण हे **सुरतनाथ**! सम्भोगवर्धक! तदर्थं याचनीयेति वा। हे **आत्मपर्यन्ताभीष्टप्रद**! तव अशुल्कदासिकाः मूल्यरहिता दासीः मूल्यं विनाऽपि दास्यं प्राप्ताः, शुल्कदासिका इति च्छेदे तव सम्बन्धिना शुल्केन सौन्दर्यात्मकेन मूल्येन दासीरस्मा न्निघ्नतो मारयतः ते तव त्वया क्रियमाणः **इह** लोके अयं वधो **न भवति किम्**, शस्त्रेणैव वधो वधः, दृशा वधो वधः किं न भवतीति भावः। दृशा निघ्नत इत्यनेन दृशा नः प्राणानपहृतवत इत्यभिप्रेतम्। अतः त्वद्दृशाऽपहृतप्राणप्रत्यर्पणाय त्वया दृश्यतामिति, यथासम्भवं सर्वत्र वाक्यशेषः॥ २॥

**किञ्च** कृपया बहुभ्यो मृत्युभ्यो रक्षितवतोऽधुना दृशैव घातोऽनुचित इत्यभिप्रेत्याऽऽहुः **विषेति**। हे **ऋषभ** श्रेष्ठ! विषमयात्कालियह्रदजलाद्योऽप्ययो नाशः तस्मात् तथा व्यालराक्षसात् अघासुरात् वर्षात् मारुतात् वैद्युतानलात् अशनिपातजादग्नेः वृषोऽरिष्टः **तस्मात्** मयात्मजात् व्योमासुरात् विश्वतः अन्यस्मादपि सर्वतो भयाच्च, कालियमद दमनादिभिः पुनः पुनारक्षिताः। किमिदानीं केवलदृशा[1] घातयसीति भावः ॥ ३ ॥

**किञ्च** निखिलजगत्पालनार्थमवतीर्णस्य, तत्राऽपि स्वाश्रितपक्षपातिनः तवाऽऽश्रितोपेक्षाऽनुचितेत्यभिप्रेत्याहुः — **न खल्विति**। हे **सखे**, भवान्, **खलु** नूनं, **यशोदासुतो** न **भवति** प्राकृतः केवलं यशोदासुतोनभवति, किन्तु **अखिलदेहिनामन्तरात्मा** अतो दृक् **पश्यति सर्वमिति** दृक्। कर्तरि क्विप्। अन्तः प्रविष्टः शुभाशुभसाक्षी परमात्मेत्यर्थः। स किं कर्मायत्तदेहभाग्भवति? नेत्याहुः, **विखनसा** विरिञ्चिना **विश्वपालनाय** प्रार्थितः सात्त्वतां भक्तानां यदूनां कुले **उदेयिवान्** स्वेच्छयाऽवतीर्णः, न तु प्राकृतवत् कर्मणा जात इत्यर्थः ॥ ४ ॥

तस्मात्तावकानामस्माकमभिमतमेतच्चतुष्टयं सम्पादयेत्याहुः चतुर्भिः — **विरचितेति**। हे **वृष्णिधुर्य**[2]! **संसृतेर्भयात्** संसारभयात्[3] **तव चरणमीयुषां** शरणं गतानां जनानां विरचितं दत्तमभयं येन तत् **कामदम**भीष्टदं तथा **श्रियो**लक्ष्म्याः **करं गृह्णातीति** तथा, **तत्करसरोरुहं** हे **कान्त**! **नो**ऽस्माकं **शिरसि निधेहि** ॥ ५ ॥

---

1 K °लं 2. T,W **वर्य** 3. T,W omit संसारभयात्

# श्रीविजयध्वजतीर्थ कृता पदरत्नावली

वेदान्तानधिकारिणां मुमुक्षुविविदिषूणां समर्थानां हरेस्सङ्कीर्तनमेव तदुपासनं स्यात् तत्प्रसादजनकत्वेनेति, अतः स्त्रीभूतानां गोपीनामुपासनाप्रकारं[1] निरूप्य त्यस्मिन्नध्याये। तत्र गोप्यः चित्ते सन्निहितत्वात् सम्बोध्याऽगायन् — **जयतीति**। कृष्णेत्यध्याहार्यम्। हे कृष्ण! **व्रजन्ति यस्मिन्निवासं** गोपा इति गोपनिवासस्थानं व्रजः। **अयं ते** तव **जन्मना अधिकं जयति** सर्वोत्कर्षेण वर्तते। तत्र हेत्वन्तरञ्चाऽऽहुः **श्रयत** इति। तत्र व्रजे, 'इदि परमैश्वर्ये इति धातुः। इन्दिं ऐश्वर्यं

राति ददातीति नित्यैश्वर्यरूपत्वात् इन्दिरा श्रीः, साऽधुना श्रयते आश्रयते हि यस्मात्तस्माच्चेत्यर्थः। तव जन्मनिमित्तं श्रियः श्रयणश्च त्वयाऽविनाभूतत्वाच्छ्रिय इति भावः। स्वाभिप्रायं दर्शयन्ति दयितेति। हे प्रेष्ठ, भवान् स्वात्मनैव त्वा दिदृक्षतां द्रष्टुकामानां दृश्यतां चक्षुर्विषयो भवतु, त्वयि गतासवः समर्पितप्राणाः त्वा त्वां विचिन्वते, साकाङ्क्षत्वा द्दर्शनदानं युक्तमित्यर्थः॥ १॥

अलुक्समासन्यायेन शरदुदाशय इत्येकं पदम्। शरदुदाशये शरत्कालसम्बन्धिसरोवरे साधु भूम्याद्युपद्रव मन्तरेणजातम् उत्पन्नम्, अत एव सत् प्रशस्तं विकसितं यत्सरसिजं पद्मं तस्य उदरं अरुणायमानमन्तर्दलं तस्य श्रियं शोभां मुष्णातीति शरदुदाशये साधुजातसत्सरसिजोदर श्रीमुट् तथा दृशा शुल्कदासिकाः क्रीतदासीः नो निघ्नतो मारयतः ते अस्मदाशादिहनने किं वधो न भवति? खड्गादेरप्यधिको वधोऽर्धरात्रेऽस्मत्त्याग इत्यर्थः। सुरतनाथ निधुवनवीर! ॥ २॥

इदानीमपि अस्मद्रक्षा भवता कार्या, तथा यथा पुराकृता इत्याशयेनाऽऽहुः **विषेति**। विषजलाशयात् विषयुतयमुनाह्रदात्। यद्वा विषजलपानेन आशयो दीर्घनिद्रा मरणं तस्मात्। व्यालात्सर्पात्, राक्षसात्तृणावर्तनाम्नः वर्षयुक्ताद्वायोः वैद्युतानलात् निर्घातलक्षणाग्नेः वृषमया द्वत्सासुरनिमित्ताद्भयात्, किं बहुना? हे वृषभ श्रेष्ठ!, विश्वतोमुखात् भयात् ते त्वया वयं मुहुः रक्षिता इत्यन्वयः॥ ३॥

गोप्यः स्वतत्त्वज्ञानं विज्ञापयन्ति **न खल्विति**। गोपिका नन्दयतीति गोपिकानन्दनः स भवान् हे सखे! विश्वगुप्तये जगद्रक्षार्थं सात्त्वतां यदूनां कुले उदेयिवान् उदयं गतः, जन्मभजनाय योग्यो नेत्याशयेनाहुः — अखिलेति। अखिलदेहिना मन्तर्यामित्वेन द्रक्ष्यति पश्यतीति। यद्वा अन्तरात्मानं स्वरूपं पश्यतीति। "अनश्नन्न्यो अभिचाकशीति" (मुण्ड उ. 3-1-1) इति श्रुतिः। किञ्च विखनसार्चितः ब्रह्मणा पूजितः विरिञ्चिगुरुरित्यर्थः। यद्वा, यः सात्त्वतां कुले उदेयिवान् स भवान्गोपिकानन्दनः खलु न भवतीत्यर्थः। "निषेधे वागलङ्कारे ज्ञीप्सनेऽनुनये खलु" (वैज. को. 8-7-20) इति च। "अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वायोगः अक्षेपापेक्षिकः। तर्हि क इति तत्राऽऽहुःअखिलेति। न खल्विति पाठे वाक्यालङ्कारार्थः॥ ४॥

विरिञ्चिगुरुश्चेत् अपेक्षिताशेषपुरुषार्थप्रदः स्यात्तत्र कथं निर्णय इत्याहुः **विरचितेति**। श्रियः करं गृह्णातीति श्री करग्रहं, शरणमीयुषां पुंसां धेहि निधेहि, हे कान्त! कमनीय! ॥ ५॥

---

1. Ma °न

**★व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित।**
**भज सखे भवत्किङ्करीः[1] स्म नो जलरुहाननं चारु दर्शय[2] ॥ ६॥**

**प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम्।**
**फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम्॥ ७॥**

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरी रिमा वीर मुह्यती रधरशीधुनाऽऽप्याययस्व नः ॥ ८ ॥

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते[3] भूरिदा जनाः ॥ ९ ॥

प्रहसितं प्रिय प्रेमवीक्षितं विहरणञ्च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः कुहक! नो मनः क्षोभयन्ति हि ॥ १० ॥

---

★ According to M.Ma this is second verse 1. M.Ma भवे किं 2. M.Ma °यन् 3. T.V.W ये 4. G.J.M.Ma.Va °क्षणं

**श्रीध० व्रजेति**। हे व्रजजनार्तिहन्! हे वीर! निजजनानां यः स्मयो गर्वः तस्य ध्वंसनं नाशकं स्मितं यस्य तथाभूत, हे सखे! भवत्किङ्करीः नोऽस्मान् भज आश्रय। स्म[1] निश्चितम्। प्रथमं तावत् जलरुहाननं चारु योषितां नो दर्शय ॥ ६ ॥

**प्रणतेति**। अ[2]विशेषेण प्रणतानां देहिनां पापकर्शनं पापहन्तृ तृणचरान् पशून् अनुगच्छति कृपयेति। तथा सौभाग्येन श्रियो निकेतनं, वीर्यातिरेकेण फणिनः फणास्वर्पितं ते पदाम्बुजं नः कुचेषु कृणु कुरु किमर्थम्? हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥

**मधुरयेति**। हे पुष्करेक्षण! तवैव मधुरया गिरा वल्गूनि वाक्यानि यस्यां तया बुधानां मनोज्ञया हृद्यया गम्भीरयेत्यर्थः मुह्यती इमा नः विधिकरीः कि[3]ङ्करीः अधरशीधुना आप्याययस्व सञ्जीवयेति ॥ ८ ॥

किञ्च अस्माकं त्वद्विरहे प्राप्तमेव[4] मरणं, किन्तु त्वत्कथामृतं पाययद्भिः सुकृतिभिः वञ्चितमित्याहुः — **तवेति**। कथैवामृतम्, अत्र हेतुः, तप्तजीवनं प्रसिद्धादमृता दुष्कर्ष माहुः। कविभिः ब्रह्मविद्भिरपि ईडितं स्तुतं, देवभोग्यन्तु अमृतं तै स्तुच्छीकृतम्। किञ्च कल्मषापहं कामकर्मनिरसनम्। तत्तु अमृतं नैवम्भूतम्। किञ्च श्रवणमङ्गलं श्रवणमात्रेण मङ्गलप्रदम्, तत्तु अनुष्ठानापेक्षम्। किञ्च श्रीमत् सुशान्तं, तत्तु मादकम् एवम्भूतं त्वत्कथामृतं आततं यथा भवति तथा भुवि ये गृणन्ति निरूपयन्ति ते जनाः भूरिदाः बहुदातारः जीवितं ददतीत्यर्थः। यद्वा एवम्भूतं त्वकथामृतं ये भुवि गृणन्ति ते भूरिदाः पूर्वजन्मसु बहुदत्तवन्तः सुकृतिनः इत्यर्थः। एतदुक्तं भवति — ये केवलं कथामृतं गृणन्ति तेऽपि तावदतिधन्याः, किं पुनर्ये त्वां पश्यन्ति। अतः प्रार्थयामहे त्वया दृश्यता मिति ॥ ९ ॥

ननु [5] मत्कथाश्रवणेनैव निर्वृता भवत[6]; किं मद्दर्शनेन - [7] त्वद्विलासक्षुभितचित्ता वयं तत्राऽपि शान्तिं विन्दाम इत्याहुः — **प्रहसितमिति**। हे प्रिय! कुहक! कपट! संविदः सङ्केतनर्माणि ॥ १० ॥

---

1 J.Va *add* इति 2. V. omits अ 3. P.V omit किङ्करीः 4. J. Va °द्वामृ° 5. P.V add तर्हि 6. P.V °न्तु 7. J.V add न.

**वीर०** हे व्रजजनार्तिहन्, हे वीर! निजजनानां यः स्मयो गर्वः तं ध्वंसयतीति तथा। नन्द्यादेराकृतिगणत्वात् कर्तरि ल्युः। तथाभूतं स्मितं यस्य, हे तथाभूत, हे सखे, भवत्किङ्करीः नोऽस्मान् भज अनुवर्तस्व, स्म निश्चितम्, अद्भुतं वा। सुन्दरं जलरुहाननं तावद्योषितामस्माकं दर्शय ॥ ६ ॥

अविशेषेण प्रणतानां देहिनां पापहन्तृ, तृणचरा गावः, ता अनुसृत्य गच्छतीति तथा, सौभाग्येन श्रियो निकेतन माश्रयभूतं वीर्यातिरेकेण फणिनः कालियस्य फणेष्वर्पितं तव पदाम्बुजं नोऽस्माकं कुचेषु कृणु निधेहि। हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥

हे पुष्करेक्षण! बुधानां हृद्यया वल्गूनि वाक्यानि यस्यां, तथा अत एव मधुरया कोकिलादिशब्दवच्छ्राव्यया तव गिरा मुह्यतीर्विधिकरीः किङ्करीश्च इमा नोऽस्मान् अधरामृतेन आप्याययस्व सञ्जीवय ॥ ८ ॥

किञ्च अस्माकं त्वद्विरहेण मरणं प्राप्तप्रायमेव। किन्तु त्वत्कथामृतं मिथः ये पाययन्ति तैर्वञ्चितमित्यभिप्रेत्याहुः — **तवेति**। तव कथैव अमृतं, तत्र हेतुः तप्तानां तापत्रयतप्तानां जीवनम्। प्रसिद्धामृतादुत्कृष्टता माहुः। कविभिर्ब्रह्मादिभिः ईडितं स्तुतम्। देवभोग्यन्त्वमृतं तैः तुच्छीकृत मिति भावः: किञ्च कल्मषापहं श्रोतॄणां[1-] वदतां स्मरताश्च पापहरम्, प्रसिद्धन्तु नैवंविध मितिभावः। किञ्च श्रवणमात्रेणैव मङ्गलं निःश्रेयसरूपं यस्मात्तथाभूतम्, प्रसिद्धन्तु पुनस्संसारनिमित्तमिति भावः। किञ्च। श्रीमत् शान्त्यादि गुणावहम्। प्रसिद्धन्तु मादकमिति भावः। एवम्भूतं[-1] त्वत्कथामृतं आततं विस्तृतं यथा तथा। भुवि ये गृणन्ति निरूपयन्ति ते जनाः भूरिदाः बहुवदान्याः जीवितं दधतीत्यर्थः। पूर्वजन्मसु बहुदत्तवन्तः सुकृतिन इति यावदिति वा॥ ९॥

तर्हि मत्कथामृतश्रवणेनैव तृप्ता भवथ इत्यत्र तथाऽपि त्वद्विलासक्षुभितचित्ता वयं न शान्तिमाप्नुम इत्यभिप्रेत्याहुः — **प्रहसितमिति**। हे प्रिय! हे कुहक! वञ्चक! तव प्रहसितञ्च, प्रेम्णा वीक्षितञ्च। ध्यानमङ्गलं ध्यानेनापि मङ्गलं सुखं यस्मा त्तत् विहरणञ्च। याश्च रहसि संविदः सङ्केतचेष्टाः कथम्भूताः हृदिस्पृशो हृदयारूढाः ताश्च नोऽस्माकं मनः क्षोभयन्ति हि ॥ १० ॥

---

1- -1. T omits.

**विज०** व्रजजनस्य आर्तिं हन्ति हिनस्ति नाशयतीति व्रजजनार्तिहा, तस्य सम्बोधनं व्रजजनार्तिहन्! वीर! शूर! निजजनस्य स्मयो गर्वः तं ध्वंसि स्मितवत् स्मितं यस्य स तथा तत्सम्बुद्धिः निजजनस्मयध्वंसनस्मित, 'यूष पूष कामसमृद्धौ' इति धातोः योषितां समृद्धकामानां नः कामसमृद्धिं, पालयेति शेषः। कथङ्कारं पालनम् अत्राऽऽहुः — भजेति। हे सखे, चारु सुन्दरं तव, जलरुहस्य पद्मस्य सममाननं प्रवृत्तिशून्यस्य यद्दर्शनेच्छा स्यात् तादृक्शक्तिवन्मुखं दर्शयंस्त्वं किङ्करीः दासीः नो भज पालय, स्म स्मृत्वा पत्यादीन् विहाय अर्धरात्रे वनं प्राप्ता इति। भवे भवे इति द्विरावृत्तिः कर्तव्या जन्मनि जन्मनि किङ्करी रित्यर्थः। यद्वा भवे, तादर्थ्ये सप्तमी, अस्मद्भद्रार्थमित्यर्थः। यद्वा, अस्मज्जीवनसत्तायां विवक्षितायाम्। अन्यथा मरणमेवाऽस्माक मापद्यत इत्यर्थः ॥ ६ ॥

न केवलं करनिधानेन पूर्यते। अपि तु कुचेषु चरणनिधानञ्चापेक्षितमित्याहुः — **प्रणतेति**। तृणचरान् पशून् अनुगच्छतीति तृणचरानुगं, फणिफणेष्वर्पितम् कृणु कुरु। हृच्छयं कामं कृन्धि छिन्धि॥ ७ ॥

वल्गूनि मनोहराणि वाक्यानि निराकाङ्क्षाणि पदात्मकानि यस्यां सा तथा, तथा बुधानां विदुषां मनोज्ञया हृद्यया। मधुरयेत्यनेन प्राप्तां बालभाषणशङ्कां निराकरोति। विधिकरी दासीः अधरशीधुना अधरामृतेन आप्याययस्व सेचय जीवय वा, मुह्यतीः मोहं गच्छतीः ॥ ८ ॥

तप्तान् जीवयतीति तप्तजीवनं श्रवणमात्रेण मङ्गलं श्रीमत्समृद्धिम् आततं विस्तृतं भुवि ये जनाः तव कथामृतं गृणन्ति पानादिना ते भूरि बहुलं दुःखं घ्नन्ति खण्डयन्तीति, भूरीणि हिरण्यादीनि ददतीति वा। "भूरि स्वर्णं जातरूपं हिरण्यं राः कल्याणं हेम रुक्मं सुवर्ण" मिति। भवन्तीति शेषः ॥ ९ ॥

तव कथामृतं तप्तजीवनादिफलदञ्चेत् अधरशीधुनाऽऽप्यायनं किमर्थमित्याशङ्क्य तव हसितादिना मुग्धा वयं तवाधरशीधुं प्रार्थयामहे इत्याशयेनाऽऽहुः — **प्रहसितमिति**। हे प्रिय! प्रेम्णा वीक्षणं ध्यानमङ्गलं विहरणं विहारः विक्रमणलक्षणः हृदिस्पृशः हृदयङ्गमाः संविदः सम्भाषणादयः। "संविद्युद्धे प्रतिज्ञायां सङ्केताचारनामसु। सम्भाषणे क्रियाकारे विज्ञाने तोषणेऽपि च" इति वचनात्। एते सर्वेपि सुरते सम्भवन्ति। कुहक! धूर्तेति प्रणयकोपे। हि यस्मात्तस्मात् अधरामृतपानप्रार्थनम्॥ १० ॥

**चलसि यद्व्रजाच्चारयन्पशून्नलिनसुन्दरं नाथ ते पदम्।**
**शिल[1]तृणाङ्कुरै स्सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥**

**दिनपरिक्षये नीलकुन्तलै र्वनरुहाननं बिभ्र दावृतम्।**
**[2]वनरजस्वलं दर्शयन्मुहु र्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥**

**प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि।**
**चरणपङ्कजं शन्तमञ्च ते रमण नः स्तनेष्वर्पयाऽऽधिहन् ॥ १३ ॥**

**सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।**
**इतररागविस्मारणं नृणां वितर वीर न स्तेऽधरामृतम् ॥ १४ ॥**

**अटति यद्भवानह्नि काननं त्रुटि [3]युगायते त्वामपश्यताम् ।**
**कुटिलकुन्तलं श्रीमुखञ्च ते जड [4]उदीक्षतां पक्ष्मकृ[5]द्दृशाम् ॥ १५ ॥**

1. G.J.M.Ma, T.V.Va.W सि° 2. G.J.Va. घ° 3. G.J.M.Va °युँ° 4. M.Ma °व° 5. M.Ma नुहे°

**श्रीध०** किञ्च त्वयि वयमतिप्रेमार्द्रचित्ताः, त्वं पुन रस्मासु केन हेतुना कपटमाचरसीत्याहुः श्लोकद्वयेन — **चलसीति**। हे नाथ! कान्त! यद्यदा व्रजाच्चलसि, पशूंश्चारयन् तदा तत् [1-] नलिनवत् सुन्दरं [-1] कोमलं ते पदं, शिलैः कणिशैः तृणैरङ्कुरैश्च सीदति [2-] क्लिश्यतीति [-2] नो मनः कलिलतां अस्वास्थ्यं गच्छति प्राप्नोति। एवम्भूता स्त्वद्दुःखशङ्कितचित्ता वयम् ॥ ११ ॥

**दिनेति**। त्वन्तु दिनपरिक्षये सायङ्काले नीलकुन्तलै रावृतं, घनरजस्वलं गोरजश्छुरितं वनरुहाननम् अलिमालाकुल परागवि[3]च्छुरितपद्मतुल्यमाननं बिभ्रत् तच्च मुहुर्मुहुः दर्शयन्नो मनसि केवलं स्मरं यच्छसि अर्पयसि, न तु सु[4]खं ददासीति कपटः[5] इति भावः ॥ १२ ॥

अतोऽधुना कपटं विहाय एवं कुर्विति प्रार्थयन्ते श्लोकद्वयेन **प्रणतेति**। हे आधिहन्! हे रमण! पद्मजेन[6] अर्चितम् आपदि ध्येयं ध्यानमात्रेण आपन्निवर्तकं शन्तमञ्च सेवासमयेचाऽपि सुखतमं त[7]व चरणपङ्कजं कामतापशान्तये नः स्तनेष्वर्पयेति ॥ १३ ॥

अपि च हे वीर! ते अधरामृतं नो वितर देहि। स्वरितेन नादितेन वेणुना सुष्ठु चुम्बित मिति, [8]वेणुनादामृत वासितमितिभावः। इतररागविस्मारणं नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति वि[9]लोपयतीति तथा तत् ॥ १४॥

किञ्च क्षणमपि त्वददर्शने दुःखं, दर्शने सुखञ्च दृष्ट्वा सर्वसङ्गपरित्यागेन यतय इव वयं त्वामुपागताः त्वन्तु कथ मस्मान् त्यक्तु मुत्सहस इति सकरुणमूचुः [10]श्लोकद्वयेन **अटतीति**। यत् यदा भवान्काननं बृन्दावनं प्रति अटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवति। एवमदर्शने दुःखमुक्तम्। पुनश्च कथञ्चिद्दिनान्ते ते तव श्रीमन्मुखं उत् उच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृत् ब्रह्मा जडो मन्द एव। निमेषमात्रमप्यन्तर मसह्यमिति दर्शने सुखमुक्तम्॥ १५॥

---

1- -1 J Va नलिनसुन्दरं 2- -2. J Va क्लिश्येदिति 3. J.Va omit वि 4. J Va सङ्गं 5 J Va add त्वम् 6 J Va add ब्रह्मणा 7 J Va ते 8. J. Va omit वेणु 9. J.Va ला° 10. J Va omit श्लोक

**वीर०** किञ्च। त्वयि वय मतीव प्रेमार्द्रचित्ताः, त्वन्तु कुतोऽस्मा न्वञ्चयसीत्यभिप्रेत्याऽऽहुः द्वाभ्याम्। हे नाथ! हे कान्त! यद्यदा पशून् चारयन् व्रजाच्चलसि तदा नलिनवत्सुन्दरं कोमलं ते तव पद शिलैः कठिनैः तृणैः, अङ्कुरैश्च सीदतीति [1]क्लिश्येदिति नोऽस्माकं मनः कलिलता मस्वास्थ्यं गच्छति याति ॥ ११॥

एवम्भूता स्त्वत्क्लेशशङ्कितचित्ता वयम्। त्वन्तु दिनपरिक्षये सायङ्काले नीलकुन्तलैः आवृत्तं वनरजस्वलं गोरजश्छुरितं वनरुहाननम् अलिमालाकुलपरागच्छुरितपद्मतुल्य माननं मुहुर्मुहु र्दर्शयन् नोऽस्माकं मनसि केवलं हे वीर! स्मरं यच्छसि काममुद्दीपयसि, न तु सङ्गं ददासि। अतः कपटस्त्वमिति भावः ॥ १२ ॥

अतोऽधुना कपटं विहाय सङ्गतो भवेति प्रार्थयन्ते द्वाभ्याम्। हे रमण! तव चरणपङ्कजं अस्माकं स्तनेषु अर्पय, निधाय कामाग्निं शमयेति भावः। तदनुगुणं सम्बोधयन्ति हे आधिहन्निति। आधिर्मनःपीडा। कथम्भूतं, शन्तमं सेवासमये सुखतमं, आपदि ध्येयञ्च। धरण्यां मण्डन मलङ्कारभूतं [2-]ह्रस्वत्वमार्ष[-2]म्। पद्मजेन ब्रह्मणा अर्चितं प्रणताभीष्टदञ्च॥ १३॥

तथा हे वीर! तवाऽधरामृतं वितर देहि। कथम्भूतम्? नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति लोपयतीति तत्तथा। स्वरितेन नादितेन -वेणुना स्वरयुक्तेन वेणुना सुष्ठु यथा तथा चुम्बितं नादामृतवासित मिति भावः शोकनाशनं तापत्रयजदुःखशामक मुत्तरोत्तरं रतिवर्धकञ्च ॥ १४ ॥

किञ्च क्षणमपि त्वद्विश्लेषमसहमाना स्सर्वसङ्गपरित्यागेन वयं यतय इव त्वां उपागताः। त्वन्तु कथमस्मान् त्यक्तु मुत्सहसे इत्यभिप्रेत्याऽऽहुः - द्वाभ्याम्। [3]भवान् यद्यदा अह्नि बृन्दावनं प्रत्यटति गच्छति, तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवति। एव मदर्शने दुःखमुक्तम्। पुनश्च कथञ्चिद्दिनान्ते तव कुटिला[4]ः कुन्तला[5]ः यस्मिन् तत् श्रीमत् मुखं उत् उच्चैः ईक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा जडो मन्द एव। निमेषमात्रमपि असह्यमिति दर्शनसुख मुक्तम्॥ १५॥

---

1. T.W omit क्लिश्येदिति 2- -2. T.W omit 3. T.W omit भवान् 4. T.W °लानि 5. T.W °लानि

**विज०** त्वच्चरितं ज्ञानिनामपि दुर्बोधं किमुताऽस्माकमिति भावेनाऽऽहुः **चलसीति**। पशू[1]श्चारयन् यद्यदा व्रजाच्चलसि गच्छसि तदा शिल[2]तृणाङ्कुरैः छिन्नशिखत्वेन परुषैरिषीकादितृणाग्रैः शिलाश्शर्कराः ताभिस्तृणाङ्कुरैश्च वा सीदति व्यथतीति कलिलतां, नारायणो[3]ऽन्योवेति संशयपङ्किलताम् ॥ ११ ॥

ननु व्याकुलचित्तानां कामोद्बोधायोगात् 'कृन्धिहृच्छय' मिति कथमुक्तम्? अत्र वदन्ति - **दिनेति**। दिनपरिक्षये सन्ध्याकाले, वनादागच्छन्निति शेषः। वनरजस्वलं वनभूमौ सता गोरजसा युक्तं दर्शयन् नीलकुन्तलैरावृतं वनरुहं जलजं कमलं तद्वत् शोभमान माननं बिभ्रत् त्वं नो मनसि स्मरं कामं मुहुरनिशं नूतनम् ॥ १२ ॥

धरणि म ण्डनं भूमिभूषणं सर्वापदि ध्येयं पद्मजार्चितं ब्रह्मणाऽऽराधितं शन्तमं सुखतमम् आधिहन्! मनोदुःखनाशन! ते चरणपङ्कजं नः स्तनेष्वर्पय निधेहीत्यन्वयः ॥ १३ ॥

स्तनतटेषु चरणार्पणादुद्बुद्धज्वलित कामाग्निज्वालाशमनाय तवाऽधरामृतपिपासुभ्योऽस्मभ्यं देहीत्याहुः **सुरतेति**। सुरतं ग्राम्यधर्मः। स्वरितवेणुना स्वरयुक्तवेणुना ध्वनियुक्तवेणुना रागो रस इतरेषां रसानां आस्वादनसुखं विस्मारयतीति इतरराग विस्मारणम्, इतरेषु मधुरेषु वस्तुषु रागं स्नेहं विस्मारयतीति इतररागविस्मारणं वा। वितर देहि। "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" (अम. को. 2-428) इति हलायुधः ॥ १४ ॥

किञ्च अहोरात्र मस्माकं त्वत्सञ्चिन्तनमेव, अन्यो व्यापारो नेष्यते इत्याशयेनाऽऽहुः **अटतीति**। यद्यदा यस्मिन्नहि काननमटति गच्छति तदा तस्मिन् अह्नि त्रुटिः, त्रुटीति प्रातिपदिकग्रहणं, तेन विभक्त्यन्तं पदं [4]लक्षयति। अणुद्वयलक्षणः परमाणुः त्रयः परमाणवः त्रसरेणुः, त्रय स्त्रसरेणवः त्रुटिः स कालावयवः नः त्वामपश्यतामस्माकं युगायते युगवदाचरति। दिव्यद्वादशसहस्रपरिमितसमानो वर्तते पक्ष्म नुदन्ति व्यथयन्तीति पक्ष्मनुदः तादृश्यो दृशो यासां तास्तथा। तासामनिमिषनेत्राणां तव मुखमीक्षतामीक्षमाणानामस्माकं प्रवृत्तिर्जडवदचेतनव न्निश्चेष्टनमित्यर्थः। अनेन बहुकालोऽपि त्रुटितुल्यइति सूच्यते। नुर्दृशामिति पाठे नु र्मानवस्य तव मुखमीक्षतां दृशां पक्ष्म जडवदुत्क्षेपावक्षेपलक्षणप्रवृत्तिशून्यमित्यर्थः। अनेन मानवस्याऽप्यनिमिषत्वं सूच्यते ॥ १५ ॥

---

1. M °शू° 2. M °खरत्वेन 3. Ma °णो वेति 4 Ma adds न

पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य ते[1] ह्यच्युतागताः।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥

रहसिसंविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरःश्रियो [2]वीक्ष्यधाम[2] ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
[3]त्यज मनाक्च न स्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥

★ यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताश्शनैः प्रिय दधीमहि कर्कशेषु।
तेनाऽटवी मटसि तव्द्यथते न किंस्वित्कूर्पादिभिर्भ्रमति धी र्भवदायुषां नः ॥ १९ ॥

इति श्रीमद्भगवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
रासक्रीडायां गोपीगीतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

1. G.J K.Va.W तेऽन्त्य° 2. M.Ma वीर वीक्ष्य; T.V.W धाम वीक्ष्य 3. M.Ma भज. ★ This verse is not found in M.Ma. edns.

**श्रीध० पतीति**। तस्मात् हे अच्युत! पतीन्सुतान् अन्वयान् तत्सम्बन्धिनः भ्रातॄन् बान्धवांश्च अतिविलङ्घ्य ते[1] [2]तव समीपमागता वयम्। कथम्भूतस्य गतिविद अस्मदागमनं जानतः गीतगती र्वा जानतः गतिविदो वयं[2]वा तवोद्गीतेन उच्चैर्गीतेन मोहिताः हे कितव! शठ! एवम्भूताः योषितः निशिस्वयमागताः, त्वामृते कस्त्यजेत् न कोऽपीत्यर्थः ॥ १६ ॥

अतः त्वया त्यक्तानां अस्माकं प्राक्तनत्वद्दर्शननिदानस्य[3] हृद्रोगस्य त्वत्सङ्गत्यैव चिकित्सां [4-]कुर्वित्याहुः श्लोकद्वयेन[-4]। **रहसीति**। श्रियो धाम ते बृहत् विशालं उरश्च वीक्ष्य अतिस्पृहा भवति। तया च मुहुर्मुहुः मनो मुह्यति ॥ १७ ॥

**व्रजेति**। तव च व्यक्ति रभिव्यक्तिः व्रजवनौकसां सर्वेषां अविशेषेण वृजिनहन्त्री दुःखनिरसनी[5] [6] विश्वमङ्गलं सर्वमङ्गलरूपा च। अतः त्वत्स्पृहात्मनां त्वत्स्पृहारूढमनसां नः मनाक् ईषत् किमपि त्यज मुञ्च[7]। कार्पण्य मकुर्वन् देहीत्यर्थः। किं तत्? स्वजनहृद्रोगाणां यदति गोप्यं निषूदनं निवर्तकमौषधम्। तत् त्वमेव वेत्सीति गूढोऽभिप्रायः ॥ १८ ॥

अतिप्रेमधर्षिता रुदत्य[8] आहुः **यदिति**। हे प्रिय! यत्ते तव सुकुमारं पदाब्जं कठिनेषु कुचेषु सम्मर्दन शङ्किताः शनैःशनैः[9] दधीमहि धारयेम वयम्, त्वन्तु[10] तेन अटवी मटसि गच्छसि[11], नयसीति पाठे पशून् वा काश्चिदन्यां वा आत्मानमेव वा नयसि प्रापयसि। तत् ततः तत्पदाम्बुजं वा। कूर्पादिभिः सूक्ष्मपाषाणादिभिः किं स्विन्न व्यथते। कथन्नु नाम न व्यथते[12]। भवानेवाऽऽयुर्जीवनं यासां तासां नो धी र्भ्रमति मुह्यतीति ॥ १९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

1. J.Va omit ते 2- -2 V omits 3. J.Va °नहृ° 4- -4 J. Va °त्याशये नाहुः द्वयेन। 5. J.Va °सि° 6. J.Va add इति 7 J.Va °ढाभिप्रायम् 8. P.V °न्त्य 9. J.Va omit शनैः 10 P.V omit त्वन्तु 11. J.Va omit गच्छसि 12 J व्यथेतेति।

**वीर०** तस्मात् हे अच्युत! पतीन् सुतानन्वयान् तत्सम्बन्धिनः भ्रातृन्बान्धवांश्च अत्यन्तं विलङ्घ्य ते तव अन्ति समीपमागता वयम्। कथम्भूतस्य? गतिविदः अस्मदागमनं जानतः गतिविदो वयं तवोद्गीतेन मोहिताः हे कितव! धूर्त! एवम्भूता योषितः निशि स्वयमागताः, त्वां विना कस्त्यजेत् न कोऽपीत्यर्थः ॥ १६ ॥

अतः त्वया त्यक्तानामस्माकं प्राक्तनत्वद्दर्शननिदानहृद्रोगस्य त्वत्सङ्गत्यैव चिकित्सां कुर्वित्याहुर्द्वाभ्याम् **रहसीति**। तव रहसि संविदं साङ्केत्यं कर्म हृच्छयोदयं कामजनकं प्रेम्णा वीक्षणञ्च प्रहसितमाननञ्च श्रियो लक्ष्म्याः स्थानभूतं बृहद्विशाल मुरो वक्षश्च वीक्ष्य अस्माक मतीव स्पृहा भवति, तया च मुहु र्मुहु र्मनो मुह्यते मोहं प्राप्नोति ॥ १७ ॥

अङ्ग! हे कृष्ण! तव अभिव्यक्तिरवतारो व्रजवनौकसां गोपानां मुनीनाञ्च वृजिनहन्त्री पापनिरसनी दुःखनिरसनी वा विश्वस्य मङ्गलं[1] मङ्गलावहा च। अतः त्वत्स्पृहात्मनां त्वत्स्पृहारुग्णमनसां नोऽस्माकं मना गीषत् त्यज मुञ्च, किञ्चित् देहीत्यर्थः। किं तत्? यत्स्वजनस्य हृद्रोगाणां निषूदनं निवर्तकं औषधं, तत्तु त्वमेव वेत्सीति गूढाभिप्रायः[2] ॥ १८ ॥

अतिप्रेमधर्षिता रुदन्त्य[3] आहुः - **यदिति**। हे प्रिय! यत्तव[4] सुकुमारं पदाब्जं तत्नः कठिनेषु[5] स्तनेषु सम्मर्दशङ्किताः शनैश्शनैः[6] धारयाम। तेन पदाब्जेन अधुना अटवीं अटसि चरसि। **नयसीति** पाठे अटवीं[7] प्रति पशूनात्मानं वा नयसि

प्रापयसि। तत्पदाब्जं कूर्पादिभिः तीक्ष्णसूक्ष्मशिलादिभिः किंस्विन्न व्यथते कथन्नु नाम न व्यथते, व्यथत एवेति, नोऽस्माकं धीः भ्रमति न स्वस्था भवति। कथम्भूतानां[8], भवानेवाऽऽयुः जीवितं यासां तथा भूतानां त्वदधीनजीवितानामित्यर्थः॥ १९॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

1. T.W omit मङ्गलं 2. K. गूढोऽभि 3. K °त्य 4. K omits यत् 5. K adds कुचेषु 6. K omits शनैः 7. K वनं 8. K adds नः.

**विज०** भगवदुन्मुखस्मरणमुग्धा गोप्यो रतिविहारसमयोऽयमिति निरूप्य सुरतसंविदाधि क्षिपन्ति-**पतीति**। ते तव सकाशमागता हि यस्मात् हे कितव! कः पुरुषः निशि योषितः त्यजेदित्यन्वयः। आगमने हेतुं वदन्ति गतिविद इति। गतिविदः आकर्षलक्षणगानज्ञस्य तवोद्गीतेन स्थितोत्थानकरगानेन मोहिताः मूर्च्छां प्रापिताः ॥ १६ ॥

किं बहुनोक्तेन, अस्मदवस्थेयं हीति विज्ञापयन्ति —**रहसीति**। हृच्छयस्य उदयो यस्मात् तत्तथा। वीक्ष्य निरूप्य अतिस्पृहा अतिशयितस्पृहया मुह्यते। विभक्तिव्यत्यय श्छान्दसः। बृहति दधातीति बृहत् श्रियः निवासस्थानमिति शेषः। यद्वा बृहदुरःश्रिय इत्येकं पदम्। बहुवचनं द्रष्टृणामनुक्षणं कान्तिविशेषबाहुल्यद्योतकम् ॥ १७ ॥

यदि भवानस्मदापदं न परिहरिष्यति तर्ह्ययमवतारो व्यर्थोऽभविष्यत्, न च तद्युक्तम्। अतोऽस्मद्दुःखं भवता अवश्यं परिहरणीयमिति भावेनाऽऽहुः — **व्रजेति**। भो अङ्ग! ते तवेयं व्यक्तिः अवतारलक्षणा व्रजौकसां गोपानां मार्गौकसां तीर्थसार्थानां वा निवहौकसां ग्रामवासिनां वा, वनौकसां वनवासिनां सन्न्यासिनां वा वानप्रस्थानां वा, जलाश्रयाणां वा अलमत्यर्थं वृजिनहन्त्री दुःखनाशिनी, यद्यस्मात् त्वयि स्पृहा यस्य स त्वत्स्पृहः आत्मा यासां ताः तथा, तासां नः चक्षुर्विषयं मनाक् ईषदपि भज। सामान्योक्त्या पुनरुक्तं कुर्वन्ति स्वजनेति। विश्वमङ्गलं यद्वचक्तं रूपं स्वजनस्य हृद्रुजां अन्तर्गतरोगाणां निषूदनं निर्मूलकरं, तस्मादस्माकं स्वजनैकत्वात् अभीष्टं भवता कर्तव्यमिति भावः ॥ १८,१९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥
**(विजयध्वजरीत्या एकोनत्रिंशोऽध्यायः)**

---

# द्वात्रिंशोऽध्यायः

(विजयध्वजरीत्या त्रिंशोऽध्यायः)

[1-] श्रीशुक उवाच [-1]

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा।
रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः ॥ १ ॥

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥

तं विलोक्याऽऽगतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः।
उत्तस्थुर्युगपत्सर्वाः तन्वः प्राणमिवाऽऽगतम् ॥ ३ ॥

★कृष्णस्य मुखलावण्यसुधां नयनभाजनैः।
आपीयाऽऽपीय नाऽतृप्यन्सन्तस्तच्चरणं यथा।॥ ४ ॥

काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा।
काचिद्दधार[2] तद्बाहुमंसे चन्दनरू[3]षितम् ॥ ५ ॥

काचिदञ्जलिनाऽगृह्णात्तन्वी ताम्बूलचर्वितम्[4] ।
एका तदङ्घ्रि[5]युगलं सन्तप्तस्तनयोरधात् ॥ ६ ॥

---

1- -1. K omits ★ This verse is found in K,T,W and it is commented by Viraraghava only. 2. G,J,M,Ma,Va °दधार 3. G,J,Va भू° 4. V चर्वणम्5. G,J,Va कमलम्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः। तत्राऽऽविर्भूय गोपीस्तास्सान्त्वयामास मानयन्॥

स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः। सदयं नन्दयन्गोपी रुदतो नन्दनन्दनः॥

**इतीति**। इत्येवंप्रभृति चित्रधा अनेकधा सुस्वरं उच्चैः कृष्णदर्शने लालसा अतिस्पृहा यासां ताः ॥ १ ॥

**तासामिति**। साक्षान्मन्मथमन्मथः, जगन्मोहनस्य कामस्यापि, मनस्युद्भूतः कामः साक्षात् तस्याऽपि मोहक इत्यर्थः॥ २॥

**तमिति**। तन्वः करचरणादयः ॥ ३ ॥

**काचिदिति**। अञ्जलिना संहतहस्तद्वयेन ॥ ४ - ६ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं गोपीनां गानमुपवर्णितम्। अथ इत्थं[1] गायन्तीर्गोपीरनुजिघृक्षोराविर्भूतस्य भगवतो दर्शनहर्षजां तासां विक्रियां सरससाक्षेपसल्लापां तां क्रीडाञ्चाऽनुवर्णयति द्वात्रिंशेन — **इतीति**। इत्थं भगवतो गुणान् प्रगायन्त्यः चित्रधा अनेकधा प्रलपन्त्यश्च हे राजन्! कृष्णदर्शने लालसा अतिस्पृहा यासां ताः। सुस्वरं यथा तथा उच्चै रुरुदुः ॥ १ ॥

तासां[2] रुदन्तीनां अग्रे शौरिः आविर्बभूव। कथम्भूतः? स्मयमानं मुखाम्बुरुहं यस्य सः। जगन्मोहकस्य कामस्याऽपि मोहकः ॥ २ ॥

तमागतं प्रेष्ठं कृष्णमवलोक्य, अबला गोप्यः प्रीत्या उत्फुल्ला विकसिता दृशो यासां तथाभूताः युगपत् सर्वा उत्तस्थुः, यथा आगतं प्राणं तन्वः शरीराणि तद्वत्। वियुक्ते प्राणे पुनरागत्य सुस्थे सति यथा तनुरुत्तिष्ठते तद्वदित्यर्थः॥ ३॥

अथ ताः कृष्णमुखे यल्लावण्यं तदेव सुधा तां नयनरूपैः भाजनैः पानपात्रैः पुनःपुनः आपीय आपीय पीत्वा पीत्वाऽपि नाऽतृप्यन् न तृप्ता बभूवुः। यथा सन्तः भक्ताः तच्चरणं भगवत्पदाब्जलावण्यं पुनःपुनरनुभूयाऽपि न तृप्यन्ति, तद्वत् ॥ ४ ॥

काचिद्गोपी हरेः कराम्बुजं हर्षेण अञ्जलिना जग्राह। काचित्तु चन्दनेन रूषितं लिप्तं तस्य बाहुं अंसे आत्मनः स्कन्धे बभार ॥ ५ ॥

काचित्तन्वी योषित् अञ्जलिना संहतहस्तद्वयेन तस्य ताम्बूलचर्वितं चर्वितताम्बूलं[3] जग्राह। एका तु विरहतापेन तप्तयोः स्तनयोः तस्य भगवतोऽङ्घ्रिकमलं कमलवच्छीतलमङ्घ्रिम् अधात् दधार[4] ॥ ६ ॥

---

1. K एवं 2. K adds एवं 3. T,W omit चर्वित 4. T,W omit दधार

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यथा गोपीनामात्मानं प्रकाशयन् भगवांस्तथा साधनसामग्र्या ज्ञानिनामपीति इममर्थं दर्शयितुमस्याऽध्यायस्य प्रारम्भः। तत्र शुकः रोदनादिकमपि भक्त्युद्रेकलक्षणमिति दर्शयितुं गोपीनां रोदनप्रकारं कथयति — **इतीति**। चित्रधा नानाविधेन सुस्वरं यथा श्रोतृसुखकरं भवति तथा स्वरं कुर्वत्यः, अनेन परिदेवनादिकं व्यावर्तयति ॥ १ ॥

भक्त्युद्रेकोद्भूतरोदनफलमाह — **तासामिति**। मनो मथ्नातीति मन्मथः कामः साक्षात्स्पष्टीकृतसर्वाङ्गसुन्दर इन्द्रतुल्यः तस्याऽपि मन्मथः मदमथनः। "मदनो मन्मथो मारः कामः" इति रुद्रः। अनेनैवंविधभगवदुपासनासामर्थ्यात्समुद्भूतः सौन्दर्यसागरः काम इति सूचितं भवति ॥ २ ॥

तन्वः भोगायतनशरीराणि ॥ ३, ४ ॥

गोपीनां करादिग्रहणादिषु हरेः करादानादिना भक्त्येकलभ्यः श्रीनारायण इति निदर्शयन् तत्प्रवृत्तिं कथयति **काचिदित्यादिना**। चन्दनरूषितं लिप्तम् ॥ ५ ॥

चर्वितं भक्षितोच्छिष्टं अधात् दधार ॥ ६ ॥

**एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला।**
**घ्नन्तीवैक्षत्[1] कटाक्षेण[2] निर्दष्टदर्शनच्छदा[3] ॥ ७ ॥**

**अपराऽनिमिषद्दृग्भ्यां[4] जुषाणा तन्मुखाम्बुजम् ।**
**आपीतमपि नाऽतृप्यत् सन्तस्तच्चरणं यथा ॥ ८ ॥**

**तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य[5] निमील्य च ।**
**पुलकाङ्ग्युपगुह्या[6]ऽऽस्ते योगीवाऽऽनन्दनिर्भरा[7] ॥ ९ ॥**

**सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ।**
**जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः[8] ॥ १० ॥**

**ताभि र्विधूतशोकाभि र्भगवानच्युतो वृतः[9] ।**
**व्यरोचताऽधिकं तात[10]! पुरुषः शक्तिभिर्यथा ॥ ११ ॥**

**तास्समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ।**
**विकचत्[11]कुन्दमन्दारसुरभ्य[12]निलषट्पदम् ॥ १२ ॥**

1. G,T,W घ्नतीवै° ; M,Ma प्रत्यवै° 2. G,J,V,Va °पैः 3. G,J,K,Va सन्दष्ट 4. M,Ma °षं दृ° 5. V °त्वा 6. T,V,W गू° 7. G,J,K,T,Va,W सम्प्लुता 8. M,Ma °नः 9. M,Ma नृप! 10. V तत्र 11. G,J,K,M,Ma,Va °स° 12. M,Ma °तानि°.

**श्रीध० एकेति।** भ्रुकुटिं [1]भ्रुवमाबध्य कुटिलीकृत्य प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला विवशा, [2-]निर्दष्टः दशनच्छदः[-2] यया, कटाः कटाक्षाः तैः ये आक्षेपाः परिभवाः तैः ताडयन्तीव ऐक्षत् ॥ ७ ॥

**अपरेति।** अनिमिषती[3]भ्यां अनिमीलन्तीभ्यां दृग्भ्याम् आपीतमपि सम्यग्दृष्टमपि पुनः[4] जुषाणा नाऽतृप्यत् ॥ ८ ॥

**तमिति।** हृदि कृत्वा[5] हृदयं नीत्वेत्यर्थः। [6-]आनन्दसंप्लुतेति[-6] वा पाठः ॥ ९ ॥

**सर्वा** इति। प्राज्ञमीश्वरं प्राप्य यथा मुमुक्षवो जनाः। यद्वा, प्राज्ञं ब्रह्मज्ञं प्राप्य यथा संसारिणः। यद्वा प्राज्ञं [7-]सुषुप्तिसाक्षिणं[-7] प्राप्य यथा विश्वतैजसावस्था जीवाः ॥ १० ॥

**ताभिरिति।** पुरुषः परमात्मा शक्तिभिस्सत्त्वादिभिः यथा। यद्वा, उपासकः पुरुषः ज्ञानवीर्यबलादिभिः। यद्वा, पुरुषोऽनुशयी[8] प्रकृत्याद्युपाधिभिर्वृतो यथा अधिकं[9] व्यरोचत[10], तद्वत् ॥ ११ ॥

**ता** इति। विकच[11]त्कुन्दमन्दारैः सुरभिर्योऽनिलः तस्मात् षट्पदा यस्मिन् तत् ॥ १२ ॥

1. P.V omit भ्रुवम् 2- -2. J,Va दष्टाः अधरोष्ठाः 3. J,Va °न्ती० 4. J,Va add °पुनः 5. J,Va °कृत्य 6- -6. J,Va omit 7- -7 J,Va सौषुप्तं 8. J,Va °शा° 9. P,V omit अधिकं 10 J,Va विरोचते 11. J,Va °स°

**वीर०** एका तु भ्रुकुटिं भ्रुवमाबध्य कुटिलीकृत्य प्रेमसंरम्भेण प्रेमगर्भक्रोधेन विह्वला निर्दष्टो दशनच्छदोऽधरोष्ठो यया तथाभूता कटाक्षेण घ्नन्तीव ताडयन्तीव ऐक्षत। कटाक्षेपैरिति पाठे कटाक्षपातैरित्यर्थः ॥ ७ ॥

अपरा तु निमेषमकुर्वतीभ्यां दृग्भ्यां तस्य मुखाम्भोजमापीतमपि पुनः पुनर्जुषाणा सेवमाना नाऽतृप्यत् न तृप्ता बभूव। यथा सन्तो भक्तास्तच्चरणं पुनःपुनरनुभूयाऽपि न तृप्यन्ति, तद्वत् ॥ ८ ॥

काचित्तु नेत्ररन्ध्रद्वारेण तं कृष्णं हृदि निधाय उपगूह्याऽऽलिङ्ग्य च निमील्य, नेत्रे इति शेषः। पुलकानि पुलकितानि अङ्गान्यस्यास्सन्तीति तथाभूता। आनन्देन संप्लुता आनन्दमग्ना योगीवाऽऽस्ते आस्त ॥९॥

तास्सर्वा गोप्यः केशवस्यावलोकनमेव परम उत्सवस्तेन सुखिताः विरहजं तद्विश्लेषजं तापं विजहुः तत्यजुः। यथा जनाः योगिजनाः प्राज्ञं परमात्मानम् प्राप्य साक्षात्कृत्य आध्यात्मिकादितापत्रयं जहति, तद्वत्। यद्वा, "प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्" (बृह.उ.4-3-21) "प्राज्ञेनाऽऽत्मनाऽन्वारूढः" (बृह.उ. 4-3-35) इत्युक्तरीत्या यथा सुषुप्तिदशायां परमात्मना सम्परिष्वक्ता जाग्रत्कालिक बाह्याभ्यन्तरक्लेशान् जहति तद्वदित्यर्थः ॥ १० ॥

तत्र तदा ताभिर्विगतविरहजशोकाभिः परिवृतः नितरां व्यरोचत। हे तात! यथा पुरुषो जीवः शक्तिभिः चतुर्विंशति तत्त्वात्मिकाभिः वृतो रोचते। यद्वा, पुरुषः परमपुरुषः शक्तिभिः विमलादिकाभिः परिवृतस्तद्वत् ॥ ११ ॥

ततो विभुः कृष्णः तास्समादाय कालिन्द्याः पुलिनं निर्विश्य तत्र ताभिः परिवृतो व्यरोचतेति पूर्वेणाऽन्वयः। पुलिनं कथम्भूतम्? विकसद्भिः कुन्दैः मन्दारैः सुरभिः यो मन्दानिलः तस्मात्, षट्पदा भृङ्गा यस्मिन् ॥ १२ ॥

**विज०** प्रेमसंरम्भविह्वला प्रणयकोपाकुलिता, भ्रुकुटिं ललाटशिरां आबध्य प्रकाश्य निर्दष्टदशनच्छदा नितरां दष्टोष्ठपुटा ॥ ७॥

अनिमिषं निमेषलक्षणव्यापारशून्यमिति क्रियाविशेषणम्। जुषाणा सेवमाना ॥ ८ ॥

हृदि स्थितं कृत्वा पुलकाङ्गी रोमाञ्चितगात्रा उपगुह्य आलिङ्ग्य आनन्दनिर्भरा परमानन्दपूर्णा ॥९॥

जनः शोकाकुलः संसारी वा प्राज्ञं पण्डितं दुःखशमनबोधकं परमात्मानं वा, "प्राज्ञेनाऽऽत्मनाऽन्वारूढः" (बृह.उ. 4-3-35) इति श्रुतिः ॥ १० ॥

पुरुषो विष्णुः, शक्तिभिः लक्ष्मीविभूतिभिः । ११ ॥

विभुः, अनिलश्च षट्पदाश्च अनिलषट्पदाः, विकसतोः कुन्दमन्दारयोः, सुष्ठु रताः क्रीडावन्तः अनिलषट्पदाः यस्मिंस्तत्तथा ॥ १२ ॥

**शरच्चन्द्रांशुसन्दोह ध्वस्तदोषातमश्शिवम्।**
**कृष्णाया[1] हस्ततरलाऽऽचितकोमलवालुकम् ॥ १३ ॥**

**तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः।**
**स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितै रचीक्लृप[2] न्नासनमात्मबन्धवे ॥ १४ ॥**

**तत्रोपविष्टो भगवान्स ईश्वरो[3] योगीश्वरान्तर्हृदि[4] कल्पितासनः।**
**चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १५ ॥**

**सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा[5]।**
**संस्पर्शनेना[6]ङ्ककृता[7]ङ्घ्रिहस्तयोः संस्तभ्य[8] ईषत्कुपिता[9] बभाषिरे ॥ १६ ॥**

## गोप्य ऊचुः

**भजतोऽनु भजन्त्येके एक एतद्विपर्ययम्।**
**नोभयांश्च भजन्त्यन्ये[10] एतन्नो ब्रूहि साधु भोः[11] ॥ १७ ॥**

---

1. M,Ma कृष्णेहाऽऽयस्त 2. T,V,W °चिह्नि° 3. V ईशो 4. G,J,M,Ma,Va °गे° 5. M,Ma °द्रुवः 6. M,Ma नोत्काङ्क्ष 7. M,Ma °ताङ्कहृच्छयम् 8. G,J,V,Va संस्तुत्य 9. V चेष° 10. G,J,V,Va °न्त्येके 11. M,Ma,V भो!

**श्रीध० शरदिति।** शरच्चन्द्रांशूनां सन्दोहैः समूहैः ध्वस्तं दोषातमः रात्रिगतं तमः यस्मिंस्तत्। अतः शिवं सुखकरं हस्तरूपैस्तरलैः तरङ्गैः आचिताः आस्तृताः कोमला वालुका यस्मिन्। एवम्भूतं पुलिनं तास्समादाय निर्विश्य [1]तत्र ताभिः वृतः अधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १३ ॥

**तदिति।** ताश्च मनोरथानामन्तं ययुः, पूर्णकामा बभूवुः। श्रुतयो यथेति। अयमर्थः- यथा कर्मकाण्डे श्रुतयः परमेश्वरमपश्यन्त्यः तत्तत्कामानुबन्धैरपूर्णा इव भवन्ति। ज्ञानकाण्डे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामानुबन्धं [2]जहुः, तद्वदिति। आप्तकामा अपि प्रेम्णा तमभजन्नित्याह — स्वैरिति। अचीक्लृपन् रचयामासुः। आत्मबन्धवे अन्तर्यामिणे ॥ १४ ॥

**तत्रेति।** गोपीसभागतः ताभिः सम्मानितस्सन् चकास शुशुभे त्रैलोक्ये या लक्ष्मीः शोभा तस्याः एकमेव पदं स्थानं तद्वपुः दधत् दर्शयन् ॥ १५ ॥

**सभाजयित्वेति।** सहासलीलेक्षणेन विभ्रमो विलासः यस्यां तया भ्रुवा उपलक्षिताः संस्पर्शनेन [3-]सम्मर्दनेन[-3]॥ १६ ॥

तत्र भगवतः अकृतज्ञतां तद्वचनेनैव उपपादयितुकामाः गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति **भजत** इति। भजतः प्राणिनः अनु अनन्तरम्। केचि[4]त्तद्भजनानुसारेण भजन्ति केचिदेतद्विपर्ययं यथा भवति तथा। तद्भजनानपेक्षे[5] अभजतोऽपि भजन्ति। अन्ये तु नोभयानिति ॥ १७ ॥

---

1. J,Va omit तत्र 2. J,Va जहति 3- -3. Va omits 4. Va omits तत् 5. P.V °क्षितं

**वीर०** शरच्चन्द्रांशूनां सन्दोहैस्समूहैः ध्वस्तं [1]नाशितं दोषातमो रात्रितमो यस्मिन्। अतः शिवङ्करं कृष्णाया यमुनायाः हस्तरूपैः तरलैः तरङ्गैः आचिता आस्तृताः कोमला वालुका यस्मिन् तथाभूतम्॥ १३॥

तस्य भगवतो दर्शनेन य आह्लादः तेन विधूता निरस्ता हृद्रुजः तद्विश्लेषजा मनःपीडाः यासां ताः गोप्यः मनोरथान्तं मनोरथप्रतिपादनाकाङ्क्षापर्यवसानं प्रापुः, यथा श्रुतयस्तद्वत्। यथा भागद्वयात्मिकाः श्रुतयः तात्पर्यवृत्त्या अभिधया च प्रतिपिपादयिषितं परमात्मानं प्रतिपाद्य प्रतिपादनाकाङ्क्षापर्यवसानं प्राप्नुवन्ति तद्वदित्यर्थः। इत्थं पूर्णमनोरथाः प्रेम्णा तमभजन्नित्याह। कुचकुङ्कुमेनाऽङ्कितैः स्वैः स्वकीयैः उत्तरीयैः आत्मबन्धवे आसनं रचयामासुः ॥ १४ ॥

योगीश्वराणामन्तर्हृदि हृदयकमलमध्ये कल्पितमासनं यस्य तथाभूतोऽपि ईश्वरो भगवान्, तत्र गोप्युत्तरीयरचितासने समासीनः गोपीसमुदायमध्यगतः त्रैलोक्यसौन्दर्यैकाश्रयं वपुर्दधत् बिभ्राणः चकास दर्शयन् शुशुभे ॥ १५ ॥

अनङ्गं कामं दीपयत्युद्दीपयति तथा तं भगवन्तं सहासलीलेक्षणेन विभ्रमो यस्यां तया भ्रुवा सभाजयित्वा रञ्जयित्वा। यद्वा, आत्मभिस्सह क्रीडयित्वा उक्तविधया भ्रुवोपलक्षिताः गोप्यः, अङ्केष्वात्मनामूरुषु यौ कृतौ निहितौ भगवतश्चरणौ तयोः यावात्मनां हस्तौ तयोः संस्पर्शनेन, करणस्य शेषत्वविवक्षया षष्ठी। ताभ्यां मर्दनेन तत्पूर्वकं संस्तभ्य दृढमङ्गी गृहीत्वेत्यर्थः। ईषत्कुपितास्सत्यो बभाषिरे ॥ १६ ॥

भाषणमेवाऽऽह — **भजत** इति। केचित् भजतोऽनुवर्तमानान् भजन्ति अनुवर्तन्ते। एके तु एतद्विपर्ययं कुर्वन्ति, अभजतो भजन्तीत्यर्थः। अन्ये तु उभयान् भजतश्चाभजतश्च न भजन्ति। भो कृष्ण! एतदस्मभ्यं ब्रूहि। उक्तविधान् प्रश्नान्[2] तत्र प्रवर्तकं साध्यं गुणदोषतारतम्यञ्च ब्रूहीत्यर्थः। तृतीयकोटयन्तर्भूतस्त्वमिति भावः ॥ १७ ॥

---

1. T,W omit नाशितं 2. T,W omit प्रश्नान्

**विज०** शरत्कालचन्द्रांशूनां सन्दोहेन निरन्तरराज्या ध्वस्तं निरस्तं दोषातमः रात्र्यन्धकारो यस्मिन् तत्तथा। कृष्णायाः यमुनायाः ईहया प्रवाहलक्षणचेष्टया आयस्ताः आयासं प्राप्ताः तरला अणुतरङ्गा एतैः आचितानि[1] आसिक्तानि च कोमलानि च वालुकानि सैकतानि यत्र तत्तथोक्तम्। यद्वा कृष्णेहया श्रीकृष्णमूर्तिक्रीडया आयस्तानि च तरलानि चञ्चलानि च अत एवाऽऽचितानि इतस्ततो विकीर्णानि च, शेषं समम्। "अणुस्तरङ्गो लोलः स्यात्तरला कुरलस्तथा"[1] इति गोपालः। "आचितं छन्नसिक्तयोः" इति च ॥ १३ ॥

मनोरथान्तं प्रार्थितार्थपूर्तिं, मनोरथानामर्थानामन्तं निर्णयहेतुं परमात्मानम्। 'रथ गतौ' इति धातुः। श्रुतिविषये तस्य ब्रह्मणो दर्शनेन विषयीकरणलक्षणेन जाताह्लादेन पूर्णार्थलक्षणेन अवधूता हृद्रुजः विषयीकरणलक्षणाः यासां तास्तथा। उत्तरीयैः प्रावरणीयवस्त्रैः आसनं विमलोत्कर्षणीज्ञानेत्यादिक्लृप्तमिव पीठम्, अन्यत्राऽऽत्मनो वायोर्बन्धवे "सतो बन्धुमसति निरविन्दन्" (नृ.पूर्व.उ. 1-1) इति श्रुतिः ॥ १४ ॥

गोपीपरिषद्गतः गोपस्त्रीसमूहमध्यवर्ती त्रैलोक्यलक्ष्मीणां त्रैलोक्यसौन्दर्याणामेकं पदं स्थानं, त्रिलोकीजनसेव्या लक्ष्मीः श्रीः तस्याः एकं केवलं पदं भोगयोग्याश्रमं वा ॥ १५ ॥

अनङ्गं कामं दीपयतीति अनङ्गदीपनः तं लीलया लालित्येन ईक्षणं हाससहितं सहासं सहासलीलेक्षणेन विभ्रमन्त्योऽनुदिशं सञ्चलन्त्यः भ्रुवो यासां तास्तथा। संस्पर्शनेन उत्पन्ना उत्का उत्कण्ठा सैव अङ्कं लक्षणं तेन कृतः पूर्णः अङ्गे शरीरे हृच्छयः कामः संस्पर्शनोत्काङ्ककृताङ्गहृच्छयः तं संस्तभ्य करचरणाद्यङ्गस्पर्शनेन अभिव्यक्तं कामं निरुध्येत्यर्थः ॥ १६ ॥

गोप्यः शास्त्रतत्त्वमजानत्यः[2] हरेरकृतज्ञताकरणाभिप्रायेण पृच्छन्ति — **भजत** इति। **एके** केचित् भजतः सेवमानान् अनुभजन्ति सेवानुकूलफलसमर्पणेन सेवन्ते। एके केचित् एकस्योक्तस्य विपर्ययं कुर्वन्ति फलोद्देशेन सेवमानान् अविशिष्टफलदानेन अनुवर्तन्ते। अन्ये नोभयांश्चानुवर्तन्ते। यदेतत्पक्षत्रयं अत्र साधु निर्दोषपक्षमस्माकं ब्रूहि विविच्य कथयेत्यर्थः॥ १७॥

---

1. Ma omits आचितानि 2. M,Ma °न्त्यः

## श्रीभगवानुवाच

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते।
न तत्र सौहृदं धर्मः [1-]स्वार्थार्थं[-1] तद्धि नाऽन्यथा ॥ १८ ॥

भजन्त्यभजतो ये वै करुणाः पितरो यथा।
धर्मो निरपवा[2]दोऽत्र सौहृदश्च सुमध्यमाः ॥ १९ ॥

भजतोऽपि न वै केचित् भजन्त्यभजतः कुतः ।
[3]आत्मारामा ह्याप्तकामा ह्यकृतज्ञा गुरुद्रुहः ॥ २० ॥

नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्ति[4]वृत्तये।
★तथैव मत्तः फलसम्पदः स्युः उच्चावचाः कल्पतरोरिवार्थिनाम्।
यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृ[5]तो न वेद ॥ २१ ॥

एवं मद[6]र्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्त[7]येऽबलाः।
मया परोक्षं भजता तिरोहितं मा[8]ऽसूयितुं मा[9]ऽर्हथ [10]तत्प्रियं प्रियाः ॥ २२ ॥

न पारयेऽहं निरवद्यसंयुजां [11]सुसाधुकृत्यं विबुधायुषाऽपि वः।
[12-]या माऽभजन्[-12][13]दुर्जरगेहशृङ्खला[14] [15]सञ्छिद्य [16-]तद्वः प्रतियातु साधुना[-16] ॥२३॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
रासक्रीडायां गोपीसान्त्वनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

1- -1 M,Ma स्वार्थं तद्वित्त 2. T,W °राधोऽ° 3. G,J,K,Va अ° 4. M,Ma वृत्तयो यथा ★ This additional half verse along with commentary is found in M & Ma Edns. 5. M,Ma °तं 6. M,Ma °थार्पित 7 M,Ma °यो 8 M,Ma सा° 9. M,Ma ना° 10 M,Ma मां प्रि° 11. G,J,Va स्व 12- -12. M,Ma यो मां भजेद्दु° 13. M,Ma दे° 14. G,J,K,M,Ma,Va °लाः 15. G,J,V,Va संवृश्च्य 16- -16. M,Ma वृद्धिं प्रतियाति सोऽधुना ; T,W तन्व्यः प्रतियातु साधुना

**श्रीध०** विदिताभिप्रायस्सन्[1] उत्तरमाह **मिथ** इति। हे सख्यः, उपकारप्रत्युपकारतया ये मिथो भजन्ति, तेऽन्यं न भजन्ति, किन्त्वात्मानमेव। कुतः? हि यस्मात् स्वार्थ एवैकान्तः उद्यमो येषां ते, तत्र च न सौहृदम् अतो न सख्यं,[2] न च धर्मः दृष्टोद्देशात्, गोमहिष्यादिभजनवदित्यर्थः ॥ १८ ॥

ये तु अभजतो भजन्ति ते द्विविधाः- करुणाः स्निग्धाश्च। तत्र तु यथाक्रमं धर्मकामौ भवत इत्याह — **भजन्त्यभजत** इति। [3-]करुणा एषामस्तीति करुणाः, दान्ता इत्यर्थः[-3] ॥ १९ ॥

[4-]तृतीयप्रश्नस्योत्तरं[-4] - **भजतोऽपीति**। अयमर्थः - ते तु[5] चतुर्विधाः- एके आत्मारामाः अपराम्दृशः, केचिदाप्तकामाः [6-]विषयदर्शिनोऽपि[-6] पूर्णकामत्वेन भोगेच्छारहिताः। [7-]अन्ये तु अकृतज्ञा मूढाः[-7] अन्ये गुरुद्रुहः अतिकठिनाः। "स पिता यस्तु पोषकः" इति न्यायात्। उपकर्ता गुरुतुल्यः तस्मै द्रुह्यन्तीति तथा ते ॥ २० ॥

अत्र चरमकोटिगतमात्मानं मत्वा अक्षिसङ्कोचैः परस्परगूढस्मितमुखीः ता दृष्ट्वाऽऽह — **नाऽहन्त्विति**।[8] हे सख्यः! अहं तेषां मध्ये न कोऽपि। किन्तु परमकारुणिकः परमसुहृच्च। कथम्? अमीषां भजतां अनुवृत्तिवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान् न अहं[9] भजामि। एतत्सदृष्टान्तमाह — यथेति। तस्य धनस्यैव चिन्तया निभृतः पूर्णः व्याप्त इति यावत्। अन्यत्तु क्षुत्पिपासादि[10]कमपि न वेद ॥ २१ ॥

**एवमिति**। मदर्थोज्झितलोकवेदस्वानां मदर्थे उज्झितः लोकः युक्तायुक्ताप्रतीक्षणात्। वेदश्च धर्माधर्माप्रतीक्षणात्। स्वाः ज्ञातयश्च स्नेहत्यागात्, याभिस्तासां वो युष्माकं परोक्षं अदर्शनं यथा भवति तथा। भजता युष्मत्प्रेमालापान् शृण्वतैव तिरोहितमन्तर्धनिन स्थितम्। तत्तस्मात् हे अबलाः! हे प्रियाः! मा मां असूयितुं दोषारोपेण द्रष्टुं यूयं माऽर्हथ न योग्याः स्थ ॥ २२ ॥

[illegible]स्तामिदम्, परमार्थं तु शृणुतेत्याह-**नेति**। [11-]निरवद्यसंयुजां[-11] निरवद्या संयुक् संयोगः यासां, [12-]निरवद्यं यथा भवति त[illegible] संयुज्यन्ते भजन्त इति वा। तथा तासां[-12] वः विबुधानामायुषा चिरकालेनाऽपि स्वयं साधुकृत्यं प्रत्युपकारकृत्यं कर्तुं न पारये न शक्नोमि। कथम्भूतानाम्? याः भवत्यः दुर्जरा अजरा या गृह[13]शृङ्खला[14] तां संवृश्च्य निश्शेषं छित्वा मा माम् अभजन् तासां मच्चित्तं ग्रहषु प्रेमयुक्ततया नैकनिष्ठम्। तस्माद्वो युष्माकमेव साधुना साधुकृत्येन यत् युष्मत्साधुकृत्यं तत्, प्रतियातु प्रतिकृतं भवतु। युष्मत्साशील्येनैव ममाऽऽनृण्यम्, न तु मत्कृतप्रत्युपकारेणेत्यर्थः ॥ २३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

1. J,Va omit स[illegible] 2. [illegible]Va [illegible]खं 3- -3. J,Va omit 4- -4 J, Va प्रश्न[illegible] 5. J,Va omit ते तु 6- -6. J,Va दर्शिनोऽपि 7- -7 V omits 8. Va [illegible] 9. [illegible]Va omit [illegible] 10. J,Va °चापि 11- -11 J,Va omit 12- -12. J,Va omit 13. J,Va गेह 14. [illegible]Va °[illegible]

**वीर०** विदिताभिप्राय उत्तरमाह **मिथ** इति। हे **सख्यः**! ये मिथो भजन्ति परस्परमुपकुर्वन्तोऽनुवर्तन्ते, ते **स्वार्थे स्वप्रयोजने एव निमित्ते,** एकान्तः नियत उद्यमो येषां तथाभूताः स्वप्रयोजनमात्रपरास्ते हीत्यर्थः। यस्मादेव मत एव तत्र मिथो भजने न सौहृदं मिथोभजनप्रवर्तकं न सौहृदमित्यर्थः। किन्तु उपचिकीर्षाप्रत्युपचिकीर्षे एव तत्र कारणमिति भावः। अत एव न तत्र धर्मः न तत्साध्यो धर्म इत्यर्थः। किन्तु केवलं दृष्टमेव तत्साध्यं प्रयोजनमिति भावः। तदेवाऽऽह तन्मिथो भजनं स्वार्थार्थम् स्वार्थस्स्वप्रयोजनम् एवार्थः प्रयोजनं यस्य तथाभूतं हि न त्वन्यथा स्वार्थनिरपेक्षपरोपकारार्थद्वारा धर्मार्थं न भवतीत्यर्थः ॥ १८ ॥

द्वितीयकोटचन्तर्गतानाह — **भजन्तीति**। हे सुमध्यमाः! अभजतः ये भजन्ति ते करुणाः करुणावन्तः "अर्श-आद्यच्" (अष्टा. 5-2-127) स्वार्थनिरपेक्षपरोपचिकीर्षा करुणा। सा च पित्रादिष्वतीव प्रसिद्धेति तां निदर्शयति — पितरो यथेति। अत्राऽभजद्भजने सौहृदं सर्वभूतसुहृत्त्वं प्रवर्तकं तत्साध्यस्तु निरपवादो निर्बाधो धर्मः। अक्षय्यो भगवदनुग्रहरूपधर्म इत्यर्थः। अथ तृतीयान् त्रेधा विभज्य दर्शयति — भजतोऽपीति। ये भजतोऽपि न वै भजन्ति। कुतोऽभजतो भजेयुः? ते तु आत्मारामादयः, अत्र आत्मारामाःकेवलं स्वदेहमात्रपोषणपरायणाः, न तु ज्ञानिनः, तेषां सर्वभूतसुहृत्त्वेन द्वितीयकोटचन्तर्गतत्वात्। आप्तकामाः शब्दादिविषयभोगतदुपकरणतत्स्थानसमृद्धिमन्तः। अकृतज्ञाः कृतघ्नाः। अकृतज्ञानामेव परां काष्ठां दर्शयति गुरुद्रुह इति। यद्वा, अकृतज्ञत्वकार्यं दर्शयति गुरुद्रुह इति। गुरुभिः कृतं महोपकारमननुस्मृत्य तेभ्योऽपि द्रुह्यन्तीति तथाभूताः। एतेषां त्रयाणां इतरभजनाभावात् प्रवर्तकसाध्यगुणदोषा नोक्ताः ॥ १९,२० ॥

इत्थं भगवतोक्ताः गोपीस्तावदनुवर्तमाना अस्मानभजन् अयं तृतीयकोटचन्तर्भूतः। तत्राऽपि नाऽऽत्मारामो नाऽप्याप्तकामश्च, तथा चेदमस्माभिस्सह वने विहारासम्भवात्। अतोऽयं नूनमकृतज्ञ इत्यक्षिसङ्कोचैः परस्परं सूचयन्तीर्दृष्ट्वा प्रत्याह - **नाहन्त्विति**। हे सख्यः! भजतोऽपि जन्तून्नाहं भजामि, न तेषां दृष्टिगोचरो भवामीत्यर्थः। तथाऽपि नाऽकृतज्ञ इति भावः। तर्हि किमर्थं न भजसीत्यत आह- अमीषां मां भजतां जन्तूनां अनुवृत्तिवृत्तये अनुवर्तनस्य मदनुध्यानरूपस्य अविच्छेदाय। अनेनाऽऽत्मनः कृतज्ञत्वं परमकारुणिकत्वञ्चोक्तम्। प्रियस्यादृश्यमानस्य अत्यन्ताभिनिवेशविषयत्वे दृष्टान्तमाह — यथेति। अधनो निर्धनः पुमान् कदा चित् दैवाल्लब्धे धने विनष्टे सति, तच्चिन्तया विनष्टधनचिन्तया निभृतो व्याप्तः, अन्यन्न वेद नान्यत् स्मरति। किन्तु तदेव नष्टं धनमविच्छेदेन अनुस्मरन् अवतिष्ठते। अविनष्ट इति वा छेदः। तस्मिन्नविनष्टे सति चिन्तया विषयचिन्तया निभृतः पूर्णः, तद्धनमन्यच्च न वेद नाऽनुस्मरति, किन्तु प्रमत्तो भवतीति भावः। अस्मिन्पक्षे व्यतिरेके दृष्टान्तः ॥ २१ ॥

आत्मनः कृतज्ञता माविष्कुर्वन् कारुणिकत्वमेवाह — **एवमिति**। हे अबलाः! मदर्थमुज्झिताः त्यक्ताः लोकः युक्तायुक्ताप्रतीक्षणात्, वेदः धर्माधर्मानपेक्षणात्, स्वा ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वः युष्माकम्। अनेन कृतज्ञत्वमाविष्कृतम्। मय्यनुवृत्तये परोक्षं भजता परोक्षमुपकुर्वता मया तिरोहितम्। अनेन कारुणिकत्वमुक्तम्। तत् तस्मात् हे प्रियाः! प्रियतमं माम् असूयितुं दोषदृष्ट्या द्रष्टुं नाऽर्हथ ॥ २२ ॥

आत्मनः कृतज्ञताकाष्ठामाह — **न पारय** इति। निरवद्यं निष्कपटं यथा तथा, संयुज्यन्ते भजन्त इति तथा तासां वो युष्माकं सुसाधु यथा तथा कर्तुं प्रत्युपकर्तुं अहं विबुधायुषाऽपि न पारये न शक्नोमि। मनुष्यायुषा न

शक्नोम्येव, ब्रह्मायुषाऽपि न शक्नोमीति भावः। या भवत्यः दुर्जरगेहशृङ्खलाम् [4-] अच्छेद्यगृहरूप[-4][5-]शृङ्खलां[-5] सम्यक् छित्वा मामभजन्, तत्तस्मात् तासां वः सा शृङ्खला अधुना प्रतियातु, भूयो विनिवर्ततामित्यर्थः। मया कार्यः प्रत्युपकारो मुक्तिप्रदानमेव। तत्तु सदृशं भवेदिति भावः। यद्वा, तस्माद्युष्माकमेव साधुना साधुकृत्येन तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु। "मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं हरे। नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति" (रामा. 7-40-23) इत्युक्तरीत्या युष्मत्साधुकृत्यं तेनैव जीर्यत्विति भावः ॥ २३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां व्याख्यायां
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

1. K omits केवलं 2- -2. K omits 3- -3. T,W omits 4- -4. K °लास्सञ्छिद्य 5- -5. K °पं पाशं

**विज०** तत्र परिहारं वक्तुमुपक्रमते **मिथ** इति। हे सख्यः! ये मिथो भजन्ति उपकारप्रत्युपकारलक्षणां सेवां कुर्वन्ति ते स्वार्थैकान्तोद्यमा हि स्वप्रयोजननियतप्रयत्ना यस्मात् तस्मात् तत्र तेषु सौहृदं अनिमित्ततः स्नेहलक्षणो धर्मो नाऽस्ति। ननु तर्हि किमस्ति, तत्राऽऽह स्वार्थमिति। स्वप्रयोजनार्थं वित्त जानीध्वम्। विपक्षं प्रतिषेधति नेति ॥ १८ ॥

ये अभजतः फलेष्विच्छाननुगतान् भजन्ति फलमर्पयन्ति। तत्र कारणमाह करुणा इति। करुणयन्ति प्राणिनो दृष्ट्वा द्रवीकृतहृदया भवन्तीति करुणाः। तत्र दृष्टान्तः लोकानुग्रहकरणशीलाः पितरो यथा बालादीन् दृष्ट्वा। गुणान्तरञ्चाऽस्तीत्याह- धर्म इति। हे सुमध्यमाः! अत्र तेषु जनेषु सौहृदलक्षणो धर्मश्च निरपवादः निर्दोषः! इदं सम्प्रज्ञातसमाधिस्थस्य लक्षणम्॥ १९॥

असम्प्रज्ञातसमाधिस्थस्य लक्षणमाह - **भजतोऽपीति**। अत्र केचिज्जनाः भजतोऽपि फलार्थितया सेवमानानपि न भजन्ति स्वप्रयोजनाभावात्। कथं तदित्यत्राऽऽह — आत्मेति। आत्मनि परमात्मन्येव आरामः क्रीडा येषान्ते तथा, बाह्यप्रवृत्तिशून्या इत्यर्थः। तदपि कथमित्याशङ्क्य सुखार्थे हि प्रवृत्तिः, सुखं तु स्वत एव पूर्णमित्याशयेनाह आप्तकामा इति। काम्यत इति कामः आनन्दः, हिशब्दो हेतौ। आनन्दाप्तौ निमित्तमाह — अकृतेति। अकृतं परमात्मानं जानन्तीति, तज्ज्ञानञ्च निष्पापत्वादित्याह - गुरुद्रुह इति। गुरूणि पापानि द्रोहितवन्तो नाशितवन्त इति। "नास्त्यकृतः कृतेन" (मुण्ड.उ. 1-2-12) इति श्रुतिः। "नराणां क्षीणपापानाम्" इति स्मृतिः। कीदृशाः कृतघ्ना इत्यतो वाऽऽह भजतोऽपीति। ये केचित् भजतः शरणार्थितया सेवमानानपि न भजन्ति, ग्रहणलक्षणां सेवां न कुर्वन्ति। अभजतः कुतो भजन्ति। तत्र कारणमाह आत्मारामा इति। परमात्मविषयमतिरहिता देहलक्षणात्मनि नितरां रताश्च। तर्हि कुत्र रतिरित्यत्राऽऽह- आप्तेति। आप्ते विस्रब्धे स्त्रीजने कामो येषां ते तथा। एतादृशाः कृतघ्ना हि कृतं न जानन्ति नाशयन्ति च। अत एव गुरुद्रुहः देवादिगुरूणां द्रोग्धार इत्युच्यन्ते हविराद्यदानात् ॥ २० ॥

अहमेष्वेक इति भवतीनाम् आशङ्का माभूदित्याह — **नाऽहमिति**। अपि समुच्चये। तुशब्दो विशेषप्रकाशकः। **अहं भजतः फलार्थितया सेवमानान् अभजतोऽपि फलार्थितया असेवमानान्न भजामि**, तदिच्छया फलं न दास्यामि, "यमेवैष वृणुते तेन लभ्यः" (कठ.उ. 2-22) इति मम विजयशिखामणेः ततः प्रयोजनाभावात् तेभ्यः प्रयोजनं न ममेत्यर्थः। तर्ह्येषां सेवा निष्फला किं नेत्याह अमीषामिति। अमीषामुभयेषां यथा यथा सेवाः स्युः तथा तथा मत्तः उच्चावचाः सेवाफलसम्पदः स्युरेव अर्थिनां योग्यानामधिकारिणां कल्पवृक्षाद्यथा फलानि तथेत्यर्थः। भगवान् गोपीनां सेवास्तवनव्याजेन स्वोपासनाप्रकारं दर्शयति — यथेति। यथा अधनो धनहीनः दरिद्रः दैवाल्लब्धधने नष्टे तच्चिन्तया नष्टधननियतरत मनस्कत्वेन नितरां भृतं गृहीतं अन्यन्न वेद। यद्वा, निभृतं स्तिमितं निश्चलं स्थिरं पुरोवर्त्यन्यद्वस्तु ॥ २१ ॥

हे अबलाः! एवं मदर्थं मामुद्दिश्य अर्पिते लोकवेदस्वे लौकिककर्मवैदिककर्मलक्षणसर्वस्वे यासां तास्तथा। तासां वो युष्माकं अनुवृत्तयः सेवालक्षणा उपासनाः अविषया न स्युः इत्यन्वयः। तर्हि किमर्थं भवताऽन्तरधायि इत्याशङ्क्य अस्माकं स्वभावोऽयमित्याशयेनाऽऽह मयेति। अत्र भजतेति शतृप्रत्ययः इच्छावाची, परोक्षं भजता व्यवधानमिच्छता मया तिरोहितं, पारोक्ष्यं कृतम्। "परोक्षप्रिया इव हि देवाः" (ऐत.उ. 3-14) इति श्रुतिः। व्यवधानमस्मत्प्रियं यस्मात् तस्मात् हे प्रियाः, यूयं प्रियं मां सासूयितुं असूयासहितां मतिं कर्तुं नाऽर्हथेत्यन्वयः। "सन्निकर्षो हि मर्त्यानामनादरणकारणम्" इति स्मृतेश्च, शिक्षणायाऽप्येवं कृतम् ॥ २२ ॥

ननु युष्मदनुग्रहाभावात् तत्कथमित्याशङ्क्य अनुग्रहविशेषं कथयति — **नेति**। विबुधायुषा दिव्यवत्सरकल्पितजीवनलक्षणेनाऽपि अहं निरवद्यसंयुजां निर्दुष्टमनोयोगवृत्तीनां वः सुसाधुकृत्यं युष्माकं सर्वसम्मतं निर्दोषकर्म प्रतिकर्तुं न पारये न शक्नोमीत्यनेन गोपीष्वधिकोऽनुग्रहोऽस्तीति दर्शितम्। न केवलं युष्मासु[1] अनुग्रहविशेषो मम निर्व्याजभक्त्या भजमाने कस्मिंश्चिदपि स्यादित्याशयेनाऽऽह यो मामिति। यो मां भजेन्मामुद्दिश्य भक्तिं करोति स पुरुषः स्त्रीजनो वा अधुना अस्मिन् जन्मन्येव दुर्जरदेहशृङ्खलाः भक्तिज्ञाने विना जरयितुं शिथिलीकर्तुमशक्याः लिङ्गशरीरलक्षणशृङ्खलाः संवृश्च्य छित्वा वृद्धिं स्वरूपभूतानन्दलक्षणां प्रतियाति "तस्य तावदेव चिरम्" (छान्दो.उ. 6-14-2) इत्यादि श्रुतेः। यद्वा दह्यते सिच्यते इति देहः। दुर्जरा दुरुच्छेदाः पुत्रमित्रादिनिबद्धस्नेहलक्षणाः शृङ्खलाः संवृश्च्य मां भजेत्सेवते, सोऽधुनैव भक्तिज्ञानादिसाधनसामग्रीलक्षणां वृद्धिं प्रतियातीत्यन्वयः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥
**(विजयध्वजरीत्या त्रिंशोऽध्यायः)**

---

1. Ma युष्मत्सेवानु०

# त्रयस्त्रिंशोऽध्यायः

(विजयध्वजरीत्या एकत्रिंशोऽध्यायः)

श्रीशुक उवाच

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः।
जहुर्विरहजं तापं [1]तदङ्गोपचिताशिषः ॥ १ ॥

तत्रारभत गोविन्दो रासक्रीडामनु[2]व्रतैः।
स्त्रीरत्नैरन्वितः प्रीतै रन्योन्याबद्धबाहुभिः ॥ २ ॥

रासोत्सवस्सम्प्रवृत्तो गोपीमण्डलमण्डितः।
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ ३ ॥

प्रविष्टेन गृहीतानां कण्ठे स्वनिक[3]टं स्त्रियः।
यं मन्ये[4]रन्नभस्ताव द्विमानशतसङ्कुलम् ॥
दिवौकसां सदाराणामौत्सु[5]क्यनिभृतात्मनाम् ॥ ४ ॥

ततो दुन्दुभयो ने[6]दुर्निपेतुः पुष्पवृष्टयः।
जगुर्गन्धर्वपतयस्सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥

वलयानां नूपुराणां किङ्किणीनाञ्च योषिताम् ।
सप्रियाणामभूच्छब्द स्तुमुलो रासमण्डले ॥ ६ ॥

---

1. M,Ma तत्सङ्गो° 2 Ma °जैः 3. M,Ma °टस्त्रि° 4. M,Ma °त न° 5. G,J,K,Va °क्यापहृता° 6. M,Ma °दुः खात्पेतुः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयस्त्रिंशे ततो गोपी मण्डलीमध्यगो हरिः। प्रियास्ता रमयामास हृदिनीवनकेलिभिः॥

**इत्थमिति**। तत्तदा अङ्ग! हे राजन्! यद्वा, तस्य भगवतोऽङ्गेन [1]अभ्रवपुषा करचरणाद्यवयैर्वा उपचितास्समृद्धा आशिषो यासां ताः ॥ १ ॥

**तत्रेति**। रासक्रीडा, रासो नाम बहुनर्तकीयुक्तो नृत्तविशेषः। तां क्रीडाम् अन्योन्यमाबद्धाः सङ्ग्रथिता बाहवः **यैस्तैस्सह** ॥ २ ॥

तत्साहित्यमभिनयेन दर्शयति - अक्षरचतुष्टयाधिकेन सार्धेन **रासोत्सव** इत्यादिना। तासां मण्डलरूपेणाऽवस्थितानां द्वयोर्द्वयोर्मध्ये ॥ ३ ॥

**प्रविष्टेनेति**। प्रविष्टेन तेनैव कण्ठे गृहीतानां उभयत आलिङ्गितानाम्। कथम्भूतेन? यं सर्वाः स्त्रियः स्वस्वनिकटं मामेवाऽऽश्लिष्टवानिति मन्येरन्। तेन एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः। नन्वेकस्य कथं तथा प्रवेशः? सर्वसन्निहितत्वे[2] वा कुतः[3] स्वनिकटवर्तित्वाभिमानस्तासामित्यत उक्तं योगेश्वरेणेति। अचिन्त्यशक्तिनेत्यर्थः। तावत् तत्क्षणमेव। अत्यौत्सुक्यव्याप्तमनसां[4] सस्त्रीकाणां देवानां विमानशतैः[5] सङ्कीर्णं नभो बभूव ॥ ४ ॥

★**त** इति। तत्तस्य भगवतः श्रीकृष्णस्य अमलं निर्मलं यशो जगुरिति ॥ ५ ॥

**वलयानामिति**। सप्रियाणां कृष्णसहितानां तुमुलः सङ्कीर्णः ॥ ६ ॥

---

1. J,Va omit अग्र 2. P,V add तस्मिन् 3. J,Va स्वैक 4. J,Va omit अति 5. J,Va add सङ्कुलं ★ This commentary on V.5 is not found in P&V Edns.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथैवं सूक्ताभिर्गोपीभिस्सह भगवतो रासक्रीडामनुवर्णयति त्रयस्त्रिंशेन। इत्थं भगवतः सुतरां पेशला मृदुला[1] वाचश्श्रुत्वा गोप्यस्तस्याङ्गेन अङ्गसङ्गेन उपचितास्समृद्धा आशिषो यासां तथाभूताः विरहजं तापं जहुः ॥ १ ॥

अथ तत्र पुलिने भगवान्, स्त्रिय एव रत्नानि तैस्सहितो रासक्रीडामारब्धवान्। कथम्भूतैः? अनुव्रतैः अन्योन्यमाबद्धास्सङ्ग्रथिता बाहवो यैस्तथाभूतैः। रासो नाम अनेकनर्तकनर्तकीयुक्तो[2] नृत्तविशेषः ॥ २ ॥

[3-]अ नेकनर्तकनर्तकीसाहित्यमेव[-3] अभिनयेन दर्शयति **रासोत्सव** इत्यादिना नभस्तावदित्यतः प्राक्तनेन। तासां मण्डलरूपेण स्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन गोपीमण्डलमण्डितो रासोत्सवस्सम्प्रवृत्त इत्यन्वयः। कथम्भूतानाम्? तेनैव कण्ठे गृहीतानाम् उभयत आलिङ्गितानाम्। कथम्भूतेन? यं कृष्णं सर्वाः स्त्रियः स्वनिकटस्थं मन्येरन् मामेवाऽऽश्लिष्टवानिति मन्येरन्, तथाभूतेन। तदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः। नन्वेकस्य कथं तथा प्रवेशः, सर्वसन्निहिते तस्मिन्वा कथं तासां स्वनिकटवर्तित्वमात्राभिमान[4] इत्यतो विशिनष्टि योगेश्वरेणेति[5]। अचिन्त्यविविधविचित्रशक्तिनेति भावः। बहुरूपतामापन्नेन तासां स्वस्वनिकटवर्तित्वमात्राभिमानं जनयता चेति गूढाभिसन्धिः, तथा च वक्ष्यति "कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः" (भाग. 10-33-20) इति। अत एव "अचीक्लृपन्नासनमात्मबन्धवे" इत्युक्तमुपपन्नम्। नभ इति। यदा रासोत्सवः सम्प्रवर्तितः तावत्तत्क्षणमेव औत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां[6] विमानशतैः सङ्कुलं[7] सङ्कीर्णं नभो बभूव[8] ॥ ३, ४ ॥

तत इति। [9-] दुन्दुभयो दध्वनुः [-9] सस्त्रीका गन्धर्वश्रेष्ठाः अमलं शृण्वतां वदताञ्च पापहरं तस्य भगवतो यशो जगुः ॥ ५ ॥

**वलयानामिति।** सप्रियाणां कृष्णसहितानां योषितां ये वलयादयस्तेषां तेषां शब्दस्तुमुलः सङ्कीर्णो बभूव ॥ ६ ॥

---

1. K omits मृदुला 2. K नृत्य° 3- -3. K तदेव 4. K वृत्तित्व 5. K °गी° 6. K °वादीनां 7. J,W omit सङ्कुलं 8. K adds इति शेषः।
9- -9. T,W omit

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तिप्रसन्नभगवत्प्रीतिरेव आनन्दानुभवे कारणं नाऽन्यत्साधनमिति निदर्शयितुं रासक्रीडां वर्णयति अस्मिन्नध्याये। "स तत्र पर्येति जक्षन् क्रीडन् रममाणः" (छान्दो.उ. 8-12-3) इत्यादि श्रुतिः। तत्र गोपीनां कृष्णविरहसमुद्भूतसन्तापप्रणाशं वक्ति **इत्थमिति**। तापत्यागे निमित्तमाह तत्सङ्गेति। हरेरङ्गसङ्गलक्षणसेवनेन उपचिताः फलरूपेण परिणताः आशिषः प्रार्थना यासां तास्तथा। यद्वा, उपचिताः सञ्चिताः समृद्धिं गता आशिषः शुभानि यासां तास्तथा ॥ १ ॥

समृद्धफलशुभानुभवप्रकारं वक्तुमुपक्रमते **तत्रेति**। तत्र वने तस्यामवस्थायां अन्योन्याबद्धबाहुभिः इति रासक्रीडाप्रकारं दर्शयति। समतलमतृणप्रदेशे वितस्तिमात्रोन्नतशङ्कुं संस्थाप्य तत्परितः सर्वैः स्वपादमवष्टभ्य वृत्ताकारेण स्थित्वा एकस्या वामहस्तं अन्यस्या निकटवर्तिन्या दक्षिणपाणिना सङ्गृह्य स्वशक्त्याऽवष्टम्भेन वर्तुलाकारभ्रमणं चक्रवत्क्रिया रासक्रीडा ॥ २ ॥

नृत्यादिषु भरतरीतिसंज्ञेषु गातुमुपक्रान्तेषु योऽधिरसोल्लासो जायते स रसः तत्सम्बन्धी रसो रासः, तदुद्रेकेण क्रीडा नृत्यविशेषः। एवंविधो रासक्रीडोत्सवः कृष्णेन सम्यक्प्रवृत्त इत्यन्वयः। कीदृशः? गोपीनां तासां मण्डलेन वलयेन मण्डितोऽलङ्कृतः। कथम्भूतेन? तासां गोपीनां मध्यं प्रविष्टेन। मध्ये शङ्कुस्थापनात् कथं मध्यप्रवेशस्सङ्गत इति तत्राऽऽह - द्वयोरिति। वलयस्थितानां तासां द्वयोर्द्वयोर्मध्ये प्रविष्टेन। एकस्येदं कथं घटत इत्यतो योगेश्वरेणेति। योगैश्वर्यादिकस्य बहुत्वं घटत इति भावः। कीदृशीनां कृष्णेन कण्ठे गृहीतानाम्। तत्रैवं विशेषः। कृष्णदक्षिणभागस्थिताया कृष्णदक्षिणांसग्रहणं, वामभागस्थितायास्तस्य वामस्कन्धग्रहणम्। स्वनिकटस्थस्त्रियः कण्ठे गृहीतेन तेनैव रासोत्सवः सम्प्रवृत्त इति गतेनाऽन्वय इत्यर्थः ॥ ३ ॥

नन्वेवं कृष्णे रासक्रीडाकारिणि के साक्षिण इति तत्राऽऽह — यन्मन्येतेति। कृष्णो यदा रासक्रीडां कर्तुं मन्येत न्यरूरुपदिति व्यत्ययः। तावत्तदा नभः औत्सुक्येन निभृतात्मनाम् निश्चलमनसां सदाराणां सभार्याणां दिवौकसां विमानशतसङ्कुलं आसेति शेषः ॥ ४ ॥

ततः रासोत्सवप्रारम्भानन्तरम् ॥ ५,६ ॥

तत्राऽपि[1] शुशुभे ताभिर्भगवान्देवकीसुतः।
मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥

पादन्यासै भुर्जविधुतिभिस्सस्मितै[2] भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः।
स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो
गायन्त्यस्तं तटित[3] इव ता मेघचक्रे विरेजुः ॥ ८ ॥

उच्चैर्जगुर्नृत्यमाना[4] रक्तकण्ठयो रतिप्रियाः।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥

काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः।
उन्निन्ये पूजिता तेन [5-]प्रीयता साधु[-5] साध्विति॥
तदेव ध्रुवमुन्निन्ये तस्यै मानञ्च बह्वदात्[6] ॥ १० ॥

काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः।
जग्राह बाहुना[7] स्कन्धं श्लथद्वलयमल्लिका[8] ॥ ११ ॥

---

1. G,J,K,V,Va °ति° 2. V °तभ्रू° 3. G,J,K,Va °डि° 4. M,Ma °गुः कृतमदा 5- -5. V प्रीयमाणेन 6. T,W °धा° 7. T,W पाणिना 8. M,Ma स्रवत्कबर°

**श्रीध०** **तत्रेति**। महामरकतो नीलमणिरिव। [1-]मरतक इति पाठान्तरम्[-1]। हैमानां मणीनां मध्ये मध्ये[2] ताभिः स्वर्णवर्णाभिः आश्लिष्टाभिः शुशुभे। गोपीदृष्टयभिप्रायेण वा, विनैव मध्यपदावृत्तिमेकवचनम् ॥ ७ ॥

स यथा ताभिश्शुशुभे तथा ता अपि तेन विरेजुरित्याह — **पादन्यासैरिति**। भुजविधुतिभिः करचालनैः भज्यमानैर्मध्यैः चलद्भिः कुचैः पटैश्च गण्डलोलैः गण्डेषु चञ्चलैः स्विद्यन्मुख्यः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासां ताः। [3-]कबरेषु रशनासु च ग्रन्थयो[-3] दृढा[4] [5-]या सां[-5] ताः। यद्वा, तेषु तासु च अग्रन्थयः शिथिलग्रन्थय इत्यर्थः। तत्र नानामूर्तिः कृष्णो मेघचक्रमिव, तास्तु बहुविधाः तटित[6] इव, स्वेदस्तुषार इव, गीतं गर्जितमिवेति यथासम्भवमूह्यम्॥ ८॥

**उच्चैरिति**। नृत्यमानाः नृत्यन्त्यः रक्तकण्टयः नानारागानुरञ्जितकण्ठयः[7] कृष्णस्य अभिमर्शेन संस्पर्शेन मुदिताः, इदं विश्वम् ॥ ९ ॥

**काचिदिति।** मुकुन्देन सह स्वरजातीः षड्जादिस्वरालापगतीः अमिश्रिताः कृष्णेन [8]उन्नीताभिः असङ्कीर्णाः। प्रीयमाणेन सम्मानिता, [9]तत्स्वरजात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वोन्निन्ये उन्नीतवती ॥ १० ॥

एवं [10]नृत्यगीतादिना श्रीकृष्णसम्मानितानां तासामतिप्रीतिविलसितं वृत्तमाह — **काचिदिति।** श्लथन्ति वलयानि मल्लिकाश्च यस्यास्सा ॥ ११ ॥

---

1- -1. J,Va omit 2. P,V,Va omit मध्ये 3- -3. V omits 4. P,V omit °द्धा 5- -5. V omits 6. J,Va °ड्डि° 7. J,Va रागैरनु 8. P,V उद्गी° 9. J,Va स्वरतज्जात्यु° 10. P,V नृत्त

**वीर० तत्रापीति।** हैमानां मणीनां मध्ये महामरकतः [1]इन्द्रनीलमणिरिव ताभिः स्वर्णवर्णाभिराश्लिष्टः तत्रातीव शुशुभे। गोपीदृष्टयभिप्रायेणैकवचनम्। एवमुत्तरत्राऽप्यवगन्तव्यम् ॥ ७ ॥

यथा ताभिः भगवान् शुशुभे तथा तेन ताश्च विरेजुरित्याह — **पादन्यासैरिति।** [2]पादविक्षेपैः भुजविधुतिभिः करचालनैः स्मितेन सहितैः भ्रुवां विलासैश्च भज्यमानैर्मध्यैः चलद्भिः कुचैश्च पटैश्च, गण्डेषु [3]चलैः कुण्डलैश्च उपलक्षिताः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासां ताः। कबरेषु रशनासु च ग्रन्थयो यासाम्। यद्वा, तेषु तासु च न विद्यन्ते ग्रन्थयो यासां ताः, शिथिलकबरादिग्रन्थिमत्य इत्यर्थः: एवम्भूताः कृष्णस्य वध्वः तं कृष्णं गायन्त्यः तेन विरेजुः। यथा मेघचक्रे [4]तटित स्तद्वत्। तत्र कृष्णो मेघचक्रमिव, तास्तु [5]बहुविधास्तटित इव [6-]स्वेदस्तुषार इव[-6] गानं गर्जितमिवेति यथासम्भवमूह्यम् ॥ ८ ॥

**उच्चैरिति।** नृत्यन्त्यो नानारागैः [7]अनुरञ्जितकण्ठयः कृष्णस्याभिमर्शेन मुदिता उच्चैर्जगुः, यद्गीतेन यासां यस्य च गीतेन इदं विश्वमावृतं व्याप्तं कृत्स्नं जगत्तद्गीतैकदेशवदिति भावः ॥ ९ ॥

[8-]कृष्णाभिमर्शमुदितानां तासां प्रत्येकं गीतादिचेष्टितमाह — **काचिदिति**[-8] । तत्र काचिदङ्गना मुकुन्देन सह स्वरजातीः स्वरभेदान् षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाख्यान् अमिश्रिताः कृष्णोन्नीताभिः असङ्कीर्णाः उन्निन्ये अमूर्छयत्। कथम्भूता? [9]प्रीयता प्रीयमाणेन [10]अनेन कृष्णेन साधु साध्विति पूजिता [11-]सम्मानिता[-11] । जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं [12]तालविशेषं कृत्वोन्निन्ये उन्नीतवती। [13]इत्थमुन्नीतवत्यै बहुमानं सम्मानं अदाच्चकार, कृष्ण इति शेषः ॥ १० ॥

एवं [14]नृत्तगीतवाद्यादिना कृष्णसम्मानितानां तासामतिप्रेमविलसितं वृत्तमाह- [15-]**काचिदित्यादिना**[-15] । रासेन परिश्रान्ता श्लथन्ति वलयानि मल्लिकाश्च यस्यास्तथाभूता, आत्मनो बाहुना [16]पार्श्वस्थस्य भगवतोंऽसं जग्राह ॥ ११ ॥

---

1. T,W omit इन्द्र 2. K न्यासैः वि 3. K चञ्चलैः 4. K °ड्डि° 5. K °ड्डि° 6- -6. K omits 7. K omits अनु 8. T,W omit 9. K adds सती 10. K तेन श्री° 11- -11. K तदेव स्वर जा० 12. T,W °न 13. K adds तस्यै 14. K नृत्य 15- -15. K चतुर्भिः काचिदिति। 16. K समीपस्थस्य

**विज०** तत्राऽपि रासक्रीडायामपि। यद्वा, तत्राऽपि नभस्यपि, रासमण्डले एवञ्चेत् सप्रियाणामिति पदं पूर्णार्थं लभते। अन्यत्र कृष्णव्यतिरेकेण प्रियाभावात्। अस्मिन् पक्षे प्रियेण बहुरूपं गतेन कृष्णेन सहितानां तत्र अपिशब्दसामर्थ्यात् पारवश्यात् शिक्षार्थं नभस्यपि रासक्रीडा प्रवृत्तेति प्रतर्क्यम्। हैमानां हिमवत्सम्भूतानां मणीनां माणिक्यानां मध्ये मरकतश्याममणिरिव। "अनन्तरत्नप्रभवस्य" (कुमार. 1-2) इत्युक्तं रत्नजातीनामुत्पत्तिर्हिमवद्भिरिति प्रसिद्धम्। यद्वा, हैमानां हेमकार (हिमाकर) सम्भूतानां तत्रत्यानां मणीनां निर्मलत्वेन कान्त्यतिशयात् ॥ ७ ॥

तत्र नृत्यप्रकारं कथयति **पादेति**। पादन्यासैर्वक्रस्थापितपादविक्षेपविशेषैः भुजानां विधुतिभिः कम्पनविशेषैः भ्रूविलासैः भ्रूभङ्गैः। चलकुचतटैरिति केचित्। कबरेत्यादौ श्लथदिति पदमध्याहार्यम्। श्लथन्त्यः कबररशनाग्रन्थयः बन्धविश्लेषाः यासां तास्तथा। यद्वा, कबररशनाना मग्रन्थयः अबन्धनानि यासां ताः, मुच्यमानकबरकाञ्च्य इत्यर्थः। स्तनितरशनाग्रन्थय इति केचित्। 'स्तन ध्वन' इति धातुः। कृष्णवध्वः कृष्णपरिग्रहाः कृष्णयुक्ताः गोपस्त्रिय इति वा। भावैः पुरुषान् बध्नन्तीति बध्वः। "समस्तभावैः खलु बन्धनं स्त्रियः" इत्युक्तेः। तं कृष्णं गायन्त्यो या एवंविधास्ताः मेघचक्रे मेघमण्डले तडित इवेति कान्तिविशेषद्योतनार्थं दृष्टान्तोपादानम्, न तु पादन्यासादिविशेषप्रकाशनार्थम्; अचेतनत्वात्तडिताम्। यद्वा यत्तडित इति तडितो यथा प्रकाशनाप्रकाशने तथा पादविन्यासाद्यावर्तनमिति दर्शनाय। 'तडगतौ' इति धातोः तडन्ति क्षिप्रतिरोधानं गच्छन्तीति क्षिप्रतिरोधानगमनशीलार्थे इत्प्रत्ययः ॥ ८ ॥

रक्तकण्ठ्यः रागयुक्तकण्ठगुणाः अभिमर्शः कामकलोद्बोधककरस्पर्शविशेषः, यासां गीतेन इदं जगदावृतं व्याप्तं देवसाक्षिकत्वात् ॥ ९ ॥

अमिश्रिताः स्वरान्तरानन्तरिताः स्वरजातीः षड्जादिस्वरभेदान्। उन्निन्ये उत्कृष्टत्वेन गीतवती मूर्छयामास च। "निषादर्षभगान्धारषड्जमध्यमधैवताः, पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" (अम. को. 1-183) इत्यमरः॥ १०॥

कृष्णोऽपि तदेव गीतं ध्रुवमुन्निन्ये व्यक्तवर्णेन प्लावयामास, तेन तस्यै एव समं गायन्त्यै; अत्र समगानं नाम तत्प्रशंसार्थं मुकुन्देन तद्गानानुसारेण गीतमिति ज्ञातव्यम्। अन्यथा त्रिजगति मुकुन्दगायनसमं गायनज्ञः कोऽस्ति स्वविभूतिमन्तरेण? स्रवन्ती श्लथयन्ती कबरबद्धमल्लिका यस्यास्सा तथा ॥ ११ ॥

**तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम्।**
**चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥**

**कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम्[1]।**
**ग[2-]ण्डं गण्डे स[-2]न्दधत्या आदा[3]त्ताम्बूलचर्वितम् ॥ १३ ॥**

**नृत्यन्ती[4] गायती काचित्कूजन्नूपुरमेखला[5]।**
**पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात्स्तनयोश्शिवम् ॥ १४ ॥**

गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम्।
गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥

कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः।
गोप्यस्समं भगवता ननृतुः स्वकेश[6] स्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥

---

1 M,Ma भूषिते 2 M,Ma खण्डखण्डे भिद° 3. G,J,K,T,Va,W अ° 4. K,M,Ma,T,V,W °ती 5. V शा° 6. M,Ma स्म

**श्रीध० तत्रेति**। उत्पलस्य [1-]सौरभमिव[-1] सौरभं यस्य तं बाहुम् ॥ १२ ॥

**कस्या** इति। नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोः त्विषेण त्विषा, [2-]अदन्तत्वमार्षम्[-2]। मण्डितं गण्डं कपोलं, तथाभूते स्वगण्डे सन्दधत्याः संयोजयन्त्याः ॥ १३ ॥

**नृत्यतीति**। कूजती नूपुरे मेखला च यस्यास्सा ॥ १४ ॥

एवमन्या अपि गोप्यः यथायथं नानाविभ्रमैः विजह्रुरित्याह — **गोप्य** इति ॥ १५ ॥

तत्र गायकेषु वादकेषु च [3-]अस्त्रीकेषु[-3] गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु वा अन्यामेव वाद्यादिसम्पत्तिं दर्शयन् रासरसम्भ्रममाह — **कर्णोत्पलेति**। कर्णोत्पलैश्च अलकविटङ्कैरलकालङ्कृतैः कपोलैः घर्मैश्च वक्त्रेषु श्रीः शोभा यासां ताः। घोषाः किङ्किण्यः वलयनूपुरघोषैः वाद्यैः वादित्रैः [4-]भगवता ननृतुः[-4] स्वकेशेभ्यः[5] स्रस्ताः स्रजो यासां ताः। एतेन तालगतिसन्तुष्टाः केशाः सशिरःकम्पं पादेषु पुष्पवृष्टिमिवाऽकुर्वन्नित्युत्प्रेक्षितम्। भगवता समं ननृतुः। क? भ्रमरा एव गायका यस्यां तस्यां राससभायाम् ॥ १६ ॥

---

1- -1 J,Va omit 2- -2 J,Va omit 3- -3 J,Va omit 4- -4. J,Va omit 5. J,Va सह

**वीर०** तत्र तासां मध्ये एका तु आत्मनः अंसगतं स्कन्धे निहितमुत्पलस्य सौरभमिव सौरभं यस्य तं, चन्दनेन समन्तालिप्तं कृष्णस्य बाहुमाघ्राय हृष्टानि पुलकितानि रोमाणि यस्यास्तथाभूता बाहुमधरं वा चुचुम्ब ॥ १२ ॥

नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विषेण त्विषा अदन्तत्वमार्षम्। मण्डितं कपोलं तथाभूते स्वगण्डे सन्दधत्याः संयोजयन्त्याः, कस्याश्चित् कस्यैचित् ताम्बूलचर्वितं ददौ ॥ १३ ॥

काचित्तु नृत्यन्ती गायन्ती[1] च कूजन्ती नूपुरे, मेखला च यस्यास्तथाभूत्वा श्रान्ता शिवं शान्तं पार्श्वस्थस्याऽच्युतस्य हस्ताब्जं अब्जवच्छीतलं हस्तं स्तनयोरधात् निदधे ॥ १४ ॥

इत्थमन्या अपि गोप्यो यथायथं नानाविधैर्विभ्रमैः विजह्रुरित्याह — **गोप्य** इति। श्रियो लक्ष्म्याः एकान्तवल्लभमनन्यपतिं लब्ध्वा तस्याऽच्युतस्य दोर्भ्यां गृहीताः कण्ठाः यासां ताः तमच्युतं गायन्त्यो विजह्रिरे ॥ १५ ॥

तत्र वादकेषु गायकेषु च सस्त्रीकेषु गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु च, अन्यामेव वाद्यादिसम्पत्तिं दर्शयन् राससम्भ्रममाह — **कर्णोत्पलेति**। कर्णोत्पलैः कर्णावतंसैः उत्पलैश्च, अलकविटङ्कैः अलकालङ्कृतैः कपोलैश्च घर्मस्वेदबिन्दुभिश्च वक्त्रेषु श्रीश्शोभा यासां ताः गोप्यः घोषाः किङ्किण्यः वलयादिभिर्वाद्यैः वादित्रैश्च भगवता सह, भ्रमरा एव गायका यस्यां तस्यां राससभायां ननृतुः। कथम्भूताः स्वकेशेभ्यः स्रस्ताः स्रजो यासां तथाभूताः। एतेन तालगतिसन्तुष्टाः केशाः सशिरःकम्पाः पादेषु पुष्पवृष्टिमिवाऽकुर्वन्नित्युत्प्रेक्षितम् ॥ १६ ॥

1. K °ती

**विज०** उत्पलसौरभमुत्पलमालया सुगन्धितम् ॥ १२ ॥

नाट्येन नृत्येन विक्षिप्तयोः किञ्चित् स्रस्तयोः कुण्डलयोः[1] त्विषेण रोचिषा भूषिते मण्डिते। 'त्विष-दीप्तौ' इति धातोः अवि(पि)कृते त्विषइति रूपं भवति। गण्डखण्डे गण्डमण्डले "समूहे मण्डले खण्डमाहु श्शब्दविशारदाः" इत्युत्पलमाला। अभिदधत्याः सपत्न्याः कोपोद्बोधाय यत्किञ्चिन्मन्त्रयन्त्याः ॥ १३ ॥

अधाद्दधौ, शिवं सुखयतीति सुखम् ॥ १४ ॥

गृहीतकण्ठ्यः आलिङ्गितकण्ठ्यः एकान्तवल्लभं निर्णीतनियतभर्तारं विजह्रिरे क्रीडाञ्चक्रुः ॥ १५ ॥

कर्णोत्पलं अलकः कुन्तलकश्च कर्णोत्पलालकौ ताभ्यां विटङ्कं कपोलं कपोलस्य विटङ्कोऽलङ्कारः घर्मः, तेन स्वेदजलं लक्ष्यते। कपोलालङ्कारस्वेदजलेन च वक्त्राणां श्रीः शोभा यासां तास्तथा। वलयनूपुरलक्षणवाद्यघोषैः समं भगवता च समं भ्रमरा एव गायकाः अनुस्वरदानकरा यस्यां सा तथा भ्रमरगायकाः। रासगोष्ठी रासक्रीडा[2] तस्याम् ॥ १६ ॥

---

1. Ma omits कुण्डलयोः 2. Ma adds भ्रमरगायकरासगोष्ठी।

**एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः।**
**रेमे रमेशो [1-]व्रजसुन्दरीभि[-1]र्यथाऽर्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥**

**तदङ्ग[2]सङ्गप्रमुदाकुलेन्द्रियाः केशान्दुकूलं कुचपट्टिकां वा।**
**[3-]नाऽञ्जः[-3] प्रतिव्योढु[4]मलं व्रजस्त्रियो विस्रस्तमाल्याभरणाः कुरूद्वह ॥ १८ ॥**

**कृष्णविक्रीडितं वीक्ष्य [5-]व्यमुह्यन्[-5] खेचरस्त्रियः।**
**कामार्दिताश्शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥**

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः।
रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥

[7] तासां रतिविहारेण श्रान्तानां वदनानि सः।
प्रामृजत्करुणः प्रेम्णा शन्तमेनाऽङ्ग! पाणिना ॥ २१ ॥

---

1- -1. M,Ma कामिनीभिर्यथा स्वतन्त्रः प्रतिबिंबं विडम्बयन् 2. M,Ma °म° 3- -3. M,Ma त्यक्तुं पतिं वोढुं° 4. G,J,Va °ला° 5- -5. G,J,Va मुमुहुः खेचरस्त्रियः; M,Ma व्यमुह्यन्त सुरस्त्रियः 6. K,M,Ma,T,V,W राम भ° 7. G,J,Va तासामति.

**श्रीध०** यथा गोप्यो नानाविभ्रमैः भगवता सह विजह्रुः। एवं भगवानपि स्वविलासैस्ताभिस्सह रेम इत्याह — **एवमिति**। तद्विलासानभिभूतस्यैव। रतौ दृष्टान्तः यथाऽर्भक इति। स्वप्रतिबिम्बैः विभ्रमः क्रीडा यस्य स इति[1], अनेनैतद्दर्शितम्। स्वीयमेव सर्वकलाकौशलं सौगन्ध्यलावण्यमाधुर्यादि च तासु सञ्चार्य, ताभिस्सह रेमे यथाऽर्भकः स्वप्रतिबिम्बैरिति ॥ १७ ॥

तास्तु भगवद्विलासैः आकुला बभूवुरित्याह — **तदङ्गेति**। तस्याङ्गसङ्गेन प्रकृष्टा मुत् प्रीतिः तया आकुलानि अवशानि इन्द्रियाणि यासां ताः। विश्लथबन्धान् केशादीन् अञ्जसा प्रतिव्योढुं यथापूर्वं धर्तुं नाऽलं न समर्था बभूवुः। [2-]विस्रस्तानि माल्यानि[-2] आभरणानि च यासां ताः ॥ १८ ॥

न केवलं ता एवाऽऽकुलेन्द्रियाः किन्तु देव्योऽपीत्याह — **कृष्णेति**। किञ्च शशाङ्कश्चेत्यनेन एतत्सूचितम् - शशाङ्केन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनास्सर्वेऽपि ग्रहाः तत्र तत्रैव तस्थुः। ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ॥ १९ ॥

[3]किञ्च, **कृत्वेति**। अयं भावः। "कात्यायनि महामाये महायोगिन्यधीश्वरि, नन्दगोपसुतं देवि, पतिं मे कुरु ते नमः" (भाग. 10-22-4) इति प्रत्येकं ताभिः प्रार्थनात्। भगवताऽपि — "याताऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" (भाग. 10-22-27) इति तथैव प्रतिश्रुतत्वात् तावन्तमात्मानं कृत्वा रेमे इति। यावतीर्यावत्यः ॥ २० ॥

कृपातिशयमाह — **तासामिति** ॥ २१ ॥

---

1. Va इव 2. J,Va विस्रस्ताः मालाः 3. P,V omit किञ्च

**वीर०** इत्थं गोप्यो नानाविभ्रमैः भगवता सह विजह्रुः। तथा भगवानपि स्वविलासैः ताभिस्सह रेम इत्याह - **एवमिति**। इत्थं रमेशः श्रियः पतिः भगवानपि व्रजसुन्दरीभिस्सह परिष्वङ्गादिभिः रेमे। तत्र परिष्वङ्गः परिरम्भः, कराभिमर्शः करेण [1-]स्तनो[-1]र्वादीनां संस्पर्शः। स्निग्धेक्षणं सानुरागावलोकनम्। उद्दामविलासः उदारलीला परिष्वङ्गादिरूपं विहारं कृतवानित्यर्थः। रमेशो रेमे इत्यनेन अवाप्तसमस्तकामत्वादनपेक्षितविहारोऽपि सर्वकारणत्वात् अस्वात्मकवस्त्वन्तररहितोऽपि केवलं रेम इति सूचितम्। कथमेवम्भूतस्य क्रीडा सङ्घटत इत्यतो दृष्टान्तमाह — **यथेति**। अर्भको यथा स्वप्रतिबिम्बैः विभ्रमः क्रीडा

यस्य **तथाभूतो** भवति तद्वत्। स यथा स्वप्रतिबिम्बैः स्वानन्यैरेव रमते तथा रमेशोऽपि स्वात्मिकाभिः व्रजसुन्दरीभिः कामिनां स्त्रीपारवश्यं दर्शयन्निव रेम इत्यर्थः। अत्र बिम्बप्रतिबिम्बयोरिव स्वात्मिकानां व्रजसुन्दरीणां स्वशरीरत्वेन स्वकार्यत्वेन च स्वानन्यत्वमात्रेऽर्भकदृष्टान्तः, न त्वज्ञत्वादावपीति द्रष्टव्यम् ॥ १७ ॥

तास्तु भगवतः तद्विलासैः अनभिभूतस्वविलासैराकुला बभूवुरित्याह — **तदङ्गसङ्गेति** । तस्य भगवतोऽङ्गसङ्गेन प्रकृष्टा मुत् प्रीतिः तया आकुलान्यवशानीन्द्रियाणि यासां तास्तथा विस्रस्ता विश्लथा माला आभरणानि च यासां तथाभूताः, विश्लथबन्धान् केशादीन् अञ्जसा आशु प्रतिव्योढुं यथापूर्वं धर्तुं, नाऽलं न प्रबभूवुः ॥ १८ ॥

न केवलं ता एवाऽऽकुलेन्द्रियाः, किन्तु पश्यन्त्यो देवानां स्त्रियोऽपीत्याह — **कृष्णविक्रीडितमिति**। खेचराणां देवानां स्त्रियः। किञ्च, शशाङ्कः चन्द्रः सगणः शुक्राङ्गारकगुर्वादिगणसहितः विस्मितो बभूव। अनेनैतत्सूचितम् - विस्मितेन शशाङ्केन स्वगतौ विस्मृतायाम् इतरेऽपि ग्रहाः स्वस्वगतिं विस्मृत्य तत्र तत्रैव तस्थुः। अतो रात्रिर्दीर्घा च बभूवेति॥ १९॥

कथमेकोऽनेकाभिर्युगपद्रेमे इत्यत आह — **कृत्वेति**। गोपयोषितः यावतीर्यावत्यः तावन्तमात्मानं कृत्वा ताभिस्सह लीलया रेमे। अध्ययनेन वसतीतिवत् लीलयेति हेतौ तृतीया। आत्मारामोऽपि षाड्गुण्यपूर्णोऽपि केवलं लीलार्थमेव रेम इत्यर्थः॥ २०॥

तस्य तासु कृपातिशयमाह — **तासामिति**। स भगवान् रतिविहारेण रतिविहाराभ्यां श्रान्तानां तासां गोपीनां वदनानि प्रस्विन्नानि, अङ्ग! हे राजन्! करुणः करुणावान् शन्तमेन निरतिशयसुखकरेण पाणिना प्रामृजत् परिमृष्टवान् ॥ २१॥

---

1- -1. T,W स्तनयोः बाह्वादीनां

**विज०** स्वतन्त्र ईश्वरो विधिनिषेधाद्यविषयः प्रतिघं विधिनिषेधविवर्जितं पुरुषमनुकुर्वन्। यद्वा, प्रवृत्तिधर्मं "विध्याद्यगोचरे कोपे प्रवृत्ते प्रतिघं विदु"रिति च ॥ १७ ॥

तस्य कृष्णस्य अङ्गसङ्गेनोत्पन्नेन प्रमदेनान्देन आकुलानि पूर्णानीन्द्रियाणि यासां तास्तथा, केशादीन्वोंदु पतिं कृष्णं वा त्यक्तुं अलं पर्याप्ताः शक्तिवर्जिता आसन्नित्यर्थः। "अप परी वर्जने" (अष्टा. 1-4-88) इति सूत्रात्। यद्वा शक्त्यभावेऽपि निवारिताः। "अलन्तु भूषणे शक्तौ पर्याप्तौ शक्तिवारणे (वैज.को. 8-7-13) इति। प्रेमकामात्मत्वात् वहनादिशक्त्यभाव इत्यर्थः। कुरूद्वहेति विशेष्य सम्बोधनेन कृष्णस्य भक्तिभामिनीलोलत्वं पश्येत्यभिमुखीकरणेन भक्तेरवश्यकर्तव्यत्वं सूचयति॥ १८॥

सगणः रोहिण्यादिनक्षत्रगणेन सहितः। यद्वा गणनं संख्यानं तेन सहितः ॥ १९ ॥

किमत्र सङ्ख्येयम्, अत्राऽऽह — **कृत्वेति**। यद्वा योगैश्वर्यात् बहुरूपग्रहणेन बह्वीभिः स्त्रीभिः रमणं घटत इति राज्ञः सिद्धत्वेऽपि मन्दाशङ्कां परिहरति। यावतीर्यावत्यः। ररामेति व्यत्ययेन परदाराभिमर्शनेन दोषो नास्तीति वक्ष्यमाणमर्थ मिहैव सूचयति। यद्वा, रराम चिक्रीडे रासक्रीडाविरामसूचनार्थो वा ॥ २० ॥

इदञ्च भक्तपारवश्यं 'हरेरजस्रं स्मरेत्' इत्याशयेन हरिचरितं वक्ति — **तासामिति**। प्रामृजत् सम्मार्जितवान्॥ २१॥

**गोप्यः स्फुरत्[1]कनककुण्डलकुन्तलत्विड्गण्डश्रिया [2]सुधितहास्य निरीक्षणेन।**
**मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥**

**ताभि[3]र्युतः [4]श्रममपोहितुमङ्गसङ्ग घृष्ट[5]स्रजः स्वकुचकुङ्कुमरञ्जितायाः।**
**गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥**

**सोऽम्भ[6]स्यलं युवतिभिः परिषिच्यमानः प्रेम्णो[7]क्षितः [8-]प्रहसतीभिरितस्ततोऽङ्ग[-8]।**
**वैमानिकैः कुसुमवर्षिभि रीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥**

**ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे।**
**चचार भृङ्गप्रमदागणावृतो यथा [9]मदच्युद्द्विरदः करेणुभिः ॥ २५ ॥**

**एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः।**
**सिषेव आत्मन्यवरुद्ध [10]सौरतः सर्वाः शरत्काव्यकथा रसाश्रयाः ॥ २६ ॥**

---

1- -1. G,J,K,Va °त्पुरट; M,Ma °न्मकर 2. M,Ma सुरत° 3. M,Ma °र्ययौ श्र० 4. M,Ma ध्वस्त० 5. G,J,Va स०; M,Ma सु° 6. M,Ma °न्तर्जले 7. G,J,Va °म्णोक्षितः; M,Ma °सिच्मेक्षितः 8- -8. M,Ma प्रहसिताभिरभिष्टुताङ्गः; V. प्रहसिता परितस्ततोऽङ्गः 9. V मदान्धो द्वि° 10. M,Ma सौभगः

**श्रीध०** ततोऽतिहृष्टानां गोपीनां चरितमाह — **गोप्य** इति। स्फुरतां स्वर्णकुण्डलानां कुन्तलानाञ्च त्विषा, गण्डेषु या श्रीः तया सुधितेन अमृतायितेन हाससहितेन निरीक्षणेन च ऋषभस्य पत्युः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यः तत्कर्माणि जगुः। तस्य कररुहैः नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥

अथ जलकेलिमाह — **ताभिरिति**। तासा मङ्गसङ्गेन घृष्टा सम्मर्दिता या स्रक् तस्याः अत एव तासां कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिभिः गन्धर्वपालिभिः गन्धर्वपाः गन्धर्वपतय इव गायन्तः ये अलयः तै रनुद्रुतः अनुगतः स कृष्णः वाः उदकं आविशत् भिन्नसेतुः विदारितवप्रः, स्वयञ्चाऽतिक्रान्तलोकवेदमर्यादः ॥ २३ ॥

स इति। स्वरतिः आत्मारामोऽपि अत्र गोपीमण्डले अम्भसि वा ॥ २४ ॥

स्थलजलक्रीडे दर्शिते, वनक्रीडां दर्शयति — **ततश्चेति**। यमुनाया उपवने जलस्थलप्रसूनानां गन्धो यस्मिन् तेनाऽनिलेन [2]जुष्टानि दिशां तटानि अन्ता यस्मिन्। यद्वा दिशश्च तटं स्थलञ्च यस्मिन्, [1]तस्मिन् वने भृङ्गाणां प्रमदानाञ्च गणैरावृतः चचार ॥ २५ ॥

रासक्रीडां[3] निगमयति **एवमिति**। स कृष्णः सत्यसङ्कल्पः अनुरागिस्त्रीकदम्बस्थः एवं[4] सर्वा निशाः सेवितवान्। **शरत्काव्यकथारसाश्रयाः** शरदिभवाः काव्येषु कथ्यमानाः ये रसाः तेषाम् आश्रयभूता निशाः। यद्वा, निशा इति द्वितीया अत्यन्तसंयोगे, शृङ्गाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेव इति। एवमप्यात्मन्येवाऽवरुद्धः सौरतः सुरतरसः[5] चरमधातुः[6], न तु स्खलितो यस्येति कामजयोक्तिः ॥ २६ ॥

---

1. J. Va उप॰ 2. J,Va omit चचार 3. P,V ॰डा निगमनं 4. Va एव 5. J,Va omit सुरतरसः 6. P.V रसो

**वीर०** ततोऽतिहृष्टानां गोपीनां चरितमाह — **गोप्य** इति। तस्य भगवतः कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ता गोप्यः स्फुरतां कर्णकुण्डलानां, कुन्तलानाञ्च त्विषां गण्डेषु या श्रीस्तया सुधितेन अमृतायितेन हासयुक्तनिरीक्षणेन च ऋषभस्य भर्तुः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यः पुरटकुण्डलादित्विडादिभिः तस्य हर्षं जनयन्त्य इत्यर्थः। तस्य कर्माणि चेष्टितानि जगुः ॥ २२ ॥

अथ तस्य ताभिस्सह जलक्रीडामाह — **ताभिरिति** द्वाभ्याम्। तासामङ्गसङ्गेन घृष्टा सम्मर्दिता या स्रक् तस्याः अत एव तासां कुचकुङ्कुमेन रञ्जिताया स्सम्बन्धिभिः गन्धर्वपालिभिः, गन्धर्वपाः गन्धर्वपतय इव गायन्तो येऽलयो भृङ्गाः तै रनुद्रुतः अनुगतः[1] स कृष्णः ताभिस्सह श्रमं रतिविहारजमपोहितुं अपाकर्तुं वाः जलं आविशत्, यथेभराट् गजपतिः श्रान्तः गजीभिस्सह जलं प्रविशति तद्वत्। भिन्नसेतुर्विदारिततटः, दार्ष्टान्तिके त्वतीतलोकवेदमर्यादः ॥२३॥

स इति। स भगवान्, स्वयमात्मना स्वरतिरात्मारामोऽपि गजेन्द्रस्येव लीला यस्य तथाभूतः, तदेवाह - अम्भसि अलं नितरां प्रहसतीभिः युवतीभिः प्रेम्णा उक्षितस्सिक्तः स्वयमपि ता स्सिच्यमानः। भ्यादिव द्विवादेराकृतिगणत्वात्कर्तरि श्यन्। सेचयन्नित्यर्थः। यद्वा ताभि स्ताव त्किञ्चिदुक्षितः प्रत्युक्षणेन पुनः परित स्सिच्यमानः अङ्ग! हे राजन्, कुसुमानि वर्षन्तीति तथा, तै र्वैमानिकैः विमानारूढैः देवै रीड्यमानः स्तूयमानः अत्र रासे[2] रेमे ॥ २४ ॥

एवं स्थलजलक्रीडे वर्णिते। अथ वनक्रीडां वर्णयति — **ततश्चेति**। जलस्थलप्रसूनानां गन्धो यस्मिन् तेनानिलेन जुष्टानि दिशां तटानि अन्ताः यस्मिन्। यद्वा दिशश्च तटं स्थलश्च यस्मिन्, कृष्णाया यमुनाया उपवने प्रान्तवने भृङ्गाणां प्रमदानाञ्च गणैरावृत श्चचार, यथा मदच्युत् मदधाराः स्रवन् द्विरदः मत्तगजः करेणुभिः इभीभिः, तद्वत् ॥ २५ ॥

रासक्रीडां निगमयति — **एवमिति**। एव मित्थं स भगवान् सत्यसङ्कल्पः अनुरतोऽनुरागी स्त्रीणां गणो यस्य तथाभूतोऽपि आत्मन्येव अवरुद्धः सौरतश्चरमधातुः, नतु स्खलितो यस्य तथा भूत इति कामजयस्सूच्यते। चन्द्रांशुभिः विराजिता स्सर्वाः शरदि काव्येषु कथ्यमाना ये कथारसाः तेषामाश्रयभूता निशा स्सिषेवे ॥ २६ ॥

---

1. K omits अनुगतः 2. T,W omit अत्र रासे

**विज०** ऋषभस्य प्रवृद्धानुन्मथितवीर्यस्य हरेः स्फुरतोश्चलतोः मकरकुण्डलयोः कुन्तलानां त्विषा दीप्त्या दीप्तगण्डश्रिया युक्तसुरतयोग्यहासोपेताभीष्टाङ्गनिरीक्षणेन आनन्दमात्मनो दधत्यः तस्य हरेः कररुहाणां नखानां स्पर्शेन स्मरोल्लासजनकलक्षणेन नखक्षतेन अभिव्यक्तः प्रमोदः प्रकृष्ट आनन्दो यासां ता स्तथा ॥ २२ ॥

वनक्रीडां निरूप्य जलक्रीडां वक्ति — **ताभिरिति**। कृष्णस्याऽङ्गसङ्गेन ध्वस्ता निरस्ताः स्रजो यासां ताः सुकुचानां कुङ्कुमरजोभिः रञ्जिता रागिताः याः ताभिः गोपीभिः। आगच्छन्ति आवृत्य गच्छन्तीत्यङ्गाः, तरङ्गाः तत्सङ्गेन ध्वस्ता निरस्ताः स्रजो यस्याः सा तथा तस्याः, सुकुचकुङ्कुमरेणुभिः रञ्जितायाः यमुनायाः वाः वारि आविशदित्यन्वयः। गन्धर्वाणां पालिभिः श्रेणिभिः श्रान्तः भिन्नसेतुरिति द्वयम् इभराड्विशेषणम्। यद्वा शॄ हिंसायामिति धातोः श्रान्तः नित्यनिरस्तमृत्युः भिन्नसेतुः विशेषितलोकमर्यादः, "भेदो विशेषे दलने विश्लेषे दारणे भेदः" (वैज.को. 6-1-42) इति। अत्र विशेषोनाम व्यावर्तको धर्मोऽपि लक्ष्यते। पृथक् पृथक् स्थापिततत्सेतुरिति वा। एः कामस्य भां दीप्तिं राजयतीति इभराट् कामस्य भां राजति क्षिपतीति वा इभराट्, कृष्णः गोपीविषये 'गज गजि शब्दे' इति धातोः गजीभिः शब्दयन्तीभिः। यद्वा भिन्नसेतुरित्यनेन गजस्य मदातिरेकसूचनेन कृष्णस्य तात्कालिकहर्षातिरेकं व्यञ्जयति। भिन्नवेदविहितधर्ममर्याद इत्यर्थः। "कृष्णे स्वधामोपगते धर्मः कं शरणं गतः" (भाग. 1-3-43) इत्यादि स्वोक्तिविरुद्धं स्यादिति नाऽसावङ्गीकर्तुं योग्यः इति॥ २३॥

स्वस्मिन् स्वेन वा रतिः न पराच्च न परेण वा यस्य तथेत्यनेन तत्तत्काले रमणकथनं लोकमोहनाय विशेषस्मरणाय वेति गमयितव्यम् ॥ २४ ॥

कृष्णायाः यमुनायाः उपवने जलप्रसूनानि कुमुदादीनि, स्थलपुष्पाणि सैगन्धिक कुन्दादीनि तेषां गन्धमिश्रवायुना जुष्टाः परिमलिताः दिक्तटाः दिगन्ताः यस्य स तथा। तस्मिन् मदच्युत् मदजलस्रावी, अन्यत्र दुष्टगर्वनाशनः। 'रद लेखने' इति धातोः पुण्यपापयोः रदो लेखनं येन स द्विरदः। चित्रगुप्तेन पुण्यपापलेखनकर्त्रेत्यर्थः। करे हस्तविषये अणुभिः लतावत् दण्डायतबाहुभिः इत्यर्थः। भृङ्गवद्गायमानप्रमदागणपरिवृतः। यद्वा भृङ्गप्रमदा भृङ्गस्त्रियः तासां गणेन संवृतः ॥ २५ ॥

उपसंहरति **एवमिति**। अनुरताबलागणः अनुरतस्त्रीगणः तदिच्छानुकूलरमितस्त्रीजनो वा, नितरां शं सुखं यासु ताः निशाः रात्रीः एकोऽपि क्षणो रतिक्रीडां विना न हापित इति शरत्काललक्षणवर्णनेन[1] ये काव्यकथायां संयाताः रसाः शृङ्गारहास्यादिरूपाः, एतेषामाश्रयः। अश्रया इति पाठे निशाविशेषणम्। रसानाश्रयन्तीति रसाश्रयाः आत्मन्यवरुद्धं निरुद्धं सौभगं सौरतं निर्दुष्टं रेतोलक्षणं वीर्यं येन स तथा, सुरतक्रिया वीर्यं निरुध्य क्रियत इत्यर्थः। यद्वा वशीकृतयोगैश्वर्यः यद्वा आत्मनि देहे विकाशीकृतसौन्दर्यः ॥ २६ ॥

---

1. Ma °नं येन का°

राजोवाच

संस्थापनाय धर्मस्य प्रशमायेतरस्य च।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥

स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता।
प्रतीप माचरद्ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥

[1]आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम्।
किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥ २९ ॥

श्रीशुक उवाच

धर्मव्यतिक्रमो दृष्टः ईश्वराणाञ्च साहसम्[2]।
तेजीयसां न दोषाय वह्नेः स्सर्वभुजो यथा ॥ ३० ॥

नैतत्समाचरे ज्जातु मनसाऽपि ह्यनीश्वरः।
[3-]नश्यत्याश्वा[-3] चरन्मौढ्याद्यथा रुद्रो[4]ऽब्धिजं विषम् ॥ ३१ ॥

---

1. M,Ma आत्मारामो 2. M,Ma °सः 3- -3 G,J,V,Va विनश्यत्या° 4. M,Ma °ऽपिबत् वि°

**श्रीध० स** इति। [1]प्रतीपं प्रतिकूलम् अधर्ममित्यर्थः। आचरत्कृतवान्। न चेदमधर्ममात्रम् [2]कलञ्जभक्षणादिवत्। किन्तु महासाहसमित्याह — परदाराभिमर्शनमिति ॥ २७-२८ ॥

आप्तकामस्य नाऽय मधर्म इति चेत् यद्येवं कामाभावात् निन्दितं केनाऽभिप्रायेण कृतवानिति पृच्छति — **आप्तकाम** इति ॥ २९ ॥

परमेश्वरे [3]कैमुत्यन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह — **धर्मव्यतिक्रम** इति। साहसञ्च दृष्टं प्रजापतीन्द्रसोमविश्वामित्रादीनां तच्च तेषां तेजस्विनां दोषाय न भवतीति ॥ ३० ॥

तर्हि "यद्यदाचरति श्रेष्ठ स्तत्तदेवेतरो जनः (भ.गी. 3-21) इति न्यायेन अन्योऽप्ये[4]वं कुर्यादित्याशङ्क्याऽऽह — **नैतदिति**। अनीश्वरः देहादिपरतन्त्रः यथा रुद्रव्यतिरिक्तो विषमाचरन् भक्षयन् ॥ ३१ ॥

---

1. Va omit प्रतीपं 2. Va adds (विष) 3. J,Va °तिक° 4. J,Va omit एवं

**वीर०** उपदेशानुष्ठानविरोधिनिरसनादिभिः केवलं धर्मपरित्राणार्थं अवतीर्णस्य भगवतः कथं परदारपरिग्रहरूपाधर्माचरणमिति पृच्छति राजा **संस्थापनायेति**। इतरस्याऽधर्मस्य प्रशमनार्थञ्चांशेन बलरामेण सह स्वसङ्कल्पात्मकज्ञानेनैव, न तु कर्मणेति वा। अवतीर्णः ॥ २७ ॥

स एवम्भूतः धर्ममर्यादानां[1] स्वयं कर्ता अनुष्ठाता वक्ता उपदेष्टाच विरोधिनिरसनेन अभितो रक्षिताच सन् हे ब्रह्मन्! परदाराभिमर्शनात्मकं प्रतीपं धर्मप्रतिकूलम् अधर्ममिति यावत्, कथमाचरत् कृतवान्[2] ॥२८॥

किञ्च स्वय मवाप्तसमस्तकामोऽपि यदुपतिः जुगुप्सितं निन्दितं कर्म कृतवान्। अनवाप्तकामस्य इन्द्रियपरवशस्य जुगुप्सिताचरणं दृष्टम्, नत्ववाप्तकामस्य स्वतन्त्रस्येति भावः। अतः केनाऽभिप्रायेण कृतवानिति पृच्छति किमभिप्राय इति, एतत् एतस्मिन्विषये नोऽस्माकं संशयः। तं हे सुव्रत, छिन्धि निराकुरु ॥२९॥

कैमुत्यनयेन उत्तरं विवक्षुः कर्मवश्यत्वप्रयुक्तशास्त्रवश्यतावतामेव शास्त्रविरुद्धं कर्म प्रत्यवायजनकं, न तु अकर्मवश्यानां अशास्त्रवश्यानामिति तावदुत्तरमाह — **धर्मव्यतिक्रम** इति। यद्यपीश्वराणां अशास्त्रवश्यानां धर्मव्यतिक्रमः शास्त्रोक्तधर्मातिलङ्घित्वं साहसं, सहसा शास्त्रार्थाविमर्शेन कृतं साहसं कामचार इति यावत्। तदुभयं दृष्टं, तथाऽपि तत् तेजीयसां न दोषाय न प्रत्यवायावहं, स्वर्गिणां मुक्तानाञ्च व्यापारेषु व्यभिचारादिति भावः। नहि स्वर्गिमुक्तव्यापारश्शास्त्रानुवर्ती, न वा प्रत्यवायावहः, तेजीयस्त्वमत्र शास्त्रवश्यतानापादकसामर्थ्यवत्त्वरूपं विवक्षितम्, पदार्थानां विलक्षणशक्तिकत्वादिति तात्पर्यम्। तत्र दृष्टान्तमाह वह्नेरिति। यथा सर्वभुजः सर्वदाहकस्य वह्नेः दाहमात्रेण दाह्यपटादिगतमालिन्यसम्बन्धो न विद्यते, तद्वत्। नहि अबादिषु स्वसम्बन्धिपृथिव्यादिगतलौहित्यादिकं दृष्टमिति वह्नावपि तद्वत्प्रसङ्ग इति भावः ॥ ३० ॥

तर्हि "यद्यदाचरति श्रेष्ठः" (भ.गी. 3-21) इति न्यायेन अन्योऽप्येवं कुर्यादित्याशङ्क्याऽऽह — **नैतदिति**। एतदशास्त्रवश्यत्वेनाचरितम् अनीश्वरश्शास्त्रवश्यः कदाचिदपि मनसाऽपि नाऽऽचरेत् चिकीर्षामपि न कुर्यात् इत्यर्थः। विपर्यये बाधकमप्याह[3] नश्यतीति। मौढ्यात् स्वस्य शास्त्रवश्यत्वाऽज्ञानात् तत्प्रतिषिद्धमाचरन्नाशु नश्यति, नाशोऽत्र निरयप्राप्तिः। तत्र दृष्टान्त माह — यथेति। रुद्रो यथा अब्धिजं विषं आचरदभक्षयत्, तथा तदन्यो भक्षयन् आशु नश्यति, रुद्रस्य विषपानप्रयुक्तप्राणविपत्त्यनापादकशक्तिमत्त्वं स्वस्य तदभावञ्च अजानन् केवलं रुद्रो भक्षितवान्, तथाऽहमपि भक्षयिष्यामीति यो मौढ्याद्भक्षयति स नश्यत्येवेत्यर्थः ॥ ३१ ॥

---

1 T,W omit धर्म 2. K adds इत्यर्थः 3. T,W °कमाह

**विज०** ज्ञातशास्त्रतात्पर्यार्थोऽपि परीक्षित् स्वनाम्नोऽर्थं सफलं कुर्वन् तथा श्रोतृजनविद्वज्जनचित्तसन्देहप्रहाणाय पृच्छति - **संस्थापनायेति**। इतरस्याधर्मस्य, हिशब्देन "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!" (भ.गी. 4-7) इत्यादि वाक्यं प्रमाणयति ॥ २७ ॥

प्रतीपं प्रतिकूलं किमकारीत्यत्राऽऽह अभिमर्शनं अविचार्य ग्रहणम् ॥ २८ ॥

विषयभोगलौल्यात् कृतं किम्? नेत्याह **आत्माराम** इति। कोऽभिप्रायोऽस्य मच्चरितं चरेत्, मदुक्तमेव चरेत्, न चरितं चरेदिति चेति, नः परिसरवर्तिजनस्य ॥ २९ ॥

नारायणानुग्रहसुधापात्राणां स्मृतिविहितधर्मव्यतिक्रमो न दोषाय दृष्टः; किमुत, दूरीकृतविधिनिषेधबन्धस्य हरेरित्याशयेन प्रश्नं परिहरति **धर्मेति**। चशब्दः कैमुत्यद्योतकः यद्यर्थो वा, यद्यपीश्वराणां योगैश्वर्यपारङ्गतानां साहसः हेतुशून्यो धर्मव्यतिक्रमः शास्त्रविहिताचारविरुद्धाचारः - अजीगर्तस्य पुत्रविक्रयः, विश्वामित्रस्य श्वभक्षणप्रवृत्तिः, सप्तर्षीणां शवभक्षणोद्योगः इत्यादिलक्षणो दृष्टः, शास्त्रे तथापि स तेषां न दोषाय धर्मप्रतिबन्धकाय न भवति। तत्कृत इति हेतुगर्भविशेषणमाह तेजीयसामिति। "तेजो बले प्रभावे(ऽग्ने)च ज्योतिष्यर्चिषि रेतसि, नवनीतेऽनले दुर्गे" (वैज.को. 6-3-14) इति यादवः। तत्र दृष्टान्त माह — **वह्नेरिति**। अमेध्यादिदहनलक्षणोपेतस्याऽग्नेः ॥ ३० ॥

नन्वेवञ्चेत् श्रेष्ठाचरितत्वेन अश्रेष्ठस्य परावराचरणप्रसङ्गः "यद्यदाचरति श्रेष्ठः" (भ.गी. 3-21) इत्यादिस्मृतेश्चेति तत्राऽऽह - नेति। स्मृतिः सत्कर्मणः, "लोकसङ्ग्रहमेवाऽपि सम्पश्यन्कर्तुमर्हसि" (भ.गी. 3-20) इति विधानाच्चेति; इममर्थं हिशब्देन विशिनष्टि। "हि स्याद्विशेषणे हेतौ" (वैज.को. 8-7-9) इति यादवः। मनसाऽपि नाऽऽचरे त्किमुत कायेन। विपक्षे बाधक माह नश्यतीति। 'णश अदर्शने' इति धातोः समूलमुच्छिन्नोभवतीत्यर्थः। "अदर्शनं लोपः" (अष्टा. 1-1-60) इति सूत्रात् 'लुप्लृ छेदने' इति धातोः। मौढ्यात् क्रोधोद्रेकात् मौर्ख्या द्वा। 'मोहकान्मौर्ख्यमूढत' इति मोहोमोहनितन्द्रिते इति कालान्तरे सञ्जातेन निवर्तनेन नाशो न स्यादित्यतः आश्विति। किञ्चित्कालमवसरं न ददातीत्यर्थः। व्यतिरेकं दर्शयति यथेति। यथा रुद्रो विषमपिबत्, तथाऽहमपि विषं पास्यामीति तत्पानेन नश्यति; तस्मान्नकर्तव्यमित्यर्थः। विषपानेन आशु नाशः स्यादिति दर्शनाय तदुक्तम्, न तु समूलतरुच्छेदविषये। विषपानान्मृतिं दृष्ट्वा अन्यस्य निवृत्तिसम्भवात् न तथा प्रकृत इति ॥ ३१ ॥

**ईश्वराणां वच स्सत्यं तथैवाऽऽचरितं क्वचित्।**
**तेषां यत्स्ववचोयुक्तं बुद्धिमां[1] स्तत्सदाचरेत् ॥ ३२ ॥**

**कुशलाचरितेनैषामिह स्वार्थो[2] न विद्यते।**
**विपर्ययेण चाऽनर्थो[3] निरहङ्कारिणां प्रभो ॥ ३३ ॥**

**किमुताऽखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम्।**
**ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥**

**यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः।**
**स्वैरं चरन्ति मुनयोऽपि ननह्यमाना स्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ॥ ३५ ॥**

गोपीनां तत्पतीनाश्च सर्वेषाञ्च[4] विदेहिनाम्।
योऽन्तश्चरति सोऽध्यक्षः [5-]एष क्रीडन्[-5]देहभाक् ॥ ३६ ॥

---

1. M,Ma °मच्चैतदा°; V °मांस्तत्तदा; K,T,W °मानेतदा° 2. G,J,Va स्वा° 3. G,J,Va वा° 4. G,J,Va °मेव दे° M,Ma °मपि दे° 5- -5. G,J,Va क्रीडनेनेह दे

**श्रीध०** कथं [1]तदा सदाचारस्य प्रामाण्यम्? अत आह — ईश्वराणामिति। तेषां वचस्सत्यम्। अत स्तदुक्त-माचरे देव। आचरितन्तु क्वचित् सत्यम्। अतः स्ववचोयुक्तं तेषां वचसा यद्यदुक्तम् अविरुद्धं तत्तदेवाऽऽचरेत् ॥ ३२ ॥

ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति? तत्राऽऽह — **कुशलेति**। प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नाऽन्यदित्यर्थः ॥ ३३ ॥

प्रस्तुतमाह — **किमुतेति**। कुशलाकुशलान्वयो न विद्यत इति किं पुन र्वक्तव्यमित्यर्थः ॥ ३४ ॥

एतदेव स्फुटीकरोति — **यदिति**। यस्य पादपङ्कजपरागस्य निषेवणेन तृप्ताः। यद्वा यस्य पादपङ्कजपरागे [2]सेवा येषां ते तथा। ते च तृप्ताश्चेति, भक्ता इत्यर्थः, तथा ज्ञानिनश्च ननह्यमानाः बन्धमप्राप्नुवन्तः ॥ ३५ ॥

गोपीनां परदारत्व मङ्गीकृत्य परिहृतम्। इदानीं भगवतः सर्वान्तर्यामिणः परदारसेवा नाम न [3]किञ्चिदित्याह — गोपीनामिति। योऽन्तश्चरति अध्यक्षो बुद्ध्यादिसाक्षी, स [4-]एष क्रीडनाय[-4] देहभाक् न तु अस्मदादितुल्यः, येन दोषः स्यादिति॥ ३६ ॥

---

1. J,Va तर्हि 2. J,Va निषेवा 3. J,Va काचि° 4- -4. J,Va क्रीडनेन

**वीर०** कथन्तर्हि श्रेष्ठाचारस्य प्रामाण्य मित्याशङ्क्य न कात्स्न्र्येन श्रेष्ठाचारः प्रमाणम्, किन्तु शास्त्राविरोध्येव। श्रेष्ठवचस्तु कात्स्न्र्येन प्रमाण मित्याह — **ईश्वराणामिति**। ईश्वराणां कर्मवश्यत्वाभावप्रयुक्तशास्त्रवश्यत्वाभाववताम् — "एवं कुरु, एवं मा कुरु" इत्येवंरूपं वचः कात्स्न्र्येन सत्यम्, अबाधितं प्रमाणमिति यावत्। आचरितन्तु क्वचिदेव किञ्चिदेव प्रमाणमित्यर्थः। किं तदाचरितं यत् प्रमाणम्, तत्राऽऽह, तेषामीश्वराणां यदाचरितं स्ववचोयुक्तं स्ववचसा समायुक्तं स्ववचसोऽविरुद्धं तत्सत्यमित्यर्थः। तत्तस्माद्बुद्धिमानपि ईश्वरवचसोऽनुकूलमेव ईश्वराचरितम् आचरेत्। 'बुद्धिमा न्नतदाचरेत्' इति पाठान्तरम्। तदा अयुक्तमिति च्छेदः। स्ववचसः ईश्वरवचसः अयुक्तं विरुद्धं ईश्वराणाम् आचरितं नाऽऽचरेदित्यर्थः॥ ३२॥

तेजीयसां न दोषायेति, एतदेव स्पष्टयति कुशलाचरितेनेति। येषां तेजीयसामीश्वराणाम् इह लोके कुशलाचरितेन साधनेन अर्थः साध्यं प्रयोजनं न विद्यते, नाऽपि विपर्ययेण, अकुशलाचरितेन अनर्थोऽपि न विद्यते। तत्र हेतुं वदन्

विशिनष्टि निरहङ्कारिणामिति। अनात्मनि देहे आत्माभिमानरहितानामित्यर्थः। हे प्रभो, देहात्माभिमानो हि पूर्वपूर्वकर्ममूलकः पुनरुत्तरोत्तरकर्ममूलश्च; तदभावात् कर्मवश्यत्वाभावः, तदभावाच्च शास्त्रवश्यत्वाभावः, तदभावाच्च धर्माधर्ममूलकौ अर्थानर्थौ न स्त इति भावः ॥ ३३ ॥

यतोऽकर्मवश्यानां जीवानामेव कुशलाकुशलाचारनिमित्तकौ अर्थानर्थौ न स्तः। किं पुनस्तेषामपि नियन्तुरपहतपाप्मनो भगवत इत्याह - **किमुतेति**। तिर्यगादिरूपेणावस्थितानां अखिलानां सत्त्वानां जीवानां[1] नियाम्यानां नियन्तुस्सर्वेश्वरस्य कुशलाकुशलान्वयो नास्तीति किमु वक्तव्यमित्यर्थः। कुशलाकुशलकर्मप्रयुक्तसुखदुःखादिसम्बन्धोऽत्र कुशलाकुशलान्वयशब्दविवक्षितः। सत्त्वशब्दो जीवपरः "सत्त्व मस्त्री तु जन्तुषु" (अम.को 3-368) इति कोशात्। जन्तुशब्दः जीवपर्यायः — "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" (अम.को. 1-139) इति नामपाठात्? "सत्त्वं प्रकृतिजै र्मुक्तम्" (भ.गी. 18-40) इति भगवदुक्तेश्च ॥ ३४ ॥

कैमुत्यनयेनोक्तमेव प्रपञ्चयति **यत्पादेति**। यत्पादपङ्कजपरागस्य निषेवणेन तृप्ताः निवृत्तशब्दादिविषयाभिलाषाः योगप्रभावेन यस्य पादपङ्कजानुध्यानात्मकयोगसामर्थ्येन विधुता अखिलाः कर्मात्मका बन्धा येषां ते मुनय स्सनकादयोऽपि ननह्यमानाः अनह्यमानाः अनाबध्यमानाः शास्त्रावश्या इति यावत्। स्वैरं यथेच्छं चरन्ति, किमुतेच्छया, न तु कर्मणेति भावः। आत्तं परिगृहीतं, वपुरप्राकृतं शुद्धसत्त्वमयं येन तस्यापहतपाप्मनो भगवतः कुत एव बन्धः? कुतश्चिदप्याचरितात् स्वैरात् बन्धो नास्त्येवेत्यर्थः ॥ ३५ ॥

यत्पृष्टमाप्तकामो यदुपतिरित्यादिना अवाप्तसमस्तकामस्य स्वतो निरतिशयानन्दस्य ग्राम्यचेष्टान्वयः कथमिति, तस्योत्तर माह - द्वाभ्याम्। गोपीनां तासां पतीनाञ्च तथाऽन्येषां देहिनां जीवानाञ्च। योऽन्तश्चरति अन्तरात्मतया व्याप्नुवन्नियमयति, यश्चाऽध्यक्षः तत्तत्कर्मानुगुणसुखदुःखादिफलदश्च स एष भगवान् कृष्णः क्रीडनदेहभाक्,[2] न तु अस्मदादिवत् सुखदुःखादिभोगाय कर्माधीनदेहभाक् इत्यर्थः। क्रीडानृदेहभाक् इति पाठान्तरम्, तदा नराकृतिभागित्यर्थः ॥ ३६ ॥

---

1. T,W omit जीवानां 2. K adds क्रीडनाय देहभाक्

**विज०** यद्येवं तर्हि आप्तत्वेन ईश्वरोक्तमपि ग्राह्यमित्यायातमिति तत्राऽऽह — **ईश्वराणामिति**। सत्यं परमार्थत्वेन अभीष्टज्ञापकम्। "परमार्थेऽर्थवत्सत्यम् (वैज.को. 6-5-95) इति यादवः। तद्वचनमेव सत्यञ्चेत् "कुर्याद्विद्वांस्तथा सक्त श्चिकीर्षुर्लोकसङ्ग्रहम्" (भ.गी. 3-25) इति विधानं व्यर्थमिति तत्राऽऽह तथैवेति। क्वचिदित्युपहासादिव्यावृत्तये। अनुवर्तिनां वैदिककर्ममार्गप्रदर्शनार्थं यदाचरणं तदपि सत्यं फलदर्शनात्। तर्हि वचनं सत्यं किं नेत्याह तेषामिति। अयुक्तं वेदोऽप्रमाणलक्षणमित्यादि लक्षणं, प्रतीतिकार्यविषयम्। यद्वा स्ववचसोऽयुक्तं विरोधि तेषां यदाचरितं बुद्धिमानेतन्नाचरेदिति श्रुतिश्च ॥ ३२ ॥

इतोऽपि शुष्कजलनारिकेलफलवन्निर्मुक्तशरीराभिमानानां दूरीकृतकुशलाकुशलानां फलवत्वाद्धर्मव्यतिक्रमो न दोषायेत्याशयेनाऽऽह **कुशलेति**। इह संसारमण्डले अर्थः प्रयोजनं प्रारब्धकर्मनाशेनापातकदेहत्वादभीष्टकत्वाच्च विपर्ययेण विपर्ययाचरणेन अनर्थो नरकपातादिलक्षणः। अत्र हेतुमाह निरहङ्कारिणामिति ॥ ३३ ॥

उपसंहरति **किमुतेति** अखिलसत्त्वानां समस्तप्राणिनाम् इत्यस्य विवरणं तिर्यङ्मर्त्येत्यादिना। ईशितव्यानां नियम्यानाम् ईशितु र्नियामकस्य च समुच्चये, ईशितव्याना मचेतनानाञ्च कुशलाकुशलान्वयः पुण्यपापफललेपः किमुत ॥ ३४ ॥

कथान्तरात्कैमुत्यन्यायं दर्शयति **यत्पादेति**। भक्तियोगप्रभावेन विधुतो विध्वस्तोऽखिलबन्धो येषां ते तथा ननह्यमाना अतएव पुत्रस्नेहेन बध्यमाना न भवन्ति, कर्मभि र्वा ॥ ३५ ॥

क्रीडनं क्रीडासाधनं देहं भजतीति क्रीडनदेहभाक् अध्यक्षः साक्षी, अयञ्च बन्धाभावे हेतुः ॥ ३६ ॥

**अनुग्रहाय भक्तानां[1] मानुषं देह मास्थितः[2]।**
**भजते तादृशीः[3-] क्रीडा याः[-3] श्रुत्वा तत्परो भवेत् ॥ ३७ ॥**

**नाऽसूयन्खलु[4] कृष्णाय मोहिता स्तस्य मायया।**
**मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान् व्रजौकसः ॥ ३८ ॥**

**ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः।**
**अनिच्छन्त्यो ययु र्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ३९ ॥**

**विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः।**
**भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण[5] धीरः॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
रासक्रीडावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

1. G,J,K,V,Va भूतानां 2. M,Ma,V °श्रि° 3- -3. M,Ma °शीं क्रीडां यां 4. M,Ma °न्नृप ! 5. M,Ma °शु विधुनोत्य°

**श्रीध०** नन्वेवञ्चे दासकामस्य निन्दिते कुतः प्रवृत्तिरित्यत आह — **अनुग्रहायेति**। शृङ्गाररसाकृष्टचेतसः[1] बहिर्मुखानपि स्वपरान् कर्तुमिति भावः ॥ ३७ ॥

नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवेति वदन्ति, तत्राऽऽह — **नाऽसूयन्निति**। एवम्भूतैश्वर्याभावे तथा कुर्वन्तः पापा ज्ञेया इति भावः ॥ ३८ ॥

**ब्रह्मरात्र** इति। ब्रह्मरात्रे ब्रह्ममुहूर्ते, उपावृत्ते प्राप्ते ॥ ३९ ॥

भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह - **विक्रीडितमिति**। अचिरेण धीरस्सन् हृद्रोगं कामं आशु अपहिनोति परित्यजतीति ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

1. J,Va add अति

**वीर०** अवाप्तसमस्तकामस्य किं क्रीडाजन्यसुखलेशेनेति शङ्कां निराह[1] - **अनुग्रहायेति**। भूतानामनुग्रहाय अस्मदादिभूतान्यनुग्रहीतुं मानुषं मनुष्यस्येव सन्निवेशविशिष्टं देहमास्थितः तादृशीः उक्तविधाः क्रीडाः भजते अनुकरोति[2], क्रीडात्ववान्तरप्रयोजनं भूतानुग्रहस्तु भगवदवतारस्य परमं[3] प्रयोजनमिति भावः। अवतारस्य क्रीडार्थत्वं, क्रीडायास्त्वनुग्रहार्थत्वञ्चोक्तम्। कथं क्रीडाया अनुग्रहार्थत्व मित्यत आह — याः श्रुत्वेति। याः क्रीडाः श्रुत्वा तत्परः भगवत्परो भवेत् जन इति कर्तृपदाध्याहारः। मत्क्रीडा शृण्वतो - लोकस्य निरतिशयपुरुषार्थभूते मयि इष्टानिष्टप्रापणपरिहारदक्षे नितरा मासक्ति र्यथा स्यादित्येव मनुग्रहाय क्रीडा भजते न तु स्वयमपरिपूर्णो भजते, इति भावः ॥ ३७ ॥

नन्वेवमपि उक्ताभिप्रायेण क्रीडा भजन्तं तदभिप्रायानभिज्ञा गोपीनां पतयः किं नाभ्यसूयन्नित्यत आह — **नाऽसूयन्निति**। व्रजौकसः गोपीनां[4] पतयः तस्य कृष्णस्य मायया मोहिताः स्वस्वदारान् स्वपार्श्वस्थानेव मन्यमानाः कृष्णाय नाऽसूयन् दोषबुद्ध्या न ददृशुः। कृष्णायेत्यत्र "क्रुध द्रुह.........." (अष्ट. 1-4-37) इत्यादिना चतुर्थी ॥ ३८ ॥

प्रकृतमाह **ब्रह्मरात्र** इति। ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते सति, वासुदेवेन अनुमोदिताः अनुमोदनपूर्वकमाज्ञापिता अपि गोप्यः, भगवानेव निरतिशयप्रियो यासां तथा भूताः। अतएव अनिच्छन्त्यः, गन्तुमिति शेषः। कथञ्चित्स्वगृहान्प्रति ययुः ॥ ३९ ॥

प्रकृतरासक्रीडाश्रवणादिफलमाह — **विक्रीडितमिति**। व्रजवधूभिस्साकमिदं विष्णोः कृष्णस्य विक्रीडितम्। भावे क्तः[5]। यः पुमान् श्रद्धान्वितोऽनुक्रमेण शृणुयात् अथवा वर्णयेच्छ्रावयेच्च, स भगवति परामुत्कृष्टां भक्तिं प्राप्य धीरः जीवद्दशायां जितेन्द्रियः कामं नितरां हृद्रोगं रोगवदनर्थकरं हृदयस्थमज्ञानं[6] आशु अचिरेण विधुनोति निरस्यति। श्रोता आशु धुनोति, तथा वर्णयिताऽपि अचिरेण धुनोतीति प्रत्येकाभिप्रायकोऽचिरेणाऽऽशुशब्दयोः प्रयोगः, अतो न पौनरुक्त्यम्। यद्वा, हृद्रोगनाशोपक्रमणयो र्मध्ये कालविलम्बाभावाभिप्रायक आशुशब्दः। श्रवणोन्मुखस्य रोगादेरिव चिरेण निश्शेषशान्तिशङ्काव्युदासायाऽचिरेणशब्दः, अचिरेण धीरः, आशु धुनोतीति वाऽन्वयः। हृद्रोगरूपं कामं मदनम्, आशु विधुनोति विजयते इत्यर्थो वा ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

1 K निराकरोति 2. T,W omit अनु° 3. T,W omit परमं 4. T,W omit गोपीनां 5. K °द° 6. T,W हृत्स्थम°

**विज०** स्वेच्छाविग्रहस्वीकारो निस्पृहस्य किंप्रयोजनमित्यत आह — **अनुग्रहायेति**। तादृशीं मानुषदेहक्रीडां चरितं श्रुत्वा तत्परः(सः) भगवानेव परो यस्य स तथा, तस्मिन् तात्पर्ययुक्तो वा। यद्वा, स पुरुषइव जन्ममृत्युशून्यो भवेत् ॥ ३७ ॥

स्वैरिणीवृत्तिमाश्रितानां गोपीनां ग्रहणं तद्भर्तृभिः कथञ्च कृतम्, कथञ्च कृष्णे दोषाविष्करणमकृतम्? अत्राऽऽह — **नेति**। गुणेषु दोषाविष्करणमसूया। "क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" (अष्टा. 1-4-37) इति चतुर्थी ॥ ३८ ॥

ब्रह्मरात्रे ब्राह्मे मुहूर्ते ॥ ३९ ॥

संसारनिवृत्तिहेतुत्वात् अस्मिन् कृष्णविक्रीडिते श्रद्धादिकं कार्यमिति विधायकफलमाह — **विक्रीडितमिति**। च - शब्दः श्रद्धातिशयजननार्थः पूर्वोक्तविक्रीडितानि यथा संसारनिवर्तकानि तथेदञ्चेति आशु भक्तिं प्रतिलभ्य अनुदिनं कृत्वा हृद्रोगं काममनिष्टं अपहिनोति प्रतित्यजति, दुष्टकामत्याग एव संसारनिवृत्तिरित्यर्थः ॥४०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

(विजयध्वजरीत्या एकत्रिंशोऽध्यायः)

---

# चतुस्त्रिंशोऽध्यायः

### (विजयध्वजरीत्या द्वात्रिंशोऽध्यायः)

### -: अहिरूपधारिणः सुदर्शनाख्यगन्धर्वस्य शापमोक्षणम् :-

**श्रीशुक उवाच**

एकदा देवयात्रायां गोपाला जातकौतुकाः।
अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ १ ॥

तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं प्रभुम्[1]।
आनर्चुरर्हणै र्भक्त्या देवीश्च नृपतेऽम्बिकाम् ॥ २ ॥

गावो हिरण्यं[2] वासांसि मधु मध्वन्नमादृताः।
ब्राह्मणेभ्यो ददुस्सर्वे देवो नः प्रीयतामिति[3] ॥ ३ ॥

ऊषुस्सरस्वतीतीरे जलं प्राश्य यतव्रताः[4]।
रजनीं तां महाभागाः[5] [6-]सनन्दा नन्दकादयः[-6] ॥ ४ ॥

कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः।
यदृच्छयाऽऽगतो नन्दं शयानमुरगोऽग्रसीत्[7] ॥ ५ ॥

---

1. G,J वि 2. M,Ma °ण्य° 3. P,V प्रि° 4 G,J धृत° 5. M,Ma °ग! 6. G,J,K नन्दसुनन्द° ; M,Ma नन्दसन्नन्द° 7 P,V °सत्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुस्त्रिंशेऽहिना ग्रस्तं नन्दं हरिरमूमुचत्। विद्याध्रं चाङ्गिरश्शापाच्छङ्खचूडं तथाऽवधीत्॥
रासापदेशतः[1] कामं किङ्करीकृत्य[2] कामतः। अनुगृह्णन् वशं निन्ये तथा विद्याधराधिपम्॥

तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसङ्गं दर्शयति — **एकदेति**॥ १,२॥

**गाव** इति। गावः गाः। मधु मधुरं मध्वन्नं मधुना सहितमन्नम् ॥ ३ ॥

**ऊषुरिति।** जलमात्रं प्राश्य उपोषिताः तां निशां तत्र ऊषुः न्यवसन् ॥ ४ ॥

**कश्चिदिति।** महानहिः अजगरः, उरगः उरसा गच्छतीति अलक्षितत्वमुक्तम्, अग्रसत् जग्रास ॥ ५ ॥

---

1 J °सोप° 2 Va वा°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ सुदर्शनाख्यविद्याधरस्य ब्राह्मणशापात् सर्पतां गतस्य शापविमोचनात्मकं सप्रस्तावं तथा शङ्खचूडाख्य यक्षवधतच्छिरोमण्युपहारात्मकं च भगवतः कामम् अनुवर्णयति चतुस्त्रिंशेन **एकदेत्यादिना।** कदाचित् देवयात्रायां साम्बं पशुपतिं प्रतिगमनतत्पूजाद्यात्मिकायां निमित्तभूतायां अनडुद्भिः वृषैः युक्तैः अनोभिः शकटैः अम्बिकावनं ययुः, देवयात्रायां विषयभूतायां, जातं कौतुकं येषां ते तथाभूता ययुः इति वा ॥ १ ॥

तत्र तद्वनसमीपस्थायां सरस्वत्याख्यायां नद्यां स्नात्वा, हे नृपते! अर्हणैः पूजासाधनैः गन्धादिभिः देवं पशुपतिं देवीम् अम्बिकां च भक्त्या पूजयामासुः ॥ २ ॥

ततो गावः गाः हिरण्यं वासांसि, मधु मधुरं मधुसहितं अन्नं च, ब्राह्मणेभ्यो ददुः। कथम्भूताः? देवः पशुपतिः नोऽस्माकं प्रीतो भवत्वित्यभिप्रायवन्तः ॥ ३ ॥

ततो जलमात्रं प्राश्य यतव्रताः यतं नियतं व्रतं ब्रह्मचर्यात्मकं येषां ते तथाभूताः, तत्रैव सरस्वत्याः तीरे नन्दप्रभृतयो गोपाः तां रात्रिं उषितवन्तः ॥ ४ ॥

तस्मिन् विपिने अम्बिकावने कश्चिन्महान् विपुलकायोऽहिः सर्पः अतीव बुभुक्षितो न्यवसदिति शेषः। स च उरगः यदृच्छयाऽऽगतः तत्र सञ्चरन् नन्दं प्राप्तः तमग्रसीत् ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मुकुन्दभक्त्या संसाराहिग्रासमोक्षस्य ज्ञानरत्नदानस्य निदर्शनाय नन्दस्य सर्पात् मोक्षं, शङ्खचूडं हत्वा बलभद्राय तच्छिरोरत्नदानं च निरूपयत्यस्मिन्नध्याये। तत्र प्रथमतः गोपानां यात्राप्रकारं कथयति — **एकदेति।** अम्बिकामाहात्म्यविषयां किंवदन्तीमाकर्ण्य जातकौतुकाः उत्पन्नकुतूहलबुद्धयः अम्बिकावनं दुर्गावासस्थानं वनं अनडुद्युतैः वृषभयुतैः अनोभिः शकटैः ॥ १ ॥

पशवो जीवाः तेषां पतिं प्रभुं समर्थं "समर्थेऽधिपतौ प्रभुः" (वैज.को. 6-4-10) इति च। तत्र वने सरस्वत्यां स्यन्दमानायाम् अर्हणैः पुष्पोपहारादिसाधनैः ॥ २ ॥

मध्वन्नं मधुना युक्तमन्नं, यद्वा मधुरान्नं, मधु क्षौद्रम् ॥ ३,४ ॥

यदृच्छया तस्मिन् वने आगतोऽभूत्। आगमने निमित्तमाह - अतिबुभुक्षित इति। शयानं निद्रां कुर्वन्तम् ॥५॥

**स चुक्रोशाऽहिना ग्रस्तः कृष्ण कृष्ण! महानयम्।**
**सर्पो मां ग्रसते तात! प्रपन्नं परिमोचय ॥ ६ ॥**

**तस्य चाऽऽक्रन्दितं श्रुत्वा गोपालास्सहसोत्थिताः।**
**ग्रस्तं च दृष्ट्वा सं[1]भ्रान्ताः सर्पं विव्य[2]धुरुल्मुकैः ॥ ७ ॥**

**अलातै[3]र्हन्यमानोऽपि नाऽमु[4-]ञ्चत्तमुरङ्ग[-4]मः।**
**तमस्पृशत् पदाऽभ्येत्य भगवान् सात्त्वतां पतिः ॥ ८ ॥**

**स वै भगवतश्श्रीमत्पादस्पर्शहताशुभः।**
**भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥**

**त पपृच्छद्धृषीकेशः प्रणतं समुपस्थितम्।**
**दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥**

---

1. G,J वि ० 2. K ०धु० 3. G,J ०र्दह्य० 4- -4. P,V ०त भुजङ्गमः।

**श्रीध० तस्येति।** विव्यधुः ताडयामासुः। उल्मुकैः ज्वलत्काष्ठैः ॥ ६,७ ॥

**अलातैरिति।** अलातैः उल्मुकैरेव ॥ ८ ॥

**स इति।** विद्याधरेष्वर्चितं पूजितम् ॥ ९ ॥

**तमिति।** गोपेष्वात्मन ऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छत्। दीप्यमानेन वपुषा समवस्थितम् ॥ १० ॥

**वीर०** स च ग्रस्यमानो नन्दः चुक्रोश। कृष्णमाह च किमिति? हे तात! पुत्र! महान् अयं सर्पो मां ग्रसते, प्रपन्नं शरणं गतं मां सर्पात् मोचयेति ॥ ६ ॥

अस्य नन्दस्य आक्रन्दितं रोदनं आह्वानं वा श्रुत्वा गोपास्सर्वे आशु उत्थिताः, सर्पेण ग्रस्तं नन्दं दृष्ट्वा च सम्भ्रान्ताः व्याकुलचित्ताः सर्पमुल्मुकैः साङ्गारकाष्ठैः विव्यधुः ताडयामासुः ॥ ७ ॥

सोऽहिः अलातैः उल्मुकैः ताड्यमानोऽपि तं नन्दं ना[1]मुञ्चत्, न तत्याज। ततः प्रपन्नानां पालको भगवानागत्य पदा तं सर्पं पस्पर्श ॥ ८ ॥

स च सर्पो भगवतः श्रीमतः पादस्य स्पर्शेन हतमशुभं सर्पतापादकं यस्य तथाभूतः सर्पशरीरं त्यक्त्वा [2]विद्याधरार्चितं[-2] विद्याधरैः सम्माननीयं रूपं विद्याधररूपं प्राप ॥ ९ ॥

ततः प्रणतं कृतप्रणामं पुरतः दीप्यमानेन वपुषा तिष्ठन्तम्। हेममालाधारं तं पुरुषं भगवान् पप्रच्छ ॥ १० ॥

---

1. T,W omit नामुष्मात् 2- -2. T,W omit

विज० प्रकर्षेणाऽऽपन्नं विपदं गतं, शरणागतं वा ॥ ६-१० ॥

[1-]श्रीकृष्ण उवाच[-1]

को भवान् परया लक्ष्म्या [2-]रोचते शुभदर्शन[-2]।
कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ ११ ॥

सर्प उवाच

अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः।
श्रिया[3] सुरूपसम्पत्त्या विमानेन[4] चरन् दिशः ॥ १२ ॥

ऋषीन् विरूपानङ्गिरसः प्राहसं[5] रूपदर्पितः।
तैरिमां प्रापितो योनिं प्रलब्धैः[6] स्वेन पाप्मना ॥ १३ ॥

शापो मेऽनुग्रहायैव[7] कृतस्तैः करुणात्मभिः।
यदहं लोकगुरुणा पदा[8] स्पृष्टो हताशुभः[9] ॥ १४ ॥

तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम्।
आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥ १५ ॥

---

1- -1. G,J,M,Ma,P,V omit 2- -2 G,J,M,Ma रोचतेऽद्भुतदर्शन; P,V शोभते शुभलक्षण! 3. G,J,M,Ma ०या स्व०; P,V ०याऽनु० 4. G,J,M,Ma नाऽचरं; P,V नाऽऽचरन् 5. K,T,W प्रहसन् 6. M,Ma लब्धः 7. J ०वं 8. M,Ma पाद० 9. K,T,W ग०

श्रीध० क इति। यः परया शोभया प्रकाशते स[1] भवान् क इति ॥ ११, १२ ॥

ऋषीनिति। प्राहसं अपहसितवानस्मि[2], प्रलब्धैरुपहसितैः मदीयेनैव पाप्मना[3] निमित्तेन ॥ १३ ॥

शाप इति। यत् यतः शापात् ॥ १४ ॥

**तमिति**। आपृच्छे स्वं लोकं गन्तुं अनुज्ञां याचे, हे अमीवहन्! दुःखनाशन ॥ १५ ॥

---

1. J omits स 2. J,Va उप° 3. J,Va पापेन

**वीर०** प्रश्नमेवाह — **को भवानिति**। अधुना यः परया लक्ष्म्या कान्त्या रोचते प्रकाशते स भवान् कः? अहं विद्याधर इति चेत्, तर्हि हे शुभदर्शन! कथं निन्दितामेतां गतिं सर्पतां प्रापितः। विप्रशापादिति चेत्, तत्राऽऽह — अवशः कथं शापनिमित्तापचारनिमित्तदेहपारवश्यमिति भावः। यद्यपि सर्वज्ञस्य प्रश्नानुपपत्तिः तथाप्यात्मनः प्रभावं प्रकाशयितुं अविदुष इव प्रश्नोपपत्तिः। अत एव सुदर्शनपदपर्यायेण शुभदर्शनपदेन सम्बोधनं कृतम् ॥ ११ ॥

इत्थमापृष्टः स्वपूर्ववृत्तं विज्ञापयन् आत्मनः कृतार्थतामाविष्करोति — **अहमिति**। अहं तावत् कश्चित् विद्याधरः सुदर्शन इति स्मृतः प्रसिद्धः। सोऽहं श्रिया कान्त्या सुरूपसम्पत्त्या सौन्दर्यसमृद्ध्या च उपलक्षितः कदाचित् विमानेन साधनेन सर्वा दिशः समन्तात् सञ्चरन् सौन्दर्येण गर्वितो विरूपान् अङ्गिरसः ऋषीन् दृष्ट्वा हसितवानस्मि, तदा मदीयेनैव पाप्मना पापेन हेतुना प्रलब्धैः उपहसितैः तैः अङ्गिरोभिः ऋषिभिः इमां योनिं सर्पजन्म प्रापितः ॥ १२,१३ ॥

प्रलब्धैरपि तैरङ्गिरोभिः करुणात्मभिः हेतुगर्भमिदम्। कारुण्यस्वभावत्वात् मदनुग्रहार्थमेव शापः कृतः। कुतः? यत् यस्मात् अहं त्रिलोकगुरुणा त्वया कर्त्रा पदा करणेन[1] स्पृष्टः; अन्यथा एतन्न सम्भाव्यत इति भावः। गतमशुभं पापं यस्य तथाभूतश्चाहं पादस्पर्शाद्धेतोः शापेन निर्मुक्तः ॥ १४ ॥

हे अमीवहन्! अमीवं पापं दुःखं वा तद्धन्तीति तथाभूतं[2-] तं त्रिलोकगुरुं[-2] भवात् संसारात् भीतानां प्रपन्नानां[3] भयमपहन्तीति तथाभूतं, त्वां आपृच्छे स्वर्लोकं गन्तुमनुज्ञां याचे ॥ १५ ॥

---

1. T,W omit करणेन 2- -2. K °त त्रि° 3. T omits प्रपन्नानां

**विज०** पाप्मना अपराधेन प्रलब्ध उपलब्धो विप्रलब्धो वा। विरूपान् सौन्दर्यरहितान् "सौन्दर्ये च स्वभावे च (रूपशब्दं प्रचक्षते)" (वैज.को. 6-3-28) इति। अङ्गिरसः पुत्रा आङ्गिरसः? ॥ ११-१४ ॥

आपृच्छे आज्ञां प्रार्थये। अमीवहन्! दोषनाशन! ॥ १५ ॥

**प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते।**
**अनुजानीहि मां कृष्ण[1] सर्वलोकेश्वरेश्वर॥**
**ब्रह्मदण्डाद्विमुक्तोऽहं सद्यस्तेऽच्युत[2] दर्शनात् ॥ १६ ॥**

**यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च।**
**सद्यः पुनाति किं भूयः तस्य स्पृष्टः पदा हि ते ॥ १७ ॥**

## [3-]श्रीशुक उवाच[-3]

इत्यनुज्ञाप्य दाशार्हं परिक्रम्याऽभिवा[4]द्य च।
सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च[5] मोचितः ॥ १८ ॥

निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः।
समाप्य तस्मिन् नियमं पुनर्व्रजं नृ[6]पा ययुस्तत्कथयन्त आदृताः ॥ १९ ॥

कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः।
विजहतुर्वने रात्र्यां [7-]मध्ये गो[-7]व्रजयोषिताम् ॥ २० ॥

---

1 G,J देव 2. M,Ma °ह्नु° 3- -3 G,J,K,P,T,V,W omit 4. G,J,P,V वन्द्य 5. K,T,W °स्तु 6. P,V गो° 7- -7. G,J,M,Ma मध्यगौ

**श्रीध०**[*] अहिदेहं निहत्यैवं प्रागुन्मत्तं सुदर्शनम्। तद्वदुन्मादिनं कृष्णः शङ्खचूडमताडयत्॥

तत्प्रसङ्गमाह — **कदाचिदिति** ॥ १६-२० ॥

---

★ श्रीधरीयोऽयं श्लोकः :

**वीर०** हे महायोगिन्! अचिन्त्यविविधविचित्रशक्ते! हे महापुरुष! हे सतां पते! त्वां प्रपन्नोऽस्मि। मामनुजानीहि आज्ञापय, हे अच्युत! तव दर्शनादेव हेतोः सद्यः ब्रह्मशापाद्विमुक्तोऽहमित्येतत् न चित्रमिति वाक्यशेषः ॥ १६ ॥

एतदेव कैमुत्यनयेन स्पष्टयति — **यन्नामेति**। यस्य तव नाममात्रमेव गृह्णन् उच्चरन् पुमान् आत्मानं श्रोतॄंश्च सर्वान् जनान् सद्यः पुनाति, किं पुनः साक्षात् तादृशप्रभाववन्नाम्नस्तव पदा संस्पृष्टः शापाद्विमुक्त इति, कियदेतदित्यर्थः॥ १७॥

इत्थमनुज्ञाप्य अनुज्ञां गृहीत्वा दाशार्हं कृष्णं प्रदक्षिणीकृत्य अभिवाद्य च सुदर्शनः स्वर्गं प्रति ययौ। नन्दोऽपि कृच्छ्रात् सर्पग्रासात् मोचितः ॥ १८ ॥

ततो व्रजौकसो गोपाः कृष्णस्य आत्मवैभवं, अनितरसाधारणं प्रभावं निशाम्य दृष्ट्वा विस्मितं चेतो येषां तथाभूताः। तस्मिन् अम्बिकावने नियमंव्रतं समाप्य आदरयुक्ताः कृष्णस्य आत्मवैभवमेव कथयन्तो, हे नृप! पुनः व्रजं प्रति आजग्मुः॥ १९॥

अथ शङ्खचूडवधतच्छिरोमण्यादानात्मकं कर्म प्रस्तौति — **कदाचिदित्यादिना** यावदध्यायपरिसमाप्ति। अद्भुतविक्रम इति रामकृष्णयोः उभयोरपि विशेषणम्। तावुभौ वने गवां व्रजस्त्रीणां च मध्ये विजह्रतुः ॥ २० ॥

**विज०** चात् तं स्तुत्वा दाशार्हं कृष्णम् ॥ १६-१८ ॥

निशाम्य दृष्ट्वा ॥ १९,२० ॥

**उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः।**
**स्वलङ्कृतानुलिप्ताङ्गौ स्रग्विणौ विरजो[1]ऽम्बरौ ॥ २१ ॥**

**निशामुखं मानयन्तौ उदितोडुपतारकम्।**
**मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥**

**जगतुस्सर्वभूतानां मनःश्रवणमङ्गलम्।**
**तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छितम्[2] ॥ २३ ॥**

**गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाऽविदन्नृप।**
**स्रंस[3]द्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥**

**एवं वि[4]क्रीडतोस्स्वैरं गायतोस्सम्प्रमत्तवत्।**
**शङ्खचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥**

---

1 M.Ma °जा° 2 K मूर्छनम्; M,Ma मूर्छनाम् 3. M,Ma श्लथ 4. P,V चि°

**श्रीध० उपगीयमानाविति।** विरजोऽम्बराविति विरजसी निर्मले अम्बरे ययोस्तौ ॥ २१ ॥

**निशेति।** किञ्च निशाप्रवेशं सत्कुर्वन्तौ। उदित उडुपः तारकाश्च यस्मिन् तत्। मल्लिकागन्धेन मत्ता अलयो यस्मिन् तत् ॥ २२ ॥

**जगतुरिति।** अनिबद्धत्वादन्यैः युगपत्कल्पयितुमशक्यमपि तौ स्वरमण्ड[1-]लमूर्च्छनं[-1] युगपत्कल्पयन्तौ। मनश्श्रवणयोर्मङ्गलं यथा भवति तथा जगतुः अगायतामिति ॥ २३ ॥

**गोप्य** इति। मूर्च्छिताः तद्गीतलीनचित्ताः स्रंसद्भ्रश्यत् दुकूलं यस्मात् तम्, आत्मानं देहं स्रस्ताः केशेभ्यः स्रजो यस्य तं च तं च, ततो नाऽविदन् ॥ २४, २५ ॥

---

1- -1. J,Va °लस्य मूर्च्छितं

**वीर०** कथम्भूतौ ? बद्धं निश्चलं सौहृदं येषां तैः स्त्रीजनैः ललितं यथा तथा उपगीयमानौ स्वलङ्कृतानि अनुलिप्तानि च अङ्गानि ययोः। स्रजौ अनयोः स्त इति तथाभूतौ, विरजसी निर्मले अम्बरे वाससी ययोस्तौ ॥ २१ ॥

**निशेति**। उदित उडुपश्चन्द्रः तारकाश्च यस्मिन् तत्, मल्लिकानां गन्धेन मत्तैः अलिभिः जुष्टं सेवितं सहचरितमित्यर्थः। कुमुदवायुना कुमुदगन्धयुक्तेन वायुना च जुष्टं निशामुखं मानयन्तौ प्रशंसन्तौ ॥ २२ ॥

**जगतुरिति**। तौ रामकेशवौ अनिबद्धत्वात् अन्यैः युगपत्कल्पयितुमशक्यमपि स्वरमण्डलस्य मूर्च्छनं युगपत्कल्पयन्तौ मनश्श्रवणयोर्मङ्गलं यथा तथा जगतुः गीतवन्तौ, स्वरमण्डलमूर्च्छनं षड्जादिस्वरसमुदायस्य मूर्च्छनमारोहावरोहणप्रकारः ॥ २३ ॥

**गोप्य** इति। तयोर्गीतमाकर्ण्य मूर्च्छिताः परवशाः ततः हे नृप! आत्मानं देहं न विदुः नाऽनुसमदधत। कथम्भूतम् ? स्रंसदभ्रश्यत् दुकूलं यस्मात्, स्रस्ताः केशेभ्यः स्रजो यस्य तं च तं च ॥ २४ ॥

एवं स्वैरं यथेष्टं सम्प्रमत्तवत् रामगोविन्दयोः विहरतोः गायतोश्च सतोः, कुबेरस्यानुचरः शङ्खचूडाख्यः आजगाम॥ २५॥

**विज०** विरजाम्बरौ धौतवस्त्रौ ॥ २१ ॥

मल्लिकागन्धस्य आस्वादनेन मत्ता अलिनो भ्रमराः यस्मिन् मल्लिकागन्धमत्तालि ॥ २२ ॥

जगतुः गानं कृतवन्तौ, कथङ्कारमिति तत्राह — ताविति। स्वरमण्डलमूर्च्छनां सप्तानां स्वराणां मण्डलानां समूहानां मूर्च्छनां एकविंशतिलक्षणां कल्पयन्तौ, युगपत् एकस्मिन् क्षणे, यद्वा मण्डलमावृत्तिलक्षणं, "सप्त स्वरास्त्रयो ग्रामा एकविंशतिमूर्च्छनाः" इति भरतः ॥ २३-२५ ॥

**तयोर्निरीक्षतो राजन्[1] तन्नाथं प्रमदाजनम्।**
**क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ २६ ॥**

**क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम्।**
**यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥**

**मा भैष्टेत्यभयारावौ सालहस्तौ[2] तरस्विनौ[3]।**
**आसेदतुस्तं[4-4] तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥**

**स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन्।**
**विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया[5] ॥ २९ ॥**

**त मन्वधाव द्गोविन्दो यत्र यत्र स धावति।**
**जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥ ३० ॥**

**अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः।**
**जहार मुष्टिनैवाऽङ्ग! सहचूडामणिं विभुः ॥ ३१ ॥**

**शङ्खचूडं निहत्यैवं मणिमादाय भास्व[6]रम्।**
**अग्रजा[7-]य ददौ प्रीत्या[-7] पश्यन्तीनां च योषिताम् ॥ ३२ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
शङ्खचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

1. M,Ma °रेव 2. G,J शा° ; M,Ma ता° 3. M,Ma मन° 4- -4. P,V निषेधतु° 5. M,Ma °वने° 6. M,Ma °सु° 7- -7 G,P,V °याऽददात्प्रीत्या ; J,M,Ma °याददत्प्रीत्या

**श्रीध० तयोरिति।** निरीक्षतोः निरीक्षमाणयोः तौ नाथौ यस्य तं, [1-]प्रमदाजनं[-1] कालयामास हठात् प्रेरयामास ॥ २६ ॥

**क्रोशन्तमिति।** दस्युना व्याघ्रेण ॥ २७ ॥

**मा भैष्टेति।** मा भैष्ट भयं मा[2] प्राप्नुवतेत्य[3]भयवाचौ ॥ २८-३० ॥

**अविदूर** इति। शिरसा सह चूडामणिं जहारेत्यर्थः ॥ ३१, ३२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

1- -1. P,V,Va omit 2. J,Va न 3. J,Va प्राप्नुते°

**वीर०** स च शङ्कारहितः तयोः रामकृष्णयोः निरीक्षमाणयोः सतोः तौ [1] रामकृष्णौ नाथौ यस्य तं, स्त्रीजनं उदीच्यां दिशि कालयामास, हठात्प्रेरयामास। ततः ततो निस्सारयामासेत्यर्थः ॥ २६ ॥

कथम्भूतम्? क्रोशन्तं, हे कृष्ण! हे राम! इति सरोदनमाह्वयन्तं तदैवं दस्युना व्याघ्रेण ग्रस्ता गाव इव क्रोशन्तं तेनोदीचीं दिशं प्रति कृष्यमाणं स्वपरिग्रहं स्वपरिगृहीतं स्त्रीजनम् अवलोक्य भ्रातरौ रामकृष्णौ अन्वधावताम् ॥ २७ ॥

सालवृक्षाः हस्तयोः ययोस्तौ भयं मा कार्ष्टेत्येवंविधो रवः[2] (एवंविधः आरवः) शब्दः ययोः तथाभूतौ महाबलिनौ रामकृष्णौ त्वरितं यथा तथा गुह्यकाधमं शङ्खचूडम् आसेदतुः ॥ २८ ॥

गुह्यकाधमः कालमृत्यू इव प्राप्तौ तौ रामकृष्णावालोक्य उद्विजन् बिभ्यत्[3] स्त्रीजनं विहाय जीवितुमिच्छया [4-] प्राद्रवत् [-4] मूढस्तच्चरणागत्यात्मकजीवनोपायानभिज्ञः केवलं प्राद्रवत् ॥ २९ ॥

स शङ्खचूडो यत्र यत्र धावति तत्र तत्र शङ्खचूडं कृष्णोऽन्वधावत्। किञ्चिकीर्षुः? तस्य शिरोरत्नं हर्तुमिच्छुः, बलरामस्तु स्त्रियो रक्षन् तत्रैव तस्थौ ॥ ३० ॥

ततोऽविदूरे [6-] समीप [-6] एव अभ्येत्य तदभिमुखं गत्वा विभुः भगवान् मुष्टिनैव अङ्ग![5] हे राजन्! चूडामणिसहितं दुरात्मनस्तस्य शङ्खचूडस्य शिरो मूर्धानं जहार ताडयामास ॥ ३१ ॥

इत्थं शङ्खचूडं हत्वा भास्वरं तेजोयुक्तं मणिमादाय आगत्य योषितां पश्यन्तीनां सतीनां प्रीत्या अग्रजाय रामाय ददौ दत्तवान् ॥ ३२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

1 K adds एव 2. K रावः 3. K,T omit बिभ्यत् 4- -4. K omits 5. T,W omit अङ्ग! 6- -6. K omits.

**विज०** तौ नाथौ यस्य, स तन्नाथः तं कालनं द्रवणम् ॥ २६ ॥

स्वपरिग्रहं स्वस्त्रीजनं दस्युना व्याघ्रेण ग्रस्ताः क्रोशन्तीः गाः यथा तथा क्रोशन्तं विलोक्य। "दस्युस्तस्कर शार्दूलौ हन्तारौ गां नृहिंसकौ" इति च ॥ २७ ॥

मा भैष्ट भीता मा भवन्त्वित्यभयवाक्ययुक्तौ, तालो गीताङ्गवाद्यविशेषः। यद्वा तालस्तृणराजः स हस्ते ययोस्तौ तथा मनस्विनौ विशिष्टमनोयुक्तौ तरसा बलेन "तरसी बलरंहसी" ( वैज. को. 6-3-13) इति ॥ २८ ॥

मरणकालः, कश्चिदसुरो वा, मृत्युर्यमः उद्विजन् बिभ्यत् ॥ २९-३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धेपूर्वार्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

(विजयध्वजरीत्या द्वात्रिंशोऽध्यायः ॥ ३२ ॥)

# पञ्चत्रिंशोऽध्यायः

(विजयध्वजरीत्या त्रयस्त्रिंशोऽध्यायः)

-: दिवाकाले श्रीकृष्णविरहप्रयुक्तगोपीविलापः। इयमेव वेणुगीता।:-

## श्रीशुक उवाच

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः।
कृष्णलीला[1] प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

## गोप्य ऊचुः

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः[2]।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥

व्योमयानवनितास्सहसिद्धैर्विस्मि[3]तास्तदुपधार्य सलज्जाः।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥

हन्त! चित्रमबलाः शृणुतेदं हारहास उरसि स्थित[4]विद्युत्।
नन्दसूनु रयमार्तजनानां[5] नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥

बृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आ[6]रात्।
दन्तदष्टकबला धृतकर्णा निद्रिता लिखितचित्रमिवाऽऽसन् ॥ ५ ॥

---

1. G,J,P,V °लाः 2. G,J,T,W °णुम् 3. K,T,W °स्मृ 4. G,J °र 5. M,Ma श° 6. M,Ma एत्य

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः। युग्मश्लोकानुगीतेन निन्यु र्दुःखेन वासरान्।

एवं रात्रिषु कृष्णेन स्वैरं अभिरमितानां दिवा तद्विरहितानां अनुगीतेन दिननिस्तारप्रकारमाह - **गोप्य** इति। दुःखेन कृच्छ्रेण ॥ १ ॥

वामबाहुकृतवामकपोल इत्यादीनि द्वादश युगलानि **वामेति**। **हे गोप्यः! वामे बाहौ** तन्मूले **कृतः अर्पितः वामः कपोलो** येन सः, वल्गिते नर्तिते **भ्रुवौ** येन सः **वल्गितभ्रुः, मुकुन्दः अधरेऽर्पितं वेणुं कोमलाभिरङ्गुलीभिः आश्रिता मार्गाः** सप्तस्वरच्छिद्राणि **यस्य** तम्। **यत्र** यदा **ईरयति** वादयति ॥ २ ॥

**व्योमेति**। तदा **व्योमयानानां** सिद्धानां **वनिताः सिद्धैः** स्वपतिभिस्सह वर्तमाना अपि **तद्वेण्वीरणं उपधार्य** आकर्ण्य प्रथमं **विस्मिताः** ततः **काममार्गणेभ्यः समर्पितानि चित्तानि** याभिस्ताः तत्परवशा **इत्यर्थः**। **सलज्जास्सत्यः कश्मलं** मोहं **ययुः**। अत्र लिङ्गं- **अपस्मृताः** विस्मृता **नीव्यो** याभिरिति। अतः **एवम्भूतस्य कृष्णस्य विरहं कथं** सहाम इति **सर्वत्र** वाक्यशेषः ॥ ३ ॥

**हन्तेति**। **हन्त! हे अबलाः! इदं चित्रं शृणुत**[1-]। **हारहासः** हारवद्विशदो हासो **यस्य सः**। यद्वा, वेणुवादने अधोवदनेन हसतः हारेषु स्फुरन् हासो यस्य सः[-1]। हारवद्वा वक्षसि शोभमानो हासो यस्य सः। यद्वा हाराणां हास एव विशदा स्फूर्तिर्यस्मिन्। उरसीति। **उरसि** स्थिता[2] **विद्युदिव लक्ष्मीर्यस्य सः**। **यर्हि** यदा **कूजितवेणुः**[3-] नादितवेणुः[-3] भवति॥ ४॥

**बृन्दश इति**। तदा **व्रजे** ये **वृषाः, मृगाः, गावश्च वेणुवाद्येन हृतानि चेतांसि** येषां ते। **आराद्दूरादेव दन्तैर्दष्टाः कबलाः** ग्रासाः यैस्ते, **धृता** उत्तम्भिताः **कर्णाः** यैस्ते, **निद्रिता इव लिखितचित्रमिव** च **आसन्**। अविदुषां तिरश्चामिव[4] इदमतिचित्रमित्यर्थः ॥५ ॥

---

1- -1. J,Va यद्वा हारवत् 2. J,Va °रा 3- -3. Va omits 4. J,Va omit इव

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथेत्थं निशासु भगवता सह विहरन्तीनामहस्सु तेन विश्लिष्टानां गोपीनां तल्लीलानुवर्णनेन कालनिर्यापणप्रकारमाह — **पञ्चत्रिंशेन गोप्य** इत्यादिना। कृष्णे वनं याते सतीत्यस्याऽस्य अहस्स्वित्यादिः[1] तं कृष्णमनुद्रुतं अनुवृत्तं तदासक्तमिति यावत् तच्चेतो यासां ताः गोप्यः कृष्णलीला गायन्त्यः वासरानहानि दुःखेन कृच्छ्रेण कथञ्चित् निन्युः निर्यापयामासुः॥ १ ॥

कीदृशं तल्लीलाप्रगानम्, येन वासरान् निन्युः इत्यतः तद्दर्शयति — **वामबाहुकृतवामकपोल** इत्यादिना। अत्र द्वौ द्वौ श्लोकावेकवाक्यतयाऽन्वेतव्यौ, हे गोप्यः! कृष्णो यत्र यदा वामबाहौ तन्मूले कृतः अर्पितः वामः कपोलो येन, वल्गिते नर्तिते भ्रुवौ येन, तथाभूतः कोमलाभिः अङ्गुलिभिः आश्रिता मार्गास्सप्तस्वरच्छिद्राणि यस्य तमधरे अर्पितं वेणु मीरयति[2-] वादयति[-2] ॥ २ ॥

तदा व्योमयानानां वनिताः कश्मलं मोहं ययुः इत्यन्वयः। व्योम्नि यानं गमनं येषां ते व्योमयानाः, व्योम्नि यान्तीति वा व्योमयानाः, सिद्धाः। नन्द्यादेराकृतिगणत्वात् कर्तरि ल्युः। तेषां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेणुगीत मुपधार्याऽऽकर्ण्य प्रथमं विस्मिताः, ततः कामस्य मदनस्य मार्गणे समर्पितानि चित्तानि याभिस्ताः तत्परवशा इत्यर्थः। सलज्जास्सत्यः कश्मलं ययुः। तत्र लिङ्गं [3]वदन्त्यः ताः [4-]विशिंषन्ति[-4] [5-]अपस्मृतनीव्यः[-5] अपस्मृता विस्मृताः नीव्यः भ्रश्यद्दुकूलबन्धा याभि स्तथाभूताः एवंविधस्य कृष्णस्य विश्लेषं कथं सहेमेति सर्वत्र वाक्यशेषः ॥ ३ ॥

**हन्तेति**। हे अबलाः! इदं चित्रं शृणुत। हन्त! अत्याश्चर्यमेतत्। अयं नन्दसूनुः हारवद्विशदो[6]ऽमलो हासो यस्य, यद्वा हारेषु स्फुरन् हासो यस्य, [7]उरःस्थिता विद्युदिव लक्ष्मीर्यस्य तथाभूतः, आर्तजनानां तद्विश्लेषजदुःखपीडितानां मादृशानां नर्मदो नितरां दुःखकारकस्सन् यर्हि यदा कूजितो वादितो वेणुर्येन तथाभूतो भवति ॥ ४ ॥

तदा व्रजे ये वृषाः, मृगा, गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते, आराद्दूरादेव दन्तैः दष्टा एव न तु चर्विताः कबलाः तृणग्रासा यै स्ते, धृताः उत्तम्भिताः कर्णाः यैस्ते, निद्रिताः सञ्जातनिद्रा इव लिखितचित्रमिव चित्रितवृषादिरिव च आसन् तस्थुः। अविदुषां तिरश्चामपीदमानन्दपारवश्यजनकं वेणुगीतम्, अतोऽतिचित्रमिति भावः ॥ ५ ॥

---

1. K °ति शेषः। 2- -2. K शब्दाययति 3. K वदन् 4- -4. K विशिनष्टि 5- -5. K omits 6. T,W omit अमलः 7. K उरसि

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्त्रीणां उपासनाप्रकारः ईदृश इति दर्शयितुं गोपीनां भगवल्लीलानुस्मरणं कथयत्यस्मिन्नध्याये। तत्र प्रथमतस्तासां कृष्णे भक्तिलक्षणं वक्ति **गोप्य** इति। प्रकृष्टगानेन आदृतचेतस्त्वं भक्तेः लक्षणं सूचयति ॥ १ ॥

द्वौ द्वौ ग्रन्थौ एकस्या गीतम्। तत् द्वाभ्यां द्वाभ्यां श्लोकाभ्यामन्वयः। एका गोपी गोप्यन्तराणि सम्बोधयति। हे गोप्यः! शृणुतेति शेषः। वामबाहुमूले कृतं वामकपोलं येन स तथा, वल्गिता नर्तिता भ्रूः यस्य स तथा। अधरोष्ठे अर्पितो वेणुर्येन स तथा, मुकुन्दो यत्र यदा कोमलाङ्गुलिभिः आश्रितमार्गं आच्छादितरन्ध्रं वेणुं ईरयति गायतीत्यर्थः ॥ २ ॥

तदा सिद्धैस्सह व्योमयानवनिताः विमानस्थाः स्त्रियः, तद्गीतमुपधार्य श्रुत्वा विस्मिताः, अनन्तरं स्वयमशक्ताः सलज्जाः कामबाणेन विद्धं चित्तं यासां ताः। तथा अपस्मृता नीवी वस्त्रग्रन्थिः यासां ताः, मुच्यमानवस्त्रग्रन्थिस्मरणरहिताः कश्मलं मूर्च्छां ययुः इत्यर्थः ॥ ३ ॥

हारेण भासते इति हारभासः। हारवद्विशदो हासो यस्य स तथेति पाठार्थौ। उरसि स्थितविद्युत् विद्युदिव विष्णुं द्योतयति श्रीवत्साङ्कनामेति, यर्हि यदा कूजितवेणुर्भवति ॥ ४ ॥

तदा एत्य समेत्य व्रजवृषादयः लिखितचित्रमिव निश्चेष्टा आसन् इत्यन्वयः। धृतकर्णाः निश्चलकर्णाः कबलस्तृणग्रासः निद्रिताः कार्यान्तररहिताः ॥ ५ ॥

**बर्हिणस्स्तबकधातुपलाशैः बद्धमल्लपरिबर्हविडम्बः।**
**कर्हिचित्सबल आलि! स गोपैर्गास्समाह्वयति यत्र मुकुन्दः ॥ ६ ॥**

**तर्हि भग्नगतयस्सरितो वै तत्पदाम्बुजरजोऽनिलनीतम्।**
**[1-]स्पृहयतीर्वयमिवा[-1]ऽबहुपुण्याः प्रेमवेपितभुजाः [2-]स्तिमिताप[-2]ः ॥ ७ ॥**

**अनुचरैस्समनुवर्णितवीर्य आदिपूरुष इवाऽचलभूतिः।**
**वनचरो गिरितटेषु चरन्ती र्वेणुनाऽऽह्वयति गा स्स यदा हि ॥ ८ ॥**

**वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य[3] इव पुष्पफलाढ्याः।**
**प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनव [4-]स्ससृजुः[-4] स्म ॥ ९ ॥**

**दर्श[5-]नीयतिलको वनमाला[-5] दिव्यगन्धतुलसीम[6]दमत्तैः।**
**अलिकुलैरलघु गीतमभीष्टं आद्रिय[7]न् यर्हि सन्धितवेणुः ॥ १० ॥**

---

1- -1. M,Ma आमृशन् पयसि वाऽ° 2- -2. M,Ma हतवेगाः 3. M,Ma °न्त 4- -4. P,V °वो ववृषुः 5- -5. M,Ma विकचोत्पलमाला 6. G,J,K,P,V मधु 7. M,Ma °यत्

**श्रीध०** किञ्च। अचेतनासु सरित्सु तदति[1]विचित्रमित्याहुः — **बर्हिण** इति। हे आलि! सखि! बर्हिणो मयूरस्य स्तबकाः [2-]बर्हिगुच्छाः[-2] धातवो [3]गैरिकादयश्च, पलाशानि पल्लवाश्च तैः बद्धश्चाऽसौ मल्लानां परिबर्हः परिकरः तं विडम्बयति। अनुकरोति तथा स मुकुन्दः अनुगैर्गोपैस्सह वेणुनेत्युपरितनम् अत्रापि ज्ञातव्यम्। यत्र यदा गाः [4]समाह्वयति ॥ ६ ॥

**तर्हीति**। तर्हि तदा तद्ध्वनिश्रवणात् अनिलेन नीतं तस्य पदाम्बुजरजः स्पृहयन्त्य इव, भग्नगतयः सरितः वै निश्चितं, वयमिव ताअप्यबहुपुण्याः यतो न प्राप्नुवन्ति। केवलं प्रेम्णा वेपिता भुजास्तरङ्गा यासां ताः, स्तिमिताः निश्चलाः आपो यासां ताः, गोप्योपि लोचनयोः स्तिमितजला भवन्तीति ॥७॥

स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः — **अनुचरैरिति**। अनुचरैः गोपैः देवादिभिर्वा मुग्धानां वाक्यं आदिपूरुष इवेति। अचलभूतिः निश्चलश्रीः वेणुना तत्तन्नाम्नां[5] गानेन ॥ ८ ॥

**वनलता** इति। तथा प्रणताः भारेण विटपाः शाखा यासां ताः, वनगता लताः स्वस्मिन् विष्णुं प्रकाशमानं [6-]सर्वभूतान्तर्यामित्वात् अस्मास्वपि विद्यत इति[-6] सूचयन्त्य इव मधुधाराः ववृषुः, स्मेति विस्मये, तरवश्च। तथा तत्पतीनामपि तथैवाऽऽनन्द इति भावः ॥ ९ ॥

एतानि विष्णुव्यक्तिलक्षणानि। किञ्च सरसि कमलवनेषु विहरतां पक्षिणामपि मनआकर्षकं[7] तद्गीतं, किं पुनरन्येषामित्याहुः — **दर्शनीयेति**। दर्शनीयस्तिलको यस्य दर्शनीयानां सुन्दराणां मध्ये मुख्य इति वा, वनमालासु या दिव्यगन्धा तुलसी। तस्याः मधुना मत्तैरलिकुलैः अलघु उच्चैरभीष्टमनुकूलं गीतम् आद्रियन् आदरेण गृह्णन्, यर्हि अधरे सन्धितवेणुर्भवति ॥ १० ॥

---

1. J,Va °तीव चि° 2- -2. J,Va मयूरपिच्छाः 3 J,Va omit अनुगैः 4. J,Va सम्यगाह्व° 5. J,Va °म्ना 6- -6. J,Va omit 7. J,Va °णं

**वीर०** इतोऽप्यतिचित्रं शृणुतेति काश्चिदाहुः **बर्हिणेति**। हे आलि! सखि! बर्हिणस्य मयूरस्य स्तबको बर्हं[1] यद्वा बर्हिणशब्देन तत्पिञ्छं[2] लक्ष्यते। स च स्तबका गुच्छाः धातवो गैरिकादयश्च, पलाशानि पल्लवाश्च तैः बद्धश्चासौ मल्लानां परिबर्हः, परिकरश्च, तं विडम्बयत्यनुकरोतीति तथा, स मुकुन्दो बलरामेण सहितः कर्हिचित्[3] यदा यत्र देशे गोपैः गाः समाह्वयति। अस्य वेणुगीतेनेत्यादिः। वेणुगीतेन गोपान् गाश्च समाह्वयति ॥ ६ ॥

तर्हि तदा अचेतनास्सरितोऽपि अनिलेन नीतं प्रापितं तस्य पदाम्बुजरजः स्पृहयतीः स्पृहयन्त्य[4] इव भग्ना गतिर्यासां तथाभूताः वै निश्चितम्। भुग्नगतय इति पाठे कुटिलगतयः, तथाऽपि ताः वयमिवाऽबहुपुण्याः यतो न प्राप्नुवन्ति। केवलं प्रेम्णा वेपिताः कम्पिताः भुजास्तरङ्गा यासां, स्तिमिता निश्चला आपो यासां तथाभूताश्च। गोप्योऽपि लोचनयोः स्तिमितजला भवन्तीति, वयमिवेति दृष्टान्ताभिप्रायः ॥ ७ ॥

स्थावरेष्वपि अतिचित्रं दृश्यत इत्याहुः - **अनुचरैरिति**। सः कृष्णो यदा हि वने चरन् गिरे स्तटेषु चरन्तीः गाः वेणुना तत्तन्नाम्नोपेतेन वेणुगीतेन आह्वयति। कथम्भूतः! अनुचरैः गोपैः देवादिभिर्वा, सम्यग् वर्णितं वीर्यं यस्य, तथाभूतः मुग्धानां वचनं आदिपूरुष इवेति, अचला विभूतिः लक्ष्मीः यस्य स चेति। इतरेषु चलाऽपि लक्ष्मीः न तस्मिन् चलेति भावः ॥ ८ ॥

तदा प्रणताः भारेण विटपाः यासां ताः, पुष्पैः फलैश्चाढ्याः प्रेम्णा हृष्टा उदञ्चितास्तनवो यासां ताः। वनगता लताः स्वस्मिन् विष्णुं प्रकाशमानं सूचयन्त्य इव मधुधारा ववृषुः तथा तरवश्च। तत्पतीनामपि तथैवाऽऽनन्द इति भावः। स्म विस्मये ॥ ९ ॥

कमलवनेषु विहरतां पक्षिणामपि चित्ताकर्षकं तद्गीतं किंपुनरन्येषां इत्यभिप्रायेणाऽऽहुः- **दर्शनीयतिलक** इति। दर्शनीयानां सुन्दराणां मध्ये श्रेष्ठः कृष्णः वनमालायां या दिव्यगन्धतुलसी तस्या मधुना मत्तैः अलिकुलैः क्रियमाणम् अलघूच्चैः अभीष्टमाद्रियन् आदरेण गृह्णन् यर्हि अधरे संहितवेणुर्भवति ॥ १० ॥

---

1. T,W बर्हः 2. T,W °ञ्छो 3. T,W omit चित् 4. T,W °हन्त्य

**विज०** हे आलि! सखि! कर्हिचित् कदाचित् यत्र यदा यस्मिन् देशे स्थित्वा गाः समाह्वयति ॥६॥

तर्हि तदा तस्मिन् देशे स्थिताः सरितस्तीरे पयसि वाऽनिलनीतं तत्पदाम्बुजरजः आमृशन् आस्पृशन्वै इत्यन्वयः! कथम्भूतः? बर्हिणस्य मयूरस्य स्तबकैः पिच्छबन्धविशेषैः धातुभिः गिरिसम्भवैः मनश्शिलादिभिः पलाशैः पल्लवैः बद्धस्य मल्लपरिबर्हस्य मल्लपुरुषशिरःपरिकरस्य विडम्बोऽनुकारो यस्य स तथा, "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्" (अम. को. 2-248) इत्यमरः। किञ्च, बहूनि अनेकानि पुण्यानि यासां ताः तथा "विपुलानेकयोर्बहु"रिति (वैज. को. 6-4-10) यादवः। प्रेम्णा कामोन्नतस्नेहेन वेपिताः कम्पिताः भुजास्तरङ्गलक्षणा यासां ता स्तथा। अत एव हतवेगाः मन्दीकृतस्यन्दनलक्षणजवाः, अत एव भग्नगतयः स्तिमितप्रवाहाः आसन्नित्यनुषङ्गः। अनेन सरन्तीति सरित इति सरिच्छब्दार्थो लुप्त इति दर्शितम् ॥ ७ ॥

अनुचरैः सनकादिभिः, अन्यत्र गोपैः अचलभूतिः स्थिरश्रीः "भूतिः श्रीजन्मभस्मसु" (वैज. को. 6-2-27) इति यादवः। वनचरः कक्षे सञ्चरन् अन्यत्र वने चरणं शयनं जलशयन इत्यर्थः। यदा वेणुना ध्मातवेणुध्वनिना गिरितटेषु चरन्तीः तृणभक्षणं कुर्वन्तीः, अन्यत्र वायोस्तटवद्विस्तृते मुखे वर्तमाना गाः पशून्, अन्यत्र वेदवाणीराह्वयति सनकादिभिः स्तूयमानो जलशयानः आदिपुरुषो वायुमुखे वर्तमानश्रुतीः तदर्थकथनपूर्वकमुपदिशति ॥ ८ ॥

तदात्मनि स्थितं विष्णुं व्यञ्जयन्त इव पुष्पफलाढ्याः अत एव प्रणतं प्रणमनं बिभ्रतीति प्रणतभाराः। अण् प्रत्ययः। विटपाः शाखा येषां तरूणां यासां लतानां वा ते तास्तथा, यद्वा पुष्पफलभारेण प्रणता विटपा येषां ते तथा, प्रेम्णा हृष्टरोमाञ्चिताः तनवः येषां यासां वा ते ताः तथा, एवंविधा वनलतास्तरवश्च मधुधारा रसधाराः ससृजुः स्म, स्मृत्वा सृष्टवन्त इत्यर्थः। अन्यत्र आत्मनि हृदये स्थितं विष्णुं व्यञ्जयन्तः अपरोक्षीकुर्वन्त इव ज्ञानपुष्पेण जीवन्मुक्त्यवस्थाफलेनाऽऽढ्याः प्रणतस्य भारो भरणं येषां ते, प्रणतभाराः ते विटपा भुजाः येषां ते तथा, मूर्ध्न्यारोपिताञ्जलिपुटा इत्यर्थः। अत एव भक्त्युद्रेकेण रोमाञ्चितगात्राः वने अरण्ये रता निवृत्तिधर्ममनुतिष्ठन्तो वने भासि, ग्रीष्मे पञ्चाग्निज्वालासेवायां, वर्षर्तौ कानने वने जले, हिमर्तौ कण्ठदघ्नसलिले वसन्तः "वनं भास्यप्सु कानने" (वैज.को. 6-3-31) इति यादवः। तरवः संसारतरणशीलाः, तीर्णसंसारा वा मुमुक्षवो मुच्यमाना मुक्ताश्च यथायोग्यमधिकारिणो मधुधाराः ज्ञानेनैशत्वाद्यानन्दाम्बुसन्ततीः ससृजुस्तत्स्वभावा बभूवुरित्यर्थः। "धाराऽस्त्रांगेऽम्बुसन्तत्यां सैन्याग्रेऽश्वगतिष्वपि" (वैज.को. 6-2-20) इति। "सर्गः स्वभावनिर्मोक निश्चयाध्यायसृष्टिषु" (अम.को. 3-178) इति च। अत्र वनचरशब्दसामर्थ्यान्मत्स्याद्यवतारविषयत्वेनापि ज्ञातव्यावेतौ श्लोकौ शब्दशक्तिविशारदैरिति ग्रन्थबाहुल्यभयादुपरम्यत इति ॥ ९ ॥

यर्हि यदा सन्धितवेणुः, स्वरेणेति शेषः। कृष्णः दर्शनीयायाः चक्षुःप्रियायाः विकचैः उत्पलैः नीलोत्पलैः, कृताया मालायाः दिव्यगन्धायाः अमानुषपरिमलायाः तुलस्याश्च मधुना पीतेन मत्तैः अलिकुलैः अभीष्टं गातुमुपक्रान्तं अलघु गम्भीरं गीतं आद्रियत् आर्चत्। "आदृतौ सादरार्चितौ" (वैज.को. 7-4-2) इति ॥ १० ॥

**सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य।**
**हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः[1] ॥ ११ ॥**

**सहबलस्स्रगवतंसविलास स्सानुषु[3] क्षितिभृतो[4] व्रजदेव्यः।**
**हर्षयन्[2-]यर्हि[-2] वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥**

महदतिक्रमण[5]शङ्कितचेता मन्दमन्दमनुगर्जति मेघः।
सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदध[6]त्प्रतपत्रम् ॥ १३ ॥

विविधगोपचरणेषु विदग्धो वेणुवाद्य उ[7]रुधा निजशिक्षाः[8]।
तव सुतस्सति यदाऽधरबिम्बे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥

[9-]सवनशस्त[-9]दुपधार्य सुरेशाश्शक्रशर्वपरमेष्ठिपुरोगाः।
कवय [10-]आ नमित[-10] कन्धरचि[11]त्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥

---

1. K,T,W यत 2- -2. M,Ma आह्वयचर्हि 3. T,W रञ्जति 4. K विश्वः 5. P,V वि 6. M,Ma °धे वित° 7. M,Ma मधुरां 8. M,Ma °क्षाम् 9- -9. M,Ma सुमनसस्त° 10- -10. G,J,K,M,Ma आनत 11. M,Ma गात्राः

**श्रीध० सरसीति**। तर्हि ये सरसि सारसा हंसाः अन्ये च विहङ्गाः ते[1] चारुणा गीतेन हृतचेतसः एत्य [2]आगत्य। हरिम् उपासत अभजन्त, तत्समीपे उपविविशुर्वा। हन्तेति विषादे ॥ ११ ॥

मेघोऽपि हरिं सेवत इत्याहुः — **सहबल इति**[3] व्रजदेव्यो गोप्यः! सहबलः सरामः कृष्णः स्रग्भिः निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य। यद्वा, मुक्ताफलस्रगापीडेन विलासो यस्येति, क्षितिभृतः सानुषु गिरेस्तटेषु वर्तमानः स्वयं जातहर्षः विश्वं हर्षयन् यदा वेणुरवेणोपरम्भति निनादयति नादेन आ[4]पूरयतीत्यर्थः ॥ १२ ॥

**महदिति**। तदा मेघः महतः श्रीकृष्णस्यातिक्रमेण शङ्कितं चेतो यस्य सः, न पुनः पुरतो याति न चोच्चैर्गर्जति, किन्तु तत्रैव स्थितस्सन् वेणुरवमनु मन्दं गर्जति। किञ्च, सुहृदं विश्वार्तिहरणादिसाम्यात् सुहृत् कृष्णः तं सुमनोभिरभ्यवर्षीदिति। अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तम्, तुषारो वा कुसुमतया कल्पितः, स एव वा देवतारूपोऽभ्यवर्षीदिति। प्रतपादातपात् त्रायत इति प्रतपत्रं छत्रं, तत् छायया कुर्वन्निति ॥ १३ ॥

अपि च महदेतदाश्चर्यमित्याहुः — **विविधेति**। हे सति! यशोदे! तव सुतः नानागोपक्रीडासु विदग्धो निपुणः वेणुवाद्यविषये निजैव शिक्षा यासु ताः स्वोत्प्रेक्षिताः न त्वन्यतः श्रुता इत्यर्थः। स्वरजातीर्निषादर्षभादिस्वरालापभेदान् अनयत् उन्नीतवान् ॥ १४ ॥

**सवनश इति**। तत्तु[5] ताः स्वरजातीः सवनशः [6-]वारं वारं[-6] मन्द्रमध्यमतारभेदेन [7-]क्रमशो वा[-7]। यतो गीतध्वनिरागतः [8-]तत्र आनमिता[-8] कन्धरा चित्तं च येषां ते, उपधार्य सम्यगाकर्ण्य[9], कवयः कोविदाः अपि ते[10] अ[11]निश्चितं तत्त्वं तद्भेदो यैस्ते कश्मलं मोहं ययुरिति ॥ १५ ॥

---

1. P,V omit ते 2. J,Va add ततः 3. J,Va add भो! 4. J,Va omit आ 5. J,Va omit तु 6- -6. J,Va omit 7- -7. J,Va omit 8- -8. J,Va ततश्च आनता 9. J,Va समाक° 10. J,Va omit ते 11. J,Va न

**वीर०** तदा ये सरसि सारसाश्च हंसाश्चाऽन्ये विहङ्गमास्ते चारुणा गीतेन हृतं चेतो येषां तथाभूता एत्याऽऽगत्य हरिं कृष्णमुपासत अभजन्त। तत्समीपे विविशुर्वा, कथम्भूताः यतं विषयान्तरेभ्य आहृतं चित्तं यैः यतं नियतं मौनं संशीलनं येषां तथाभूताश्च। हन्तेति भगवद्विरहजखेदे ॥ ११ ॥

मेघो हरिमुपास्ते इत्याहुः - **सहबल** इति। हे व्रजदेव्यः! गोप्यः! सहबलः सरामः कृष्णः स्रग्भिः निर्मिताभ्यां अवतंसाभ्यां कर्णभूषणाभ्यां[1] विलासो यस्य। यद्वा, मुक्तास्रगापीडेन विलासो यस्य। क्षितिभृतो गिरेस्तटेषु वर्तमानः स्वयं जातहर्षः विश्वं हर्षयन् यदा वेणुरवेण उपरम्भितविश्वः उपग्रथितविश्वः अनुरक्तलोको भवतीत्यर्थः। उपरञ्जति विश्वम् इति पाठान्तरं, तदा उपरञ्जति नादयति, नादेन पूरयतीत्यर्थः ॥ १२ ॥

तदा स्वतुल्यच्छायत्वेन विश्वार्तिहरणादिना च साम्यात् स्वसखो मेघः, महतः कृष्णस्यातिक्रमेण शङ्कितं चेतो यस्य तथाभूतः पुरतो न याति, न चोच्चैर्गर्जति, किन्तु तत्रैव स्थितस्सन् वेणुरवमनु मन्दं मन्दं गर्जति, सुहृदं कृष्णं सुमनोभिरभ्यवर्षत् छायया प्रतपत्रं आतपत्रं व्यदधत् अकरोच्च। विदधदिति पाठे तु अडभाव आर्षः; शत्रन्तं वा। प्रतपत्रं कुर्वन् सुमनोभिरभ्यवर्षच्चेत्यर्थः। अदृश्यैः देवैः क्रियमाणं कुसुमवर्षं मेघकर्तृकं कल्पयित्वेत्थ मुक्तं, तुषारो वा कुसुमतया कल्पितः ॥ १३ ॥

ब्रह्मादीनामपि पारवश्यजनकं त्वत्सुतवेणुरणितमिति यशोदां प्रत्याहुः — **विविधगोपचरणेष्विति।** हे सति यशोदे! यदा तव सुतो नानागोपक्रीडासु निपुणः अधरबिम्बे बिम्बतुल्येऽधरे निहितो वेणुर्येन सः। वेणुवाद्यविषये उरुधा बहुप्रकारा निजैव शिक्षा यासु ताः, न त्वन्यतः श्रुता इत्यर्थः। स्वरजातीः निषादर्षभादिस्वरालापभेदान् अनयत् उन्नीतवान्॥ १४॥

तदा शक्रप्रभृतयः तत् ताः स्वरजातीः सवनशः वारं वारं मन्द्रमध्यमतारभेदेन वा, क्रमशो वा यतो गीतध्वनिरागतः तत आनता कन्धरा चित्तञ्च येषां ते, उपधार्य सम्यगाकर्ण्य कवयः कोविदाः अपि अनिश्चितं तत्त्वं तद्भेदो यैस्तथाभूताः कश्मलं मोहं प्रापुः ॥ १५ ॥

---

1. T,W omit कर्णभूषणाभ्यां

**विज०** तदा सरसि विहरन्तो ये सारसहंसविहङ्गाः ते पक्षिणः एत्य सम्भूय, चारुणा गीतेन हृतचेतसः आकृष्टबुद्धयः, अत एव यतचित्ताः एकाग्रकृतमानसाः अर्धनिमीलितनेत्राः धृतमौनाः स्वजातिचापल्यरहिताः हरिमुपासतेत्यन्वयः ॥ ११ ॥

हे व्रजदेव्यः! बलेन सहितः स्रजा मालयाऽवतंसेन कर्णोत्पलेन च विलासः कान्तिविशेषो यस्य स तथा। यद्वा स्रगवतंसयोर्विलासो यस्य स तथा। आत्मशोभाजनकत्वेन धृतयोः स्रगवतंसयोः शोभाजनक इत्यर्थः। क्षितिभृतो गिरेः सानुषु शिखरेषु स्थितः लोकदृष्ट्या तदानीं जातहर्षः आविष्कृतानन्दविशेषः, कृष्णो यर्हि यदा वेणुरवेण आह्वयत्, गा इति शेषः। विश्वं देहमाविश्य वर्तमानं प्राणिजातं उपरम्भति ऊर्ध्वमुखीकरोति, आह्वयति वा, नूतनं कर्तुमुपक्रमते वा । "उपरम्भस्तूर्ध्वमुखे प्रक्रमे निवृत्ते तथा" इति च ॥ १२ ॥

तदा मेघः महतो हरेरुच्चैर्गर्जनेन कर्णबाधिर्यजनकातिक्रमणमतिलङ्घनं स्यादिति शङ्कितमनाः मन्दं मन्दं अनु वेणुरवानुकूलं यथा भवति तथा गर्जति। किञ्च, सुमनोभिः पुष्पसदृशसलिलबिन्दुभिः श्यामवर्णसाम्यात् सुहृदं मित्रं अभ्यवर्षत्। किञ्च, छायया वितपत्रं वितपात् आतपात् त्रायत इति वितपत्रं, विदधे च हरेरिति शेषः। सितपत्रमिति पाठे श्वेतच्छत्रमित्यर्थः। वेणुरवेण व्रजदेवीराह्वयदिति वा ॥ १३ ॥

हे सति ! यशोदे! विविधानां गवां गीतशब्दानां पतयः गन्धर्वाः तेषां चरणेषु गीतगतिषु विदग्धः समर्थः। यद्वा, विविधानां स्वस्वजातिस्वभावचेष्टासु नानाविधानां गोपानां चरणेषु कर्मसु विदग्धः कुशलः। यद्वा, विविधो गोपो रक्षणं तस्य, चरणेषु तत्तदापद्रक्षणविधिषु प्रविष्ट इत्यर्थः। अधरबिम्बे दत्तवेणुः अधरोष्ठबिम्बफले न्यस्तवेणुः तव सुतः यदा वेणुवाद्यमधुरां वेणुलक्षणवाद्ये कर्णसुखहेतुं निजशिक्षामात्मीयगानशिक्षां प्रति स्वरजातीः षड्जादिस्वर सामान्यान्यनयत्प्रापयामास॥ १४॥

तदा सुमनसो देवाङ्गनाः सुरेश्वराश्च गीतविषये कश्मलं मोहं ययुरित्यन्वयः। कीदृशाः? आनतकन्धरगात्राः, ईषन्नतकण्ठदेहावयवाः, कवयः गानपारज्ञाः निश्चिता अपि अनिश्चिततत्त्वाः, अभूतपूर्वगीतश्रवणात् गीततत्त्वनिश्चयरहिताः, किं कृत्वा, तद्गानमुपधार्य तात्पर्येण श्रुतिं निधाय ॥ १५ ॥

निजपदाब्जदलै[1]र्ध्वजवज्र[2]ैः नीरजाङ्कुशविचित्रललामैः।
व्रजभुवः प्र[3]शमयन् खुरतोदं वर्ष्मधुर्यगतिरी[4]रितवेणुः ॥ १६ ॥

व्रजति[5] तेन वयं सविलासप्रे[6]क्षणार्पितमनोभववेगाः।
कु[7]जगतिं गमिता न विदामः कश्मलेन वसनं कबरं[8] वा ॥ १७ ॥

मणिधरः क्वचिदागण[9]यन् गा मालया दयितगन्धतुलस्याः[10]।
प्रणयिनोऽनुचरस्य य[11]दांऽसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥

क्वणितवेणु[12]रववञ्चितचित्ताः कृष्णम[13]न्वसत कृष्णगृहिण्यः।
गुणगणार्णव[14] मनु[15]गम्य हरिण्यो गोपिका इव विमुक्तगृहाशाः[16] ॥ १९ ॥

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम्।
नन्दसूनुरनघे तव वत्सो न[17]र्मदः प्रणयिनां विजहार ॥ २० ॥

---

1. P,V धैरै° 2. G,J,K,M,Ma वज्र. 3. G,J omit प्र 4. G,J °हि° 5. M,Ma °मि° 6. G,J,M,Ma वी° 7. M,Ma व्रज 8. P,V °रीं 9. M,Ma °म° 10. M,Ma °स्या। 11. G,J,M,Ma क° 12. M,Ma °मुप 13. M,Ma °मीयुरनु 14. G,J omit व 15. G,J,K गत्य 16. M,Ma °हेशाः 17. K,T,W श°

**श्रीध०** अस्माकं तु मोहं किं ब्रूम इत्याहुः — **निजेति।** ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैः, निजानि पदान्येवाब्जदलानि तैः, व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन्। वर्ष्मणा देहेन[1] धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णः वादितवेणुस्सन् व्रजतीति यत् ॥ १६ ॥

**व्रजतीति।** तेन निमित्तेन सविलासवीक्षणेनार्पितो मनोभववेगो यासु ताः। वयं, कुजा वृक्षास्तेषां गतिं गमितास्सत्यः मोहेन न विदामः कबरीं[2] वा वसनं वेति ॥ १७ ॥

**मणिधर** इति। किञ्च, मणिधरः मणीन् ग्रथितान् गोगणनार्थं[3] धरतीति मणिधरः क्वचिद्देशे तैर्मणिभिः[4] आ समन्ताद्गाः गणयन् तथा दयितगन्धा या तुलसी तस्या मालया सह वर्तमानः प्रणयिनः प्रियस्यानुचरस्य अंसे भुजं प्रक्षिपन्। यत्र यदा कदाचिदगायत ॥ १८ ॥

**क्वणितेति।** तदा क्वणितस्य[5-] वेणोः[-5] रवेण वञ्चितान्यपहृतानि चित्तानि यासां ताः, कृष्णस्य हरिणस्य गृहिण्यो भार्याः गुणगणार्णवं[6] गुणगणसमुद्रं कृष्णमनुगम्य[7] प्राप्य, ताः कृष्णमेवान्वसत अन्वासत न न्यवर्तन्तेत्यर्थः। कुतः? यतो विमुक्ताः गृहाशाः याभिस्ताः गोपिका इव ता अपि ह्येवमेवान्वासतेति ॥ १९ ॥

तदेवं बृन्दावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि परावृत्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयन्ति- **कुन्देति।** गोपीनामुत्सवाय कुन्ददामभिः कृतकौतुकेनोत्सवेन वेषोऽलङ्कारो येन सः, हे अनघे! यशोदे! तव वत्सः पुत्रः नन्दसूनुः कृष्णः यद्वा सहैव बह्वचः कथयन्त्यः काश्चित्तव वत्स इति काश्चिन्नन्दसूनुरिति चाऽऽहुः, नर्मदः हर्षदस्सन् यदा विजहार क्रीडति स्म ॥ २० ॥

---

1. P,V omit देहेन 2. J,Va °रं 3. P,V °णार्थं 4. J,Va एतै° 5- -5. J,Va °तवेणुर० 6. J,Va °र्णं 7. J,Va गत्य

**वीर०** अस्माकं तु मोहं किं ब्रूम इत्याहुः **-निजपदाब्जदलैरिति।** ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैः, निजानि पदान्येवाब्जदलानि तैः, व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन् वर्ष्मणा शरीरेण धुर्यः धुरं वहतीति तथा, स च गजराजः तद्वत् गतिर्यस्य सः कृष्णः वादितवेणुस्सन् व्रजतीति यत् तेन निमित्तेन सविलासवीक्षणेन च; अर्पितो मनोभववेगो यासु ताः, वयं कुजा वृक्षा स्तेषां गतिं प्रकारं निश्चेष्टतामिति यावत् गमिताः प्रापितास्सत्यो मोहेन कबरं वसनं वा न विदामः ॥ १६, १७ ॥

किञ्च मणिधरः मणीन् ग्रथितान् गोगणनार्थं धरतीति मणिधरः क्वचिद्देशे तैः मणिभिः गाः आ समन्ताद्गणयन् तथा दयितगन्धा इष्टगन्धा या तुलसी तस्या मालयोपलक्षितः प्रणयिनः प्रियस्य अनुचरस्यांऽसे स्कन्धे भुजं प्रक्षिपन्निदधत् यत्र यदा कदाचित् अगायत ॥ १८ ॥

तदा तत्र क्वणितस्य वादितस्य वेणो रवेण वञ्चितान्यपहृतानि चित्तानि यासां ताः। **यन्त्रितचित्ता इति पाठे** परवशीकृतानि चित्तानि यासां ताः, कृष्णस्य हरिणस्य गृहिण्यो भार्या हरिण्यः गुणगणार्णवं गुणसमुद्रं कृष्णमनुगत्य प्राप्य

तं **कृष्णमेवान्वसत** अन्वासत[1] न न्यवर्तन्तेत्यर्थः। कुतः? यतो विमुक्ताः त्यक्ताः गृहाशाः याभिः, कथम्? गोपिका इव, ता अपि हि एवमेव तमन्वासतेति ॥ १९ ॥

एवं बृन्दावनप्रदेशेषु क्रीडतो लीलाः प्रगीताः, अथ सायाह्ने गोधनानि परावृत्त्य यमुनायां क्रीडतः सौभाग्यमनुवर्णयन्ति- **कुन्ददामकृतकौतुकवेष** इति। कुन्ददामभिः कुन्दकुसुमस्रग्भिः कृतकौतुकेन उत्सवेन वेषोऽलङ्कारो येन सः। हे अनघे![2] अनवद्ये! यशोदे! तव वत्सः पुत्रः नन्दसूनुः श्रीकृष्णः। यद्वा, सहैव बह्व्यः कथयन्त्यः काश्चित्तव वत्स इति, काश्चिन्नन्दसूनुरिति चाऽऽहुः। प्रणयिनां सखीनां शर्मदः हर्षदः गोपैः गोपकुलेन च वृतो यमुनायां विजहार, यदेति शेषः ॥ २० ॥

---

1. T omits अन्वासत 2. T,W omit अनघे 3 K omits अनवद्ये

**विज०** ध्वजादय एव विचित्राणि नानाकाराणि ललामानि लाञ्छनानि येषां तानि तथा। यद्वा, ललामानि तिलका येषां तानि तथा तैः। ★ ललामोऽस्त्री ध्वजे श्रेष्ठे भूषायां पुण्ड्रचिह्नयोः (वैज.को.7.5 72) इति च निजपदाब्जयोर्दलैः अङ्गुलीलक्षणैः। यद्वा निजानि नित्यानि अन्येनामार्जितानि पदान्येव पादाङ्का एवाब्जानि यानि तेषां दलैर्विभागैः व्रजभुवः गवां खुरतोदं खुरनिखातव्यथां प्रकर्षेण शमयन् परिहरन् वर्ष्मणा महता शरीरेण युक्तो धुर्यो वृषभ स्तस्य गतिरिव गतिर्यस्य स वर्ष्मधुर्यगतिः। यद्वा वर्ष्मधुर्यो गजराजः। तदा ईरितवेणुः शब्दितवेणुः ॥ १६ ॥

तेन व्रजमितेन प्राप्तेन कृष्णेन सविलासवीक्षणेन विभ्रमोपेतवीक्षणेन अर्पितो मनोभवस्य कामस्य वेग उद्रेकलक्षणः संस्कारो यासु तास्तथा। रात्रिविशेषे वनाद्व्रजगतिं गोष्ठाख्यमन्दिरं गमिताः प्रापिताः, वयं कश्मलेन मनोऽनवस्थालक्षणेन[1-1] मोहेन स्रस्तं कबरं केशभारं वसनं वस्त्रं वा स्थितिं वा न विदाम न जानीम इत्यन्वयः। कुजगतिमिति पाठे स्थावरस्वभावमित्यर्थः। ब्राह्ममुहूर्तादुत्थाय कृष्णाज्ञया वनात् प्राप्तव्रजानां पश्चादागतस्य कृष्णस्य पुनर्दर्शनेन मुग्धानां गोपिकानां वचनमिदमिति भावः॥ १७॥

मणिधरः कौस्तुभरत्नधारी दयितंगन्धा प्राणप्रियगन्धा तुलसी यस्यां सा तथा। तया मालयोपलक्षितः प्रणयिनः स्निग्धतमस्यानुवर्तमानस्य कस्यचिद् गोपस्यांऽसे भुजशिरसि भुजं प्रक्षिपन् निदधानो गा आगमयन् वनाद्व्रजमावर्तयन् कृष्णः क्वचित् कदाचित् कस्मिंश्चित् काले यत्र यस्मिन् देशे अगायत ॥ १८ ॥

तदा वञ्चितचित्ताः प्रलोभितान्तःकरणाः कृष्णगृहिण्यः कृष्णमृगपरिग्रहभूताः हरिण्यो गुणगणार्णं गुणगणसमुद्रं क्वणितवेणुं ध्मातवेणुं कृष्णमनुगम्य उपान्वीयुः उपासतेत्यन्वयः। का इव विमुक्तगृहेशाः परित्यक्तनिजपतयः, उभयत्र समानम्। गोपिका गोपाङ्गना इव अन्यत्र गोपनशीला इव ॥ १९ ॥

हे अनघे! यशोदे! कुन्ददाम्ना पुष्पमालयाऽलङ्कृतः कौतुकवेषः विवाहकाले वरस्य हस्ते यत् सूत्रं बध्यते तत् कौतुकं तदीयो वेषः, स यस्य स कुन्ददामकृतकौतुकवेषः। "कौतुकं विषयाऽऽभोगे हस्तसूत्रे कुतूहले" (वैज.को. 7-3-10)

इति यादवः। गोपादिभिः परिवृतः प्रणयिनां नर्मदः लीलावचनेन आनन्ददः तव वत्सः बालः नन्दसूनु र्यदा यमुनायां विजहार ॥ २० ॥

---

1- -1. Ma मनोभवस्थान ★ (उपलभ्यमानपाठः) ललामोऽस्त्री ललामाऽपि प्रभावे पौरुषे ध्वजे। श्रेष्ठे भूषापुण्ड्रशृङ्गतुच्छचिह्नाश्वलिङ्गिषु।

[1]मन्दवायुरनुवात्यनुकूलं मानयन्मलयजस्पर्शेन।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥

वत्सलो व्रज[2]गवां यद[3]गध्रो वन्द्यमानचरणः पथि वृद्धैः।
कृत्स्नगोधन[4]मुपोह्य दिनान्ते गीतवेणुरनु[5]गेडितकीर्तिः ॥ २२ ॥

उत्सवं [6-]श्रमरुजा[-6]स्त्दृशीनामु[7]न्नयन्खुररजश्छुरितस्रक्।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली।
बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥

यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥

## श्रीशुक उवाच

एवं व्रजस्त्रियो राजन् कृष्णलीलानुगायतीः।
रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
बृन्दावनक्रीडायां गोपिकायुगलगीतं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

1. G,J,K रुप 2. T,W मु° 3. M,Ma °गाधो 3. M,Ma °म° 5. M,Ma गोद्धृत 6- -6. G,J,P,V श्रमरुचापि; M,Ma श्रममपोह्य 7. M,Ma °मुद्वह°

**श्रीध०** **मन्दवायुरिति।** तदा [1-]मलयजस्पर्शेन[-1] मलयजस्य चन्दनस्येव सुरभिः शीतलश्च यः स्पर्शः तेन तं कृष्णं मानयन्ननुकूलं यथा तथा अनुवाति वीजयति। यद्वा मलयजो दक्षिणवायुः। यद्वा - मलयजस्य कृष्णेन स्वाङ्गेऽनुलिप्तस्य स्पर्शेन मानयन्निति। किञ्च वन्दिन इव स्तावकास्सन्तः गन्धर्वादिगणाः वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासत॥ २१॥

**आयान्तमालोक्य हृष्यन्त्यः परस्परमूचुः - वत्सल** इति। व्रजस्य गवां च, यद्वा व्रजे निबद्धानां गवां **अनुकम्प्यानामस्माकमित्यर्थः**। वत्सलो हितकृत्। कुतः? यद्यस्मात् **अगध्रः** अगं धरतीति गोवर्धनोद्धरणः बहुशो **रक्षणस्योपलक्षणमेतत्**। वृद्धैः ब्रह्मादिभिः पथि [2-]वन्द्यमानचरण इति। [-2]ते सेर्ष्यं [3]सायं शीघ्रमागन्तुं न ददतीत्य[4]र्थः।उपोह्य एकीकृत्य, गीतयुक्तो वेणुर्यस्य सः ॥ २२ ॥

**उत्सवमिति**। श्रमयुक्तयापि कान्त्या नेत्राणां हर्षमुन्नयन् उच्चैः प्रापयन् खुररजोभिः छुरिता व्याप्ताः स्रजो यस्य, सुहृदामस्माकं आशिषो मनोरथस्य दित्सया दातुमिच्छया देवक्या जठरे भवतीति तथा स एव उडुराजश्चन्द्रः निर्वृतिहेतुत्वेन, स एष एतीति ॥ २३ ॥

अतिसम्भ्रमेण काश्चित् समीपं आयान्तं कथयन्ति — **मदेति**। ईषन्मदेन विघूर्णिते विह्वलिते लोचने यस्य सः, बदरपाण्डुवदनः ईषत्पक्वबदरवत् पाण्डुरं वदनं यस्य सः, अत्र हेतुः, कनककुण्डलयोः लक्ष्म्या कान्त्या मृदू कोमलौ गण्डौ यस्मिन् तद्वदनं मण्डयन्[5] कोम[6]लं गण्डस्थलं वा शोभयन्निति ॥ २४ ॥

**यदुपतिरिति**। यदुपतिरिति देवकी जठरभूरिति च। "प्रागयं वसुदेवस्य क्वचिज्जातस्तवाऽऽत्मजः"। (भाग 10-26-17) इत्यादि गर्गवाक्यप्रसिद्ध्योक्तम्। यद्वा "सख उदेयिवान् सात्त्वतां कुले" (भाग. 10-31-4) इति वत् ज्ञात्वा काश्चिद्वदन्तीति। गजेन्द्रस्येव गतिः चन्द्र इव प्रसन्नवदनः व्रजगवा मस्माकम्। अनन्तं दिनतापञ्च शमयन् [7]प्रणदन्नुपयाति एष समीपमायातीति॥ २५॥

**एवमिति**। एवं विरहदुः[8]खेनापि, नु अहो, कृष्णलीला एव गायतीः गायन्त्यः, तस्मिन् चित्तं चेतना जीवितं यासां ताः, तस्मिन्नेव मनः सङ्कल्पविकल्परूपं यासां ताः, अत एव महानुदयः उत्सवो यासां ताः, अहस्स्वपि रेमिरे॥ २६॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

1- -1. P,V omit 2- -2. P,V omit 3. P,V omit सायं 4. P,V omit अर्थः 5 J,Va add इति 6. J,Va °लग° 7. J,Va omit प्रणदन् 8. J,Va omit विकल्प

**वीर०** मन्दवायुरित्यस्य तु तदेत्यादिः। तदा मन्दवायुः मलयजस्येव सुरभिश्शीतश्च स्पर्शस्तेन कृष्णं सम्मानयन् अनुकूलं यथा भवति तथा उपवाति वीजयति। यद्वा, [1-]मलयजो दक्षिणो वायुः[-1]। यद्वा, मलयजस्य कृष्णेनानुलिप्तस्य स्पर्शेन मानयन्निति वा। किञ्च ये वन्दिनः स्तावकाः उपदेवगणाः सिद्धविद्याधरादयः ते वाद्यगीतपुष्पवर्षादिभिः तं कृष्णं परिवव्रुः परित उपासत ॥ २१ ॥

अथाऽऽयान्तमवलोक्य हृष्यन्त्यः परस्परमूचुः **वत्सल** इति। **व्रजस्य गवां च वत्सलः यद्वा**, व्रजनिबद्धानां गवां अनुकम्प्यानाम्, अस्माकं च वत्सलो हितकृत्। कुतः? यत् यस्मात् अगध्रः अगं गोवर्धनं धरति तथा। इदं बहुशो रक्षणस्य उपलक्षणम्। **वृद्धैः** ब्रह्मादिभिः पथि **वन्द्यमानौ चरणौ** यस्य सः। **दिनान्ते** सायङ्काले **कृत्स्नं गोधनं** उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः, अनुजैः अनुचरैः ईडिता कीर्तिर्यस्य सः, **स्मररुजा** स्मररोगेण **अस्ताः नष्टप्रायाः** दृशो दृष्ट्यो, यासां तासामस्माकं, नेत्राणाम् उत्सवं हर्षमुन्नयन् उच्चैः प्रापयन् खुररजोभिः व्याप्ताः स्रजो यस्य सः, सुहृदामस्माकं आशिषः मनोरथस्य दित्सया दातुमिच्छया, देवक्याः जठरे भवतीति देवकीजठरभूः स एष उडुराज श्चन्द्र एव एति आगच्छति, निर्वृतिहेतुत्वेन स एष एवेत्युक्तम् ॥ २२, २३ ॥

काश्चिदिति सम्भ्रमेण समीपमायान्तं बलरामं कथयन्ति **मदविघूर्णितलोचन** इति। ईषत् मदेन **वारुणीमदेन** विघूर्णिते लोचने यस्य सः स्वसुहृदां मानदः ईषत्पक्वबदरवत् पाण्डु वदनं यस्य सः, अत्र हेतुः **कनककुण्डलयोः लक्ष्म्या** मृदुगण्डौ यस्मिन्। तद्वदनं मण्डयन् कोमलं गण्डस्थलं मण्डयन्निति वा, द्विरदराजस्य ऐरावतस्येव विहारो यस्य सः, बलभद्रस्य श्वेतवर्णत्वात्। दिनान्ते चन्द्र इव मुदितं प्रसन्नं वक्त्रं यस्य सः, व्रजभुवां अस्मदादीनां दुरन्तमपारं दिने स्वविश्लेषजं तापं मोचयन् त्याजयन् उपयाति एष समीपमायाति। यद्वा इदं श्लोकद्वयं कृष्णपरमेव योज्यम्। तदा मदेन मन्मथेन विघूर्णिते लोचने यस्य सः। द्विरदराजविहारो गजेन्द्रगतिः ॥ २४, २५ ॥

उपसंहरति शुकः — हे राजन्! इत्थं कृष्णस्य लीला अनुगायन्त्यो गोप्यः अहस्स्वपि तस्मिन् चित्तं चेतना जीवितं यासां तस्मिन्नेव मनः सङ्कल्पविकल्परूपं यासां ताः। अत एव महानुदय उत्सवो यासां तथाभूताः रेमिरे॥ २६॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

1- -1. T omits.

**विज०** तदा मलयजस्पर्शेन चन्दनगन्धदानेन कृष्णं मानयन् वायुर्यथानुकूलो भवति तथा मन्दं मन्दं उपवाति वीजयतीत्यन्वयः। किञ्च तदा ये उपदेवगणाः देवसमीपे वर्तमानाः गन्धर्वाः वन्दिनो वन्दमानाः, यद्वा मङ्गलपाठकाश्च वाद्येन गीतेन बलिना उपहारेण च तं कृष्णं परिवव्रुः ॥ २१ ॥

किञ्चिदुत्पन्नो[1-]प्योग ज्ञानं[-1] वदन्ति **वत्सल** इति। व्रजगवां विषये वत्सलः गोष्ठगोषु स्निग्धतमः अगाधः गम्भीरः अन्याऽविज्ञातमहिमा पथि ज्ञानादिवृद्धै र्वन्द्यमानचरणः स्तूयमानपादन्यासः दिनान्ते सन्ध्यायां आसन्नायां कृत्स्नं गोधनं समस्तपशुलक्षणं धनमपोह्य व्यावर्त्य गीतवेणुः गातुमुपक्रान्तवेणुः अनुगैः वयस्यैः उद्धृता मणिपङ्कादुद्धृत्येव प्रकाशिता कीर्तिर्यस्य स तथा ॥ २२ ॥

वनपरिभ्रमणोत्पन्नं श्रममपोह्य निरस्य स्वदृष्टृणां दर्शीनां उत्सवं सुखोत्सवं उद्वहन् खुररजश्छुरितस्रक् गोखुरसमुत्पन्नधूल्या मिश्रिता माला यस्य स तथा। देवक्या जठरमेव भूः व्यक्तिस्थानं यस्य स तथा। उडुराजश्चन्द्रइव, लुप्तोपमेयं, स यद्यदा व्रजमेति तथा एष कृष्णः सुहृदां अनिमित्तबन्धूनां आशिषः इष्टफलानि दित्सया दातुमिच्छयैवेति इत्यन्वयः। चन्द्रोऽपि व्रजगवां अध्वपशूनां पथिकानां वत्सं वर्षं सामर्थ्यात् कामोद्रेकं लाति रातीति वत्सलः, "वत्सो ना कुटजे वर्षे" (वैज.को.6-5-73) इति यादवः। "गोष्ठाध्वनिवहा व्रजाः" (वैज. को. 6-1-54) इति च। अगस्य उदयपर्वतस्य अधः शृङ्गे वर्तमानः उदयस्याधित्यकाशृङ्गं चन्द्रमार्गादूर्ध्वमिति ज्यौतिषिकाः सङ्गिरन्ते। वृद्धैः सप्तर्षिभिः पथि व्योममार्गे दिनान्ते रात्रौ कृत्स्नगोधनं समस्तकलासमेधितचन्द्रिकाख्यधनमपोह्य परिपूर्य गीतवेणुः कविभिः वर्णितस्ववंशः अनुगैः अश्विन्यादिनक्षत्रैः उद्धृतकीर्तिः राश्युपरिकृतगणनः[1] रविकिरणसंसर्गसमुत्पन्नश्रमं निर्धूय, उत्सव मित्युभयत्र समम्। जननसमये क्षीराब्धितीरवालुकासु नववीथिषु विक्रमं कुर्वतः[2] उच्चैःश्रवसः खुररजश्छुरितस्रक् चन्द्रोऽपि[2]॥ २३ ॥

श्रीकृष्णं[3] प्रशस्य बलभद्रप्रशंसया उपसंहरति **मदविघूर्णितेति**। वारुणीपानोत्पन्नमदेन ईषत् विघूर्णितलोचनः विभ्रान्तनेत्रः अन्यत्र घूर्णप्रकाशः। 'लुच प्रकाशे' इति धातुः। चन्द्रः कीदृशः? स्त्रीणां मानदः अभिमानखण्डनः। 'दो अवखण्डने' इति धातुः। वनानां भासां कान्तीनां मालाऽस्यास्तीति वनमाली। बदरश्चन्द्रः तद्वत्पण्डु सुन्दरं वदनं यस्य स तथा। "मानवो बदरः सिन्धुः शशिनस्तु त्रिनामकम्" (स्कान्दे) इति वचनात्। बदरफलवत् रागोपेतं वदनमित्यर्थो न शोभते, पाण्डुशब्दो व्यर्थस्स्यात्। बदरो बृहस्पतिः, पाण्डुः शुक्रः तयोर्वदनमिव वदनं यस्य स तथा चन्द्रः, कनककुण्डललक्ष्म्या मृदु गण्डं मण्डयन् अलङ्कुर्वन् इत्युभयत्र समम् ॥ २४ ॥

दुरन्तं व्रजगवां दिनतापं मोचयन् इत्यपि समम्। द्विरदराजवद् विहारो गमनक्रीडा यस्य स तथा। इदमपि पुरुषलक्षणं समम्। एवंविध एष यदुपतिः बलभद्रः यामिनीपतिश्चन्द्रइव दिनान्ते सायन्तनसमये उदयपर्वतशिखरं व्रजमुपयातीत्यन्वयः। उपयातीति लटा गोपस्त्रीणामेवं नित्यमनुस्मरणं, न कादाचित्कमिति सूचयति ॥ २५ ॥

एवंविधाः कृष्णलीला अनुगायतीः अनुगायन्त्यः अलोपश्छान्दसो, वृत्तभङ्गभयात् वा कृतः।यद्वा, एवं वेणुं विकल्प्य। "नु पृच्छायां विकल्पे च" (अम.को. 3-402) इत्यमरः। महानुदयः सम्पत् यासां ताः महोदयाः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे

टीकायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

(विजयध्वजरीत्या त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

1- -1. M ॰पमेयज्ञानाः 2- -2. Ma कुर्वन्तं उच्चैश्श्रवसम् ॥ २३ ॥ 3. Ma omits श्रीकृष्णं

# षट्त्रिंशोऽध्यायः

## (विजयध्वजरीत्या चतुस्त्रिंशोऽध्यायः)

### -: वृषभासुरवध घट्टः :-

### श्रीशुक उवाच

अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः।
महीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥ १ ॥

[1]रम्भमाणः खरतरं पदा [2]च विलिखन्महीम्।
उद्यम्य पुच्छं [3]वप्राणि विषाणाग्रेण [4]चोद्धरन् ॥

किञ्चित्किञ्चिच्छकृन्[5-]मुञ्चन् मूत्रयन्[-5] स्तब्धलोचनः ॥ २ ॥

यस्य निर्ह्रादितेनाङ्ग! निष्ठुरेण गवां नृणाम्।
पतन्[6-]त्याकालिका[-6] गर्भाः स्रवन्ति स्म भयेन वै ॥ ३ ॥

[7]निविशन्ति घना यस्य ककुद्यचलशङ्कया।
तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ ४ ॥

पशवो [8-]दुद्रुवुर्भीताः राजन् सन्त्यज्य[-8] गोकुलम्।
कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः ॥ ५ ॥

---

1. M,Ma रव° 2. P,V °भ्यां 3 M,Ma अप्राणि 4. P,V चोत्क्षिपन् 5- -5. P,V °न्मूत्रमुत्सृजन् 6- -6. G,J,M,Ma,P,V °न्त्यकालतो 7. G,J,K,M,Ma,P,V निर्वि० 8- -8. P,V °वू राजन् सन्त्यज्य निज°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षट्त्रिंशे नि[1]हतेऽरिष्टे नारदोक्त्या बलाच्युतौ। वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत्॥

गोपीरासान्तरायान्तं शङ्खचूडं निहत्य सः। अहन् गोपी महानन्दाऽसहं दुष्टमरिष्टकम्॥

**अथेति**। एवं देवगन्धर्वादिः नृत्यगीतवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्तमाने तद्विरुद्धार्थान्तराधिकारार्थं अथशब्दः। तर्हि तदा वृषभाकृतिरसुरः, तं वर्णयति महीमित्यादि सार्धत्रयेण। महान्तौ ककुत्कायौ यस्य सः, [2-]खुरैः[-2] [3]क्षिताम् विदारितां महीं कम्पयन् ॥ १ ॥

**रम्भमाण** इति। रम्भमाणः वृषभजातिशब्दं कुर्वन् विलिखन् विदारयन् उद्यम्य ऊर्ध्वं कृत्वा वप्राणि तटानि, उत्क्षिपन्, किञ्चिदिति। किञ्चित्किञ्चित् शकृत् मध्ये मध्ये ईषदीषत् पुरीषं मुञ्चन्। तथा मूत्रयन्[4] मूत्रमुत्सृजन् स्तब्धलोचनः [5-]अनिमिषलोचनः[-5] ॥ २ ॥

**यस्येति**॥ यस्य [6-]ध्वनिना[-6], गवां नारीणां च। तत्र "आचतुर्थाद्भवेत्स्रावः, पातः पञ्चमषष्ठयोः, अत ऊर्ध्वं प्रसूतिस्स्यात्" इति विभागः ॥ ३ ॥

**निर्विशन्तीति**। ककुदि गलपृष्ठशृङ्गे ॥ ४ ॥

**पशव** इति। कृष्णेति। कृष्ण कृष्ण रक्षेति [7-]आधावन्तः[-7] ॥ ५ ॥

---

1. J,V तु 2- -2. J,Va omit 3. P,V omit वि 4, P,V omit मूत्रयन् 5- -5. V omits 6- -6. P,V ध्वनीनाकर्ण्य 7- -7. J,Va omit.

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ वृषभासुरवधात्मकं भगवतः कर्म अनुवर्णयन् नारदमुखात्[1] तदा श्रुतवतः कंसस्य भगवद्धननोद्योगमनुवर्णयति [2-]षट्त्रिंशेन[-2] **अथेत्यादिना**। इत्थं श्रीकृष्णेन व्रजे हर्ष्यमाणे सति तर्हि अथ अरिष्टाख्यो वृषभासुरो गोष्ठं प्रत्यागतः। तं वर्णयति सार्धत्रयेण महीमित्यादिना। महान्तौ ककुत्कायौ यस्य सः, खुरैः नितरां क्षतां विदारितां महीं कम्पयन् ॥ १ ॥

खरतरं यथा तथा रम्भमाणः वृषभजातिशब्दं कुर्वन्, पदा महीं विलिखंश्च, पुच्छमुद्यम्य उन्नमय्य, शृङ्गाग्रेण वप्राणि उन्नतस्थलानि उद्धरन् उत्क्षिपन् मध्ये मध्ये किञ्चित्किञ्चित् शकृत्पुरीषं मुञ्चन् मूत्रं मुञ्चन् स्तब्धे अनिमिषे लोचने यस्य सः ॥ २ ॥

अङ्ग! हे राजन्! यस्याऽरिष्टस्य निष्ठुरेण कठिनेन निर्ह्रदिन[3] गवां नारीणां च गर्भा आकालिकाः अप्राप्तप्रसवकाला अपि भयेन पतन्ति स्रवन्ति च। "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः। अत ऊर्ध्वन्तु नारीणां प्रसवः परिकीर्तितः"॥ ३ ॥

यस्य अरिष्टस्य ककुदि गलपृष्ठे अचलशङ्कया पर्वतशृङ्गभ्रान्त्या मेघा निविशन्ति[4] विपुलककुद्मान् इत्यर्थः। तीक्ष्णशृङ्गं तं अरिष्ट मवलोक्य गोप्यो गोपाश्च तत्रसुः अभिभयुः ॥ ४ ॥

हे राजन्! पशवस्तु भीताः गोकुलं सन्त्यज्य दुद्रुवुः। ते गोपा गोप्यश्च कृष्ण कृष्णेति वदन्तस्तं शरणं [5-]रक्षितारं[-5] प्रापुः ॥ ५ ॥

---

1. K °दस्य मु° 2- -2. T,W omit 3. K °दितेन 4. K निर्वि° 5- -5. T,W omit.

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अरिष्टनामासुरहननलक्षणं विक्रमं देवकार्यसिद्धिकामुकेन नारदेनोद्बोधितस्य असुरजातेः कंसस्य सज्जनोपद्रवोद्योगं च कथयत्यस्मिन्नध्याये। अथ शङ्खचूडवधानन्तरं दैत्यान्तरनिग्रहलक्षणकथाऽऽरभ्यते। शङ्खचूडं निहत्य यदा गोपस्त्रीभिः सह व्रजमागतः श्रीकृष्णस्तर्हि तदा वृषभासुरः वृषभाकारो दैत्यः महान्तौ ककुत् कायश्च यस्य स तथा ॥ १ ॥

रवमाणः रवं कुर्वाणः शकृद्रोमयं, स्तब्धे स्थूणीकृते अतिस्थिरे लोचने यस्य स तथा निर्ह्रादितेन गर्जितेन॥ २॥

मासत्रयादर्वाक् गर्भस्रावः ततः आसन्नमात्पतनं ततः प्रसवः, नृणां मनुष्यस्त्रीणाम् ॥ ३ ॥

अचलशङ्कया पर्वतशङ्कया, तत्रसुः त्रस्ताः भीताः आसन् ॥ ४,५ ॥

भगवानथ[1] तद्वीक्ष्य गोकुलं भयविह्वलम्[2]।
मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ ६ ॥

[3]सबालैः पशुभिर्मन्द त्रासितैः किमसत्तम।
बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ ७ ॥

इत्याऽऽस्फोट्याऽच्युतोऽरिष्टं तलशब्देन कोपयन्।
सख्युरंसे भुजाभोगं प्रसार्याऽवस्थितो हरिः ॥ ८ ॥

सोऽप्येवं कोपितो[4]ऽरिष्टः खुरेणावनिमुल्लिखन्।
उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥

अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम्।
[5]कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥

---

1. G,J,K,T,W °पि 2. G,J,M,Ma विद्रुतम् 3. G,J, गोपालैः; M,Ma सपालैः 4. P,V कु° 5. M कट्या०

श्रीध० [1]इतीति। इत्येवं वदन्। आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन कोपयन् भुजाभोगं भुजा भुजः सैव भोगः [2-]सर्पदिहः[-2] तं सर्पदेहाकारं भुजमित्यर्थः स्वयमच्युतः अन्यान् दुष्टान्, हरतीति हरिः ॥ ६-८ ॥

स इति। उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा [3-]यस्मात्सः[-3] ॥ ९ ॥

अग्रेति। अग्रे न्यस्ते विषाणाग्रे येन सः। स्तब्धे असृक्तुल्ये लोचने यस्य सः। [4-]कटाक्षिप्य[-4] कटाक्षेण तिर्यक् निरीक्ष्य ॥ १० ॥

---

1. P,V omit इतीति 2- -2 J,Va यस्मिन् 3- -3. P,V omit 4- -4. P,V omit.

वीर० अथ भगवान् भयेन विह्वलं तद्गोकुलं अवलोक्य, मा भैष्ट भयं मा कार्ष्टेति गिरा आश्वास्य, सान्त्वयित्वा वृषासुरमुपाह्वयत् आजुहाव ॥ ६ ॥

आह्वानप्रकारमेवाह - सबालैरिति। हे मन्द! सबालैः सवत्सैः पशुभिः किं? तेभ्यो भयजननेन तव किं प्रयोजनमित्यर्थः। हे असत्तम! त्वद्विधानां दुरात्मनां बलं दर्पं च [1]हन्तीति तथाभूतोऽहमवस्थितः ॥ ७ ॥

इतीत्थमाह्वयन् आश्रितार्तिहरः आश्रितान् न च्यावयते न त्यजतीत्यच्युतः। आस्फोट्य करतलेन बाहुमाहत्य तत्शब्देन अरिष्टं कोपयन् कोपयुक्तं कुर्वन् सख्युरंसे स्कन्धे (भुजा) भुज एव भोगः सर्पदेहस्तं प्रसार्याऽवस्थितः ॥ ८ ॥

ततस्सोऽरिष्टोऽपीत्थं कुपितः खुरेण भूमिमुत्क्षिपन् उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्य सः, क्रुद्धस्सन् कृष्णमुपाद्रवत् ॥ ९ ॥

तदेवाह - अग्रे न्यस्ते विषाणाग्रे येन स्तब्धे असृग्लोचने रक्तनेत्रे यस्य, सोऽपि कृष्णं कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्य यथेन्द्रेण मुक्तोऽशनिः [2]वज्रः तद्वत् तूर्णं माद्रवत् [3-]समीपमागात्[-3] ॥ १० ॥

---

1. T,W हरतीति 2. T,W omit वज्रः 3- -3 T,W omit.

विज० हे मन्द! निर्भग्य! ॥ ६,७ ॥

भुजाभोगं आभोगभुजं [1]पुष्टवृत्तभुजम् ॥ ८ ॥

उद्यति पुच्छे भ्रमन्तो मेघा यस्य स तथा ॥ ९ ॥

स्तब्धे निश्चले असृक् रुधिरमिव रक्ते लोचने यस्य स तथा, कटाक्षिप्य कटी स्फिजौ आक्षिप्य निक्षिप्य प्रदर्श्येत्यन्वयः। कटाक्षित्वेति पाठे कटाक्षेण निरीक्ष्येत्यर्थः, अशनिः वज्रम् ॥ १० ॥

---

1. M भूतम्

गृहीत्वा शृङ्गयो[1-]स्तं[-1] वा [2]ह्यष्टादशपदानि सः।
प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥ ११ ॥

सोऽपविद्धो भगवता पुनरुत्थाय स[3]त्वरम्।
[4]आपतत्स्विन्नसर्वाङ्गो निश्वसन् क्रोधमूर्च्छितः ॥ १२ ॥

तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले।
निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥

असृग्वमन् मूत्रशकृत्समुत्सृजन् क्षिपंश्च [5-]पादाननवस्थिते[-5]क्षणः।
जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १४ ॥

॥ नारदबोधितेन कंसेन रामकृष्णाह्वानाय अक्रूरप्रेषणघट्टः ॥

एवं ककुद्मिनं हत्वा स्तूयमानस्स्वजातिभिः।
विवेश [6-]गोष्ठं सबलो[-6] गोपीनां नयनोत्सवः ॥ १५ ॥

---

1- -1. T,W °स्तस्य 2. G,J,M,Ma,P,V अ° 3. G,J,K,M,Ma °रः। 4. K आद्रव°; T,W आद्रव° 5- -5. M,Ma °ननिमीलिते°
6- -6 M,Ma भगवान् गोष्ठं

**श्रीध०** **गृहीत्वेति**। प्रत्यपोवाह प्रतिलोमं व्यनुदत् ॥ ११ ॥

**स** इति। अपविद्धः अपक्षिप्तः आपतत् आद्रवत्।[1] स्विन्नानि स्वेदयुक्तानि सर्वाणि अङ्गानि यस्य सः, क्रोधमूर्च्छितः क्रोधेन व्याप्तः ॥ १२ ॥

**तमिति**। कृत्वा विषाणमुत्पाट्य तेनैव जघान, स च अपतत् ॥ १३ ॥

**असृगिति**। मूत्रशकृत् मूत्रं च शकृच्च एकवद्भावः तदुभयं समुत्सृजन् इत्यर्थः। पादान् क्षिपन् इतस्ततश्चालयन्। अनवस्थितेक्षणः प्रचलितनेत्रः कृच्छ्रं कष्टं जगाम। अथ निर्ऋतेः मृत्योः क्षयं निवासं जगाम, कृच्छ्रं यथा भवति तथा मृत इति वा ॥ १४ ॥

**एवमिति**। नयनोत्सवः नयनानां मूर्तिमान् उत्सवः ॥ १५ ॥

---

1. P,V add आ ईषत्

**वीर०** तदा सोऽच्युतः अरिष्टं शृङ्गयोः गृहीत्वा अष्टादशपदानि प्रत्यपोवाह प्रत्यगमयत् यथा गजः प्रतिगजं तद्वत् ॥ ११ ॥

[1]ततः सोऽरिष्टः भगवता अपविद्धः अवक्षिप्तः प्रतिगमनेन पातितः पुनरुत्थाय सत्वरः स्विन्नानि प्रस्वेदयुक्तानि सर्वाण्यङ्गानि [2-]करचरणादीनि[-2] यस्य सः। क्रोधेन मूर्च्छितः परवशः निश्वसन् श्वासं मुञ्चन् [3]अपि पुनराद्रवत् [4-]कृष्णं[-4] प्रत्याद्रवत्॥ १२॥

स भगवान् पुनरापतन्तं अरिष्टं शृङ्गयोः गृहीत्वा स्वचरणेन समाक्रम्य अवष्टभ्य भूतले निपात्य यथा आर्द्रमम्बरं वस्त्रं तद्वत् [5] निष्पीडयामास। ततः कृत्वा 'कृती छेदने' उत्पाट्य, विषाणमिति शेषः। तेन विषाणेन जघान ताडयामास। स च ताडितोऽरिष्टः अपतत् ॥ १३ ॥

मूत्रं शकृच्च तयोः समाहारः। तदुत्सृजन् असृग् रुधिरं वमन् उद्गिरन् पादान् क्षिपन्नितस्ततश्चालयन् अनवस्थितेक्षणः प्रचलितनेत्रः, कृच्छ्रं कष्टं प्राणोत्क्रमणात्मकं जगाम। अथ निर्ऋते मृत्योः क्षयं निवासं जगाम। ततस्सुरा अपि पुष्पैः किरन्तो हरिं तुष्टुवुः ॥ १४ ॥

इत्थं ककुद्मिनं अरिष्टं हत्वा भगवान् स्वजातिभिः गोपैः स्तूयमानः गोपानां नयनानां मूर्तिमान् उत्सवः सरामो गोष्ठं विवेश ॥ १५ ॥

---

1. T,W omit ततः 2- -2. T,W omit 3. T,W omit अपि 4- -4. T,W omit 5. T,W add निपीड्य

विज० प्रत्यपोवाह प्रत्यपातयत्। अभ्याकृष्य पृष्ठतोऽपनीतवानित्यर्थः, तिर्यङ् नीतवान् वा ॥ ११, १२ ॥

अम्बरं वस्त्रं कृत्त्वा उत्कृत्य, विषाणमिति शेषः, तेन विषाणेन ॥ १३ ॥

मूत्रशकृती अनिमीलितेक्षणः विवृतनेत्रः निर्गता ऋतिर्यस्मात्स तथा निर्ऋतिर्यमः तस्य क्षयं गृहं यमलोकमित्यर्थः ॥ १४ ॥

ककुद्मिनं वृषासुरं स्वजातिभिः गोपै ·र्दैवै र्वा ॥ १५ ॥

**अरिष्टे निहते [1]गोष्ठे कृष्णेनाद्भुतकर्मणा।**
**[2-]कंसाय प्राह[-2] भगवान् नारदो देवदर्शनः ॥ १६ ॥**

**यशोदायास्सुतां कन्यां देवक्याः कृष्णमेव च।**
**रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता।**
**न्यस्तौ स्वमित्रे [3-]नन्दे वै[-3] याभ्यां ते पुरुषा हताः ॥ १७ ॥**

**[4]निशम्य तद्भोजपतिः कोपात्प्रचलितेन्द्रियः।**
**निशातमसिमादत्त वसुदेवजिघांसया ॥ १८ ॥**

निवारितो नारदेन तत्सुतौ मृत्युमात्मनः[5]।
ज्ञात्वा लोहमयैः पाशैः बबन्ध सह भार्यया ॥ १९ ॥

प्रतियाते तु देवर्षौ कंस आहूय[6] केशिनम्।
प्रेषयामास हन्येतां भवता रामकेशवौ[7] ॥ २० ॥

---

1 G,J दैत्ये 2- -2. G,J,T,W °याऽथाह 3- -3. K,T,W नन्देऽस्मिन् 4. K,T,W °म्यैत° 5. K,T,W हन्तु° 6. G,J आभाष्य; M,Ma आशास्य 7. P,V माधवौ

**श्रीध०**★ कामं व्रजे वसन्तं तं कृष्णं तेन तु विस्मृतम्। नारदः स्मारयामास कंसं दूतगिरेव तु॥ तदाह - **अरिष्ट** इति। देवदर्शनः देवर्षिः, यद्वा एवं [1-]कथिते[-1] एवं भविष्यतीति साक्षात् [2]देवदर्शनं यस्य सः ॥ १६ ॥

आप्तेनैव नारदेनोक्तमाह - **यशोदाया** इति। देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह- यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं च देवक्याः सुतमाह; रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाह। यद्वा नन्दसुतत्वेन प्रसिद्धं रामं च वसुदेवभार्यायाः रोहिण्याः पुत्रमाह - तौ वसुदेवसुतौ चेत् कथं व्रजं गतौ तत्राऽऽह - वसुदेवेनेति ॥ १७॥

[3-]**निशाम्येति**। तत् नारदोक्तं वाक्यं, निशातं तीक्ष्णं असिं चन्द्रहासम्[-3] ॥ १८ ॥

**निवारित** इति। हते वसुदेवे तौ पलायेतां [4-]अतो न वध्यतामपि[-4] तु बध्यतामिति मन्त्रं वदता नारदेन निवारित इति ॥ १९,२० ॥

---

★ श्रीधरीयोऽयं श्लोकः 1- -1. P एवं कृते; V कृते 2 P,V देवद° 3- -3. It is not found in J & Va Edns. 4- -4. J,Va omit.

**वीर०** इत्थं गोष्ठे अद्भुतकर्मणा कृष्णेनाऽरिष्टे हते सति देवदर्शनो देवर्षिः नारदः यद्वा एवं कथिते एवं भविष्यतीति साक्षाद्देवचेष्टिताभिज्ञः कंसालयं गतस्तं प्राह ॥ १६ ॥

किमाहेत्यत्राह - **यशोदाया** इति। देवक्याः कन्यां अष्टमगर्भत्वेन प्रसिद्धां यशोदायास्सुतामाह। तथा यशोदायाः पुत्रत्वेन प्रसिद्धं कृष्णं देवक्या अष्टमं गर्भमाह। तथा रोहिणीपुत्रत्वेन प्रसिद्धं रामं च देवक्याः सप्तमं गर्भमाहेति सम्बन्धः। देवकीसुतौ चेत् कथं व्रजं गतौ, तत्राऽऽह - वसुदेवेन त्वत्तः[1] बिभ्यता स्वमित्रे नन्दे न्यस्तौ न्यासरूपेण निहितौ। याभ्यां रामकृष्णाभ्यां तव पुरुषा भृत्या अरिष्टादयो हताः। वसुदेवे हते तु तौ पलायेताम्। अतस्स न वध्य इत्यर्थतोऽत्र द्रष्टव्यम् ॥ १७ ॥

तन्नारदोक्तं निशम्याऽऽकर्ण्य भोजपतिः कंसः कोपात् प्रचलितानि इन्द्रियाणि यस्य सः, वसुदेवं हन्तुमिच्छया तीक्ष्णं खड्ग माददे ॥ १८ ॥

ततो नारदेन निवारितः तस्य वसुदेवस्य सुतमेवाऽऽत्मनः स्वस्य मृत्युं हन्तारं ज्ञात्वा, नारदोपदेशादिति शेषः। लोहमयैः पाशैः भार्यया देवक्या सह वसुदेवं बबन्ध ॥ १९ ॥

ततो नारदे गते सति कंसः केशिनं नाम [2]राक्षसम् आहूय प्रेषयामास। किमिति ? भवता रामकेशवौ हन्येतामिति॥ २० ॥

1. T,W कंसात् 2. K दैत्यम्

विज० देवो नारायणः तद्विषयं दर्शनं ज्ञानं यस्य स तथा, यद्वा देवं दर्शयति इति। यद्वा देवानामिव दर्शनं यस्य अतीन्द्रियत्वात् स तथा। देवानां यद्दर्शनं मतं तदेव यस्य दर्शनं स तथेति वा, यथा कंसहननं शीघ्रतमं स्यात् तथाऽऽहेति द्योतनार्थः, प्रेत्युपसर्गः। अनेन देवकार्यमेव नारदेन साध्यते नत्वसुरकार्यमिति ज्ञायते ॥ १६ ॥

किमाहेति, तत्राह - यशोदाया इति। कन्यां दुर्गां यशोदायाः सुतां, कृष्णं देवक्याः पुत्रं, रामं बलभद्रं रोहिणीपुत्रमाह। वसुदेवेन तौ किं कृतावत्तत्राह - बिभ्यता, त्वदिति शेषः ॥ १७ ॥

स्वस्य मित्रे विश्वसनीये सुहृदि, याभ्यां कृष्णरामाभ्यां, ते तव पुरुषाः नियोगकारिणः ॥१८ ॥

निशातं निशितं तेजितमित्यर्थः ॥ १९ ॥

आशास्य सम्यक् शिक्षित्वा भवता मद्भृत्येषु पूज्येन ॥ २० ॥

ततो मुष्टिकचाणूर[1]च्छ[2]लतोसलकादिकान्।
अमात्यान् हस्तिपांश्चैव समाहूयाऽऽह भोजराट् ॥ २१ ॥

भो भो निशम्यतामेतद्वीर[3-]चाणूर! मुष्टिक[-3]!।
नन्दव्रजे किलाऽऽसाते सुतावानकदुन्दुभेः ॥ २२ ॥

रामकृष्णौ [4]तु तौ मह्यं [5-]मृत्यू [-5]कालनिदर्शि[6]तौ।
भवद्भ्यामिह संप्राप्तौ हन्येतां मल्लुलीलया ॥ २३ ॥

मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः।
[7]पौरजानपदास्सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २४ ॥

1. G,J,M,Ma श॰ 2. G,J,M,Ma श॰ 3- -3 G,J ॰चाणूरमुष्टिकौ। T,W ॰चाणूरमुष्टिकाः। 4. G,J,P,V ततो; M,Ma सुतौ 5- -5. G,J मृत्युः किल; P,V मृत्यू किल 6. G,J ॰तः। 7. G,J ॰राः

**श्रीध०** **रामकृष्णाविति।** महयं मम निदर्शितौ धात्रा नारदेन वा, व्रजं गन्तुं उद्यतौ तावाह भवद्भ्यामिति॥ २१, २३॥

**मञ्चा** इति। मञ्चा उत्तुङ्गस्तम्भादिरचितस्थानानि ॥ २४-५६ ॥

**वीर०** ततो मुष्टिकादीन् अमात्यांश्च हस्तिपांश्च सामोक्त्या आहूयोवाच ॥ २१ ॥

उक्तिमेवाह - **भो भो** इत्यादिभिः पञ्चभिः। भो भो इति द्विर्वचनं प्रत्येकाभिप्रायकम्। वीरचाणूरेति कर्मधारयः। आनकदुन्दुभेः वसुदेवस्य सुतौ रामकृष्णौ नन्दव्रजे वर्तेते खलु ॥ २२ ॥

तौ तु मम मृत्यू हन्तारौ, कालेन दैवेन[1], निदर्शितौ ज्ञापितौ। अतः कथञ्चित् उपायेन इहाऽऽनीतौ भवद्भ्यां मल्ललीलया हन्येतां[2] हन्तव्यौ ॥ २३ ॥

मञ्चा उत्तुङ्गस्तम्भादिरचितस्थानानि[3] क्रियन्ताम्। कथम्भूताः? मल्लरङ्गपरिश्रिताः मल्लयुद्धस्थानपर्यन्तस्थानविशिष्टाः। किमर्थं, तत्राऽऽह - पौराः पुरवासिनो, जानपदा देशवासिनश्च सर्वे मञ्चेषूपविश्य स्वैरं यथेष्टं संयुगं युद्धं पश्यन्तु ॥ २४ ॥

---

1. K दे० 2. T,W omit हन्येतां 3. T,W नाः

**विज०** मृत्यू मारकौ कालेन यमेन नितरां दर्शितौ ॥ २१-२३ ॥

मञ्चाः उत्तुङ्गस्तम्भादिरचितस्थानानि मल्लरङ्गस्य परितः सर्वासु दिक्षु श्रिताः स्थिताः स्वैरसंयुगं योधाकांक्षापूर्वकं युद्धम् ॥ २४ ॥

***महामात्र निबोधेदं वचो मम महामते।**
**गजः कुवलयापीडः प्रभिन्न[1]करभामुखः ॥ २५ ॥**

**संस्थाप्यो द्वारि रङ्गस्य करारोपितमुद्गरः।**
**तेन तौ तत्र हन्तव्यौ सुतावानकदुन्दुभेः ॥ २६ ॥**

***अथ सोऽपि महामात्रः प्राह व्याकुलमानसः।**
**कथं मया निहन्तव्यं स्वस्रीयौ पृथिवीपतेः ॥ २७ ॥**

**[2-]महामात्रेणैवमुक्तः कंसस्तत्रैव दुर्मतिः[-2]।**
**उवाच भूयो वचनं समेतान् [3-]श्रावयन्नृपः[-3] ॥ २८ ॥**

## कंस उवाच

शृणुध्व मेतद्वचनं मयोदितं निशम्य सर्वं[4] हृदि[5] धारयन्तु तत्।
येनाहमेतेष्वसुहृत्त्वमादितश्चरामि बन्धुष्वपि तत्र[6] कारणम् ॥ २९ ॥

माता मम महाभागा कदाचित्कमलेक्षणा।
विचरन्ती[7] गृहोद्याने मन्दमारुतवीजिते ॥ ३० ॥

---

★ 'महामात्र निबोधेदं' इति श्लोके नारब्धः 'महामात्र त्वया भद्र' इति श्लोकपर्यन्तः (31 श्लोकाः) ग्रन्थभागः G,J प्रकाशयोर्नास्ति। तथा उपरिनिर्दिष्टश्लोकानां श्रीधरीयव्याख्या नास्ति। 1. M,Ma कस्टा; P,V कटका * M,Ma Read this सोऽप्याकुलमतिः प्राह निहन्तव्यौ कथं मया। स्वस्रीयौ भोजराजस्य कंसस्य जगतीपतेः। 2- -2. M,Ma इत्युक्तस्तेन कंसस्तु महामात्रेण दुर्मतिः।; P,V इत्युक्त्वा तं महामात्रं कंसस्तत्रैव दुर्मतिः। 3- -3 M,Ma श्रावयन्नृप।; P,V ज्ञापयन्नृप। 4. M,Ma °र्वे 5. P,V यदि 6. K,M,Ma तस्य 7. M,Ma विचचार

**श्रीध०** 'महामात्र निबोधेद' मिति श्लोकेनारब्धस्य 'महामात्र त्वया भद्र' इति श्लोकपर्यन्तस्य ग्रन्थभागस्य श्रीधरीय व्याख्या न विद्यते।

. **वीर०** हे महामात्र! हास्तिपक[1]! तस्यैव सम्बोधनम्। महामते! इति इदं वक्ष्यमाणं मम वचः शृणु। कुवलयापीडाख्यो द्विपो गजी रङ्गस्य युद्धस्थानस्य द्वारि संस्थाप्यः। कथम्भूतः? प्रभिन्ने विकसिताग्रे करे भाः कान्तिर्यस्य तन्मुखं यस्य, करे आरोपितो ग्राहितो मुद्गरो यस्य सः। तेन कुवलयापीडेन तावानकदुन्दुभेः सुतौ तत्रैव द्वार्येव हन्तव्यौ ॥ २५-२६ ॥

अथ सः महामात्रः व्याकुलचित्तः प्राह -किमिति। पृथिवीपतेः भोजराजस्य कंसस्य तव भगिनीपुत्रौ रामकृष्णौ कथं मया हन्तव्याविति। अयोग्यतासूचनाय स्वस्रीयावित्याद्युक्तिः ॥ २७ ॥

तेन महामात्रेणेत्थमुक्तः स कंसो दुर्मतिः नृपः समुदितान् सर्वान् श्रावयन् पुनराह ॥ २८ ॥

कंसवचनमेवाह - "शृणुध्वमित्यादिना, भूतराजाय मीढुषे" इत्यन्तेन। एतद्वक्ष्यमाणं[2] वचनं शृणुध्वमिति श्रवणाभिमुख्य प्रार्थना। मयोदितमाकर्ण्य तत्सर्वे भवन्तो हृदि धारयन्त्विति श्रुतस्य चित्ते स्थिरीकरणप्रार्थना। किं तत्? इत्यपेक्षायां तावदात्मनो बन्धुषु विद्वेषकारणपरमितिहासं प्रतिजानीते येनेति। येन हेतुना अहं बन्धुषु असुहृत्त्वं विद्वेषमाश्रितः तेष्वेव चरामि तस्य विद्वेषपूर्वकचरणस्य कारणं ब्रवीमीति शेषः ॥ २९ ॥

तत्परमितिहासमाह - **मातेत्यादिना**। महाभागा सून्दरी भाग्यशालिनी वा, मम माता महत्युद्याने वने कदाचिद्विचरन्ती बभूव। कथम्भूते वने? मन्देन मारुतेन वीजिते सञ्चलिते ॥ ३० ॥

---

1. T ह° 2. T,W omit वक्ष्यमाणं

विज० हे महामात्र! हस्तिप! कुवलयं भूमण्डलम् आपीडयतीति, कुवलयं कैरवं आपीडे शेखरे यस्य स तथेति, प्रभिन्नकरटामुखः मदस्राविगण्डमुखः ॥ २५ ॥

मुद्गरो लोहदण्डः ॥ २६ ॥

जगतीपतेः राजप्रधानलोकभर्तुः "जगती राजप्रधानलोकेऽपि" (हला.को. 5-8) इति हलायुधः ॥ २७-३० ॥

प्रोत्फुल्लाशोकवकुलपूगपुन्नागशोभिते।
भ्रमद्[1]भ्रमरसंघाते कूजत्कोकिलसं[2]युते ॥ ३१ ॥

नृत्यच्छिखण्डिनिवहे[3] मर्कटाटोपसुन्दरे।
वसन्तसमये रम्ये सालमण्डलमण्डिते ॥ ३२ ॥

चरन्ती तत्र मे माता चिन्तयामास सुव्रता।
भर्तारं कामसन्तप्ता ऋतुस्नाता स्वलङ्कृता ॥ ३३ ॥

तदै[4]व कश्चिद्गन्धर्वो द्रुमि[5]लो नाम नामतः।
चरन्नन्तर्हितः काले दृष्ट्वा तामेकचारिणीम् ॥ ३४ ॥

विज्ञाय चिन्तितं तस्यास्सर्वस[6]त्त्वाशयार्थवित्।
[7]उग्रसेनवपुर्बि[8]भ्रत्सस्मितालापवीक्षितम् ॥ ३५ ॥

तामाससाद कामा[9]र्तः कामया[10]ना पतिव्रताम्।
अंजानमाना साऽभ्येत्य रेमे तेन समं वने ॥ ३६ ॥

---

1. P,V °त° 2. K,M,Ma सङ्कुले 3. K,T,W °ह° 4. M,Ma तत्रैव; P,V अत्रैव 5. P,V °डो 6. K,T,W त° 7. K,T,W औग्रसेनं 8. P,V °तः। 9. P,V °र्ता 10. P,V °नः

वीर० प्रोत्फुल्लैः अशोकादिभिः शो[1]भिते भ्रमतां भ्रमराणां सङ्घातः सङ्घो यस्मिन् कूजद्भिः कोकिलैः स[2]ङ्कुले व्याप्ते ॥ ३१ ॥

नृत्यतां शिखण्डिनां मयूराणां निवहः सङ्घो यस्मिन्, मर्कटानां आटोपेन सम्भ्रमेण सुन्दरे वसन्तकालसहचरिते रम्ये सालानां वृक्षाणां मण्डलेन मण्डिते ॥ ३२ ॥

तत्रैवम्भूते म[3]होद्याने चरन्ती सुव्रता पतिव्रता ऋतुस्नाता स्वलङ्कृता च मम माता भर्तारं चिन्तयामास ॥ ३३ ॥

तदैव कश्चित् नाम्ना द्रमिल इति प्रसिद्धः गन्धर्वः इतरैरलक्ष्यमाणश्चरन् तां मम मातरमसहायचारिणीं दृष्ट्वा तस्याश्चिन्तितं विज्ञाय सर्वेषां तत्त्वतो अभिप्रेतमर्थं वेत्तीति तथाभूतः, हेतुगर्भमिदं, तत्त्वाद्विज्ञाय सस्मिते आलापवीक्षिते यस्य तत्, औग्रसेनं उग्रसेनसदृशं वपुः बिभ्राणः कामार्तः तां पतिव्रतां कामयानाम् इच्छानुरूपं वने चरन्तीम्, आससाद, सस्मितालापवीक्षितमिति क्रियाविशेषणं वा। सा त्वजानन्ती अभ्येत्य वने[4] तेन सह रेमे ॥ ३४-३६ ॥

---

1. T,W omit शोभिते 2. T,W omit सङ्कुले 3. K गृहे° 4. T,W omit वने

**विज०** सालानां सर्जानां मण्डलेन समूहेनाऽलङ्कृते ॥ ३१-३३ ॥

नाम प्रसिद्धः ॥ ३४ ॥

सर्वेषां सत्त्वानां प्राणिनां आशयार्थं अभिप्रेतार्थं वेत्तीति सर्वसत्त्वाशयार्थवित् ॥ ३५, ३६ ॥

**सा तं विदित्वा रमणेतरं सती नितान्तखेदाविललोचनाशया।**
**उवाच कस्त्वं कितवाऽऽर्यगर्हितं दुरात्मना येन कृतं त्वयेदृशम् ॥ ३७ ॥**

**इति ब्रुवन्तीं परिसान्त्वयन् शनैः स दीर्घबाहुर्द्रमिलो[1]ऽभ्यभाषत।**
**वयं हि गन्धर्वकुलोद्भवाः[2] प्रिये! गीर्वाणतुल्यामरवल्लभानुगाः ॥ ३८ ॥**

**भवादृशीनां मनुजाङ्गनानां[3] जानीहि भद्रे सुलभा वयं न च।**
**[4]जराविनाशाद्यखिलाऽऽधिभागिनां नृणां सुराणाम्महदन्तरं शुभे[5] ॥ ३९ ॥**

**इति ब्रुवन्तं सा भूयः [6-]प्राह क्रोधाकु[-6]लेन्द्रिया।**
**किं मां सान्त्वयसे भूयः कृत्वेत्थं[7] दुष्टचेष्टितम् ॥ ४० ॥**

---

1 P,V °डो 2. P,V वाऽबले! 3. K,T,W °जाश° 4. K,T,W जनुर्वि° 5. M,Ma प्रिये 6- -6 P,V क्रोधपर्या° 7 T,W °दं

**वीर०** [1-]ततः सा[-1] इङ्गिताभिः कथञ्चित् पत्युरन्यं विदित्वा सती पतिव्रता हेतुगर्भमिदं, अतो नितान्तः अपारः खेदो यस्याः, आविले व्याकुले लोचने आशयो मनश्च यस्याः तथाभूता प्राह[2] हे कितव! धूर्त! येन दुरात्मना त्वयेदृशं [3]इत्थं आर्यैः गर्हितं निन्दितं कृतं स त्वं कः? ॥ ३७ ॥

इतीत्थं ब्रुवन्तीं तां शनैः परिसान्त्वयन् स दीर्घबाहुः[4] द्रमिलः प्राह -- तदेवाह - वयमिति। वयं तावत् गन्धर्वदेहजाः गन्धर्वाः गीर्वाणैः देवैः तुल्याः अमरवल्लभस्य इन्द्रस्य अनुचराश्च। तुल्यामरेत्यत्र सन्धिरार्षः, कर्मधारयो वा॥ ३८॥

हे भद्रे! वयं भवादृशीनां मनुजाशनानां मनुजोपभोग्यानां मानुषीणामिति यावत्। न च सुलभाः किन्तु दुर्लभाः वयमित्यर्थः। तत्र हेतुमाह - जनुरिति। जनुर्विनाशौ जन्ममरणे आदी येषां तानाधीन् मनःपीडाः, इदं व्याधीनामप्युपलक्षणं, तान् भजन्तीति तथा, तेषां नृणां तद्विपरीतानां सुराणां च महत्तारतम्यमस्ति, तस्माद्वयं दुर्लभा इत्यर्थः ॥ ३९ ॥

इत्थं ब्रुवन्तं द्रमिलं प्रति सा क्रोधादाकुलानीन्द्रियाणि यस्याः सा पुनः प्राह, तदेवाह - किमिति? इत्थं दुष्टचेष्टितं कृत्वा भूयः किमर्थं मां सान्त्वयसे ॥ ४० ॥

---

1- -1. T,W तत् 2. K adds किमिति? 3. T,W omit इत्थं 4. T,W omit इन्द्रस्य

**विज०** नितान्तखेदेन अतिमात्रव्यथया आविलौ सङ्कुलौ लोचनाशयौ यस्याः सा तथा ॥ ३७ ॥

गीर्वाणतुल्याश्चामरवल्लभानुगाश्च। अमरवल्लभ इन्द्रः ॥ ३८ ॥

जरा च विनाशश्च जराविनाशौ तौ आदी येषां अखिलानां आधीनां ते जराविनाशाद्यखिलाधयः तान् भजितुं शीलमेषामस्तीति जराविनाशाद्यखिलाधिभागिनः, तेषां महदन्तरं विशेषः ॥ ३९ ॥

अस्तु विशेषः ततः किं दोषः स्यादिति धिया वक्ति **इतीति** ॥ ४० ॥

**इमानतिक्रम्य [1-]महीजलाग्निसमीरणाकाशनिशेशसूर्यान्[-1]।**
**दिक्काल[2-]धर्मांश्च उभे च सन्ध्ये[-2] दुरात्मनेत्थं मलिनीकृताऽहम् ॥ ४१ ॥**

**गजेनेव मदान्धेन पद्मिनी वनमध्यगा।**
**विशृङ्खलेन विमला येनाऽहं मलिनीकृता ॥ ४२ ॥**

**स त्वं किमिति मां भूयः[3] सान्त्वयस्यमराधम।**
**इति ब्रुवन्तीं प्रोवाच सभयः शापशङ्कितः ॥ ४३ ॥**

**[4-]अनुलोमस्तु[-4] कंजाक्षि मनुष्यासु दिवौकसाम्।**
**नराणां देवकान्तासु प्रतिलोमो हि सङ्गमः ॥ ४४ ॥**

**जानीहि [5-]ममनागस्कं[6] तेन[-5] पङ्कजगन्धिनि।**
**तस्मात्ते जायतां पुत्रो मद्वीर्यं न वृथा भवेत् ॥**
**श्रीमान् धीमान् महोत्साहो न मे वाग्जायते मृषा ॥ ४५ ॥**

**इत्येवं वादिनं क्रुद्धा[7] मम माता यशस्विनी।**
**प्राह सन्त्यज्य सन्तप्ता पातिव्रत्यं सुदुर्लभम् ॥ ४६ ॥**

---

1- -1. M,Ma जलाग्निमेदिनीं 2- -2. M,Ma धर्मानवधार्य येन; P,V धर्मांश्च तथैव सन्ध्ये 3. M,Ma स भूयः 4- -4 M,Ma स्त्यरोजाक्षि 5- -5. M,Ma नाऽहमागस्कृत्तेन; P,V मामनागस्कृत्ते हि 6. M,Ma °ते 7. V संशप्ता

**वीर०** इमान् जलादीन् द्वादशपुण्यपापसाक्षिणः अतिक्रम्याऽवधीर्य तिरस्कृत्य च येन त्वयेत्थमहं मलिनीकृता। निशेशः चन्द्रः ॥ ४१ ॥

यथा मदान्धेन गजेन्द्रेण पद्मिनी, तद्वत् वनमध्यस्था निर्मला च अहं विशृङ्खलेन लोकवेदमर्यादातिलङ्घिना येन त्वया मलिनीकृता ॥ ४२ ॥

स त्वं मां मलिनीकृतां हे अमराधम! किमिति सान्त्वयसे, इत्थं ब्रुवन्तीं तां स पुनः शापशङ्कितः प्रोवाच॥ ४३॥

तदेवाह - **अनुलोम** इति। हे सरोजाक्षि! मनुष्यासु दिवौकसां सङ्गमोऽनुलोमः क्रमप्राप्तः, न्याय्य एवेति भावः, देवकान्तासु नराणां तु सङ्गमः[1] प्रतिलोमः, अन्याय्य इति जानीहि ॥ ४४ ॥

तेन कारणेन हे पङ्कजगन्धिनि! नाऽहमपराधकृत्। किञ्च, तस्मादनुलोमात् सङ्गमात् श्रीमान् धीमान् महोत्साहश्च पुत्रो जायताम्। सर्वथा मद्वीर्यं [2-]न वृथा[-2] भवेत्, नापि मे वाङ्मृषा भवेत् ॥ ४५ ॥

इत्थंवादिनं प्रति क्रुद्धा मम माता सुदुर्लभं पातिव्रत्यं सन्त्यज्य अत एव सन्तप्ता परितप्ता तं[3] प्राह ॥ ४६॥

---

1. T,W omit सङ्गमः 2- -2. T,W अन्यथा न 3. T,W omit

**विज०** ननु कथमेतद्दुष्टचेष्टितं किमप्यतिक्रम्य करणाद्दोष्यत्वादिति तत्राह -**इमानिति**। अवधीर्य अवज्ञाय ॥ ४१॥

मलिनत्वं सदृष्टान्तमाह - **गजेनेति** ॥ ४२॥

अमरैः अधमः गर्हितः "अधमौ गर्हितन्यूनौ" (वैज.को. 7-4-1) इति च देवयोनिषु नीच इति वा। मया कृतस्य कर्मणः सावद्यत्वे जलाम्यतिक्रमेण दोषापादनं स्यात् देवयोनित्वेन मम त्वत्संङ्गमोऽनुकूल एव विहितत्वादिति छलाभिसन्धिराह इतीति ॥ ४३ ॥

दिवौकसां देवानां मनुष्यासु स्त्रीषु सङ्गमोऽनुलोमोऽनुकूलः। मनुष्याणां देवस्त्रीषु सङ्गमः प्रतिलोमो विरुद्धः, शन्तन्वादीनां गङ्गादिषु सङ्गमो दृष्टचरः; अतः कथमेतदिति मन्दाशङ्कां पूर्वावस्थामपेक्ष्य दोषशङ्का नास्तीति हिशब्देन परिहरति ॥ ४४-४६॥

**निस्सेतोर्भिन्नवृत्तस्य पापस्योन्मा[1]र्गवर्तिनः।**
**क्रूरस्ते तनयो भूयात्साह[2-]सादिगुणोऽगु[-2]णः।**
**नाऽनुग्राह्यो देवतानां द्विजानां च तपस्विनाम् ॥ ४७ ॥**

**इत्थं वदन्त्यां तस्यां सः क्रुद्धायां शापशङ्कितः।**
**तावकानां भवेच्छत्रुरित्युक्त्वाऽन्तरधीयत ॥ ४८ ॥**

**गते तस्मिन् [3]गृहोद्यानान्माता मम [4]यशस्विनी।**
**केनाप्यज्ञातवृत्तान्ता गृहानेवाऽभ्यपद्यत ॥ ४९ ॥**

---

1. P,V °न्माद° 2- -2 M,Ma °सी निर्दयोऽघृणः; P,V °सी निर्गुणोदयः। 3. M,Ma म° 4 M,Ma तप°

**वीर०** तदेवाह - **निस्सेतोरिति**। मर्यादातिलङ्घिनः भिन्नं निरस्तं वृत्तं सदाचारो येन तस्य पापात्मनः लोकवेदप्रतिषिद्धाचार-वर्तिनः, तव जनिष्यमाणः तनयः क्रौर्यादिगुणको भूयात् अगुणः, अक्रोधाद्यात्मगुणरहितः देवतानां तपस्विनां [1]द्विजानां निग्राह्यः॥ ४७॥

इतीत्थं तस्यां मन्मातरि ब्रुवत्यां क्रुद्धायां च सत्यां स द्रमिलः शापशङ्कितः मह्यमियं शपेतेति शङ्कितः, तर्हि तावकानां त्वद्बन्धूनामेव शत्रुः भवेदित्युक्त्वाऽन्तर्हितवान् ॥ ४८ ॥

तस्मिन् द्रमिले[2] [3]गृहोद्यानात् गते सति मम माता गृहोद्याने केनाप्यज्ञातः स्ववृत्तान्तो यस्यास्तथाभूता गृहानेव अभ्यपद्यत ॥ ४९ ॥

---

1. T,W omit द्विजानां 2 K adds तस्मात् 3. T,W म°

**विज०** निस्सेतोरित्यस्य विवरणं भिन्नवृत्तस्येति, वृत्तं चरितं अस्य विवरणं उन्मार्गवर्तिन इति, निर्दयः निर्गता करुणा यस्मात्स तथा अघृणः अकृत्यजुगुप्सारहितः "घृणा जुगुप्साकृपयोः" (वैज.को. 6-2-12) इति च। 'दय दान गति शोषणादिषु' इति धातोः यजनादिधर्मशून्यः, घृणा कृपा तया रहितः। तावकानां, देवानामिति शेषः ॥ ४७-४९ ॥

**ततस्सा [1-]गर्भिणी काले[-1] कालेनैव सुषाव माम्।**
**इति मे नारदः प्राह कदाचिद्भगवानृषिः ॥ ५० ॥**

**[2]ततः प्रभृत्यहं [3]द्वेष्मि तानेतान् बन्धुदुर्जनान्।**
**यूयं [4]तत्र प्रमाणं हि [5]द्विषन्ते तेऽपि मां सदा ॥ ५१ ॥**

**उग्रसेनं च [6-]दुर्बुद्धिं देवकं[-6] च दुराशयम्।**
**वसुदेवं च कितव मन्यांश्च तदुपाश्रयान् ॥ ५२ ॥**

हत्वा न जायते दोषो[7] मम गन्धर्वजन्मनः।
तेनाऽऽदेक्ष्यामि परुषं हन्येतामिति तावहम् ॥ ५३ ॥

ताभ्यां हताभ्यां[8] बालाभ्यां कुञ्जरेण बलीयसा।
कृत्वा पारत्रिकीं पूजां यान्तु तत्पदवीमिमे ॥ ५४ ॥

---

1- -1. M,Ma गर्भमालम्ब्य 2. P,V तदा 3. M,Ma वेधि 4. K,T,W अत्र 5. M,Ma °न्त्येतेऽपि 6- -6. M,Ma °द्विमाहुकं 7. Ma पु° 8- -8. P,V भद्रात्मिकीं

**वीर०** ततस्सा गर्भं धृत्वा प्रसवकालेनैव मां सुषाव प्रसूतवती। कथम् अयं वृत्तान्त स्त्वया विज्ञात इत्यत्राह - इतीति ॥ ५० ॥

यदा नारद आह तत आरभ्य अहं बन्धुषु तांस्तान् दुर्जनान् मत्प्रतिकूलान् द्वेष्मि, ऐतेऽपि मां सदा द्विषन्ति। तत्र यूयं प्रमाणं खलु, भवन्तो जानन्ति खल्वित्यर्थः ॥ ५१,५२ ॥

अत उग्रसेनादीन् हत्वा वर्तमानस्यापि मम दोषो न जायते, तत्र हेतुः - [1-]गन्धर्वजन्मन इति।[-1] [2-]गन्धर्वजन्मनः[-2] गन्धर्वात्, न तु उग्रसेनाज्जन्म उत्पत्तिर्यस्य तस्य ममेति, यतो न दोषस्तेन कारणेनाऽहं आदेक्ष्यामि आज्ञापयामि। किमिति? तौ रामकृष्णौ परुषं यथा तथा हन्येतामिति ॥ ५३ ॥

तावद्बलीयसा कुञ्जरेण कुवलयापीडेन हताभ्यां बालाभ्यां रामकृष्णाभ्यां पूजोपकरणभूताभ्यां पारत्रिकीं परलोकस्थ - वैवस्वताद्युद्देश्यकपूजां कृत्वा इमे वसुदेवादयोऽपि तयोः पदवीं यान्तु। तयोः तावल्लोकान्तरप्राप्तिरेव, वसुदेवादिभिः परत्र कर्तव्या पूजेति भावः ॥ ५४ ॥

---

1- -1. T,W omit 2- -2. K omits

**विज०** बन्धुषु दुर्जनान् बन्धुभूतान् दुर्जनान् वा ॥ ५०-५१ ॥

के ते इति तत्राह - उग्रसेन **मिति** ॥ ५२ ॥

कुतः पितृहत्यादिदोषो नास्तीति तत्राह - ममेति ॥ ५३,५४ ॥

वसुदेवोग्रसेनौ च [1-]तथा तौ[-1] नन्ददेवकौ[2]।
गोपाला यादवाश्चैव येचाऽन्ये ता ननुव्रताः ॥ ५५ ॥

पश्यन्तु निभृतै[3] नेत्रै[4] र्हन्यमानौ स्वदारकौ।
आहूयन्तां जानपदाः पश्यन्तु [5-]स्वैरसंयुगम्[-5] ॥ ५६ ॥

**महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम्।**
**द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ ५७ ॥**

**आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि।**
**विशसन्तु पशून्मेध्यान् भूतराजाय मीढुषे ॥ ५८ ॥**

**इत्याज्ञाप्याऽर्थतन्त्रज्ञ[6] आहूय यदुपुङ्गवम्।**
**गृहीत्वा पाणिना पाणिं तत्रा[7]ऽक्रूर मुवाच ह ॥ ५९ ॥**

---

1- -1. M,Ma तथाऽन्यौ 2. P,V °वनु 3. M,Ma विवृतै°; P,V विविधै° 4. M,Ma ज° 5- -5. M,Ma मम पौरुषम् 6. M,Ma तत्त्वज्ञ 7. G,J,K,T,W ततोऽ°

**श्रीध०** **महामात्रेति।** अहितौ शत्रू ॥ ५५-५७ ॥

**आरभ्यतामिति।** मीढुषे वरदाय ॥ ५८ ॥

**इतीति।** अर्थसिद्धान्तमेव जानातीत्यर्थतन्त्रज्ञः ॥ ५९ ॥

**वीर०** अतो वसुदेवादयः तदनुव्रताश्च सर्वे हन्यमानौ दारकौ बालौ निभृतैः [1-]शोकाश्रुजलपूर्णैः[-1] नेत्रैः पश्यन्तु। जानपदाः देशवासिनः आहूयन्ताम्। किमर्थम्? स्वैरसंयुगम् पश्यन्तु ॥ ५५-५६ ॥

हे महामात्र! हे भद्र! त्वया कुवलयापीडाख्यो रङ्गद्वार्युपनीयतां प्राप्यताम्। तेन कुवलयापीडेन मम शत्रू जहि घातय ॥ ५७ ॥

चतुर्दश्यां यथाविधि धनुर्याग आरभ्यताम्। मीढुषे इष्टवर्षिणे भूतराजाय रुद्राय मेध्यान् पशून् विशसन्तु ॥ ५८ ॥

इत्थमाज्ञाप्य अर्थतन्त्रज्ञः शास्त्रसिद्धान्ताभिज्ञः कंसः यदुश्रेष्ठं अक्रूरमाहूय तस्य पाणिं स्वपाणिना गृहीत्वा अक्रूरं यथा तथा उवाच ॥ ५९ ॥

---

1- -1. T,W omit.

**विज०** विशसन्तु सूदयन्तु। भूतराजाय भैरवविग्रहधारिणे रुद्राय मीढुषे समर्थाय अभीष्टदात्रे वा ॥ ५५-५८ ॥

अर्थतत्त्वज्ञं प्रयोजनयाथार्थ्यवेत्तारं यदुपुङ्गवं यदुश्रेष्ठम् ॥ ५९ ॥

भो भो दा[1]नपते मह्यं क्रियतां मैत्र माहतः।
नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ ६० ॥

अत स्त्वामाश्रितस्सौम्य! कार्यगौरवसाधन[2]म्।
यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्य[3]गमद्विभुः ॥ ६१ ॥

गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः।
आसाते ताविहाऽनेन रथेनाऽऽनय मा चिरम् ॥ ६२ ॥

नि[4]सृ[5]ष्टः कि[6]ल मे मृ[7-]त्युर्दे[-7]वैर्वैकुण्ठसंश्रयैः।
तावानय समं गोपैः नन्दाद्यैस्साभ्युपायनैः ॥ ६३ ॥

घातयिष्य इ[8]हाऽऽनीतौ कालकल्पेन हस्तिना।
यदि मुक्तौ ततो मल्लै र्घातये वैद्युतोपमैः ॥ ६४ ॥

---

1. P,V दाश 2. P,V °ने। 3. V °भ्य° 4. P,V वि° 5. K °ष्टौ 6. K,T,W खलु 7- -7. K मृत्यू देवै° 8. P,V °हाऽनेन

**श्रीध०** भो भो इति। दा[1]शपते! हे अक्रूर! मैत्रं मित्रकृत्यं त्वया क्रियतां, त्वत्तोऽन्यः आदृतः सादरो हिततमश्च न विद्यत इति ॥ ६०-६२ ॥

नि[2]**सृष्ट** इति। तौ मे मृत्युर्नितरां सृष्टः, वैकुण्ठसंश्रयैः विष्णुसंश्रयैः देवैः ॥ ६३ ॥

किं ततः तत्राऽऽह - **घातयिष्य** इति। कालकल्पेन मृत्युतुल्येन, वैद्युतोपमैः अशनितुल्यैः ॥ ६४ ॥

---

1. J,Va दान 2. P,V वि°

**वीर०** तदेवाह - भो भो इति। आदरात् सम्बोधनद्वयम्। दानपते! महोदार! मह्यं किञ्चित् त्वया मैत्रं मित्रकृत्यं क्रियताम्, यतस्त्वत्तोऽन्यो हिततमः भोजेषु वृष्णिषु च न विद्यते ॥ ६० ॥

अतस्त्वामेव हे सौम्य! अहमाश्रितः। कथम्भूतम्? गुरुतरकार्यसाधकं, यथा विष्णुमाश्रित्य इन्द्रः स्वार्थं स्वाभीष्टम् अध्यगमत् प्राप्तवान् तथाऽहमपि त्वामाश्रितः प्राप्नवानि ॥ ६१ ॥

अतस्त्वं नन्दव्रजं गच्छ। किमर्थम्? तत्र नन्दव्रजे वसुदेवस्य पुत्रौ आसाते तावनेन रथेन इहाऽऽनय प्रापय। चिरं विलम्बं मा कार्षीः ॥ ६२ ॥

किमर्थम्? तत्राह - **निसृष्टाविति**। संश्रीयत इति संश्रयः वैकुण्ठो विष्णुः संश्रयो येषां तैः देवैः तौ मम मृत्यू निसृष्टौ कल्पितौ खलु। अतः साभ्युपायनैः नन्दादिभिः गोपैस्सह तौ इहाऽऽनय आनीय दर्शयेत्यर्थः ॥६३॥

आनीतौ च तावनेन मृत्युतुल्येन हस्तिना घातयिष्ये। यदि ततो हस्तिना मुक्तौ भविष्यतः तर्हि अशनितुल्यैः मल्लैः चाणूरादिभिः घातये ॥ ६४ ॥

---

1- -1. T,W omit

**विज०** दानशब्देन वदान्याः लक्ष्यन्ते तेषां पते अक्रूर, मैत्रं मित्रकर्म ॥ ६० ॥

सौम्य! सुन्दर! "सौम्यो विप्रे सोमजेऽब्दे सुन्दरे सोमदैवेते" (वैज.को. 6-5-98) इति च। कार्यगौरवसाधनं समर्थनम् ॥ ६१,६२ ॥

निसृष्टः क्लृप्तः अभ्युपायनैः सहितैः ॥ ६३ ॥

वैद्युतो विद्युतो निर्गतोऽग्निः तस्योपमा येषां तैः ॥ ६४ ॥

**तयो र्निहतयो [1]र्दृप्तान् वसुदेवपुरोगमान्[2]।**
**तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हजान् ॥ ६५ ॥**

**उग्रसेनं [3]च पितरं स्थविरं राज्यकामुकम्।**
**तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥**
**ततश्चैषा मही [4]मित्र भवित्री नष्टकण्टका ॥ ६६॥**

**जरासन्धो मम गुरुः [5]द्विविदो दयितस्सखा।**
**शम्बरो नरको बाणो मय्येव कृतसौहृदाः॥**
**तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ६७ ॥**

**एतज्ज्ञात्वाऽऽनय क्षिप्रं [7]रामकृष्णाविहार्भकौ।**
**धनुर्[6]मखनिरीक्षार्थं द्रष्टुं मधुपुरश्रियम् ॥ ६८ ॥**

---

1. G,J,M,Ma °स्ततान् 2. P,V °कान् 3. G,J च पि° 4. P,V महत्वं 5. M,Ma विविदो; P,V द्विविधो 6. M,Ma °र्याग 7. G,J,M,Ma,P,V यदु

**श्रीध०** **उग्रसेनमिति** । नष्टकण्टका नष्टशत्रुः। ननु कतिपयाऽसुहृद्वधेन नष्टकण्टका कथं स्यात्तत्राह - **जरासन्ध इति**॥ ६५-६७॥

[1-]**एतदिति**। यदुपुरश्रियं द्रष्टुं चेति[-1] ॥ ६८ ॥

---

1- -1 P,V omit.

**वीर०** ततस्तयोः निहतयोः तस्मान् दुःखितान् वसुदेवप्रभृतीन् तद्बन्धूंश्च वृष्ण्यादीन् हनिष्यामि तथा स्थविरमप्यधुनापि राज्यमेव कामयमानं मत्पितरं उग्रसेनं तस्य भ्रातरं देवकं च तथा योऽन्ये च मम विद्विषस्तान् सर्वान् हनिष्यामि। ततश्चैवं सति हे मित्र! इयं पृथ्वी नष्टकण्टका नष्टशत्रुः भविष्यति ॥ ६५, ६६ ॥

कुतः त्वं सर्वान्हन्तुं प्रभुः? तत्राह - **जरासन्ध** इति। द्विविदो वानरः [1-]प्रियः सखा[-1] शम्बरादयोऽसुराः मयैव सह कृतं सौहृदं यै स्तथाभूताः तै र्जरासन्धादिभिः सहितोऽहं सुरपक्षीयान् नृपान् हत्वा महीं भोक्ष्ये अनुभविष्यामि ॥ ६७ ॥

एतत्सर्वं मया चिकीर्षितं ज्ञात्वा तौ रामकृष्णौ अर्भकाविह आनय। ननु वां हन्तुं कंसः आहूतवानित्युक्ते सति तौ पलायेतां तत्राह - धनुरिति। धनुर्मखनिरीक्षणार्थं मधुपुरश्रियं च द्रष्टुमाहूतवानिति त्वया वाच्यमित्यर्थः ॥ ६८ ॥

---

1- -1. T,W प्रियसखः

**विज०** मत्पितर एव एते इति शेषः। मे मित्र मविद्री भविष्यति ॥ ६५,६६ ॥

ननु त्वत्तोधिका जरासन्धादयः कण्टकाः सन्ति तत्राह - **जरासन्ध** इति ॥ ६७ ॥

आनयने निमित्तमाह - धनुरिति। धनुर्यागलक्षणोत्सवार्थम् ॥ ६८ ॥

### अक्रूर उवाच

**राजन् मनीषितं सम्यक्[-1] तव स्वावद्यमार्जनम्[2]।**
**सिध्यसिध्योः [3-]समो [3-]भूयात् दैवं हि फलभावनम्[4] ॥ ६९ ॥**

**मनोरथान् करोत्युच्चैः जनो दैवहतानपि।**
**युज्यते हर्षशोकाभ्यां [5]तथाप्याज्ञां करोमि ते ॥ ७० ॥**

### [6-]श्रीशुक उवाच[-6]

**[7-]एवमादिश्य चाऽक्रूरं[-7] मन्त्रिणश्च विसृज्य सः।**
**प्रविवेश गृहं कंसः तथाऽक्रूरः स्वमालयम् ॥ ७१ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
अक्रूरसम्प्रेषणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

1. G,J,P,V सध्र्यक् 2. M,Ma चा° 3- -3. G,J,M,Ma समं कुर्यात् 4. G,J साधनम् 5. M,Ma अथा° 6- -6. M,Ma omit 7- -7. K,T,W इत्युक्तवन्तमामन्त्र्य

**श्रीध० राजन्निति।**[1] मनीषितं विचारितं सध्र्यक् सम्यक् स्वावद्यं मरणं तन्मार्जनं, तथाऽप्येतावान् अभिनिवेशो न कार्य इति, भविष्यत् सूचयन्नाह - सिद्ध्योसिद्ध्योरिति ॥ ६९ ॥

पुरुषकारस्य व्यभि[2]चारमाह - **मनोरथानिति** ॥ ७०, ७१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

1. J,Va add तत्र स्व° 2. P,V चारिता°

**वीर०** इत्थमुक्तः प्राह अक्रूरः - **राजन्निति।** स्वावद्यं स्वमरणं तस्य मार्जनं परिहार इति यत् तव मनीषितं विचारितं तत् सम्यगेव, तथाप्यत्राऽभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह - सिद्ध्योसिद्ध्योरिति। हि यस्मादैवं फलभावनं फलदम्। अतः सिद्ध्योसिद्ध्योस्समः कर्म कुर्यात् ॥ ६९ ॥

पुरुषकारस्य व्यभिचारमाह - **मनोरथानिति।** दैवहतानप्युच्चैः मनोरथान् करोति, जनः स्वसुखार्थकर्मणा दुःखेन युज्यते, कदाचित् सुखेन, तथा परदुःखार्थेन स्वयमेव दुःखेन युज्यते, परस्तु सुखेनैवेति। यद्यप्येवं तथापि तव आज्ञां करोमि ॥ ७० ॥

इत्युक्तवन्तं अक्रूरं, आमन्त्र्य पृष्ट्वा अनुज्ञाप्य वा, मन्त्रिणो विसृज्य आज्ञाप्य कंसः स्वगृहं प्रविवेश। तथाऽक्रूरश्च स्वगृहं प्रविवेश ॥ ७१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

**विज०** मनीषितं मनसा कर्तुमिष्टं मरणं ज्ञात्वापि परिहारप्रयत्नो न कृत इति यत्, अत आत्महत्यालक्षणं यदवद्यं तस्य मार्जनं परिहरणं भवति। फलनिष्पत्तिमज्ञात्वा प्रयत्नो व्यर्थ इति न निरूप्यः इत्याह - सिद्धीति। फलसिद्धावसिद्धौ च हर्षशोकाभ्यां न विषमो भूत्वा कर्म कुर्यादिति विधिशास्त्रं, तर्हि फलावाप्तिः किमधीनेति तत्राह - दैवमिति। फलभावनं फलकारणम् ॥ ६९ ॥

तर्हीदं नापेक्षितं किं, नेत्याह - **मनोरथानिति**। जनेन क्रियमाणत्वात् त्वयाप्यनुष्ठेय मिति भावः, यद्यपि फलसिद्धिः हर्यधीना, तथापि ॥ ७०,७१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

(विजयध्वजरीत्या चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥)

---

# सप्तत्रिंशोऽध्यायः

## (विजयध्वजरीत्या पञ्चत्रिंशोऽध्यायः)

### -: केशिसंहारघट्टः :-

#### श्रीशुक उवाच

केशी तु कंसप्रहितः खुरैर्महीं [1]महाहयो [2]निर्जरयन्[3]मनोजवः।
सटावधूताभ्रविमानसङ्कुलं कुर्वन्नभो [4]हेषितभीषिताखिलः ॥ १ ॥

विशालनेत्रो विकटास्यकोटरो बृहद्गलो नील[5-]महाचलो[-5]पमः।
[6]दुराशयः कंसहितं [7]चिकीर्षुः व्रजं स नन्दस्य जगाम कम्पयन् ॥ २ ॥

तं त्रासयन्तं भगवान् [8]स्वगोकुलं [9]तद्धेषितैर्वालविघूर्णिताम्बुदम्।
आत्मान माजौ मृगयन्त मग्रणी रुपाह्वयत्स व्यनदन्मृगेन्द्रवत् ॥ ३ ॥

स तं [10]निशाम्याऽभिमुखो [11-]मु खेन [-11]खं पिबन्निवाऽभ्यद्रवदत्यमर्षणः।
जघान पद्भ्या मरविन्दलोचनं दुरासद[12]श्चण्डरवो दुरत्ययः ॥ ४ ॥

तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां [13]परिपीड्य पादयोः।
सावज्ञ मुत्सृज्य धनुश्शतान्तरे यथोरगं ताक्ष्र्यसुतो व्यवस्थितः ॥ ५ ॥

स लब्धसंज्ञः पुनरुत्थितो [14]रुषा व्यादाय केशी तरसाऽपतद्धरिम्।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन्प्रवेशयामास यथोरगं बिले ॥ ६ ॥

---

1. P,V महत्तया 2. K,T,W °र्झ°, M,Ma °र्द° 3. P,V °न्महाहयः 4. M,Ma हे° 5- -5. G,J,M,Ma महम्बुदो°; K महाघनो 6. P,V °सदः 7. P,V °र्षन् 8 T,W स गो° 9. M,Ma स्वहे° 10. J,M,Ma °श° 11- -11. M,Ma नभस्तलं 12. G,J,M,Ma °जवो 13. G,J,K,T,W विध्य 14. M,Ma मुखम्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः। नारदेन स्तुतः क्रीडन् व्योमासुरमथाऽवधीत्॥

वृषवेषासुरं यद्वत् केशिनं हयवेषिणम्। कंस[1]प्राणसमं हत्वा कंसं व्यसुमिवाऽकरोत्॥

**केशीति**। प्रथमश्लोकेन य एवम्भूतः केशीत्यनूद्य तं भगवानुपाह्वयदिति तृतीयेनाऽन्वयः। महाहयस्सन् महीं निर्जरयन् श्लथयन् विदारयन्नित्यर्थः। सटाभिः केसरैः अवधूतानि इतस्ततः क्षिप्तानि अभ्राणि विमानानि च तैः सङ्कीर्णं नभः कुर्वन् हेषितैः अश्वजातिशब्दैः भीषितमखिलं विश्वं येन सः ॥ १,२ ॥

**तमिति**। तद्धेषितैः तैरतिनिष्ठुरै र्हेषितैः वालैः पुच्छरोमभिः विघूर्णिताः परिभ्रमिता अम्बुदा येन तम्। आजौ सङ्ग्रामार्थं आत्मानं कृष्णं अग्रणीः पुरतो निर्गतस्सन् उपाह्वयत् स्वसमीपमाजुहाव। स च केशी तं निशाम्य मृगेन्द्रवन्नादमकरोत्॥ ३॥

**स** इति। ततः स[2] केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं व्यादाय[3] विवृत्य [4-] अभिमुखम् अभ्याजगाम [-4]। किञ्च अत्यमर्षणः अतिकुपितः अत्यन्तं मसहमानो वा, प्रत्यक् पद्भ्यां जघान। दुरासदः अन्यै रभिभवितुमशक्यः दुरत्यय उद्यतस्सन् दुरतिक्रमः, अत्र हेतुः चण्डरवः[5][6] ॥ ४ ॥

**तदिति**। तत् हननं वञ्चयित्वा तच्च हननाय प्रसारितयोः पादयोः हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा व्यवस्थितः। तथैव स्थितो बभूव ॥ ५ ॥

**स** इति। व्यादाय मुखं प्रसार्य वेगेन हरिं प्रत्याद्रवत्। सोऽपि हरिर्हसन् उत्तरं सव्यं भुजम्। निर्भयत्वे दृष्टान्तः- यथोरगं बिल इति ॥ ६ ॥

---

1. J,Va सखं 2. J,Va omit सः 3. J,Va omit व्यादाय 4- -4. J,Va °खस्सन्नभिज° 5. J,Va °जवः 6. J,Va add चण्डस्तीव्रो जवो वेगो धावनं यस्य

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"प्रतियाते तु देवर्षौ कंस आहूय केशिनम्। प्रेषयामास" (भाग. 10-36-20) इत्युक्तम्। प्रेषितस्स किमकरो-दित्यत्राऽऽह-**केशीत्वित्यादिना**। केशी नामाऽसुरः तेन प्रेषितो महाश्वस्सन् मनस इव वेगो यस्य सः। खुरैर्महीं पृथ्वीं निर्झरयन्विदारयन् सटाभिः केसरैः अवधूतानि इतस्ततः क्षिप्तानि अभ्राणि विमानानि च, तैस्सङ्कीर्णं नभः कुर्वन् हेषितै रश्वजातिशब्दैः भीषित मखिलं विश्वं येन ॥ १ ॥

विशाले नेत्रे यस्य, विकटं विशाल मास्यबिलं यस्य, बृहत् पीनो दीर्घश्च गलो यस्य, नीलो महांश्च, घनो मेघ उपमा यस्य, दुराशयः दुष्ट आशयः कृष्णजिघांसाभिप्रायो यस्य, सः प्रसिद्धः कंसस्य हितं कर्तुमिच्छुः नन्दस्य व्रजं कम्पयन्नगाम ॥ २ ॥

हेषितैः तत् स्वस्थं गोकुलं त्रासयन्तं [1-] भीषयन्तं [-1] वालैः पुच्छरोमभिः[2] विघूर्णिताः[3] प्ररिभ्रामिताः अम्बुदा येन तम्। आजौ युद्धे निमित्ते आत्मानं कृष्णं मृगयन्तं अन्वेषयन्तं, तं केशिनम् अग्रणीः अग्रे पुरतो निर्गतस्सन् भगवान् आह्वयत्, आजुहाव; स केशी रुषा मृगेन्द्रवन्नादमकरोत् ॥ ३ ॥

तत स्स केशी तमाह्वयन्तं कृष्णं निशाम्य अवलोक्य अभिमुखस्सन् मुखेन खं[4] आकाशं पिबन्निव, अत्यमर्षणः अत्यन्तक्रोधयुक्तः अभ्यद्रवत् अभ्यपतत्। किञ्च। प्रत्यक् पद्भ्यां अरविन्दलोचनं कृष्णं जघान ताडितवान्। कथम्भूतः? दुरासदः अन्यैरभिभवितु मशक्यः, चण्डः दुरतिक्रमो जवो वेगो यस्य सः ॥ ४ ॥

तद्धननं वञ्चयित्वा तं केशिनं हननाय प्रसारितयोः पादयोः हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा धनुश्शतान्तरे धनुश्शतपरिमितदूरे सावज्ञं[5] सावहेलनं यथा तथा उत्सृज्य पातयित्वा व्यवस्थितः, यथा तार्क्ष्यसुतो गरुत्मान् उरगमुत्सृज्य व्यवतिष्ठते, तद्वत् ॥ ५ ॥

स केशी लब्धा संज्ञा चेतना येन सः, मूर्च्छितः पुनर्लब्धस्मृतिरित्यर्थः। पुनरुत्थितः रुषा व्यादाय, वक्त्र[6]मिति शेषः। बलेन पुनः हरिं प्रति अभ्यद्रवत्। तदा हसन् निर्भयः सोऽपि हरिरपि अस्य केशिनो वक्त्रे सव्यं भुजं प्रवेशयामास। निर्भयत्वे दृष्टान्तः, यथोरगं बिल इति। यथा सर्पविद्यावित् सर्पं बिले प्रवेशयति तद्वत्। यद्वा सर्पभोगवद्दीर्घं भुजं बिलवद्दुष्प्रवेशे तदास्यकुहरे प्रवेशयामासेति दृष्टान्तार्थः ॥ ६ ॥

---

1- -1. T omits 2. T,W omit अग्रणीः 3. K omits अग्रे 4. T,W omit खं 5. T,W omit सावज्ञं 6. T,W ° मित्यर्थः।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रोतृणां मन्तृणां प्रवक्तृणां ध्यातृणां च बुद्ध्यारोहार्थं सङ्कलय्य[1] भगवद्विक्रमं वर्तमानं वर्तिष्यमाणञ्च कथयत्यस्मिन्नध्याये। तत्राऽऽदौ केशिदैत्यवधलक्षणं भगवद्विक्रमं वक्तुमाह केशीति। निर्दरयन् भिन्दन्। मनोजववत् जवो यस्य स तथा। अभ्राणि च विमानानि च अभ्रविमानानि सटाभिः स्कन्धदीर्घरोमभिः अवधूतानि अभ्रविमानानि तैः सङ्कुलम्। हेषितेन अश्वजातिशब्दितेन भीषितमखिलं यस्य स तथा। "हेषा ह्रेषा च वाजिनाम् (हला.को. 1-151) इति हलायुधः ॥ १ ॥

विकटं विस्तृतं आस्यकोटरं मुखगर्तं यस्य स तथा। दुराशयः दुष्टाभिप्रायः कृष्णहननलक्षणो यस्य स तथा॥ २॥

वालेन पुच्छेन विघूर्णितो विभ्रान्तोऽम्बुदो यस्य स तथा तम्, आजौ क्षेपार्थ मात्मानं स्वं मृगयन्तं विचिन्वन्तम्। अज गतिक्षेपणयो रिति धातुः। युद्धे वा। इयमपि तादर्थ्ये सप्तमी। अग्रणी स्तस्याऽभिमुखे स्थितः ॥ ३ ॥

तं नादम् ॥ ४ ॥

तद्धननं सावज्ञं अवमानसहितमिति क्रियाविशेषणम् ॥ ५ ॥

मुखं व्यादाय विदार्य ॥ ६ ॥

---

1. Ma सङ्कल्प्य

दन्ता निपेतु र्भगवद्भुजस्पृश स्ते केशिन स्तप्तमयस्स्पृशो यथा।
बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयस्संववृधे ह्युपेक्षितः[1] ॥ ७ ॥

समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन्।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लण्डं[2] विसृजन् क्षितौ व्यसुः ॥ ८ ॥

तद्देहतः कर्कटिकाफलोपमाद्व्यसो रपाकृष्य भुजं महाभुजः।
[3]अविस्मितो[4]ऽयत्नहतारि [5]रुस्मियैः [6-]प्रसूनवर्षै स्सुरैस्स ईडितः[-6] ॥ ९ ॥

श्रीकृष्णं प्रति नारदागमनघट्टः

देवर्षिरुपसङ्गम्य [7-]भागवतप्रवरो[-7] नृप।
कृष्णमक्लिष्टकर्माणं [8-]रहस्येतदुवाच ह[-8] ॥ १० ॥

कृष्ण कृष्णाऽप्रमेयात्मन्योगेश[9] जगदीश्वर।
वासुदेवाऽखिलाऽऽवास[10] सात्त्वतां प्रवर प्रभो ॥ ११ ॥

त्वमात्मा सर्वभूतानामेको ज्योति रिवैधसाम्।
गूढो गुहाशय स्साक्षी महापुरुष ईश्वरः ॥ १२ ॥

---

1. G,J,M,Ma उ° 2. G,J लेण्डं; M,Ma लम्बं 3. T,W अप° 4. M,Ma ऽयं निहतारि° 5. G,J,K,P,V ° रुत्स्मयैः 6- -6. G,J,P,V °र्दिविषद्भिरीडितः; M,Ma ववृषद्भिरीडितः 7. ,Ma भगवत्प्रवरो; P,V भगवत्प्रवणो 8- -8. G,J °स्येतदभाषत; M,Ma °सीदमभाषत 9 T,W °गी° 10. K °ऽऽधार

श्रीध० ततः किं, तदाह दन्ता इति। चर्वणाय भगवद्भुजं स्पृशन्तीति तथा, ते,[1] व्यादानेन ये विवृताः अयो लोहं, स्पृशन्तीति स्पृशः। यद्वा, तप्तमयं मतितप्तं लोहादि स्पृशन्तो यथेति। आमयो जलोदरः ॥ ७ ॥

समेधमानेनेति। [2]लण्डं पुरीष मुत्सृजन् ॥ ८ ॥

तदिति। कर्कटिकाफलं हि पक्वं सत् [3]आद्यन्तं [4]विदीर्णं भवति, तद्वद्विदीर्णात्तस्य देहात् [5]व्यसोः विगतप्राणात्। अविस्मितो गर्वरहितः, अयत्नेन हतोऽरिर्येन सः। ★ कंसाय कृष्णमादिश्य तद्रहस्यादिपेशुनैः। कंसघातादि कृष्णस्य कार्य मावेदय न्मुनिः ॥ ९ ॥

तदाह देवर्षिरित्यादिना। देवर्षिरिति। न चाऽयं[6] सूचकः। किन्तु सर्वसुहृदित्याह [7-]भागवतप्रवण[-7] इति ॥ १० ॥

अस्मद्रहस्यं वैरिणि कंसे कथं[8] सूचितवानिति मा शङ्कीरित्याह — **कृष्ण कृष्णेति**[9]। अयं भावः — त्वमीश्वरो भूभारदैत्यसंहारायाऽवतीर्णोऽसि। अत स्तदनुरूपाऽऽचरणेन विश्वं परिपालयेति। तत्र त्वयि तावद्वयशङ्कैव नाऽस्तीत्याह — अप्रमेयात्मन्! अपरिच्छिन्नस्व[10]रूप! योगेश! अचिन्त्यप्रभाव! जगदीश्वर! विश्वनियन्तः! वासुदेव! सर्वभूतेषु वर्तमान! अखिलावास! सर्वस्याश्रय! सम्प्रति सात्त्वतां प्रवर! श्रेष्ठ! प्रभो! सर्वशक्ते ॥ ११ ॥

कथमेवं रूपोऽहमिति चेत् अत आह — **त्वमिति**। नहि त्वं जीववत्परिच्छिन्नः; किन्तु सर्वभूतानाम् अन्तः[11] एकोऽनुस्यूत आत्मा। अन्तरनुस्यूतत्वे दृष्टान्तः — एधसां काष्ठानामन्तर्ज्योतिरिवेति। भूतेषु स्थितोऽपि तै र्न दृश्यस इत्याह — गूढ इति। अत्र हेतवः — गुहाशयः बुद्धेरप्यन्तरः। किञ्च, साक्षी न हि साक्षी दृश्यत इत्यर्थः। अपि च महापुरुषः, अतः परिच्छिन्नमतिभि र्न ज्ञायस इत्यर्थः। तर्हि सर्वान्तरत्वे किं प्रमाणमत आह — ईश्वर इति। न हि ईश्वरं विना परतन्त्राणां जीवानां प्रवृत्तिर्घटत इत्यर्थः ॥ १२ ॥

---

1. J,Va °रम्। 2. J,Va ले° 3 P,V अत्य° 4. P,V °शी° 5. P,V omit °यसोः * श्रीधरीयोऽयं श्लोकः 6. P,V add अनर्थ 7- -7. J,Va भागवतप्रवर 8. J,Va omit कथं 9. J,Va °त्यादिना। 10. J,Va omit स्व 11. J,Va अन्तर ए°

**वीर०** ततः किं, तदाह — **दन्ता** इति। भगवद्भुजं संस्पृशन्तीति[1] तथा ते तस्य केशिनो दन्ता निपेतुः। यथा तप्तमयः तप्तं लोहपिण्डं स्पृशन्तो निपतन्ति तद्वत्। तस्य केशिनो देहे प्रविष्टो महात्मनो भगवतो भुजस्तु ववृधे एधाम्बभूव। यथा उपेक्षितः अचिकित्सितः आमयो जलोदरो वर्धते तद्वत् ॥ ७ ॥

स केशी सम्यगेधमानेन कृष्णस्य बाहुना निरुद्धः वायु श्श्वासो यस्य सः, चरणान्विक्षिपन् इतस्ततश्चालयन् प्रस्विन्नं प्रस्वेदयुक्तं शरीरं यस्य, परिवृत्ते परिभ्रममाणे लोचने यस्य सः, विगतप्राणो लण्डं पुरीषं विसृजन् भूम्यां पपात ॥ ८ ॥

कर्कटिकाफलं हि पक्वं सत् आद्यन्तविदीर्णं भवति, तद्वत् विदीर्णात्तस्य केशिनो देहात् व्यसो गतप्राणात् महाभुजो भगवान् भुज माकृष्टवान्। अविस्मितो[2] गर्वरहितः अयत्नेन हतोऽरिश्शत्रुर्येन सः, प्रसूनवर्षाणि वर्षद्भिरुस्रियैः[3] देवैः ईडितः स्तुतः बभूव ॥ ९ ॥

अथेत्थं हतकेशिने भगवतेऽनन्तरं[4] कर्तव्यमावेदयति देवर्षिरित्याह — **देवर्षिरिति**। हे नृप, भागवतश्रेष्ठो देवर्षिर्नारदः उदारचेष्टितं कृष्णमुपसङ्गम्य रहसि एकान्ते[5] एतद्वक्ष्यमाण मुवाच ॥ १० ॥

तदेवाऽऽह **कृष्णेति**। सर्वज्ञं कर्तव्याभिज्ञमपि भगवन्तं त्वरयन्निवाऽऽवेदयितुं[6] तावत्कृतं केशिवधमभिनन्दितुकामः तावत्स्वसङ्कल्पमात्रपरिक्लृप्तजगत्पालनार्थमवतीर्णस्य तव दुष्कृद्विनाशनमुचितमेवेत्यभिप्रयन् स्तौति — **कृष्णेति** द्वाभ्याम्। यतोऽप्रमेयात्मत्वादिगुणक स्तत आत्मनैवात्माश्रय स्सृजसीति हेतुहेतुमद्भावपरतया व्याख्येयम्। कर्त्राद्यनेककारकसाध्या हि सर्वा क्रिया लोके दृष्टा। जगत्सृष्ट्यादिक्रिया तु कर्त्रादिकारकषड्भावापन्नत्वदेकसाध्येत्युच्यते। पूर्वं सृष्टेः प्राक्, त्वम् आत्मना स्वेनैव कर्त्रा आत्मा स्वयमेव आश्रय आधारो यस्य तथाभूतः मायया स्वसङ्कल्पेनैव गुणान् स्वशरीरभूतप्रधानगुणकार्यभूतान्

महदादीन् सृजसीति हि तदर्थः। "तदात्मानं स्वय मकुरुत" (तैत्ति. उ. 2-7) "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" (तैत्ति.ब्रा. 2-8-9-6)। "आत्मन आकाश स्सम्भूतः" (तैत्ति.उ. 2-1-1) इत्यादिश्रुते रिति भावः। तत्रैकस्यैवानेक कारकभावोपयुक्तगुणवत्तां वदन् सम्बोधयति — अप्रमेयात्मन्नित्यादिभिः। कथमेकस्यानेककारकभावापत्तिरित्यतस्सम्बोधयति- योगेशेति। विविधविचित्रानन्तशक्ते इत्यर्थः। ननु महदादय एव सृज्या न त्वहम्, तत्राऽऽह- अप्रमेयात्मन्! अपरिच्छेद्यस्वरूप! अनेन सर्वसृज्यशरीरकत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वात् स्वयमेव सृज्य इति भावः। ननु चतुर्मुखादयस्सृष्ट्यादि कर्तारो न त्वहम्। तत्राऽऽह जगदीश्वर! जगन्नियन्तः[7]! कार्यभूतजगदन्तर्भूत चतुर्मुखादि नियन्तृत्वेन तद्गतं कर्तृत्वं त्वय्येव पर्यवसन्नमिति त्वमेव कर्तेति भावः। ननु ब्रह्माण्डादिः आधारो न त्वहम्, इत्यत आह वासुदेवेति। वासुदेवशब्दार्थं वदन् सम्बोधयति — अखिलाधारेति। अखिलस्य ब्रह्माण्डतदन्तर्गतादिवस्तुनः आधारभूत[8]! अखिलमाधारो व्याप्यं यस्य तथाभूतेति चार्थः। नन्वेवम्भूतः परमात्मा नत्वहम्। इत्यत आह- सात्त्वतां प्रवर! सात्त्वतामिति कर्तरि षष्ठी। सात्त्वद्भिर्भक्तैः प्रकर्षेण व्रियमाणेत्यर्थः[9]। परमात्मैव सन् भक्तैस्समाश्रयणीयत्वाय एवंरूपेणाऽवतीर्ण इत्यर्थः। प्रभो! अकर्मवश्य! ॥ ११ ॥

परमात्मत्वमेवोपपादयति — **त्वमिति**। सर्वभूतानां ब्रह्मादिस्थावरान्तानां, महदादिपृथिव्यन्तानाञ्च एक स्त्वमेव आत्मा अन्तः प्रविश्य प्रशासनेन धारकः। एकस्सर्वत्रैकरूपः व्याप्यवस्तुगत विकाररहित इत्यर्थः। इदमेव हि परमात्मत्वं, यत्सर्वानुप्रवेशतद्गतधर्मास्पर्शिनियमनैर्भर्तृत्वम्। एकत्वे दृष्टान्तमाह — यथैधसां काष्ठानामन्तर्ज्योति रेधोगतवक्रत्वादिभि र्न स्पृश्यते तद्वदित्यर्थः। यद्यहं सर्वभूताना मात्मा, तर्हि तैः दृश्येय इत्यत आह गूढ इति। अत्राऽपि ज्योतिरिवैधसा मित्येतत् दृष्टान्ततया योज्यम्। यथैधस्सु ज्योतिरन्तर्गतमपि गूढं, मथनाद्युपायमन्तरेण नतेभ्यो विविच्य दृश्यते तथा योगविशुद्धमनसा विना न दृश्यत इत्यर्थः। क्व गूढ इत्यत आह- गुहाशयः। गुहायां हृदयकुहरे जीवे वा शेत इति तथा कारणत्वोपयुक्तं सार्वस्थ्यमाह — साक्षीति। सर्वस्य साक्षाद्द्रष्टा, सर्वज्ञ इत्यर्थः। अत एव महापुरुषः ब्रह्मादिजीवविलक्षणः पुरुषः, ईश्वरस्तेषा मधिपतिश्च ॥ १२ ॥

---

1. K omits सं 2. T,W अप° 3. K °रुत्समयैः 4. T,W °यद्दे° 5. T,W omit एकान्ते 6. T,W °न्निवेद° 7. K adds जगत् 8. K adds इति। 9. K adds इत्यर्थः°।

**विज०** तप्तं अयोनाम लोहं स्पृशन्तः तप्तमयं तापात्मानं पदार्थं स्पृशन्तीति, तप्तमयस्पृश इति वा। उपेक्षितः आमयो व्याधिः ॥ ७ ॥

विक्षिपन्नितस्ततः प्रसारयन् लम्बं शकृत्। "तुरगस्य शकृल्लम्बं लङ्काप्राकारकोशयोः" इति च, कोशं वा ॥८॥

कर्कटी कर्कन्धूलता तत्फलसदृशं उर्वारुकवत् मृदुलमित्यर्थः। कर्कट्याः फलं गर्भः तत्सदृशं, प्रसवे स्वयं म्रियते यथा तथा। भुजापकर्षेण मृत इत्यर्थः। व्यसो मृतस्य उस्रियै र्देवैः। "उस्रिया अमरा देवा स्त्रिदिवेशा दिवौकसः" इति च। प्रसूनवर्षैः फलपुष्पसमूहैः "प्रसूनं फलपुष्पयोः" (वैज.को. 7-3-22) इति च। ववृषद्भिरित्यत्र ताच्छीलिकः शतृप्रत्ययः। अवेत्यत्र अकारलोपश्च। तेन अयं वर्षः औत्पत्तिको गुणो लक्ष्यत इति ॥ ९,१० ॥

अप्रमेयात्मन् अपरिच्छेद्यस्वभाव। नन्वेवं चेत् "अङ्गुष्ठमात्रः पुरुषः" (कठ.उ. 4-12) इत्यादिपरिमाणवचनस्य का गतिरिति तत्राऽऽह योगेशेति। योगिनां योगविषयत्वेन स्वेच्छाविग्रहग्रहणेन तदुपपत्तेः। योगेशत्वस्य वायुविषयत्वमिति मन्दाशङ्कां निरस्यति जगदीश्वरेति "आत्मन् एष प्राणो जायते आकाशाद्वायुः प्राणः श्रद्धा खं वायुः" इत्यादिश्रुतेः। वायोर्जगदन्तःपातित्वेन तदीशत्वं न पृथग्वक्तव्यमिति भावः। कृष्णशब्दस्य बह्वर्थविषयत्वेन उक्तविशेषणविशिष्टः क इति संशयनिवृत्तिः कथमिति तत्राऽऽह वासुदेवेति। वासुदेवशब्दस्यार्थान्तरमाह अखिलेति। नन्वेवञ्चेत् संशय स्तदवस्थ इति तत्राऽऽह- सात्त्वतामिति। नन्वनेन सात्त्वज्जातिश्रेष्ठ इत्येवाऽऽयातं न तु तदाधिपत्यमित्यत उक्तं प्रभो इति — "समर्थेऽधिपतौ प्रभुः" (वैज.को. 6-4-10) इति ॥ ११ ॥

उक्तविशेषणाना मन्यत्राऽपि कथञ्चिद्वृत्तिसम्भवेनाऽपि विष्णुत्वानिश्चय इति तत्राऽऽह **त्वमिति**। प्रत्यगात्मा अन्तर्यामीत्यर्थः। ईदृशोऽन्यो नास्तीत्याह एक इति। एकस्य च बहुष्ववस्थानं कथमिति तत्राऽऽह ज्योतिरिति। मथनादिना दृग्विषयत्वेन अग्ने स्सत्ता ज्ञायते, न तवेति तत्राऽऽह गूढ इति। कथं गूढत्वमित्यत उक्तं गुहेति। हृदयगुहायां शेत इति जीववत्। तर्हि त्वं संसारी चेतनः किं न? इत्याह साक्षीति। संसारिणामुनष्ठीयमानयोः पुण्यपापयो र्द्रष्टा वायो रन्तःस्थत्वेन साक्षित्वेऽपि मुख्यसाक्षित्वं तवेत्याशयेनाऽऽह — महापुरुष इति, पुरुषोत्तम इत्यर्थः। पुरुषोत्तमस्यैव मुख्यसाक्षित्वं यतोऽत ईश्वरत्वं तस्यैव मुख्यं न पशुपतेरिति भावेनाऽऽह ईश्वर इति ॥ १२ ॥

आत्मनाऽऽत्माश्रयः पूर्वं मायया सृजसे[1] गुणान्।
तैरिदं सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वर[2]! ॥ १३ ॥

स त्वं भूभार[3]भूतानां दैत्यप्रमथरक्षसाम्[4]।
अवतीर्णो विनाशाय साधूनां रक्षणाय च ॥ १४ ॥

दिष्ट्याऽद्य[5] निहतो दैत्यो लीलयाऽयं हयाकृतिः।
यस्य[6] हेषितसन्त्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥ १५ ॥

चाणूरं मुष्टिकञ्चैव मल्लानन्यांश्च हस्तिनम्।
कंसञ्च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ॥ १६ ॥

तस्याऽनु[7] शङ्खयवनमुराणां नरकस्य[8] च।
पारिजातापहरणमिन्द्रस्य च पराजयम् ॥ १७ ॥

उद्वाहं वीरकन्यानां[9] वीर्यशुल्कादिलक्षणम्।
नृगस्य मोक्षणं शापाद्द्वारकायां जगत्पते ॥ १८ ॥

1. G,J ससृजे; P,V संसृजे 2. G,J,M,Ma,P,V °रः 3. G,J,P,V भूधर; M,Ma भूभर 4. G,J सेतूनां 5. G,J,K,M,Ma दिष्ट्या ते 6. M,Ma अस्य 7. M,Ma °तस्य ह° 8. K,T,W भवम् 9. G,J,M,Ma °पा°

**श्रीध०** अहमीश्वरः अन्यत्सर्व मीशितव्य मित्येतदेव **कुतः**? अत आह — **आत्मनेति**। साधनान्तरनिरपेक्ष एव, आत्माश्रयः स्वतन्त्रः मायया शक्त्या गुणान् भवान् ससृजे [1-]सृष्टवान्[-1]। तैः सृष्टैः गुणैः इदं विश्वं सृजसि, अत्सि संहरसि, अवसि पालयसि। ननु सृष्ट्यादिक्रिया षट्कारकसाध्यैव दृष्टेत्यत आह — सत्यसङ्कल्प इति। न हि सङ्कल्पैकसाध्यै बहिस्साधनापेक्षेति भावः। अतस्त्वमीश्वर इत्युपसंहारः ॥ १३ ॥

प्रस्तुतमाह — **स** इति। भूधरभूतानां भुवं धरन्तीति भूधरा राजानः, तद्रूपाणाम् ॥ १४,१५ ॥

**चाणूरमिति**। परश्वः अहनीति। अद्यैव अक्रूर एष्यति, श्वो मधुरां गन्तासि, परश्वश्चाणूरादीन् त्वया निहतान् द्रक्ष्यामीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १६ ॥

**तस्येति**। तस्याऽनु तदनन्तरं शङ्खादीनां शङ्खः पञ्चजनः [2-]तदादीनां[-2] वधं, द्रक्ष्यामीति शेषः। भाविनिर्देशमात्रमेतन्न त्वानन्तर्यं विवक्षितम् ॥ १७,१८ ॥

---

1- -1. J,Va °त्याऽऽह 2- -2. J,Va omit.

**वीर०** यत एवम्भूत स्ततो हे ईश्वर, सत्यसङ्कल्प स्त्वं सकलकारकभावमापन्न स्तावत् स्वसङ्कल्पेन गुणकार्यभूतान् स्वशरीरभूतान् महदादिपृथिव्यन्तान् सृजसि। ततः तै र्गुणैः इदं परिदृश्यमानं विचित्रसन्निवेशविशिष्टं ब्रह्मादिस्तम्बपर्यन्तं जगत् सृजसि अवसि पालयसि, अत्सि संहरसि च ॥ १३ ॥

तत्र पालनं स्वावतारैः मन्वादिरूपेण च इत्यनेकविधम्। तत्र स्वावतारेण पालनं दुष्कृद्विनाशपूर्वकमित्यभिप्रेत्याऽऽह- **स त्वमिति**। स उक्तविधस्त्वं भुवो भारभूतानां दैत्यादीनां विनाशाय साधूनां रक्षणाय च अवतीर्णः।प्रमथाः रुद्रभूतानि। रक्षणाय चेति चशब्दो विनाशायेत्यनेनान्वेतव्यः। स चाऽन्वाचयद्योतकः। दुष्कृद्विनाशन मानुषङ्गिक मवताप्रयोजनं, सङ्कल्पमात्रेणाऽपि तत्सिद्धेः। साधुपरित्राणमेव परममवतारप्रयोजनमिति बोध्यम् ॥ १४ ॥

एवंविधस्य तव [1-]अचिन्त्यप्रभावस्य[-1] इदं केशिहननं उचितमेवेति अभिनन्दति **दिष्ट्येति**। अयमश्वाकृति दैत्यः केशी लीलयैव ते त्वया हतः। दिष्ट्या, अयमस्माकं महानानन्द इत्यर्थः। लीलया हत इत्यनेन दुर्वधोऽपि लीलया हत इत्येतदद्भुतमित्यभिप्रेतम्। दुर्वधत्वमेव व्यनक्ति। यस्य केशिनो हेषितेन सन्त्रस्ता नितरां भीतास्सन्तः अनिमिषा इन्द्रादयो दिवं त्यजन्तीति ॥ १५ ॥

कर्तव्य मावेदयति — **चाणूरमित्यादिना**। अद्यैवाऽहन्यक्रूर एष्यति, श्वो मधुरां गन्तासि, परश्वश्चाणूरादीन् त्वया निहतान् द्रक्ष्यामि - इति। सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १६ ॥

तस्य अनु तदनन्तरं, [1]शङ्खादीनां नरकस्य च, वधमिति शेषः। द्रक्ष्ये इत्यनुषङ्गः।[2] शङ्खः पञ्चजनः। भाविनिर्देशमात्र मेवैतत्, नत्वानन्तर्यं विवक्षितम्।[3] यानि पारिजातापहरणादीनि। यानि द्वारकामधिवसन् भवान् वीर्याणि चेष्टितानि कर्ता करिष्यति। तानि सर्वाणि कविभिरस्मदादिभिः गेयान्यहं द्रक्ष्यामीति सम्बन्धः ॥ १७ ॥

वीर्यमेव शुल्कादिलक्षणं प्रदेयद्रव्यस्वरूपं यस्मिन् तं, वीराणां भीष्मकादीनां याः कन्याः रुक्मिण्यादयः तासां विवाहमित्यर्थः। नृगस्य शापान्मोक्षणं त्याजनमिति सम्बन्धः। हे जगत्पते! ॥ १८ ॥

---

1- -1. T,W omit 2. T,W omit यानि 3. K वीराणि

**विज०** अलौकिकस्य वस्तुनोऽसाधारणलक्षणेन निर्णेतुं शक्यते इति तत्राऽऽह - **आत्मनेति**। पूर्वं जगदादौ आत्मना परप्रेरणामन्तरेण। केनोपादानेनेत्यत उक्तं माययेति। मायया प्रकृत्या। कुलालस्य शालाद्यधिष्ठानदर्शनादस्य किमधिष्ठान मिति तत्राऽऽह आत्माश्रय इति। स भगवान् कस्मिन् प्रतिष्ठित इति "स्वे महिम्नि" (छान्दो.उ. 7-24-1) इति श्रुतेः। गुणान्महदादीन् ॥ १३ ॥

अवनप्रकारं दर्शयति **स त्वमिति** ॥ १४ ॥

अनिमिषा देवाः। "सुरमत्स्यावनिमिषौ (अम.को. 3-374) इति च ॥ १५ ॥

स्वोक्तार्थे वचनं प्रमाणयितुं भाविनमर्थं दिव्यचक्षुषोपलक्ष्य वक्ति **चाणूरमि** त्यादिना। ते तव करेण॥ १६॥

यथेदानीं केश्यादिहननं प्रत्यक्षं भवति, एवमेव कालान्तरे क्रियमाणमपि कर्म दृग्विषयं भविष्यतीति भावेनाऽऽह **तस्येति**। तस्य कंसस्य अनु अनन्तरं शङ्खादीनां हननमिति। शङ्खः पञ्चजनासुरः ॥ १७ ॥

आदिशब्देन लक्ष्यवेधनमाह। "लक्षणं कार्षिके चिह्ने नाम्नि मुद्राङ्कसम्पदोः" (वैज.को. 7-3-28) इति च ॥ १८ ॥

**स्यमन्तकस्य च मणे रादानं सह भार्यया।**
**मृतपुत्रप्रदानञ्च ब्राह्मणस्य स्वधामतः ॥ १९ ॥**

**पौण्ड्रकस्य वधं पश्चात्काशिपुर्याश्[1]च दीपनम्।**
**दन्तवक्त्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ २० ॥**

**यानि चाऽन्यानि वीर्याणि द्वारका मावसन्भवान्।**
**कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभि र्भुवि ॥ २१ ॥**

**अथ ते कालरूपस्य क्षपयिष्णो रमुष्य[2] वै।**
**अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथे ॥ २२ ॥**

**विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थ ममोघवा[3]ञ्छितम्।**
**स्वतेजसा नित्यनिवृत्तमा[4]यागुणप्रवाहं भगव[5]न्तमीमहि ॥ २३ ॥**

त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम्।
क्रीडार्थम[6]द्याऽऽप्त[6] मनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्त्वताम् ॥ २४ ॥

1. K,P,V °शी° 2. G,J,M,Ma °थैः। 3. M,Ma वर्तिनम् 4. P,V मायया 5 T,W °हे 6- -6. G,J मद्याऽऽत्त; M,Ma माद्यन्त; P,V मध्याऽऽत्त

**श्रीध० स्यमन्तकस्येति**। भार्यया जाम्बवत्या सह स्वधामतः महाकालपुरात् ॥ १९,२० ॥

**यानीति**। द्वारकामावसन्, द्वारकायां वसन् कर्ता करिष्यति ॥ २१ ॥

**अथेति**। अमुष्य विश्वस्य, भूभारस्य वा ॥ २२ ॥

एवं विज्ञाप्य कृताभिवन्दनं[1] भगवन्तं नमस्यति द्वयेन **विशुद्धेति**। केवलज्ञानैकमूर्तिम्। अतएव स्वसंस्थया स्वरूपसम्यक्स्थित्यैव परमानन्दरूपया, सम्यगाप्ताः प्राप्ताः[3] सर्वे अर्था येन तम्, आप्तकामतोक्ता। सत्यसङ्कल्पतामाह अमोघवाञ्छितमिति। ननु वाञ्छा चेत्, तर्ह्यस्ति दुर्निवारा संसृतिः। अत आह - स्वतेजसेति। [4]स्वतेजसा[4] चिच्छक्त्या नित्यनिवृत्तो मायाकार्यरूपो गुणप्रवाहो यस्मात्तम्। अतो भगवन्तं निरतिशयैश्वर्यं ईमहि शरणं व्रजेमेति ॥ २३ ॥

ननु त्रिकालज्ञस्त्वं, कथमेतत्प्रपञ्चं न [5]जानासि, जानासि[5] चेत्[6] कथमगुणप्रवाहं ब्रवीषीति तत्राऽऽह — **त्वामिति**। ईश्वरमन्यस्य वशयितारं, स्वाश्रयमन्यस्यावशम् अत आत्ममायया आत्माधीनमायया विनिर्मिता अशेषविशेषा महदाद्या यादवादिरूपा वा कल्पना येन तम् धुर्यं श्रेष्ठं नतोऽस्मीति ॥ २४ ॥

1. J,Va °न° 2. J,Va °लं 3. J,Va omit प्राप्ताः 4- -4. J,Va omit 5- -5. P,V omit 6. J,V °नया मा°

**वीर०** भार्यया जाम्बवत्या, सत्यभामया च सह द्वारकायां स्यमन्तकाख्यस्य मणे रादानं, ब्राह्मणस्य ब्राह्मणाय स्वधामतः स्वस्थानात् सङ्कर्षणलोकादित्यर्थः। आनीयेति शेषः। मृतानां पुत्राणां प्रदानम् ॥ १९ ॥

दीपनं दाहनं महाक्रतौ युधिष्ठिरराजसूये चैद्यस्य शिशुपालस्य च निधनं वधम् ॥ २०, २१ ॥

अथ, ननु अमुष्य भूभारस्येति[1] कर्मणि षष्ठी क्षपयिष्णो रपाचिकीर्षोः कालशरीरस्य ते त्वया अक्षौहिणीनां सेनानां निधनं द्रक्ष्यामि। हे अर्जुनसारथे! अर्जुनादिप्रयोज्यकर्तृभिः क्षपयिष्णोरित्यभिप्रायेण अर्जुनसारथे! इति सम्बोधनम्॥ २२॥

एवं विज्ञाप्य कृताभिनन्दनं भगवन्तं प्रपद्य नमस्करोति **विशुद्धेति** द्वाभ्याम्। विशुद्धविज्ञानघनम् अपहतपाप्मत्वादिगुणकं [2]केवलज्ञानैकस्वरूपं स्वसंस्थया स्वनिष्ठया निरतिशयानन्दस्वात्मानुभावनिष्ठया। समाप्ताः सर्वे अर्थाः कामाः यस्य तम्। प्रयोजनान्तरानपेक्ष इत्यर्थः। यद्वा, सम्यगाप्तास्सर्वे अर्था यस्य तम्। अवाप्तसमस्तकाममित्यर्थः। सत्यसङ्कल्पता माह —

अमोघवाञ्छितमिति। अमोघवर्तिनमिति पाठे, अमोघं यथा भवति तथा कार्ये प्रवर्तमानं, स्वतेजसा पराभिभवनसामर्थ्येन[2] नित्यं निवृत्ताः मायागुणाः तेषां प्रवाहः संसारः[3] यस्य तम्, भगवन्तं षाड्गुण्यपूर्णमीश्वरं त्वा मीमहे प्रपद्येमहि ॥ २३॥

स्वयमेवाऽऽश्रयो यस्य तम्। "स्वे महिम्नि प्रतिष्ठितः" (छान्दो.उ. 7-24-1) इति श्रुत्युक्तरीत्या अनन्याधार मित्यर्थः। आत्ममायया स्वसङ्कल्पेन विनिर्मिताः अशेषास्सर्वे विशेषाः पृथिव्यादयः तेषां कल्पना देवादिरूपा सृष्टि र्येन तम्। अद्य अधुना क्रीडार्थमात्तः मनुष्यस्येव विग्रहो येन तम्। यद्वादीनां धुर्यं श्रेष्ठं त्वां नतोऽस्मि। यद्यपि सात्त्वच्छब्दो भागवतपरः तथाऽपि सात्त्वतेष्वपि भक्तत्वयोगात् प्रवर्तते। एव मन्यत्राऽपि द्रष्टव्यम् ॥ २४ ॥

1. T,W omit इति 2. T,W omit न 3. T,W omit संसारः

**विज०** वीर्याणा मवश्यज्ञेयत्वमाह गेयानीति। भुवीति विशेषणेन वीर्याणां संसारनिवृत्त्यर्थमेव कृतत्वं सूचयति ॥ १९,२०,२१ ॥

अथ भारतयुद्धे अमुष्य भूवलयस्य अवशिष्टं क्षपयिष्णोः क्षीणं कर्तुकामस्य अक्षौहिणीनाम्, अष्टादशानामिति शेषः। अर्जुनसारथेरित्यनेन भारतयुद्धे इति सूचयति ॥ २२ ॥

उपास्यरूपं विशिनष्टि- **विशुद्धेति**। भगवन्तं शरणमीमहीत्यन्वयः। कीदृशम्? विशुद्धविज्ञानघनम् अप्राकृतज्ञानमूर्तिं स्वसंस्थया स्वव्यवस्थया अपराधीनस्थित्या समाप्तसर्वार्थं समाप्ताशेषपुरुषार्थम्। के चित् हरे र्वृत्तिः मायामयीति सङ्गिरन्ते तत्राऽऽह — अमोघेति। कुत एतत्कथ्यत इति तत्राऽऽह - नित्येति। नित्यनिवृत्तमायागुणानां प्रकृतिगुणानां प्रवाहः परम्परा यस्मिन्स तथा। नन्वेतन्मुक्तानामप्यस्तीति तत्राऽऽह - स्वतेजसेति। स्वप्रभावेण "तेजो बले प्रभावेऽग्नौ" (वैज.को. 6-3-4) इति ॥ २३ ॥

हे आद्यन्त! राक्षसनाशकर्तः! ईश्वरं, त्वां नतोऽस्मि। ईश्वरत्वं समर्थयते स्वाश्रयमित्यादिना। आत्माधीनया मायया प्रकृत्या, स्वेच्छया वा क्रीडार्थं क्रीडितुं विनिर्मिताशेषविशेषकल्पनं विरचितसमस्तदेवब्राह्मणासुरादि तत्तद्वस्तुतारतम्यलक्षणविशेष व्यवस्थानं मनुष्यविग्रह इव विग्रहो यस्य तथा तम्। मांसदृष्ट्या मनुष्याकारमित्यर्थः। मनुष्यदेहस्वीकारे कृत्यमाह धुर्यमिति। धुरं वहति यो धुर्य इत्यतो यदुवृष्णिसात्त्वतां धुरस्य वोढारम्, आद्यन्तधुर्यमितिविशेषणद्वयेन दुष्टविनिग्रहविशिष्टपालनरक्षणकार्यार्थं मनुष्यविग्रहस्वीकार इति विज्ञायते। आद्यन्तो मनुष्यविग्रहो यस्येत्यर्थाङ्गीकारे "आदिनो राक्षसाः प्रोक्ता स्तदन्तत्वा ज्जनार्दनः" (ब्राह्मे) इति वचनम् निरुणद्धि। विशुद्धविज्ञानघनमित्यादिविशेषणानि चोक्तानि व्याहतानि स्युरिति ॥ २४ ॥

## श्रीशुक उवाच

**एवं यदुपतिं कृष्णं [1-]भगवत्प्रवरो[-1] मुनिः**
**प्रणिपत्याऽभ्यनुज्ञातो[2] ययौ तद्दर्शनोत्सुकः ॥ २५ ॥**

भगवानपि गोविन्दो हत्वा केशिनमाहवे।
पशून[3]पालयद्[4]गोपैः प्रीतैर्व्रजसुखावहः ॥ २६ ॥

व्योमासुरवधघट्टः

एकदा ते पशून्[5]पालांश्चारयन्तोऽद्रिसानुषु।
चक्रुर्निलायनक्रीडा[6]श्चोरपालापदेशतः ॥ २७ ॥

तत्राऽऽसन्कतिचिच्चोराः पालाश्च कतिचिन्नृप।
मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २८ ॥

मयपुत्रो महामायो व्योमो गोपालवे[7]षधृत्।
मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २९ ॥

---

1- -1. G,J,K,T,W भागवतप्र° 2. G,J,M,Ma °त्सवः 3. P,V °शूंश्चापा° 4. G,J,M,Ma यत्पालैः 5. G,J,K °न्पालाश्चा°; P,V °न्वालाश्चा° 6. A,B,K,M,Ma, P,v,w, °डांश्चो° 7. G,J,T,W वेषधृक्; M,Ma रूपधृक्; P,V रूपभृत्

**श्रीध०** [1-]ननु नारदेन व्योमवधो न दृष्टः, तत्कथं व्योमवधप्रसक्तिरिति तत्रोच्यते[-1] प्रातरेव[2] केशिवधानन्तरं नारदोक्त[3]मङ्गीकृत्य पुनस्तथैव पशून् [4]चारयता व्योमो हतः। यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि वेषधारिवधप्रसङ्गादत्रोच्यत इति द्रष्टव्यम्। केचित्पुनः शङ्खचूडवधात्पूर्वमेव पठन्ति च। तमाह **एकदेति**॥ २५-२८ ॥

**मयेति**। [5-]मेषायितान्[-5] मेषवदाचरितान् स्वयं चोरवदाचरितस्सन् अपोवाह अपकृष्य निनाय॥ २९ ॥

---

1- -1 P.V omit 2. P.V. °वं 3 P.V. °देनोक्त० 4 J.Va पाल० 5- -5 P.V. omit

**वीर० एवमिति**। तस्य दर्शनादुत्सुकः हृष्टमनाः प्रययौ॥ २५ ॥

अथ भगवानाहवे युद्धे केशिनं हत्वा नारदेन विज्ञापितश्च व्रजस्य सुखमावहतीति तथाभूतः गोपैस्सह पशूनपालयत्॥ २६ ॥

प्रातरेव केशिवधानन्तरं नारदोक्तमङ्गीकृत्य पुनस्तथैव पशून्पालयता व्योमासुरो हतः। यद्वा, व्योमवधः पूर्वमेव वृत्तोऽपि वेषधारिवधप्रसङ्गादत्रोच्यत इति द्रष्टव्यम्। केचित्पुनः शङ्खचूडवधात्पूर्वमेव पठन्ति च। तमनुवर्णयति **एकदेति**। कदाचित्ते गोपाः पशूनद्रेस्सानुषु चारयन्तः चोरपालव्यवहारेण निलायनाख्यां क्रीडां चक्रुः॥ २७ ॥

तामेव दर्शयति — **तत्रेति**। तत्र गोपानां मध्ये कतिचिद्गोपाः चोरव्यपदेश्याः बभूवुः। हे नृप! केचित्तु पालाश्चोरेभ्यो रक्षकाः। अवशिष्टास्तु केचिन्मेषवदाचेरुः। एवं निर्भया विजह्रुः ॥ २८ ॥

एवं सति तदा मयस्य पुत्रो व्योमः महामायः अत एव गोपालस्येव रूपं बिभ्राणः स्वयं प्रायशः चोरवदाचरन् मेषवदाचरितान्बहून्गोपानपोवाह अपकृष्य निनाय ॥ २९ ॥

**विज०** तस्य दर्शनेन उत्सव उत्कृष्ट आनन्दो यस्य स तथा ॥ २५,२६ ॥

चोरपालापदेशतः वयं पशूंश्चोरयामः, वयं पालयाम इति अपदेशेन छन्नमनसा निलायनक्रीडां निलीनकर्मलक्षणक्रीडाम् ॥ २७,२८ ॥

चोरायितः चोरवद्वर्तमानः ॥ २९ ॥

**गिरिदर्यां विनिक्षिप्य [1-]नीतं नीतं[-1] महासुरः।**
**शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥ ३० ॥**

**तस्य तत्कर्म विज्ञाय कृष्णश्शरणदस्सताम्।**
**गोपान्नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३१ ॥**

**स निजं रूप मास्थाय गिरीन्द्रसदृशं बली।**
**इच्छन्विमोक्तु मात्मानं नाऽशक्नो [2]द्ग्रहणातुरः ॥ ३२ ॥**

**[3]तं निगृह्या[4]ऽच्युतो दोर्भ्यां पातयित्वा महीतले।**
**पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३३ ॥**

**गृहापिधानं निर्भिद्य गोपान्निस्सार्य कृच्छ्रतः।**
**स्तूयमानस्सुरै र्गोपैः प्रविवेश स्वगोकुलम् ॥ ३४ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे
पूर्वार्धे व्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

1- -1. K नीतान् नीतान् 2. M,Ma °द्ग्रहणा° 3. M,Ma स 4. K,T,W ॰हृच ततो

**श्रीध०** **गिरीति।** पिदधे छादितवान् ॥ ३० ॥

**तस्येति।** शरणदः आश्रयप्रदः। हरिः सिंह इव ॥ ३१,३२ ॥

**तमिति।** पशुमारं पशुमारो यथा भवति तथा। [1]अनिःश्वास मित्यर्थः ॥ ३३ ॥

**गुहेति।** भुवि गोपैः स्तूयमानः उपरि वैमानिकैर्देवैरिति ॥ ३४ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

1. P,V अविश्वा०

**वीर०** एवं नीता न्नीतान्गोपान् गिरिदर्यां गिरिगुहायां विनिक्षिप्य तस्याः द्वारं शिलया पिदधे छादितवान्, क्रीडायां तु चत्वारः पञ्च वा गोपा अवशेषिताः ॥ ३० ॥

तदा तस्य व्योमस्य कर्म चेष्टितं, विज्ञाय सतां शरणदः आश्रयप्रदः, हेतुगर्भं, गोपान्नयन्तं व्योमं सिंहो वृकमिव ओजसा बलेन जग्राह ॥ ३१ ॥

तदा स व्योमः पर्वतश्रेष्ठतुल्यं स्वासाधारणरूपं बिभ्रत् बली ग्रहणात्पीडितः आत्मानं विमोक्तुं इच्छु रपि नाऽशक्नोत् ॥ ३२ ॥

तथा तं व्योमं नितरां गृहीत्वा भूतले पातयित्वा च दिवि देवानां पश्यतां सतां पशुमारो यथा भवति तथा यज्ञियपशुमिवेति यावत्। मारयामास ॥ ३३ ॥

ततो गुहायाः पिधानं [1-]छादनं शिलां[-1] निर्भिद्य कृच्छ्रतो दुर्गात् गिरिदरीपतनजान्निस्तार्य, गोपैः सुरैः[2] स्तूयमानश्च स्वगोकुलं विवेश ॥ ३४ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

1- -1. T,W omit 2. T,W omit सुरैः

**विज०** गिरिदर्यां पर्वतगुहायाम् ॥ ३० ॥

हरिः सिंहः ॥ ३१ ॥

गुरुणा महता हरिणा, गृहीत इति शेषः ॥ ३२ ॥

पशून्मारयति त्यक्तप्राणान्करोति ॥ ३३,३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
दशमस्कन्धे पूर्वार्धे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
(विजयध्वजरीत्या पञ्चत्रिंशोऽध्यायः)

---

# अष्टत्रिंशोऽध्यायः

## (विजयध्वजरीत्या षट्त्रिंशोऽध्यायः)

### -: रामकृष्णानयनार्थं अक्रूरस्य नन्दगोकुलप्रवेशघट्टः :-

[1-] श्रीशुक उवाच [-1]

अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः।
उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥

गच्छन्पथि महाभागो भगवत्यम्बुजेक्षणे।
भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ २ ॥

किं मयाऽऽचरितं भद्रं किं तप्तं परमं तपः।
किं वाऽप्यथार्हते दत्तं यद्द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥

ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम्।
विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥

मैवं [2-] ममाऽधमस्याऽपि [-2] स्यादेवाच्युतदर्शनम्।
ह्रियमाणः कालनद्या [3] क्वचित्तरति कश्चन ॥ ५ ॥

ममाऽद्याऽमङ्गलं नष्टं फलवांश्चैव मे भवः।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥

---

1- -1. P,V omit 2- -2. M,Ma मामवमंस्यामि 3. M,Ma °द्यां

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः। तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः॥
प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ। ततो व्योमे हतेऽक्रूरस्सायं गोकुलमागमत्॥

तदेवं नारदेन कंसवधादिकार्ये विज्ञापिते श्रीकृष्णो मधुरां गन्तुमुद्यतो वर्तते तदा अक्रूरोऽपि गोकुलमागमदित्याह- [1] अक्रूरोऽपीति। अपीति सम्भावनायाम् ॥ १,२ ॥

**किमिति**। अर्हते योग्याय ॥ ३ ॥

स्वस्य [2] कृष्णदर्शने असम्भवमाशङ्क्य पुनस्सम्भावयति — **ममैतदिति** [3] द्वाभ्याम्। विषयात्मनः विषयाविष्टचित्तस्य शूद्राज्जन्म यस्य तस्य ब्रह्मकीर्तनं वेदोच्चारणं यथेति ॥ ४ ॥

**मैवमिति**। यद्वा, मैवम्। किन्तु अधमस्याऽपि [4] नीचस्यापि मम स्यादेव। कुत इत्यत आह — ह्रियमाणः कालनद्येति। अयम्भावः - यथा नद्या ह्रियमाणानां तृणादीनां मध्ये [5] कश्चित् कदाचित् तरति, [6-] कूलं प्राप्नोति [-6] तथा कर्मवशेन कालेन ह्रियमाणानां जीवानां मध्येऽपि कश्चित्तरेदिति सम्भवतीति ॥ ५ ॥

**ममेति**। अतोऽनया प्रवृत्त्यैव ममाऽमङ्गलं ध्रुवं नष्टमेवेति ज्ञायते। भवो जन्म च सफलं जातमिति, यत् यतः [7] नमस्ये नमस्करिष्यामि ॥ ६ ॥

---

1. J,Va अपिः 2. J,Va कृष्णस्य 3 J,Va द्वयेन 4. J,Va omit अपि 5. J,Va किञ्चित् 6- -6. P,V omit 7 J,Va omit नमस्ये

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"तथाऽक्रूरस्स्वमालयम्" (भाग. 10-36-71) इत्युक्तम्। ततस्स किमकरोत् [1-] इत्याशङ्क्य व्रजं प्रति अक्रूरगमनं तस्य च मनोरथसिद्धिं चाऽऽह अष्टत्रिंशेन [-1] **अक्रूरोऽपीति**। मे महती भगवद्विषया मतिर्यस्य सः, उषित्वा स्थित्वा प्रभाते रथमधिरुह्य नन्दगोकुलं प्रति ययौ प्रतस्थे [2] ॥ १ ॥

महाभागः दुर्लभतरभविष्यद्भगवद्दर्शनात्मकेमहाभाग्यवान् भगवति परां भक्तिं प्राप्तः, इतीत्थं वक्ष्यमाणप्रकारेण अचिन्तयत् ॥ २ ॥

कंसकृतनिर्बन्धादलब्धभगवद्दर्शनः सम्प्रति तत्प्रेषणया भगवन्तं दिदृक्षुः तावदात्मनः तद्दर्शननिदानं बहुधा तर्कयति **किं मयेति**। अर्हते योग्याय सत्पात्रभूताय दत्तं किमित्यूहः। कुतः? यद्यस्मात् अद्य केशवं द्रक्ष्यामि, अन्यथैतन्न सम्भाव्यत इति भावः ॥ ३ ॥

पुनः "श्रेयांसि बहुविघ्नानि" इति न्यायेन दर्शनासम्भवमाशङ्क्य [3] पुनस्सम्भावयति — **ममैतदिति** द्वाभ्याम्। विषयात्मनः विषयाविष्टचित्तस्य ममैतदुत्तमैः ब्रह्मादिभिः केवलं श्लोकस्य स्तुत्यस्य वितर्क्यस्येति यावत्, न तु दृश्यस्येति भावः। तस्य दर्शनं दुर्लभं मन्ये, यथा शूद्राज्जन्म यस्य तस्य ब्रह्मकीर्तनं वेदप्रवचनं दुर्लभं तद्वत् ॥ ४ ॥

यद्वा, मैवम्। किन्त्वधमस्य नीचस्याऽपि ममाऽच्युतदर्शनं स्यादेव। कुत इत्यत आह — ह्रियमाण इति। **अयम्भावः** — यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किञ्चित् कदाचित्तरति, तथा कर्मवशेन कालेन ह्रियमाणानां **जीवानामपि मध्ये कश्चित्तरेदिति सम्भवतीति** ॥ ५ ॥

अनया प्रवृत्त्यैव मम अद्य[4] अमङ्गलं नूनं नष्टं, मम भवो जन्माऽपि सफलं जातम्। कुतः, यद्यतो भगवतो योगिभिः केवलं ध्येयमेव, न तु दृश्यम्, अङ्घ्रिपङ्कजं नमस्करिष्ये ॥ ६ ॥

---

1- -1. T,W इत्यत्राऽऽह 2. K adds इत्यर्थः 3. T,W omit स्तुत्यस्य 4. T,W omit अद्य

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अज्ञानां भगवद्भक्तिकरणनिदर्शनार्थं गोकुलयात्राकथनच्छद्मना अक्रूरस्य भक्त्युद्रेकः प्रतिपाद्यतेऽस्मिन्नध्याये। मधुपुर्यां मधुरायां यस्यां रात्र्यां न्ययुङ्क्त तां रात्रिम् ॥ १,२ ॥

भद्रं पुण्यं सामान्योक्तं विशिनष्टि — किं तप्तमित्यादिना। अर्हते विष्णुभक्त्यादिगुणसम्पन्नाय ॥ ३ ॥

ब्रह्मकीर्तनं वेदाध्ययनम् ॥ ४ ॥

उक्तमनुवदति — **मैवमिति**। अहमेवमच्युतदर्शनं दुर्लभमिति आत्मानं मावमंस्यामि नावजानामि। कुत इत्यत्राऽऽह-स्यादिति। कथमेतत्सम्भवति, इत्यत्राऽऽह — ह्रियमाण इति। कश्चन विष्णुभक्तिमान् ॥ ५ ॥

भवो जन्म, योगिभिः सनकादिभिः ॥ ६ ॥

**कंसो बताऽद्याऽकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितो[1-] मुरारेः[-1]।**
**कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥**

**यदर्चितं ब्रह्मभवादिभिस्सुरैः श्रिया च देव्या मुनिभिस्ससात्त्वतैः[2]।**
**गोचारणायानुचरैश्चरद्वने[3] यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥**

**द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम्।**
**मुखं मुकुन्दस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्त्यमी[4- -4] मृगाः ॥ ९ ॥**

**अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया।**
**लावण्यधाम्नो भवितोपलम्भनं मह्यं न[5] न स्यात्फलमञ्जसा[6- -6] दृशः ॥ १० ॥**

**य ईक्षिताऽहं रहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदा भ्रमः।**
**स्वमाययाऽऽत्मन् रचितैस्तदीक्षया[7-] प्राणाक्षधीभिस्सदनेष्वभीयते[-7] ॥ ११ ॥**

---

1- -1. G,J,M,Ma, P,V °तोऽमुना हरेः। 2. P,V °श्च 3. M,Ma °स्समं वने 4- -4. G,J,M,Ma °रन्ति वै 5. M,Ma ननु 6. M,Ma °मद्य सन्दृशः 7- -7. M,Ma °तेषु तत्सन्प्राणादिभिर्जन्तुषु भाति चित्रधा।

**श्रीध०** अमङ्गलनाशे सूचनान्तरमाह[1] — **कंस** इति। बतेत्याश्चर्ये। अतिखलः कंसोऽपि ममाऽत्यन्तमनुग्रहं अकृत[2] कृतवान्। यतोऽमुना कंसेन[3] प्रहितो हरेरङ्घ्रिपद्मं द्रक्ष्ये द्रक्ष्यामीति। पूर्वे अम्बरीषादयः तमस्संसारमतरन् तीर्णाः॥ ७॥

अङ्घ्रिपद्मं विभावयति **यदिति**। ब्रह्मादिभिरर्चितमिति परमैश्वर्यमाह। श्रिया चेति सौभाग्यातिशयं, मुनिभिः भक्तिसहितैः इति परमपुरुषार्थत्वं, गोचारणायेति कृपालुत्वं, यद्गोपिकानामिति प्रेममात्रसुलभत्वम् ॥ ८ ॥

मनोरथान्तरं करोति **द्रक्ष्यामीति**। शोभनौ[4] कपोलौ नासिका च यस्मिंस्तत्, स्मितसहितः अवलोको यस्मिन्, अरुणकञ्जवल्लोचने यस्मिन् तच्च तच्च मुखं, गुडालकावृतं वक्रकेशावृतं, तदानीमेव शुभसूचकं दृष्ट्वा अतिहृष्यन्नाह प्रदक्षिणमिति॥ ९॥

पुनरप्यन्यच्चिन्तयति — **अपीति**। ईयुषः प्राप्तवतः लावण्यस्य धाम आश्रयः तस्य विष्णोः। यद्वा विष्णोर्लावण्ययुक्तं यद्धाम वपुः, तस्योपलम्भनं दर्शनं भविता भविष्यति। अपि यद्येवं स्यात्तर्हि महद्यं मम दृशो लोचनस्य फलं न स्यादिति न, अपि तु स्यादेवेत्यर्थः ॥ १० ॥

**य ईक्षितेति**। चतुर्भिः कलापकम्[5]। तत्रैवं शङ्का - ननु[6] अस्मदादिवदेव कर्तृत्वभोक्तृत्वादिधर्मैः तत्र तत्र प्रतीयमानस्य कथं विष्णुत्वमिति, इमामाशङ्कां[7] श्लोकत्रयेणाऽपाकुर्वन्, चतुर्थेन तमहं द्रक्ष्यामीति मनोरथं करोति। तथाहि य इति। य[8-] ईक्षिता ईक्षणमात्रकर्ता[-8], असत्सतोः कार्यकारणयोः[9-] ईक्षणादिकर्ता[-9]ऽपि अहंरहितः अहङ्कारहीनः। तथा अपास्ततमोभिदा भ्रमः तमस्त्वज्ञानं[10] ततो भिदा भेदः, ततो भ्रमः, अभिनिवेशादिः अपास्ता अपाकृता स्तमआदयो यस्मिन् सः, कुत एतत्तत्राऽऽह-स्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेण, तथाऽपि स्वमायया स्वाधीनमायया तदीक्षया तस्यैवेक्षया प्राणाक्षधीभिः सहितैः आत्मन् आत्मनि, स्वस्मिन्नेव रचितैर्जीवैः सदनेषु बृन्दावनतरुषु, गोपीगृहेषु च लीलया कर्माणि कुर्वन् सक्तवत् अभीयते आभिमुख्येन प्रतीयते ॥ ११ ॥

---

1. J,Va °का° 2. J,Va omit अकृत 3. P,V omit कंसेन 4. J,Va शोभमानौ 5. P,V कुलकं 6. P,V omit ननु 7. J,Va °मां श° 8- -8. J,Va omit 9- -9. J,Va ईक्षिता परीक्षणमात्र 10. J,Va °स्वा°

**वीर०** अद्याऽधुना कंसो मे[1] महद्यं अत्यर्थमनुग्रहमेवाऽकृत अकरोत्। बतेत्याश्चर्ये। कुतः? यतः[2-] अमुना कंसेन[-2] प्रहितः प्रेषितोऽहं मुरारेः अङ्घ्रिपङ्कजं द्रक्ष्यामि। कथम्भूतस्य? कृतः अवतारो येन तस्य, कथम्भूतम्? यस्याऽङ्घ्रिपङ्कजस्य नखमण्डलत्विषा हृदि भाव्यमानया[3] साधनभूतया पूर्वे प्रह्लादादयो[4] दुरत्ययं तमःकार्यं संसारमतरन्। तमः पापम्। "पाप्मा वै तमः" इति श्रुतेः ॥ ७ ॥

अङ्घ्रिपद्मं विभावयति — **यदिति**। यच्छब्दयोः तदङ्घ्रिपद्मं द्रक्ष्ये इति पूर्वेण सम्बन्धः। ब्रह्मरुद्रौ आदी येषां तैः सुरैरर्चितम्। अनेन परत्वमुक्तम्। देव्या देवस्य विष्णोस्सम्बन्धिन्या श्रिया लक्ष्म्या च अर्चितम्। अनेन पारमैश्वर्यमुक्तम्, श्रिया ब्रह्मादिभिः आश्रीयमाणया लक्ष्म्याऽप्यर्चितत्वोक्तेः। सात्त्वतैर्भक्तैस्सह। मुनिभिरप्यर्चितमित्यनेन सौभाग्यातिशय उक्तः।

सात्त्वन्त एव सात्त्वताः, प्रज्ञादित्वात् स्वार्थेऽण्। अनुचरैस्सह वने गोचारणार्थमनुचरदित्यनेन वात्सल्यं सौलभ्यं[5] चोक्तम्। गोपिकानां कुचकुङ्कुमैः अङ्कितमित्यनेन कमनीयत्वमुक्तम् ॥ ८ ॥

**द्रक्ष्यामीति**। नूनमहं मुकुन्दस्य मुखं द्रक्ष्यामि। तत्सूचकशुभं दृष्ट्वा हृष्यन्नाह — अमी मृगाः मे मम प्रदक्षिणं यथा तथा प्रचरन्ति गच्छन्ति। कथम्भूतं मुखम्? शोभनौ कपोलौ नासिका च यस्मिन्,[6] स्मितसहितः अवलोको यस्मिन् तच्च तच्च अरुणे कञ्जवत् (पङ्कजवत्) लोचने यस्मिन्, तच्च गुडालकैः वक्रकेशैः रावृतम् ॥ ९ ॥

पुनरप्यन्यच्चिन्तयति — **अप्यद्येति**। भुवो भारावताराय[7] भारापनोदनाय, निजेच्छया न तु कर्मणा मनुजत्वमीयुषः प्राप्तवतो निरतिशयलावण्याश्रयस्य विष्णोरुपलम्भनं दर्शनं भविता भविष्यति। अप्यद्य यद्यधुनैवं(व)स्यात्तर्हि मह्यं मम दृशो लोचनस्य अञ्जसा आशु अव्यवहितं फलं न स्यादिति न; अपि तु स्यादेवेत्यर्थः ॥ १० ॥

ननु कोऽसावस्मदादिविलक्षणो विष्णुः यो मनुजत्वमीयिवान्, यस्य च दर्शनं बहुमन्यसे? इत्याशङ्क्य आह चतुर्भिः - **य** इत्यादिभिः। यच्छब्दयोः स चाऽवतीर्णः इत्युत्तरेण सम्बन्धः। अहंरहित इत्यत्र अहंशब्देन अनात्मन्यात्माभिमानहेतुरहङ्कारो लक्ष्यते। असत्सतोः स्वशरीरभूतयोः प्रकृतिपुरुषयोः ईक्षिता द्रष्टा ज्ञाताऽपि अहंरहितः जीववत्स्वाभेदभ्रमरहितः, जीवो हि देहं पश्यन् स्वाभिन्नमनुसन्धत्ते तद्वद्यः प्रकृतिपुरुषौ पश्यन्नपि न स्वाभिन्नावनुसन्धत्ते; किन्तु स्वरूपतः स्वभावतश्च स्वस्मादत्यन्तविलक्षणावेव पश्यतीत्यर्थः। अनेन बद्धजीववैलक्षण्यमुक्तम्। तत्र हेतुं वदन् मुक्तवैलक्षण्यमाह — स्वतेजसेति। स्वतेजसा स्वासाधारणनित्यासङ्कुचितापरिच्छिन्नज्ञानेन अपास्तं निरस्तं प्रतिक्षिप्तं तमोऽज्ञानं, तन्मूलको भिदाभ्रमः भेदभ्रमः अस्वात्मकस्वतन्त्रवस्तुभ्रमश्च यस्य सः, मुक्तो हि बद्धदशायां सङ्कुचितज्ञानेनाऽनिरस्ताज्ञानतन्मूलकाब्रह्मात्मकस्वतन्त्रवस्तुभ्रमयुक्तः। यद्वा, स्वतेजसा स्वसम्बन्धिना पराभिभवसामर्थ्येन निरस्तं तमोऽज्ञानं तन्मूलको भिदाभ्रमः स्वस्मिन्नद्वारकदेवत्वमनुष्यत्वादिभेदभ्रमश्च यस्य सः। कथमेवम्भूतो विज्ञायते इत्यत्राऽऽह — स्वमायया स्वशरीरभूतया प्रकृत्या कारणभूतया तदीक्षया तद्विषयकेन करणभूतेन स्वसङ्कल्पेन आत्मनि स्वस्मिन्नेव आधारभूते रचितैः प्राणेन्द्रियबुद्धिभिः। लिङ्गव्यत्यय आर्षः। रचिताभिः प्राणेन्द्रियबुद्धिभिः कार्यभूताभिः सदनेषु भोगायतनेषु देहेषु अभीयते अभिगम्यते बुध्यते (इति) प्राणादीनां कारणतया ज्ञायते इत्यर्थः। 'प्राणादिभिर्जन्तुषु भाति चित्रधा' इति पाठे प्राणादीनामपि परमात्मशरीरत्वात् तैर्विशिष्टः चित्रधा भातीति शास्त्रवशादवगम्याऽऽह। न च प्राणादिसृष्टिः जीवकर्तृकैवेति तत्कारणतया[8] ज्ञायमानो जीवान्नातिरिच्यत इति वक्तुं युक्तम्। स्व(स्य)स्वप्राणादिसृष्टेः स्व(स्य)स्वकर्तृकत्वासम्भवात्। न हि प्रबुद्धः स्वदुःखसाधनानि स्वयं सृजति। नाऽपि सर्वप्राणादिसृष्टिरेकजीवकर्तृका(एव) इति युक्तिमत्, तस्यापि स्वयं प्राणादिरहितस्य कर्तृत्वासम्भवात्, प्राणादिमत एव कर्तृत्वदर्शनात्। प्राणादिमत्त्वे तु तत्सृष्टेः कर्त्रन्तरसापेक्षत्वात्। न च तावत्स्वस्य[9] प्राणादीन् सृष्ट्वा ततोऽन्येषामपि सृजतीति वक्तुं युक्तम्। तावत्प्राणादिरहितस्य प्राणादिसृष्टिकर्तृत्वासम्भवात्, अन्योन्याश्रयाच्च। परमात्मा तु करणायत्तज्ञाननिरपेक्षः सङ्कल्पमात्रेणैव प्राणादीन् स्रष्टुं शक्नोतीति तत्कारणतया ज्ञायत इति सुष्ठूक्तम् ॥ ११ ॥

---

1. T,W omit मे 2- -2. T,W omit 3. K adds (धार्यमाणया) 4. K adds (ब्रह्मादयो) 5. K adds (सौशील्यं) 6. K adds इति 7. T,W omit भविता 8. K सुखदुःख 9. K °यश्च।

**विज०** बत आश्चर्यम्। अद्य अत्यनुग्रहमधिकानुग्रहं अकृत अकरोत्। 'अति ममात्यनुग्रहम्' इति पाठे अति अत्यर्थं स मे कृतवानित्यर्थः। प्रहितः प्रेषितः। अङ्घ्रिपद्मं विशिनष्टि कृतावतारस्येति। पूर्वे ब्रह्मादयो यस्याऽङ्घ्रिपद्मस्य नखानां मण्डलस्य त्विषा तेजसा दुरत्ययं तमोऽज्ञानमघं वा शुचं वा अतरन् तीर्णवन्त इत्यन्वयः ॥ ७ ॥

यच्च ब्रह्मादिभिः सुरैरर्चितं ससात्त्वतैः पाञ्चरात्रिकैः सहितैः, यच्च गोचारणाय गवां तृणचरार्थं अनुचरैर्गोपैः समं वने भ्रान्तम्, यच्च वने गोपिकानां कुचकुङ्कुमेनाऽङ्कितं मुद्रितं तद्द्रक्ष्ये इति पूर्वत्राऽन्वयः ॥ ८ ॥

नूनं निश्चयात् स्मितावलोके अरुणे कञ्जसदृशे लोचने यस्य तत्तथा। स्मितसहितोऽवलोको ययोस्ते तथा।[1] गुडाः निबिडाः अलकाः कुन्तलाः तैरावृतम्। यद्वा, गुडः गुलिकाः तद्वद्वक्राः, यद्वा, गुडाः इक्षुविकारः तद्वत् स्निग्धा अलकाः तैरावृतम्। दर्शननिश्चये शकुनं वक्ति प्रदक्षिणमिति। वै इत्यनेन अन्ये भारद्वाजनादिपक्ष्यादयो गृह्यन्ते इति सूचयति। "गुडौ पिण्डेऽक्षुविकृती स्नुही गुलिकयोर्गुडा" (वैज.को. 6-5-27) इति च ॥ ९ ॥

ईयुषः गतवतः उपलम्भनं दर्शनं भविता भविष्यति। मह्यं मम दृशः नेत्रस्य सं समीचीनं फलं स्यान्ननु स्यादेव। "समभेदे समीचीने" (वैज.को. 8-7-8) इति च। "प्रश्नावधारणैतिह्यसमीहाऽनुमते ननु" (वैज.को. 8-7-22) इति। सन्दृश इत्येकं वा पदम्। "न सन्दृशे तिष्ठति" (कठ.उ. 6-9) इति श्रुतिः। सन्दर्शनसाधनस्य नेत्रस्य इत्यर्थः॥ १० ॥

चैतन्यैकरसस्य हरेः गोपत्वेनावभासनं न चोद्यमिति भावेनाऽऽह — **य** इति। यो हरिः [2-]अहंरहितः[-2] अविद्यमानं दर्शनं आत्मनि यद्यभिमन्येत तदा ह्युक्तदोषः स्यात्, न चाऽसावस्तीत्यर्थः। यज्ञदत्तवद्देहस्थस्याज्ञानादिसम्भवेन अहम्भावशून्यत्ववचनमौपचारिकं किं न स्यादिति तत्राऽऽह अपास्तेति। अपास्तः निराकृतः तमोभिदाभ्यामज्ञानाऽन्यथाज्ञानाभ्यां उत्पन्नो भ्रमः प्रवृत्तिः यस्य सः। 'भ्रमु अनवस्थाने' इति धातोः। "ष्ठा गतिनिवृत्तौ" इति अवस्थानं गत्यभावः, तदभावः कार्येषु प्रवर्तमानमित्यर्थः। वस्तुतत्त्वाज्ञानविपरीतनिमित्तप्रवृत्तियुक्तो न भवतीत्यर्थः। यद्वा, तमसा वस्तुतत्त्वाज्ञानेन जाता भिदा इदं रजतमित्यन्यथाज्ञानं, तदेव भ्रमो भ्रान्तिज्ञानं यस्य दूरोत्सारितं सः। ननु मुक्तोऽप्येतादृश इत्यत उक्तं स्वतेजसेति। सत्यं, किन्तु "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः" इति श्रुतेरस्य परप्रभावेण तदात्मानमेव वेद। "अहं ब्रह्माऽस्मि" (बृह.उ. 1-4-10) इति स्वमायया स्वेच्छया आत्मन् आत्माधारतया रचितेषु जन्तुषु प्राणादिभिः सह चित्रधा सुरनरतिर्यगादिनानाजातिमिश्रत्वेन भाति। ननु तर्हि विकारोऽपि स्यादित्यत्राऽऽह तत्सन्निति। तथैव सन् अविकार एव अभ्यर्हितः श्रेष्ठ इत्यर्थः। सर्वैरभ्यर्हितो वा। "सन्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपि" (वैज.को. 8-4-16) इति च। अनेन मूलरूपी हरिर्यथा निर्विकारः तथा रूपान्तरवानिति सूचितं भवति। हेयदेहित्वेन आभासमानस्य किं कर्मेति तत्राऽऽह ईक्षितेति। असत्सतोः अशुभशुभयोः ईक्षिता द्रष्टा जन्तुभिः क्रियमाणस्य पुण्यपापलक्षणस्य कर्मणः साक्षीत्यर्थः, नत्वस्य दर्शनाभिमानलक्षणविकारः, आपन्नम् उद्दिश्येति वा ॥ ११ ॥

---

1. Ma adds इतीममर्थं सूचयति। 2- -2. Ma omits.

यस्याखिलामीवहभिस्सुमङ्गलै र्वाचो विमिश्रा गुणकर्मजन्मभिः।
प्राणन्ति शुम्भन्ति पुनन्ति वै जग द्यास्तद्विरक्ताः शव[1]शोभना मताः ॥ १२ ॥

स चाऽवतीर्णः किल सात्त्वतान्वये स्वसेतुपालामरवर्यशर्मकृत्।
यशो वितन्वन्व्रज आस्त ईश्वरो गायन्ति देवा य[2]दशेषमङ्गलम् ॥ १३ ॥

तन्त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम्।
रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममाऽऽसन्नुषसः सुदर्शनाः ॥ १४ ॥

★ अथाव[3]रूढस्सपदीशयो रथा त्प्रधानपुंसोश्चरणं स्वलब्धये।
धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन्वनौकसः॥ १५ ॥

अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपङ्कजम्।
दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥

---

1. M,Ma स्युरशो° 2. M,Ma °स्त° ★ अयं श्लोकः विजयध्वजतीर्थेन न स्वीकृतः न व्याख्यातश्च। 3. P,V तीर्ण°

**श्रीध०** ननु सर्वदा अहङ्का[1]ररहितस्य आत्मारामस्य लीलाऽपि कुत इत्याशङ्क्य, [2]अपरानुग्रहार्था इत्याशयेनाऽऽह- **यस्येति**। अखिलानि अखिलस्य वा अमीवानि पापानि घ्नन्तीति अखिलामीवहानि तैः, तथा सुमङ्गलैः शोभनानि मङ्गलानि येभ्यस्तैः, गुणाः करुणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचः जगत् प्राणन्ति जीवयन्ति, शुम्भन्ति शोभयन्ति, पुनन्ति पवित्रयन्ति। व्यतिरेकमाह या इति। तैर्विरक्ता रहिताः तास्तु स्वलङ्कृता अपि वस्त्राद्यलङ्कृतशववच्छोभमानाः मताः सतां सम्मताः ॥ १२ ॥

स इति। स्वयं रचितान् सेतून् वर्णाश्रमधर्मान् पालयताममरवर्याणां सुखकर्ता सन्नवतीर्णः। यद्यशः [3-]लोका[-3] गायन्ति॥ १३ ॥

**तमिति**। त्रैलोक्ये एकमेव कान्तम्। दृशिर्दृष्टिः। तद्वतां महानुत्सवो यस्मात्। यद्वा, महानुत्सव एव। [4]अत एव [5]श्रिया ईप्सितमास्पदम्। एवम्भूतं रूपं श्रीमूर्तिं दधानं तमीश्वरं द्रक्ष्यामीति। अत्र लिङ्गं उषसः प्रभातसमयाः सुदर्शनाः [6-]शुभदर्शनाः[-6] सुखप्रभाता रजन्यः शुभसूचका बभूवुरित्यर्थः ॥ १४ ॥

**अथेति**। किञ्च, अथ दर्शनानन्तरं सपदि तत्क्षणमेव रथादवतीर्णस्सन् प्रधानयोः पुरुषयो रामकृष्णयोः चरणं योगिभिरपि आत्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि। आभ्यां सह अनयोस्सखीन् गोपांश्च नमस्यामीति॥ १५॥

**अपीति**। किञ्च, अधास्यत् धास्यति। तद्विभावयति दत्ताभयमिति सार्धेन ॥ १६ ॥

---

1. J,Va °रादिर° 2. J,Va omit अ 3- -3. J,P,V omit 4. P,V omit अत एव 5. J,Va °यः 6- -6. P,V omit.

**वीर० यस्येति**। अखिलानां वदतां (पठतां) शृण्वताञ्च जनानां[1] अमीवं पापं घ्नन्तीति तथा। तैर्यस्य गुणकर्मजन्मभिः **सुमङ्गलैः निरतिशयश्रेयस्करैः** विमिश्रा वाचो गिरः। प्राणन्ति शुम्भन्तीति अन्तर्भावितण्यर्थनिर्देशः। जगज्जीवयन्ति, शोभयन्ति, **पुनन्ति चेत्यर्थः**। तत्र गुणाः वात्सल्यसौशील्यसौलभ्यादयः, कर्माणि जगद्व्यापारप्रभृतीनि चेष्टितानि जन्मानि रामकृष्णादीनि या वाचस्तद्विरक्ताः भगवद्गुणादिप्रतिपादनरहितास्ताः पदलावण्यार्थलावण्ययुक्ता अपि, शवशोभनाः वस्त्राद्यलङ्कृतशववच्छोभनाः मता ज्ञाताः, शवकल्पानामभिमता इति भावः ॥ १२ ॥

**स चेति**। य एवंविधो विष्णुरीश्वरः स एव सात्त्वतान्वये यादवकुले श्रीकृष्णरूपेणाऽवतीर्णः किल। स्वसेतुः स्वकृतमर्यादा तं पालयतीति तथा, तेषाममरवर्याणां दैवसम्पत्तिमभिजातानां[2] शर्म सुखं करोतीति तथाभूतः। यशः कीर्तिं वितन्वन् व्रजे आस्ते। यशो विशिनष्टि अशेषाण्यखिलानि मङ्गलानि यस्मात्तत्, यच्च देवा गायन्ति ॥ १३ ॥

**तमिति**। तं सात्त्वतानां कुले अवतीर्णमुक्तविधमहमद्य नूनं द्रक्ष्यामि, यतो मम उषसः लिङ्गव्यत्यय आर्षः, उषांसि प्रभातसमयाः सुदर्शनाः प्रसन्नाः, सुखप्रभाता रजन्यः शुभसूचका बभूवुरित्यर्थः। कथम्भूतम्? महतां साधूनां गतिं स्वप्राप्त्युपायं गुरुं हितकरणम्। किञ्च रूपं विग्रहं दधानं बिभ्राणम्। कथम्भूतं रूपम्? त्रैलोक्यकान्तं त्रिलोकसुन्दरं दृशिमतां चक्षुष्मतां महानुत्सवो हर्षो यस्मात्तत् श्रियो लक्ष्म्याः ईप्सितमास्पदम् आश्रयभूतम् ॥ १४ ॥

किञ्च, **अथेति**। अथाऽस्य दर्शनानन्तरं सपदि रथावरूढोऽहमीश्वरयोः प्रधानपुंसोः पुरुषोत्तमयो रामकृष्णयोः चरणं नूनं ध्रुवं नमस्ये। चरणं कथम्भूतम्? योगिभिरप्यात्मलब्धये स्वसत्तासिद्ध्यै (द्धये) धिया केवलं धृतं भावितं न तु दृष्टमिति भावः। (ततः) तथा आभ्यां प्रधानपुम्भ्यां सह अनयोः सखीन् वनौकसो गोपान्नमस्ये ॥ १५ ॥

किञ्च, अथानन्तरम् अङ्घ्रिमूले पतितस्य मम शिरसि विभुः श्रीकृष्णः स्वयं हस्तपङ्कजमधास्यत् [3-]आधारयति[-3]। [4-]अथाऽस्य[-4] हस्तपङ्कजं विभावयति- दत्ताभयमित्यादिना सार्धेन। काल एव भुजङ्गः। तस्य रंहसा वेगेन प्रोद्वेजितानां संसारभीरूणां शरणैषिणां रक्षणोपायत्वेन अध्यवस्यतां जनानां दत्तमभयं येन तत् ॥ १६ ॥

---

1. T omits जनानां 2. K °वी° 3- -3. T,W omit 4- -4. K omits.

**विज०** यस्य हरेः अखिलामीवहभिः अखिलानि अमीवानि पापानि घ्नन्तीति अखिलामीवहानि तैः, अत एव सुमङ्गलैः, गुणकर्मजन्मभिः विमिश्राः सङ्कलिता वाचः, श्रीकृष्ण कृष्णसख वृष्णिवृषेत्यादिलक्षणाः जगत्प्राणन्ति आह्लादयन्ति, जीवयन्ति वा, शुम्भन्ति शोभयन्ति शुभयुक्तं कुर्वन्ति। पुनन्ति पवित्रयन्ति वै गङ्गादौ प्रसिद्धमित्यन्वयः। या वाचः तैर्विष्ण्वादिभिः विरक्ताः शून्याः वर्जिताः स्युः, ताः सद्भिः अशोभना मताः अवबोधिता इत्यन्वयः ॥ १२ ॥

अस्त्वेवंविधमाहात्म्यो भगवान्, ततः प्रकृते किम्? अत्राऽऽह — **स चेति**। **चशब्दः** एवार्थे, ईश्वर एव व्रजे आस्ते किलेत्यन्वयः। सात्त्वतामन्वये यदुकुले अवतीर्णः, किंकार्ययेति तत्राऽऽह **स्वसेत्विति**। **स्वेन** कृतः सेतुः मर्यादा तां पालयन्ति रक्षयन्तीति स्वसेतुपालाः अमराणां वर्याः अमरवर्याः, **स्वसेतुपालानाममरवर्याणामिन्द्रादीनां** शर्मकृत्, सुखकृत्, देवकार्यायाऽवतीर्ण इत्यर्थः। अथ किं प्रमाणमित्यत्राऽऽह — गायन्तीति। **देवाः** व्यासादयः पुराणादिषु। गेयसम्भवे गानं युक्तं, तत्कथमित्यत्राऽऽह यश इति। यद्यशो वितन्वन्नाऽऽस्ते अशेषाणां मङ्गलं श्रेयस्करं तद्यशः ॥ १३ ॥

स्वमानसं प्रति वक्ति — **तन्विति**। अहमद्य तमेव द्रक्ष्ये इत्यन्वयः। दृशिमतां चक्षुष्मतां महोत्सवं त्रैलोक्यकान्तं कमनीयं रूपं दधानं "भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाऽक्षिभिर्यजत्राः" (नृ.उ.ता.उ. 1) इति श्रुतिः। ममाद्य उषसः प्रभातकालावयवाः क्षणादयः सुदर्शनाः सर्वजगत्पूज्यवस्तुदर्शनप्रदा आसन् इत्यन्वयः ॥ १४ ॥ ★

कालाख्यभुजङ्गस्य रंहसा रंहोलक्षणविशेषेण अधास्यत् धास्यति धरिष्यत्यपि किम् ॥ १६ ॥

★ १५ श्लोकस्य विजयध्वजव्याख्या नास्ति।

**समर्हणं यत्र निधाय[1] कौशिकस्तथा[2-] बलिश्चा[-2]ऽऽप जगत्त्रयेन्द्रताम्।**
**यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ १७ ॥**

**न मय्युपैष्यत्यरिबुद्धिमच्युतः[3] कंसस्य भृत्यः[4] प्रहितोऽपि विश्वदृक्।**
**योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥**

**अप्यङ्घ्रिमूलेऽवहितं[5] कृताञ्जलिं मामीक्षिता[6] सस्मितमार्द्रया[7] दृशा।**
**सपद्यपध्वस्त समस्तकिल्बिषो वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ १९ ॥**

**सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ[8] माम्।**
**आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक[9] उच्छ्वसित्यतः ॥ २० ॥**

**लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः।**
**तदा वयं जन्मभृतो महीयसा नैवाऽऽदृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥**

---

1. P,V वि° 2- -2. M,Ma °को महा° 3. M,Ma °पैत्यप्रियबु° 4. G,J दूतः 5. M,Ma °ले पतितं 6. M,Ma °क्षते 7. P,V याऽऽ° 8. M,Ma °रप्स्यते 9. M,Ma कामा°

**श्रीध० समर्हणमिति**। बलिना तावत्पदत्रयपरिमितभूदानसमये तस्य हस्ते उदकं निहितम्। **कौशिकः इन्द्रः**, तेनापि कदाचित् किञ्चिन्निहितमिति ज्ञातव्यम्। ममुक्षूणां संसारभयनिवर्तकं सकामानामभ्युदयप्रदञ्चेत्युक्तम्। अनुरक्तानां परमसुखदं चेत्याऽऽह-यद्वेति। वाशब्दो वितर्के। विहारे रासक्रीडायां, सौगन्धिकस्य गन्ध इव गन्धो यस्य तत् सौगन्धिकगन्धि ॥ १७ ॥

एवं परमानुग्रहं सम्भाव्य पुनरप्यसम्भवमाशङ्क्य परिहरति नेति। यद्यप्यहं कंसेन प्रहितः, अतस्तस्य दूतः। तथाऽपि मयि अरिरयमिति[1] बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः। यतः विश्वदृक् सर्वज्ञः। अतो मम चेतसः अन्तश्च बहिश्च यदीहितं चेष्टितं एतत् यः क्षेत्रज्ञः अन्तर्यामी नित्यज्ञानेनेक्षते। अयं भावः — चेतसो बहिरेव कंसमनुवर्ते, अन्तस्तु कृष्णमेव, तदेव तदसौ हृदि स्थितः[2] जानातीति। यद्वा एतस्य जगत ईहितमिति, अतः[3] ॥ १८ ॥

अपीति। अपि यदि अङ्घ्रिमूले चरणोपान्ते अवहितं संयतं कृपामृतेन आर्द्रया दृशा मामीक्षिता द्रक्ष्यति। तर्हि, सपद्येव विनष्टाखिलकिल्बिषः[4] परां मुदं वोढा प्राप्स्यामीति ॥ १९ ॥

सुहृदिति। अथ मां परिरप्स्यते आलिङ्गिष्यति यदा तदैव मे आत्मा तीर्थीक्रियते अतिपवित्रीकरिष्यते, उच्छ्वसिति श्लथो भविष्यति, अतो देहात् ॥ २० ॥

लब्धेति। तत! भो तातेति तदा जन्मभृतः सफलजन्मानः अन्यथा तज्जन्मैव न भवतीत्याह — महीयसेति। महीयसा श्रीकृष्णेन यो वा नाऽऽदृतः अमुष्य तस्य जन्तोः तत्[5] जन्म धिक् ॥ २१ ॥

---

1. J,Va °रे 2. P,V °स्थो 3 J,Va omit अतः 4. J,Va कल्मषः 5. P,V omit तत्

वीर० किञ्च यत्र यस्मिन् हस्तपङ्कजे बलिर्वैरोचनिः पदत्रयपरिमितभूदानसमये अर्हणमर्घ्यं विधाय जगत्त्रयेन्द्रतां [1-]जगत्त्रयाधिपत्यं प्राप प्राप्स्यतीति, भाविनि मन्वन्तरे इन्द्रो भविष्यतीत्यर्थः। तथा कौशिक इन्द्रोऽपि कदाचिदर्घ्यं निधाय जगत्त्रयेन्द्रतां[-1] प्राप्तवानिति प्रसिद्धिमुपजीव्येत्थमुक्तम्। एवं मुमुक्षूणां मोक्षदं सकामानामभ्युदयप्रदश्चेत्युक्तम्, अनुरक्तानां परमसुखदश्चेत्याह- यद्वेति। वाशब्दो वितर्के, उक्तसमुच्चयद्योतको वा; निपातानामनेकार्थत्वात् यच्चेत्यर्थः। व्रजयोषितां विहारे यः श्रमः तम्, सौगन्धिकगन्धि यद्धस्तपङ्कजं कर्तृ अपानुदत् दूरीचकार। [2-]सौगन्धिकस्येव गन्धो यस्य तत् सौगन्धिकगन्धि,[-2] सौगन्धिकं कमलजातिविशेषः ॥ १७ ॥

एवं परमानुग्रहं सम्भाव्य पुनरप्यसम्भवमाशङ्क्य परिहरति — न मयीति। यद्यप्यहं कंसेन प्रहितः प्रेषितः, [3]तद्भृत्यश्च। तथाऽपि मयि अरिबुद्धिम् अरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः: यतस्स विश्वदृक् सर्वसाक्षी। विश्वदृक्त्वमेव प्रपञ्चयति — क्षेत्रज्ञः युगपत्सर्वाणि क्षेत्राणि जानन्नीश्वरः नियन्ता च सन् एतत् अस्मच्चेतसः[4] ईहितं व्यापारं चेतसोऽन्तर्बहिश्च वसन्। "यो मनसि तिष्ठन्" (बृह.उ. 3-7-28) इति श्रुतेः। यः अमलेन सङ्कोचविकासरूपविकाररहितेन[5] चक्षुषा धर्मज्ञानेन ईक्षते सर्वं युगपत् साक्षात्करोति। अयं भावः। बहिरेवाऽहं कंसमनुवर्ते, अन्तस्तु श्रीकृष्णमेव। तदेतदसौ हृदिस्थो जानातीति ॥ १८ ॥

अपि[6] तच्चरणोपान्ते अवहितं संयतं बद्धाञ्जलिश्च मां स्मितेन सहितं यथा तथा कृपामृतेनाऽऽर्द्रया दृशा दृष्ट्या, द्रक्ष्यति। तर्हि सपद्येव विनष्टाखिलकल्मषः, विगतशङ्कश्च ऊर्जितां प्रभूतां[7] मुदं वोढा प्राप्स्यामि ॥ १९ ॥

किञ्च सुहृत्तमं ज्ञातिं, न विद्यते तस्मादन्यद्दैवतं यस्य तं मां पृथुभ्यां दीर्घाभ्यां भुजाभ्यां परिरप्स्यते आलिङ्गिष्यति यदा तदैव मम आत्मा देहः तीर्थीक्रियते पवित्रीकरिष्यते। अतो हेतोर्मम कर्मात्मकः बन्धश्च उच्छ्वसिति शिथिलीभविष्यति॥ २०॥

किञ्च उरुश्रवाः श्रीकृष्णः लब्धोऽङ्गसङ्गः परिरम्भो येन तं, बद्धाञ्जलिञ्च मां हे अक्रूर! हे तत! हे तातेति च वक्ष्यति सम्बोधयति। तदा वयं जन्मभृतः सफलजन्मानः भविष्यामः। यस्तु पुमान् महीयसा भगवता नैवाऽऽदृतः आदृतो न भवति अमुष्याऽनादृतस्य तज्जन्म धिक्! निन्द्यमित्यर्थः ॥ २१ ॥

---

1- -1. T,W omit 2- -2 T omits 3. K तस्य भृ० 4. K मचे० 5. T,W omit विकास 6. K ०यु० 7. T,W omit प्रभूतां

**विज०** यत्र निजहस्तपद्मे समर्हणं जलपूर्वपूजां निधाय दत्वा कौशिकः इन्द्रः जगत्त्रयेन्द्रतामाप। महाबलिश्च तथा इन्द्रवत् यद्धस्तपङ्कजं सौगन्धिकस्य कह्लारस्य गन्ध इव गन्धोऽस्याऽस्तीति। विहारे वनक्रीडायाम् अपानुदत् निराकरोत्॥ १७॥

ननु किं तव बहुप्रलापेन यतः त्वं कंसभृत्यः तत्प्रहितश्च, अतस्त्वय्यप्रियबुद्धिं कुर्यादच्युत इति मन्दाशङ्कां परिहरन्निवाऽऽह — **न मयीति**। नोपैत्यपि नोपैत्येवेत्याह — विश्वदृगिति, विश्वदृक्त्वान्मम मनोनैर्मल्यं विजानातीत्यर्थः। एतदेव विवृणोति य इति। चेतस एतदीहितं सङ्कल्पलक्षणं चेष्टितम् अन्तर्बहिश्च स्थितमिति व्याप्तिकथनमात्रेण चेतनस्य चेष्टितसाक्षित्वं सम्यक् न विवृतं स्यादिति क्षेत्रज्ञ इत्युपादत्ते। "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते" (भ.गी.13-1) इत्यादिना क्षेत्रज्ञशब्दार्थः सम्यग्विवृतः ॥ १८ ॥

दयार्द्रया दृशा मां सस्मितमीक्षते। किम् ईक्षणफलम्, आह — सपदीति। ईक्षणानन्तरमपास्तकिल्बिषः सम्यङ्निराकृताशुभोऽत एव वीता विविधा शङ्का यस्य स वीतशङ्कोऽहम् ऊर्जितामुद्रिक्तां मुदं वोढा वहिष्यामीत्यन्वयः॥ १९॥

अथ यदा परिरम्भणे हेतुमाह — **सुहृत्तममिति**। अन्यदैवतमिष्टप्रदं यस्य नास्ति स तथा। परिरम्भणात् किं फलमाप्तं भवतीति तत्राऽऽह — आत्मेति। अतोऽस्मात्परिरम्भणात् आत्मा देहः तीर्थीक्रियते शुद्धजलवत्क्रियते, पात्रीक्रियते वा, ज्ञानदानाय योग्यो भवतीत्यर्थः। अन्येषां भगवद्भक्तौ बुद्ध्यवतारीक्रियते वा, ज्ञानोपदेशाय वाऽधिक्रियते वा। किमत इत्यत्राऽऽह बन्धश्चेति। कामात्मकः विषयतृष्णालक्षणो बन्धः उच्छ्वसिति निर्वीर्यश्छिन्नो भवतीत्यर्थः। "च उच्छेदेऽपि समुच्चये" अतो देहहेतुको वा प्रवाहरूपेण सत्यो वा ॥ २० ॥

भगवतईक्षणसमये इदमित्याशयेन वक्ति **लब्धाङ्गसङ्गमिति**। उरुश्रवाः पूर्णकीर्तिः व्याप्तश्रवणशक्तिमान्वा। हे अक्रूर! हे तात! वत्सेति सम्बोधयति च। यदि जन्मभृतः जन्मनः साफल्यं प्राप्ताः। बाधकमाह **महीयसेति**। **महत्तमेन** भगवता यो नाऽऽदृतः वागादिना सादरमर्चितो न भवति, अमुष्य पुंसो यज्जन्म तत् धिक् निन्दामि निष्फलत्वात् ॥ २१ ॥

न तस्य कश्चिद्दयितः सुहृत्तमो न चा[1]ऽप्रियो द्वेष्य उपेक्ष्य एव वा[2]।
तथाऽपि भक्तान्भजते यथा [3]तथा [4-]सुरद्रुमो[-4] यद्व[5]दुपाश्रिताऽर्थदः ॥ २२ ॥

[6]किञ्चाग्रजो माऽवनतं यदूत्तमः स्मयन्परिष्वज्य गृहीतमञ्ज[7]लौ।
गृहं प्रवेश्याऽमसमस्तसत्कृतं स[8]म्प्रेक्ष्यते कंसकृतं स्वबन्धुषु ॥ २३ ॥

[9-]श्रीशुक उवाच[-9]

इति सञ्चिन्तयन्कृष्णं श्वफल्कतनयोऽध्वनि।
रथेन गोकुलं प्राप्तः सूर्यश्चाऽस्तगिरिं नृप ॥ २४ ॥

पदानि तस्याऽखिललोकपालकिरीटजु[10]ष्टाऽमलपादरेणोः।
ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः । २५ ॥

तद्दर्शनाह्लादविवृद्धसम्भ्रमः प्रेम्णोर्ध्व[11]रोमाऽश्रुकलाकुलेक्षणः।
रथादवस्क[12]न्द्य स ते[13]ष्वचेष्टत प्रभो[14]रमून्यङ्घ्रिरजांस्यहो इति ॥ २६ ॥

---

1 M,Ma °वाऽ 2 M,Ma च 3. M,Ma य° 4- -4. M,Ma वनस्पतिर्य० 5 G,J °तो° 6 P,V किं वा 7. M,Ma सञ्चितौ 8 G,J,K,T,W सम्प्र° 9- -9. M,Ma,T,W omit 10 M,Ma चूडामणि पा० 11 M,Ma °त्थ 12 K,T,W °प्लुत्य 13 K,T,W °वे° 14 M,Ma °रिमा°

**श्रीध०** ननु सुहृदादिषु परिष्वङ्गसम्प्रश्नादयो जीवधर्माः कथमीश्वरे सङ्गच्छन्ते, अत आह — **नेति**। दयितः प्रियः तद्विपरीतोऽप्रियः, सुहृत्तमो हि[1]तः, तद्विपरीतो द्वेष्यः, एतत्सर्वव्यतिरिक्तः उपेक्ष्य इति। [2-]दयितादयो न सन्तीति[-2] सत्यम्। तथाऽपि भगवान् भक्तान् भजते। तत्र च ये यथा भक्ताः तान् तथा भजते। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" (भ.गी. 4-11) इति भगवद्वचनात्। अविषमत्वेऽपि भक्तेभ्य एव फलं ददाति इत्यत्र दृष्टान्तः यद्वत्सुरद्रुमः इति॥ २२॥

**किमिति**। यो मयाऽञ्जलिः करिष्यते तस्मिन्नेव अ[3]ञ्जलौ गृहीतं मां आप्तानि समस्तानि अ[4]र्घ्यार्चादिसत्कृतानि येन तं माम् ॥ २३ ॥

**इतीति**। स तु मार्गमपि न वेद। तथाऽपि रथेन प्राप्त इति ॥ २४ ॥

**पदानीति**। अखिलैर्लोकपालैः किरीटेषु जुष्टाः अमलाः पादरेणवो यस्य तस्य क्षितिकौतुकानि क्षितेरलङ्कारारूपाणि॥ २५॥

**तदिति**। तद्दर्शनेन य आह्लादः तेन विवृद्धस्सम्भ्रमो यस्य सः प्रेम्णा ऊर्ध्वानि रोमाणि यस्य सः। अश्रूणां कलाभिः लेशैराकुले ईक्षणे यस्य सः, अवस्कन्द्य अवप्लुत्य तेषु पदेषु सोऽक्रूरः अचेष्टत व्यलुण्ठत्, अहो इति दुर्लभतां भावयन् ॥ २६ ॥

1. J,Va हिततमः 2- -2. P,V omit 3. P,V omit अञ्जलौ 4. G,J अर्घादि 5. Va omits पदेषु 6. P,V omit सोऽक्रूरः 7. J,Va °ठत्

**वीर०** पुनरपि सुहृत्तमत्वज्ञातित्वादिप्रयुक्तपरिरम्भादेरसम्भवमाशङ्क्य अनन्यदैवतत्वप्रयुक्तस्य तस्य सम्भवमाह — **न तस्येति**। यद्यपि सर्वसमस्य तस्य न दयितादयस्सन्ति, न विषमा बुद्धिरस्तीत्यर्थः। तथाऽपि यथा भक्ता आत्मानं भजन्ते तथा भक्तान्भजत एव। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" (भ.गी. 4-11), "प्रियो हि ज्ञानिनोऽत्यर्थमहं, स च मम प्रियः" (भ.गी. 7-17) इति तदुक्तेरिति भावः। अवैषम्येऽपि भक्तानेवाऽनुभजते इत्यत्र दृष्टान्तः — सुरद्रुमः कल्पतरुः। यद्वद्यथा उपाश्रितानां भजतामेव अर्थदः कामदस्तद्वत्। न ह्येतावता तस्य वैषम्यमस्तीति भावः ॥२२॥

किञ्च। यदूत्तमोऽग्रजो रामः, अवनतं प्रणतं मां स्मयन् परिष्वज्य यो मयाऽञ्जलिः क्रियते तस्मिन्नेव गृहीतं मां गृहं प्रवेश्य आप्तानि लब्धानि समस्तसत्कृतानि अर्घ्यादीनि येन तम् मां प्रति स्वबन्धुषु विषयभूतेषु कंसकृतं द्रोहं सम्प्रक्ष्यते, 'प्रच्छ ज्ञीप्सायाम्" (वाचि) ॥२३॥

इत्थं श्वफल्कतनयोऽक्रूरः पथि कृष्णमेव अनुचिन्तयन् रथेन गमनसाधनेन गोकुलं प्राप्तः। हे नृप! सूर्यश्च अस्तगिरिं प्राप्तः अस्तमितो बभूव। यद्यपि गोकुलमधुपुर्योरन्तरा क्रोशत्रयमेव, अक्रूरस्तु प्रभातसमय एव रथारूढो मधुपुर्याः प्रतस्थे, तथाऽपि कृष्णानुचिन्तया परवशः तत्र तत्र विलम्बयन् सायन्तनवेलायां गोकुलं प्राप्त इति भावः ॥ २४ ॥

**पदानीति**। अखिलैः लोकपालैः किरीटेषु जुष्टाः अमलाः पादरेणवो यस्य तस्य भगवतस्सम्बन्धीनि क्षितेरलङ्काररूपाणि अब्जादिरेखाभिः विलक्षितानि चिह्नितानि पदानि गोष्ठे ददर्श ॥ २५ ॥

तेषां पदानां दर्शनेन य आह्लादः तेन विवृद्धस्सम्भ्रमो यस्य, प्रेम्णा ऊर्ध्वान्युदञ्चितानि रोमाणि यस्य, अश्रूणां हर्षजानां कलाभिः लेशैः आकुले ईक्षणे यस्य सः अक्रूरः रथादवप्लुत्य तेषु पदेषु अवेष्टत व्यलुठत्। अहो प्रभोः कृष्णस्य अमून्यङ्घ्रो रजांसि ब्रह्मादीनामपि दुर्लभानीति भावयन्नवेष्टतेत्यन्वयः ॥ २६ ॥

1. T,W omit सर्व 2. A.B क्रमेण

**विज०** अयं श्रीकृष्णः क्षीराब्धिशाय्येव नाऽन्य इति तस्य लक्षणमाह — **नेति**। "वनस्पतिर्वृक्षमात्रे कल्पादौ पुष्पवर्जिते" इत्युत्पलमाला। यथा यथा स्वस्वयोग्यफलदानेन ॥ २२ ॥

इदानीं बलभद्रमुद्दिश्य अक्रूरचिन्तां वक्ति — **किञ्चेति**। गृहीतसञ्चितौ गृहीतपशुपादबन्धनरज्जौ यदूत्तमोऽग्रजोऽवनतं मानयन् स्मयन् रामः मम स्वबन्धुषु वसुदेवादिषु कंसकृतं कर्म सम्प्रेक्ष्यते विचारयिष्यति। किञ्चेत्यन्वयः। "पादबन्धनपाशन्तु

पशूनां सन्निर्ति विदुः" इति वररुचिः। "गृहीतमानने अग्रजे" इति पाठे सुगमः पन्थाः। यद्वा, यदूत्तमः गृहीतानां फलदानाय शुभानां सन्चितिः सङ्ग्रहः येन स तथा। तस्मिन् सति, स्मयन् मन्दस्मितं कुर्वन् कृष्णः मां सम्प्रेक्ष्यत इति कृष्णविषयो वा ॥ २३,२४ ॥

अखिललोकपालानां किरीटेषु सत्सु चूडामणिषु पादरेणवो यस्य स तथा। तस्य क्षितिकौतुकानि भूमिमङ्गलकराणि पदानि पादतललाञ्छनानि अब्जादिभिर्विलक्षितानि लाञ्छितानि। "विवाहहस्तसूत्रे च मङ्गले कौतुकं विदुः" इति च ॥ २५ ॥

सम्भ्रमः भक्त्युद्रेकनिमित्तव्यापारविशेषः उत्थानि रोमाणि यस्य स तथा। रोमाञ्चितगात्रश्चायं अश्रुकलयाऽऽकुलेक्षणश्च, आकुले कलिले ईक्षणे यस्य स तथा। अवस्कन्द्य अवरुह्य ॥ २६ ॥

★ देहम्भृतामियानर्थो हित्वा दम्भं भियं[1] शुचम्।
सन्देशाद्यो हरेर्लिङ्ग दर्शनश्रवणादिभिः ॥ २७ ॥ △

▲ ददर्श कृष्णं रामञ्च व्रजे[2] गोदोहनं गतौ।
पीतनीलाम्बरधरौ शारदाम्बुरुहेक्षणौ[3] ॥ २८ ॥

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ।
सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २९ ॥

ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम्।
शोभयन्तौ महात्मानौ[4] सानुक्रोशस्मितेक्षणौ[5] ॥ ३० ॥

उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ।
पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ३१ ॥

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती[6]।
अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३२ ॥

---

★ The verse 'देहम्भृतां' is not found in M&Ma Edns. 1. P,V भयं △ This extra verse - चिरमावेष्ट्य चोत्थाय रथमारुह्य वेगतः। क तिष्ठति गवेशानः कृष्णो राम इति ब्रुवन्। is found (after V.26) only in K,P,T,V,W without commentary ▲ This extra verse - गोष्ठमध्य इति श्रुत्वा तरुस्थैर्गोपदारकैः। कृष्णसन्दर्शनाकाङ्क्षी प्रकाशे सवितुस्सति॥ is found (before V 25) in P&V edns only without commentary. 2. T,W गोष्ठे 3. G,J,P,V श॰ 4. M,Ma ॰मानौ 5. G,J अनु 6. K,T,W ॰न्मयौ

श्रीध॰ ननु किमर्थमेवं व्यलुण्ठत्[1], नास्ति प्रेमसम्भ्रमे फलोद्देश इत्याह — **देहमिति**। देहभाजामेतावानेव पुरुषार्थः। कंसस्य सन्देशादारभ्य हरेर्लिङ्गदर्शनश्रवणादिभिः योऽयमक्रूरस्य वर्णित इति सन्देश आद्यः यस्यार्थस्य सः। यावानक्रूरस्य जात इति वा ॥ २७ ॥

**ददर्शेति**। ततः कृष्णं रामञ्च ददर्श। गावो दुह्यन्ते अस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ ॥ २८,२९॥

**ध्वजेति**। अनुक्रोशः अनुकम्पा तद्विलसितस्मितयुक्तमीक्षणं ययोस्तौ ॥ ३० ॥

**उदारेति**। उदारा रुचिरा क्रीडा ययोस्तौ। स्रग्विणौ रत्नस्रग्भिरलङ्कृतौ ॥ ३१ ॥

**प्रधानेति**। प्रधानभूतौ पुरुषौ प्रकृतिपुरुषात्मकौ वा। कुतः? आद्यौ। तदपि कुतः? जगद्धेतू, अत एव जगत्पती। विपरीतो वा चतुर्णां पदानां हेतुहेतुमद्भावः। जगत्यर्थे पृथिव्या भारापनयनाय स्वांशेन मूर्तिभेदेन बलकेशवौ सन्तौ अवतीर्णौ[2]॥ ३२॥

---

1. J,Va °ळत् 2. P,V omit अवतीर्णौ

**वीर०** नन्ववसादवदुद्धर्षोऽपि भक्तियोगविरोधी। अतः किमित्येवमवेष्टतेत्याह — **देहम्भृतामिति**। देहभाजामेतावानेव पुरुषार्थः। कोऽसौ दम्भादीन् त्यक्त्वा हरेस्सन्देशाद्वृत्तान्तात् गुणानुकथनात् लिङ्गानां विग्रहाणां चिह्नानाञ्च दर्शनश्रवणादिभिश्च योऽवस्थाविशेषः, स एवेति प्रदर्शयितुमित्यर्थः। भक्तेः परां काष्ठां दर्शयितुमवेष्टतेति भावः ॥ २७ ॥

ततो व्रजे कृष्णं रामञ्च ददर्श। कथम्भूतौ? गावो दुह्यन्तेऽस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ, श्यामलश्च श्वेतश्च तौ, श्रियो लक्ष्म्याः शोभायाश्च आश्रयभूतौ, बृहद्भुजौ पीनवर्तुलदीर्घभुजयुक्तौ, शोभने प्रसन्ने मुखे ययोस्तौ। बालद्विरदस्य कलभस्येव पदविन्यासौ ययोः ॥ २८, २९ ॥

ध्वजादिरेखाभिः चिह्नितैरङ्घ्रिपङ्कजैः व्रजमलङ्कुर्वन्तौ महात्मानौ सुशीलौ, अनुक्रोशोऽनुकम्पा तद्विलसितं स्मितयुक्तमीक्षणं ययोः ॥ ३० ॥

उदारा रुचिरा क्रीडा ययोः, स्रजावनयोः स्त इति तौ, पुण्येन चन्दनेन अनुलिप्तान्यङ्गानि ययोः, विरजे निर्मले वाससी ययोः ॥ ३१ ॥

प्रधानपुरुषौ श्रेष्ठपुरुषौ आद्यौ सृष्टेः पूर्वं विद्यमानौ जगत्कारणभूतौ जगन्मयौ जगच्छरीरकत्वेन तत्प्रचुरौ जगत्यर्थे जगत्परिपालनार्थं अंशेन सङ्कल्पेनावतीर्णौ बलाधिक्याद्बलः, केशौ ब्रह्मरुद्रौ वाति उत्पादयतीति केशवः। "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान्" इति रुद्रेणैव केशवशब्दार्थस्य निरुक्तेः। बलश्च केशवश्च बलकेशवौ ॥ ३२ ॥

**विज०** गोदोहनं, स्थलमिति शेषः। गोदोहनक्रियां गताविति वा ॥ २८ ॥

श्रियो लक्ष्म्याः कान्तेर्वा निकेतौ मन्दिरायमाणौ ॥ २९ ॥

अनुक्रोशेन दयया स्मितेन सहितमीक्षणं ययोस्तौ तथा ॥ ३० ॥

उदारा महती ख्याता वा, दक्षिणा वा, रुचिरा च क्रीडा ययोस्तौ। "उदारो महति ख्याते दक्षिणे दानशौण्डके" (वैज. को. 7-4-4) इति यादवः। स्नातौ शुद्धौ ॥ ३१ ॥

जगत्यर्थे भूमेरर्थे अर्थप्रदाने। प्रधानपुरुषावित्यादौ उच्यमाना गुणा बलभद्रे हरेः सन्निधानादुच्यन्ते, न त्वौत्पत्तिकाः। तदुक्तम् — "वैन्यपार्थबलेशादावाविष्टं पुरुषोत्तमम्। अपेक्ष्य तद्गुणास्सर्वे" (माहात्म्ये) इत्यादौ ॥ ३२ ॥

दिशो वितिमिरा राजन्कुर्वाणौ प्रभया स्वया।
यथा मारकतश्शैलो[1] रौप्यश्च कनकाचितः[2] ॥ ३३ ॥

रथात्तूर्णमवप्लुत्य सोऽक्रूरस्स्नेहविह्वलः।
पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥ ३४ ॥

भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः[3]।
पुलकाङ्कित[4] औत्कण्ठ्यात्[5] स्वाख्याने[6] नाऽशकन्नृप ॥ ३५ ॥

भगवांस्तदभिप्रेत्य[7] रथाङ्गाङ्कितपाणिना।
परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ ३६ ॥

सङ्कर्षणश्च प्रणतमुपगूह्य[8] महामनाः।
गृहीत्वा पाणिना पाणिमनयत्सानुजो[9] गृहम् ॥ ३७ ॥

---

1. M,Ma,P,T,V,W म° 2. G,J,M,Ma,P,V °तौ 3. M,Ma पूर्णा° 4. G,J,K,P,V °काचिताङ्गः 5 T,W औत्सुक्यात् 6. M,Ma व्याख्यातुं 7. G,J °म° 8. G,J,K,M,Ma गु° 9. G,J,P,V पाणी अ°

श्रीध० दिश इति। स्वप्रभया विगततिमिरा दिशः कुर्वाणौ कनकाचितौ सुवर्णव्याप्ताविति सालङ्कारयोः शैलसादृश्यार्थमुक्तम् ॥ ३३,३४ ॥

भगवदिति। भगवद्दर्शनाह्लादेन यद्बाष्पं तेन पर्याकुले ईक्षणे यस्य सः, पुलकैराचितं व्याप्तमङ्गं यस्य सः, स्वाख्याने अक्रूरोऽहं नमस्करोमीति कथने नाऽशक्नोत् ॥ ३५ ॥

भगवानिति। अभिप्रेत्य अक्रूरोऽयमेतदर्थमागत इति ज्ञात्वा कंसहननसामर्थ्यं द्योतयन्निव रथाङ्गेन चक्रेण अङ्कितो यः पाणिः तेनाभ्युपाकृष्य तमालिङ्गितवान् ॥ ३६ ॥

**सङ्कर्षण** इति। पाणी अञ्जलिरूपेण संहतावेव गृहीत्वा ॥ ३७ ॥

**वीर०** हे राजन्! स्वया प्रभया दिशो वितिमिराः कुर्वाणौ यथा कनकेनाऽऽचितः मध्ये उपचितः मारकतः[1] शैलः इन्द्रनीलपर्वत इति यावत्, इयं कृष्णस्योपमा। रौप्य इत्यस्य अञ्जनाचित इति शेषः। इयं रामस्योपमा। एवम्भूतौ ददर्शेति सम्बन्धः ॥ ३३ ॥

तदा सोऽक्रूरः तत्क्षणमेव रथादवप्लुत्य प्रेम्णा विह्वलः रामकृष्णयोश्चरणोपान्ते दण्डवत्पपात ॥ ३४ ॥

भगवद्दर्शनजाह्लादेन यद्बाष्पं तेन परित आकुले व्याप्ते ईक्षणे यस्य सः, पुलकैराचितं व्याप्तमङ्गं यस्य तथाभूतः, हे नृप! औत्कण्ठ्यात् स्वाख्याने अक्रूरोऽहं नमस्करोमीति कथने नाऽशकत् न प्रबभूव ॥ ३५ ॥

भगवान्कृष्णः तत् अक्रूरोऽयमेतदर्थमिहाऽऽगत इत्येतज्ज्ञात्वा प्रणतवत्सलत्वाद्रथाङ्गेन चक्रेण अङ्कितो यः पाणिः तेन तमभिमुखं समीपे आकृष्य प्रीतः परिरेभे आलिङ्गितवान् ॥ ३६ ॥

ततस्सङ्कर्षणोऽपि प्रणतमक्रूरमुपगूह्य आश्लिष्य प्रीतमनाः स्वपाणिना तस्य पाणिं गृहीत्वा सानुजो गृहमनयत् ॥ ३७ ॥

---

1. T,W मरकतशैलः

**विज०** मरकतसदृशः कृष्णः, रजतपर्वतसदृशो रामः, कनकाचितावित्युभयोस्समम्। यदेतदादित्यस्य परं कृष्णरूपमित्यत्र यथाऽऽदित्यस्य कृष्णप्रभा तिमिरापहा कृष्णमरकतश्यामप्रभाऽपि दिशो वितिमिराः करोतीति युक्तमित्यनेन कृष्णप्रभाया अन्धकारनिरासकत्वं कथमिति मन्दाशङ्का दूरतो निरस्तेति ॥ ३३ ॥

अवप्लुत्य अवरुह्य ॥ ३४ ॥

आह्लाद आनन्दः ॥ ३५ ॥

रथाङ्गं चक्रं, तेनाङ्कितेन पाणिना ॥ ३६,३७ ॥

**पृष्ट्वाऽथ[1] स्वागतं तस्मै निवेद्य च[2-] वरासनम्[-2]**
**प्रक्षाल्य विधिवत्पादौ मधुपर्क[3-]मुपाहरत्[-3] ॥ ३८ ॥**

**निवेद्य गाश्चाऽतिथये संवाह्य श्रान्तमादृतः।**
**अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः[4] ॥ ३९ ॥**

**तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित्।**
**मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥ ४० ॥**

★पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे।
कंसे जीवति दाशार्हे[5] सौनपाला इवाऽवयः ॥ ४१ ॥

योऽवधीत्स्वस्वसुस्तोकान्क्रोशन्त्या असुतृप् खलः।
किन्नुस्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥ ४२ ॥

इत्थं सूनृतया[6] वाचा नन्देन सुसभाजितः।
अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
अक्रूरागमनं नाम अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

1. T,W च 2- -2 M,Ma परमासनम् 3- -3. G,J °पर्कार्हणमाहरत्; M,Ma,P,V °पर्कार्हमाहरत् 4. P,V °त्प्रभुः। ★ Three slokas numbered (४१) (४२) (४३) are not found in M,Ma Edns. 5. G,J,P,V °र्हे। 6. T,W मधुरया

**श्रीध० पृष्ट्वेति**। मधुपर्क एव अर्हः[1] अर्हणं पूजा[2] तस्मिन् वा, यदुचितमर्हणमाहरत् आनीय समर्पितवानित्यर्थः॥ ३८-४० ॥

**पप्रच्छेति**। सत्कृतं सम्मानितं निरनुग्रहे क्रूरे कथं केन प्रकारेण, स्थ जीवथेत्यर्थः। सौनः पशुघाती स एव पालको येषाम्, अवीनां मेषाणां त इव तत्तुल्या इत्यर्थः ॥ ४१ ॥

निरनुग्रहतामाह — **योऽवधीदिति**। तोकान् तोकानि असुतृप् असूनेव तर्पयति यः अतः खलः तस्य कंसस्य प्रजानाम् हे अक्रूर! एषां जीवनमात्रमपि दुर्लभं तेषां वः किन्न कुशलं विचारयामेति ॥ ४२ ॥

**इत्थमिति**। मधुरया वाचा इत्थं सत्कृतः तयैव वाचा परिपृष्टेन प्रश्नेन अध्वपरिश्रमं संसारश्रमम् ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

1. J,Va omit अर्हः 2. J,Va omit पूजा

**वीर०** ततस्स्वागतं पृष्ट्वा तस्मै अक्रूराय श्रेष्ठमासनं समर्प्य, यथाविधि पादौ प्रक्षाल्य मधुपर्कमुपाहृत्य आनीय समर्पितवान् ॥ ३८ ॥

तत आदृतोऽतिथयेऽक्रूराय गां समर्प्य श्रान्तं तं संवाह्य पादसंवाहनादिकं कारयित्वा मेध्यं विशुद्धं बहुगुणोपेतं षड्रसयुक्तमन्नं श्रद्धया समर्पयामास ॥ ३९ ॥

**तस्मै** इति। मुखवासैः कर्पूरादिभिः गन्धमाल्यताम्बूलैश्च तस्मै तस्य परां प्रीतिं व्यधात् उपापादयत् ॥ ४० ॥

ततो नन्दस्तं कुशलं पप्रच्छ। प्रश्नमेवाह — 'कथ' मित्यादिना 'विमृशामहे' इत्यन्तेन। निरनुग्रहे प्रत्युत क्रूरे च दाशार्हे कंसे जीवति सति कथं केन प्रकारेण स्थ जीवतेत्यर्थः। सौनाः पशुघातिनः पालका येषां ते, अवयो मेषा इव तत्तुल्या यूयमित्यर्थः ॥ ४१ ॥

निरनुग्रहतामेवाऽऽह — **योऽवधीदिति**। स्वसुर्भगिन्याः क्रोशन्त्यास्सत्याः तोकान्[1] अपत्यानि अवधीत्, असुतृप् असून् तर्पयतीति तथा। अतः खलः तस्यैवंविधस्य कंसस्य प्रजानां वो युष्माकं कुशलं कीदृशमिति विमृशामहे। येषां जीवनमात्रमपि दुर्लभं तेषां वः कुशलं किमिति विचारयामेत्यर्थः ॥ ४२ ॥

इत्थं नन्देन सूनृतया मधुरया वाचा परिपृष्टस्सत्कृतश्च अक्रूरः अध्वश्रमं जहौ ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

1. T,W तोकानि

**विज०** मधुपर्कार्हं मधुपर्कपूजाम्। "मधुपर्कश्च सक्षौद्रं दधि प्रोक्तं मनीषिभिः" इति तान्त्रिकाः। आहरत् दत्तवान् ॥ ३८ ॥

संवाह्य, पादाविति शेषः ॥ ३९ ॥

मुखवासैः कर्पूरताम्बूलादिभिः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

(विजयध्वजरीत्या षट्त्रिंशोऽध्यायः)

# एकोनचत्वारिंशोऽध्यायः

## (श्रीविजयध्वजरीत्या सप्तत्रिंशोऽध्यायः)

### श्रीशुक उवाच

सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः[1]।
लेभे मनोरथान्सर्वान्पथि यान्स चकार ह ॥ १ ॥

किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने।
तथाऽपि तत्परा राजन् नहि[2] वाञ्छन्ति किञ्चन ॥ २ ॥

सायन्तनाशनं कृत्वा भगवान्देवकीसुतः।
सुहृत्सु वृत्तिं[3] कंसस्य पप्रच्छाऽन्यच्चिकीर्षितम् ॥ ३ ॥

### श्रीभगवानुवाच

★तात! सौम्याऽऽगतः कच्चित्[4] स्वागतं भद्रमस्तु वः।
अपि स्वज्ञातिबन्धूनामनमीव मनामयम् ॥ ४ ॥

किं नु नः कुशलं पृच्छे एधमाने कुलामये।
कंसे मातुलनाम्न्यङ्ग स्वानां न स्तत्प्रजासु च[5] ॥ ५ ॥

अहो अस्मदभूद्भूरि पित्रो र्वृजिनमार्ययोः।
यद्धेतोः पुत्त्रमरणं यद्धेतो र्बन्धनं तयोः ॥ ६ ॥

दिष्ट्याऽद्य दर्शनं स्वानां मह्यं[6] वस्सौम्य काङ्क्षितम्।
सञ्जातं वर्ण्यतां तावत्[7] तवाऽऽगमनकारणम् ॥ ७ ॥

---

1. M,Ma कृष्णानुमोदितः 2. M,Ma नैव 3. G,J, वृत्तं ★ अत आरभ्य ४,५,६,७ सांख्याकाः चत्वारः श्लोकाः विजयध्वजेन न स्वीकृताः, न व्याख्याताश्च।
4. P,V कंसात् 5. P,V वै 6. P,V मम 7. G,J,K तात!

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नवत्रिंशे पुरीं गच्छ त्यच्युते गोपिकोक्तयः। अक्रूरेणाऽथ कालिन्द्यां विष्णुलोकस्य दर्शनम्॥

भक्तानां मनोरथाः सत्या भवन्तीति द्योतयन्नाऽऽह — **सुखोपविष्ट** इति। रामकृष्णाभ्यां उरु अधिकं मानितः॥ १-३ ॥

**तातेति**। हे तात! हे सौम्य! स्वागतं यथा तथा आगतः। स्वज्ञातिबन्धूनां स्वे सुहृदः, ज्ञातयस्सपिण्डाः, बन्धवः असपिण्डाः, सम्बन्धिनः तेषा मपि, किम् अनमीवमपापम्; अदुःखं सुखमिति यावत्, अनामयमारोग्यम् ॥ ४ ॥

एवं प्रश्नोऽपि मम [1-]नाऽतीव[-1] सङ्गत इत्याह — **किन्न्विति**। अङ्ग! हे अक्रूर, पृच्छे पृच्छामि नः अस्माकं कुलस्य आमये रोगे नः मातुल इति नाम यस्य तस्मिन् नः स्वानां ज्ञातीनां तस्य प्रजासु च ॥ ५ ॥

**अहो** इति। अस्मत् अस्मन्निमित्तं वृजिनं दुःखं आर्ययो र्निरपराधयोः यद्धेतो र्योऽहमेव हेतुः तस्मात् ॥ ६ ॥

**दिष्ट्येति**। हे सौम्य! स्वानां वो दर्शनं अद्य मम सञ्जातं[2] दिष्ट्या भद्रम् ॥ ७ ॥

---

1- -1. J,Va नाऽति 2. J,Va add तत्

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ समवाप्तमनोरथेन अक्रूरेण विज्ञापित कंसचिकीर्षस्य भगवतः प्रस्थानसमुद्योगसमवलोकन भविष्यद्भगवद्विश्लेषजतापतप्तगोपीजनमिथस्सम्भाषणं मध्येमार्ग मक्रूराय स्वासाधारणदिव्यविग्रह प्रदर्शनप्रकारञ्चाऽनुवर्णय त्येकोनचत्वारिंशेन सुखोपविष्ट इत्यादिना। भक्तानां मनोरथा स्सत्या भवन्तीति दर्शयन्नाह **सुखोपविष्ट** इति। रामकृष्णाभ्यां उर्वधिकं सम्मानितः पर्यङ्के सुखं यथा तथा उपविष्टोऽक्रूरः पथि यान्मनोरथान् चकार तान्सर्वान् लेभे प्राप ॥ १ ॥

तथा हि - भगवति षाड्गुण्यपूर्णे श्रीनिकेतने श्रीनिवासे प्रसन्ने सति किमलभ्यम्? सर्वं सुलभमेवेत्यर्थः। तर्ह्यैश्वर्य कैवल्यभगवत्प्राप्त्याद्यन्यतमं स्वसमीहितं किमिति न वृण्वते इत्यत्राऽऽह — तथाऽपि यद्यपि सर्वसुलभमेव तथाऽपि हे राजन्, तत्पराः भगवत्पराः किञ्चिदपि न वाञ्छन्ति हि, तदनुभवापेक्षया सर्वस्य तुच्छत्वादिति भावः ॥ २ ॥

तदा भगवान् देवकीसुतः सायङ्कालभोजनं कृत्वा स्वसुहृत्सु वसुदेवादिषु कंसस्य वृत्तिमन्यच्च तस्य चिकीर्षितं पप्रच्छ ॥ ३ ॥

प्रश्नमेवाऽऽह — **तातेत्यदिभिश्चतुर्भिः**। हे तात! सोम्य! आगत स्त्वं कच्चित् इदमस्मदिष्टं स्वागतं निर्विघ्नमागमनं जातं किल? वो युष्माकं भद्रमस्तु, सर्वत्र सर्वदा कुशल मेव भूयात्। स्वेषा मात्मीयानां, ज्ञातीनां सपिण्डानां, बन्धूनामसपिण्डानां च अनमीवं अशुभरहितम्, अनामय मारोग्यमपि अस्ति कच्चित् ॥ ४ ॥

एवं प्रश्नोऽपि मम नाऽतीव सङ्गच्छते इत्याह — **किन्न्विति**। अङ्ग! हे तात! मातुलनाम्नि नाममात्रेण मातुले न तु वृत्त्येति भावः। [1-]तथा च[-1] अस्माकं कुलामये कुलस्य रोगतुल्ये कंसे वर्धमाने सति नोऽस्माकं स्वानां ज्ञातीनां, तत्प्रजासु तदपत्येषु च कुशलं किन्नु किमिति पृच्छे ॥ ५ ॥

अहो! अस्मत् अस्मत्तो निमित्तात् आर्ययोः पूज्ययोः निरपराधयो र्वा मातापित्रो र्भूरि वृजिनं दुःखं प्राप्तम्। तदेव प्रपञ्चयति। यत् यस्मात् अस्मत्तो हेतोः निमित्तात्पुत्राणा मस्मदग्रजानां मरणं यदस्मन्निमित्तात्तयोः पित्रोर्बन्धनञ्च प्राप्तम्॥ ६॥

अस्तु तावत्। हे सौम्य! चिरं वाञ्छितं स्वानां वो युष्माकं दर्शनन्त्वच सञ्जातम्, एतद्दिष्ट्या आनन्दजनक मस्माकम्। हे तात! तवाऽऽगमनकारणं वर्ण्यताम् कथ्यताम् ॥ ७॥

---

1- -1. T,W omit

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

'गोचारणाये' त्यारभ्य, 'किञ्चाऽग्रज' इत्यन्तेन ग्रन्थेन, पथि यान्मनोरथान् चकार दध्यौ, तान्लेभे इत्यन्वयः। "करणं कारणे काये साधनेऽ(नुव्रतादिषु), क्वकादिषु स्पष्टावुच्चारणाभेद ध्यानपद्मासनादिषु" (वैज.को. 7-3-9) इति यादवः।

ननु मुख्यमनोरथो मोक्षः, सोऽनेन न लब्धः संसारानिवृत्तेः इत्यत्राऽऽह — **किमलभ्य** मिति। तत्परा मुख्य-भागवताः तत्प्रसादमन्तरेणान्यं नाऽऽकांक्षन्त इति भावः ॥ २॥

सायन्तनाशनं रात्रिभोजनम्। (मनुस्मृतौ द्वितीयाध्याये ५२ श्लोकादनन्तरः अधिकपाठः) ★ "सायं प्रातर्द्विजातीनां भोजनं श्रुतिचोदितम्" इति याज्ञवल्क्यः? सुहृत्सु वसुदेवादिषु वृत्तिर्वर्तनम् आजीवलक्षणं "वृत्ति र्ग्रन्थाजीवयोश्च" (वैज.को. 6-2-36) इति च ॥ ३॥■

---

★ मनुस्मृतौ द्वितीयाध्याये ५२ श्लोकादनन्तरेऽऽधिकपाठः ♦ ४.५,६,७ संख्याकानां श्लोकानां (चतुर्णां) विजयध्वजीय व्याख्या नाऽस्ति॥

### श्रीशुक उवाच

पृष्टो भगवता सर्वं वर्णयामास माधवः।
वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ८॥

यत्सन्देशो यदर्थं[1] वा दूतः सम्प्रेषितः स्वयम्।
यदुक्तं नारदेनाऽस्य स्वजन्माऽऽनकदुन्दुभेः ॥ ९॥

श्रुत्वाऽक्रूरवचः कृष्णो[2] बलश्च परवीरहा।
प्रहस्य नन्दं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥ १०॥

गोपान्समादिशत्सोऽपि गृह्यतां सर्वगोरसः।
उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ११॥

यास्यामः श्वो मधुपुरीं[1] दास्यामो नृपते रसान्।
[3-]द्रक्ष्यामोऽत्र महत्सत्रं[-3] यान्ति जानपदाः किल।
एवमाघोषयत्क्षत्त्रा नन्दगोपः स्वगोकुले ॥ १२ ॥

---

1. M,Ma °र्यं 2. P,V राज्ञोदिष्टं 3- -3. G,J,M,Ma °मः सुमहत्पर्व.; P,V °मः सुमहत् सत्रं

**श्रीध०** **पृष्ट** इति। माधवः मधोर्वंशजः ॥ ८ ॥

**यदिति**। सः धनुर्मखच्छद्मा सन्देशो यस्य यदर्थं चाणूरादिभि र्घातनार्थं अस्य कृष्णस्य[1] स्वजन्म कृष्णजन्म आनकदुन्दुभे स्सकाशात् ॥ ९ ॥

**श्रुत्वेति**। विजज्ञतुः विशेषेण ज्ञापयामासतुः ॥ १० ॥

**गोपानिति**। सोऽपि नन्दोऽ[2]पि गोपान् समादिशत्। तदेव दर्शयति - गृह्यतामित्यादिना। गोरसः क्षीरादिः। उपायनानि उत्तमवस्तूनि ॥ ११ ॥

**यास्याम** इति। रसान् घृतादीन्। शब्दच्छलेनेदं सूचयति — अचिकित्स्य[3]स्य रोगस्य चिकित्सार्थं [4-]श्रीकृष्णजन्म[-4]रसान् दास्याम इति क्षत्त्रा व्रजरक्षाधिकृतेन आघोषयत् सर्वतो घोषितवान् ॥ १२ ॥

---

1 J,Va add पुरतो वर्णयामास 2. J,Va omit अपि 3. P,V °त्स्यरो° 4- -4. J,Va omit

**वीर०** इतीत्थं भगवता पृष्टो माधवो मधुवंशप्रभवोऽक्रूर स्सर्वं वर्णयामास। सर्वशब्दविवक्षितमेव प्रपञ्चयति वैरानुबन्धमिति सार्धेन। यदुषु विषयभूतेषु कंसस्य वैरानुबन्धं वैरमप्रीतिः तदनुबध्यते यदुषु[1] इत्यनुबन्धः तत्कार्यक्लेशापादनञ्च। तथा वसुदेवस्य वधोद्यमं वधार्थं यत्नम् ॥ ८ ॥

यः धनुर्यागच्छद्मना सन्देशो यस्य सः स्वयमात्मा दूतः दूतीकृतः, यदर्थं सोपायं समानयनेन चाणूरादिभिर्घातनार्थं[2] प्रेषितः आनकदुन्दुभेः वसुदेवात्सकाशात् स्वजन्म कृष्णजन्म च यन्नारदेनाऽस्य कंसस्योक्तं, तच्चेत्येतत्सर्वं वर्णयामासेति सम्बन्धः ॥ ९ ॥

इत्थं वर्णितमक्रूरस्य वच आकर्ण्य कृष्णः परान् शत्रून्वीरान् हन्तीति तथा। बलो रामश्च प्रहस्य राज्ञा कंसेन आदिष्टं सर्वं नन्दं प्रति विजज्ञतुः विज्ञापयामासतुः ॥ १० ॥

सोऽपि नन्दोऽपि गोपान् समादिशत् आज्ञापयामास। समादेशप्रकारमे[3]वाह गृह्यता मित्यादिना किलेत्यन्तेन। गोरसः क्षीरादिः गृह्यताम्। तथोपायनानि उत्तमवस्तूनि गृह्णीध्वम्, शकटानि युज्यन्ताम्, वृषभैरिति शेषः ॥ ११ ॥

इव स्समनन्तरेऽहि मधुपुरीं प्रति गमिष्यामः नृपतेः कंसाय सम्प्रदानस्य शेषत्वविवक्षया षष्ठी। रसान् क्षीरघृतादीन्दास्यामः। अत्र मधुपुर्यां महासत्त्रं धनुर्यागं द्रक्ष्यामः। जानपदा देशवासिन स्तत्र यान्ति किल, तांश्च द्रक्ष्याम इत्यर्थः। इत्थं नन्दगोपः स्वस्य गोकुले क्षत्त्रा सूतेन प्रयोज्यकर्त्रा अघोषयत् ॥ १२ ॥

---

1. T,W omit यदुषु 2. K चाऽक्रूरा° 3. K °माह

विज० माधवः मधुकुलोद्भवः यस्य कंसस्य सन्देशो यस्य स तथा यस्य कंसस्यार्थे दूतः यत्प्रयोजन मुद्दिश्येति वा, तस्य कंसस्य यदुषु वैरानुबन्धं वैरेण सन्ततदोषभावं प्रकृतस्य वैरस्य अनुवर्तनं वा। ★ "अनुबन्धो दोषभावे प्रकृत्यादौ विनश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने" (अम.को. 3-255) इति ॥ ८ ॥

अस्य कंसस्य नारदेन यदुक्तं, तदपि किं तदुक्तं, तत्राऽऽह स्वजन्मेति ॥ ९ ॥

विजज्ञतुः विज्ञापयामासतुः ॥ १०,११ ॥

रसान् आज्यादीन् हेमानि वा। "रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे। रेतस्याऽऽस्वादने हेम्नि निर्यासे रसशब्दयोः" (वैज.को. 6-1-49) इति च। पर्व उत्सवम्। "पक्षसन्धावुत्सवे च ग्रन्थौ पर्व विदुर्बुधाः" इति दत्तः। क्षत्त्रा यन्त्रा ॥ १२ ॥

---

★ उपलभ्यमानपाठस्तु 'दोषोत्पादेऽनुबन्धः स्यात्' इति।

गोप्य स्ता स्तदुपश्रुत्य बभूवुर्व्यथिता[1] नृप!
रामकृष्णौ पुरीं नेतु मक्रूरं व्रजमागतम् ॥ १३ ॥

काश्चि त्तत्कृतहृत्तापश्वासम्लानमुखश्रियः।
स्रंसद्दुकूलवलयकेश[2]ग्रन्थ्यश्च काश्चन ॥ १४ ॥

अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः।
नाऽभ्यजानन्निमं लोक मात्मलोकं गता इव ॥ १५ ॥

स्मरन्त्यश्चापरा श्शौरे रनुरागस्मितेरिताः।
हृदिस्पृशश्चित्रपदा गिरस्सम्मुमुहुः स्त्रियः ॥ १६ ॥

गतिं सुललितां[3] चेष्टां स्निग्धहासावलोकनम्।
शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १७ ॥

**चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः।**
**समेता स्सङ्घशः प्रोचु रश्रुमुख्योऽच्युताशयाः ॥ १८ ॥**

---

1. G,J °ता भृशम्; M,Ma °ताऽऽशयाः 2. P,V बन्धाश्च 3. P,V क°

**श्रीध०** **गोप्य** इति। ताः कृष्णैकजीवना गोप्यः, तत्तदा अक्रूरमागत मुपश्रुत्येति ॥ १३ ॥

व्यथालिङ्गान्याह पञ्चभिः **काश्चिदिति**। तेन श्रवणेन कृतो य[1]ः हृत्तापः [2-]तेन यः श्वासः[-2], तेन म्लाना मुखश्रीः यासां ताः। **बभूवुरिति**। दुकूलानि च वलयानि च केशग्रन्थयश्च, स्रंसन्तो दुकूलादयो यासां तथाभूताः काश्चन बभूवुरित्यर्थः[3] ॥ १४ ॥

**अन्या** इति। तस्य श्रीकृष्णस्यानुध्यानेन निवृत्ता अशेषाः चक्षुरादिवृत्तयो यासां ताः इमं लोकं देहमपि न जानन्ति स्म, मुक्ता इवेति ॥ १५ ॥

**स्मरन्त्य** इति। अपराः स्त्रियः शौरे र्गिरः स्मरन्त्यः सम्मुमुहुः? अनुरागेण यत् स्मितं तेन ईरिताः हृदि स्पृशन्तीति हृदिस्पृशः मनोज्ञाः चित्राणि पदानि यासु ताः ॥ १६,१७ ॥

**चिन्तयन्त्य** इति। विरहेण कातराः विह्वलाः अच्युते आशयः चित्तं यासां ताः ॥ १८ ॥

---

1. P,V omit यः 2- -2. Va omits 3. J,Va omit अर्थः

**वीर०** हे नृप! ताः गोकुलस्थाः गोप्यः तत्[1] तदा अक्रूरं रामकृष्णावानेतुं आगत मुपश्रुत्य व्यथिता बभूवुः ॥ १३ ॥

व्यथालिङ्गान्याह पञ्चभिः - **काश्चिदिति**। काश्चिद्गोप्यः तेन श्रवणेन कृतो हृत्ताप स्तेन यः श्वासः सोष्णो निःश्वासमारुत स्तेन म्लाना मुखश्री र्यसां ताः, श्लथानि दुकूलानि वलयानि केशग्रन्थयश्च यासां तथाभूताः काश्चन बभूवुः ॥ १४ ॥

अन्यास्तु। तस्य भगवतोऽनुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ताः, इमं लोकं देहमपि नाभ्यजानन् नाऽनुसमदधत। अत्मैव लोक स्तं गता आत्मसाक्षात्कारिणः योगारुढा इवेत्यर्थः ॥ १५ ॥

अपराः स्त्रियः शौरेः गिरः स्मरन्त्यः सम्मुमुहुः। कथम्भूता गिरः? अनुरागेण, यत् स्मितं तेन ईरिताः हृदिस्पृशन्तीति तथा मनोज्ञाः, विचित्राणि पदानि यासु ताः ॥ १६ ॥

काश्चित्तु विरहेण भाविना कातरा विह्वलाः मुकुन्दस्य सुन्दरतरां गतिं तथाभूतां चेष्टां रासक्रीडाद्यात्मिकाम्, स्निग्धो यो हास स्तद्युक्तमवलोकनञ्च शोकमपघ्नन्तीति तथा, तानि कर्माणि पूतनाशकटासुरादि वधात्मकानि कर्माणि च, प्रोद्दामानि गम्भीराणि चरितानि शयनासनभोजनादीनि च स्मरन्त्यः अच्युते एव आशयः चित्तं यासां ताः, अश्रूणि मुखेषु यासां ताः, सङ्घशः समेत्य तत्र तत्र सङ्घशो भूत्वा प्रोचुः ॥ १७,१८ ॥

---

1. T,W omit तत्

**विज०** रामकृष्णौ पुरीं नेतुमागतमक्रूरं श्रुत्वा ज्ञात्वा गोपस्त्रिय एवमापन्नाः बभूवुरित्यन्वयः। तत्कथमिति विविच्याऽऽह **काश्चिदिति**। तस्य कृष्णस्य मधुपुरीगमनश्रवणकृताभ्यां हृत्तापश्वासाभ्यां म्लाना मुखश्रीः यासां ता स्तथा॥ १३,१४॥

स्रंसद्दुकूलेत्यादावपि तत्कृतेति सम्बन्धयितव्यम्। यद्वा तत्कृते कृष्णकृते तदनुध्याने निवृत्ताशेषेन्द्रियवृत्तयः। इमं लोकं देहं, आत्मलोकं मोक्षम् ॥ १५ ॥

हृदिस्पृशः हृदयङ्गमाः मनोहराः अनुरागस्मितपूर्वकमीरिताः। चित्राणि पदानि यासु ताः ॥ १६ ॥

तथा गतिं यात्रां चेष्टामङ्गविषयां स्निग्धहासेन सहित मवलोकनम् ॥ १७ ॥

अच्युताशयाः अच्युतबुद्धयः ॥ १८ ॥

## गोप्य ऊचुः

**अहो विधात स्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः।**
**तांश्चाऽकृतार्था न्वियुनङ्क्ष्यपार्थकं[1] विक्रीडितं[2] तेऽर्भकचेष्टितं यथा ॥ १९ ॥**

**यस्त्वं प्रदर्श्याऽसितकुन्तलावृतं मुकुन्दवक्त्रं सुकपोलमुन्नसम्।**
**शोकापनोदस्मितलेशसुन्दरं करोषि पारोक्ष्य मसाधु ते कृतम् ॥ २० ॥**

**क्रूरस्त्वमक्रूरसमाख्यया स्म[3] न श्चक्षुर्हि दत्तं हरसे बताऽज्ञवत्।**
**येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म[4] वयं मधुद्विषः ॥ २१ ॥**

**न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षते[5] नः स्वकृतातुरा बत[6]।**
**विहाय गेहान्स्वजनान्सुतान्पतीन् स्वदास्यमद्धोपगता[7] नवप्रियः ॥ २२ ॥**

**सुखप्रभाता रजनीय माशिषः सत्या बभूवुः पुरयोषितां ध्रुवम्।**
**याः सम्प्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥ २३ ॥**

**तासां मुकुन्दो मधुमञ्जुभाषितै र्गृहीतचित्तः परवान्मनस्व्यपि।**
**कथं पुन र्नः प्रतियास्यतेऽबला ग्राम्याःस्सलज्ज[8]स्मितविभ्रमै[9] र्भ्रमन् ॥ २४ ॥**

---

1. T,W °र्थं° 2. M,Ma,P,T,V,W चेष्टितं 3. M,Ma स्मृतः 4. M,Ma त° 5. K,T,W °क्षिता 6. M,Ma अपि 7. G,J,K तद्दा° 8. M,Ma अलज्जाः 9. M,Ma °मद्भुवः

**श्रीध०** कृष्णसङ्गतिं विधाय विघटयतीति[1] विधातारं प्रति एव माक्रोशन्त्यः आहुः — **अहो** इति। मैत्र्या हिताचरणेन प्रणयेन स्नेहेन च अकृतार्थान् अप्राप्तभोगानपि तान् वियुनङ्क्षि वियोजयसि। तस्मान्न तावद्दया,[2] बालिशोऽपि त्व मित्याहुः अपार्थकमिति॥ १९॥

विगर्हितञ्च तवेदं कर्मेत्याहुः **य** इति। शोकमपनुदतीति शोकापनोदः, स चासौ स्मितलेशश्च गूढहासः, तेन सुन्दरं मुकुन्दस्य वक्त्रं सकृत्प्रदर्श्य पुन स्तस्य पारोक्ष्यमदृश्यतां करोषि। अतस्तव कृतं कर्म असाधु निन्द्यमित्यर्थः॥ २०॥

किञ्च दत्तापहारित्वेन अतिक्रूरस्त्वमित्याहुः - **क्रूर** इति। नन्वक्रूरो हरति नाऽहमिति चे दत आहुः — **अक्रूरसमाख्ययेति**। न ह्येवं कर्तुं मन्यः प्रभवति अतो नामान्तरेण, स्म ध्रुवम्। त्वमेवाऽऽगतोऽसि। कृष्णं हरामि न युष्मच्चक्षुरिति चेत्, न, येन त्वद्दत्तेन चक्षुषा मधुद्विषः एकदेशे नेत्रवक्त्रादौ त्वदीयं समग्रं सृष्टिनैपुण्य[3] मद्राक्ष्म दृष्टवत्यो वयं तच्चक्षुः - अयं भावः — तव[4] सर्वं रहस्यमस्माभिर्ज्ञातम्।[5] अतः[6] अमर्षेणैव कृष्णं वियोजय न्नस्मा नन्धीकरोषीति ॥ २१ ॥

विधातारं विहाय परस्पर मूचुः- **न नन्दसूनुरिति**। बतेति खेदे। क्षणभङ्गं अस्थिरं सौहृदं यस्य सः। गेहादीन्[7] विहाय अद्धा साक्षात् तस्यैव दास्यमुपागताः स्वकृतातुराः तत्कृतेनैव स्मितादिना परवशा अपि नः अस्मान् न समीक्षते। नवं नवं प्रियं यस्य सः अत एनं निवारयाम इति भावः ॥ २२ ॥

सेर्ष्य मूचुः **सुखमिति**। व्रजस्पतेः श्रीकृष्णस्य मुखं पास्यन्ति आदरेण द्रक्ष्यन्ति। **कथम्भूतम्**? अपाङ्गेन नेत्रान्तेन[8] उत्कलितं उज्जृम्भितं स्मित मेवाऽऽसवो[9] यस्मिन् तत्। यद्वा, अपाङ्गोत्कलितस्मितेन आसवरूपं यन्मुखं ततश्च पानं मुख्यमेव सम्भावयन्ति ॥ २३ ॥

ननु द्वित्राणि दिनानि तथा भवतु नाम तथाऽप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तित आगमिष्यतीत्याशङ्क्याऽऽहुः — **तासामिति**। हे अबलाः! तासां मधुवन्मञ्जुभि र्भाषितै र्वशीकृतचित्तः, तथा तासां सलज्जस्मितैः विभ्रमैर्भ्रमन् परवान् पित्रादिपरतन्त्रोऽपि। यद्वा, व्रजे परे अन्ये बन्धवः सन्ति यस्य स तथा मनस्वी धीरोऽपि, ग्राम्या अविदग्धाः नः कथं प्रतियास्यते प्रत्येष्यति, न कथञ्चिदित्यर्थः ॥ २४ ॥

---

1. J,Va इ° 2. J,Va °तव द° 3. J,Va °पुण° 4. J,Va मम 5. J,Va °माऽऽभि र्ज्ञा 6. J,Va इति 7. J,Va गृ° 8. J,Va नेत्रप्रान्तेन 9. J,Va add रसो

**वीर०** उक्तिमेवाऽऽह — **अहो** इत्यादिभिः। तावच्छ्रीकृष्णसङ्गतिं विधाय विघटयतीति[1] विधातारं प्रत्येवाऽऽक्रोशन्त्य आहुः — **अहो** इति त्रिभिः। हे विधातः! तव क्वचिदपि दया नास्त्यहो! तथाहि - मैत्र्या हिताचरणेन प्रणयेन स्नेहेन विश्वासेन च देहिनो जनान् तावन्मिथः संयोज्य अकृतार्थानप्राप्तभोगानेव तान् वियुनङ्क्षि वियोजयसि, तस्मान्न तव दयाऽस्ति। अत स्तव चेष्टित मपार्थकं प्रयोजनशून्यम्। यथा बालकचेष्टितं तद्वत्। मूर्खस्त्वमिति भावः ॥ १९ ॥

विगर्हितं च तव कर्मेत्याहुः — **यस्त्वमिति**। असितैः कुन्तलैः आवृतं तद्वत्। शोभनौ कपोलौ यस्मिन्, उन्नता नासिका यस्मिन् तत्, शोकमपनुदतीति शोकापनोदः स चासौ स्मितलेश स्तेन सुन्दरं मुकुन्दस्य वक्त्र मस्माकं प्रदर्श्य यस्त्वं पुनः तस्य पारोक्ष्यमदृश्यतां करोषि। अतः ते तव कृतं कर्म असाधु निन्द्यमित्यर्थः ॥ २० ॥

नन्वक्रूरस्तस्य पारोक्ष्यं करोति न त्वह मित्याशङ्क्याऽऽहुः — **क्रूरस्त्वमिति**। येन त्वया नोऽस्मभ्यं चक्षुर्दत्तं तत्पुन स्त्वमेव अज्ञवद्दुःखानभिज्ञवत् मूर्खवत् अक्रूरसमाख्यया हरसे। अक्रूर इति व्याजमात्रमेव। न स त्वत्तोऽन्यः। न ह्येवं कर्तु मन्यः प्रभवतीत्यभिप्रायेण अक्रूरसमाख्ययेत्युक्तम्। अतो नामान्तरेण ध्रुवं त्वमेवाऽऽगतो दत्तमपहरन् क्रूर इत्यर्थः। ननु कृष्णं हरामि, न तु युष्मच्चक्षुः इत्याऽऽशङ्क्याहुः। येन त्वद्दत्तेन चक्षुषा मधुद्विषः श्रीकृष्णस्य एकदेशे नेत्रवक्त्रादौ त्वदीयं समग्रसृष्टिनैपुण्य मद्राक्ष्म दृष्टवत्यो वयम्। अयम्भावः — तव सर्वं रहस्य मस्माभिर्ज्ञात मित्यमर्षेण कृष्णं वियोजय न्नस्मा नन्धीकरोषीति ॥ २१ ॥

विधातारं विहाय परस्पर माहुः — **न नन्दसूनुरिति**। बतेति खेदे। क्षणभङ्गमस्थिरं, सौहृदं यस्य स नन्दसूनुः। गेहादीन्विहाय, अद्धा साक्षात् स्वस्य तस्यैव दास्य मुपगताः स्वकृतेनैव स्मितादिना आतुराः परवशा अपि नोऽस्मान् न समीक्षिता न समीक्षिष्यते। तत्र हेतुं सेर्ष्य माहुः। नवप्रियः नवः पुरस्त्रीजनः प्रियो यस्य तथाभूतः। अत एनं निवारयाम इति भावः ॥ २२ ॥

पुनस्सेर्ष्य माहुः — **सुखप्रभातेति**। पुरयोषितां मधुरापुरस्थयोषितां इयं रात्रिः सुखप्रभाता, तथा तासां आशिषः कामाश्च सत्या बभूवुः। अत्र हेतुं वदन्त्य स्ता विशिंषन्ति। याः पुरयोषितः पुर्यां प्रविष्टस्य व्रजस्पतेः श्रीकृष्णस्य। सुडागम आर्षः, पारस्करादे राकृतिगणत्वा द्वा। अपाङ्गेन नेत्रान्तेन उत्कलितमुज्जृम्भितं स्मितमेव आसवो रसो यस्य तन्मुखं पास्यन्ति। मुखकमलस्य स्मितासवं पास्यन्तीति भावः ॥ २३ ॥

मधुराङ्गतोऽपि पुन रायास्यतीत्युद्भावयन्तीः काश्चित्प्रत्याहुः **तासामिति**। हे अबलाः! तासां पुरस्त्रीणां भ्रमन् मुकुन्दः, स्वतो मनस्व्यपि धीरोऽपि परवान् परस्त्रीपरतन्त्रस्सन् ग्राम्या अविदग्धाः नोऽस्मान्प्रति कथं यास्यते न कथञ्चिदित्यर्थः ॥ २४ ॥

---

1. T,W विफल°

**विज०** हे विधातः, तव क्वचिद्दया नास्ति। कथं प्रणयेन देहिनः जन्तून् मैत्र्या मित्रभावेन संयोज्य एकीकृत्य पुनस्तान्देहिनः अकृतार्थानप्राप्तमनोरथानेव वियुनङ्क्षि वियुक्तदेहान् करोषि, अहो! इत्यन्वयः। अत स्ते तव चेष्टितं अपार्थकं निष्फलं कथमिति, अर्भकचेष्टितं यथा तथेति ॥ १९ ॥

अत्र मया किमवद्य मकारीति तत्राऽऽह **यस्त्वमिति**। यस्त्वं सुकपोलादिविशिष्टं मुकुन्दवक्त्रं प्रदर्श्य दर्शयित्वा पुनः पारोक्ष्यं परोक्षविषयं चक्षुरगोचरं करोषि यस्मात्ते त्वया कृतमासाध्वमङ्गलमित्यन्वयः। शोकस्यापनोदो निरासो येन सः शोकापनोदः स्मितलेशः तथा तेन सुन्दरं मनोहरम्। स्मितस्य लेशः स्मितलेशः ॥ २० ॥

हे विधातः, त्वं अक्रूरसमाख्यया अनृशंसोऽयमकठिनोऽयमिति गुणसमाननाम्ना स्मृतः पूर्वम्। अधुना क्रूर इति स्मर्यसे। कुतः? येन चक्षुषा मधुद्विष एकदेशे मुखाद्येकावयवे तदीयं तस्य तव विद्यमानं अखिलस्य विश्वस्य सर्गे सृष्टौ यत्सौन्दर्यं तदद्राक्ष्म, तत् त्वया हि एवं दत्तं चक्षुरज्ञवत्कृतघ्नवत् हरसे। बत! कष्ट मित्यन्वयः। "क्रूरो भयङ्करे क्रुद्धे नृशंसे कठिनोष्णयोः (वैज.को. 6-4-4) इति च। यद्वा, तस्य मधुद्विषो विद्यमानमखिलं पूर्णसर्गं स्वाभाविक-मकृत्रिमं सौष्ठवम्। अन्यत्समम् ॥ २१ ॥

इदानीं कृष्णं कटाक्षीकृत्य वदन्ति **नेति**। स्वकृते स्वात्मानं कृष्णमुद्दिश्याऽऽतुराः क्लिष्टा अपि नोऽस्मान्न समीक्षते, न चिन्तयति। यत्तस्मान्नन्दसूनुः क्षणभङ्गसौहृदः नवप्रियः नूतनप्रियश्च। कीदृशीरस्मान् गेहादीन्विहाय स्वदास्यमद्धा प्रत्यक्षमुपागताः। अद्धा सत्यं वा। "अद्धा प्रत्यक्षसत्ययोः" (वैज.को. 8-7-12) इति च ॥ २२ ॥

सुखप्रभातत्वे निमित्तमाहुः — या इति। व्रजस्पतेः गोकुलनाथस्य। सकार श्छान्दसः। अपाङ्गेन कटाक्षनिरीक्षणेन उत्कलितमुत्पन्नं अभीष्टवर्षकीकृतं वा। स्मितमेवाऽसवममृतं यस्मिंस्तथा ॥ २३ ॥

इदानीं कृष्णमजानन्त्यो वदन्ति। मनस्वी महामनाः अपि मुकुन्दो मधुरां गतः पुनः नोस्मान्प्रति कथं प्रतियास्यते आगमिष्यते, न केनाऽपीत्यन्वयः। अनागमने निमित्तमाहुः — तासां मधुराङ्गनानां मधुमञ्जुभाषितैः, मधुवत्पुष्परसवत् मञ्जुभिः श्रुतिमनोहरैः वचनैः गृहीतचित्तो वशीकृतचेताः, अत एव परवान् पराधीनः। "परवांस्तु पराधीनो निघ्नः परवशास्तथा" (हला.को. 2-186) इति हलायुधः। तासां मधुरवचनमेव कारणं नत्वन्यदित्याशयेनाऽऽहुः अबलाः सुरतधाष्टर्यविधुराः। किञ्च ग्राम्याः अश्लीललीलाः, तदपि मुख्यं नेत्याऽऽहुः। अलज्जाः लज्जारहिताः भ्रूविलासोऽपि सुखसूचको नेत्याहुः, स्मितेन। सह विभ्रमन्ती भ्रूर्यासां ता स्तथा, "समुद्रोर्मिव दुलम्य भ्रूविलासेन सुन्दरी, निद्रितं मदनं या तु बोधये त्सा वराङ्गना" इति कामन्दकः। यद्वा, हे अबलाः, ता मधुराङ्गनाः ग्राम्याः नित्यसुरतकर्मोपेताः, स्मिता स्फुटीकृता विभ्रमन्ती भ्रू र्यासां ता स्तथा ॥ २४ ॥

**अद्य ध्रुवं[2] तत्र दृशो[1] भविष्यते[1] दाशार्हभोजान्धक वृष्णिसात्त्वताम्।**
**महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाऽध्वनि देवकीसुतम् ॥ २५ ॥**

**[3]मैतद्विधस्याऽकरुणस्य नाम भूदक्रूर इत्येत दतीव दारुणः।**
**योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः ॥ २६ ॥**

अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः।
गोपा अनोभिः स्थविरैरुपेक्षितं दैवञ्च नोऽद्य प्रतिकूल मीहते ॥ २७ ॥

निवारयाम स्समुपेत्य माधवं किं नोऽकरिष्य त्कुलवृद्धबान्धवाः।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजा दैवेन विध्वंसित[4]दीनचेतसाम् ॥ २८ ॥

यस्याऽनुरागललितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम्।
नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वति तरेम तमो दुरन्तम् ॥ २९ ॥

योऽह्नः क्षये व्रजमनन्त सखः परीतो गोपैर्वि[5]शन्खुररजश्छुरितालकस्रक्।
वेणुं क्वण न्स्मित[6]कटाक्षनिरीक्षणेन चित्तं क्षिणोति तमृते[7] नु कथं भवेम ॥ ३० ॥

---

1- -1. M,Ma दृशां महोत्सवो 2. M,Ma ०वं 3. K,T,W मैवंवि० 4. M,Ma विभ्रंशित 5. K,T,W ०र्गवांखु० 6. G,J,K,M,Ma ०त्यमुमृते 7. M,Ma तेऽम्ब

श्रीध० किञ्च। अस्मदुत्सवभाजोऽन्या एवाऽद्य भविष्यन्तीत्याहुः — अद्येति। तत्र पुरे दाशार्हादीनां दृशः दृष्टेः महानुत्सवो भविष्यते भविष्यति। ये देवकीसुतं द्रक्ष्यन्ति, तथा ये[1] चाऽन्ये अध्वनि गच्छन्तं द्रक्ष्यन्ति, तेषा मपि दृशो भविष्यतीति। यद्वा दृश इति द्वितीया। तेषां दृशो नेत्राणि महानुत्सवः भविष्यते प्राप्स्यति। प्राप्त्यर्थस्य भवते-रात्मनेपदित्वात् ॥ २५ ॥

अक्रूरं शपन्त्य आहुः — मेति। एषा विधा विधानं कर्म यस्य; अत एव निष्कृप[2]स्य अक्रूर इति शोभनं[3] नाम मा भूत्। तत्र हेतुः अतीव दारुण इत्यादि। प्रियात्प्राणादपि प्रियतरं कृष्णं अध्वनः पारं, अस्मद्दृगोचरत्वात् अतिदूरदेशं नेष्यति ॥ २६ ॥

अहो धिगस्मज्जीवित मित्याहुः — अनार्द्रधीरिति[4]। अनार्द्रा कठिना धीर्यस्य सः। तावदेव कृष्णो रथमारूढः अस्याऽविनय मालक्ष्य स्थविरैश्चोपेक्षितम्, ते न निवारयन्ति इत्यर्थः। किञ्च दैवतञ्चेति। अयं भावः — यद्यस्माकं दैव मनुकूलं भवे त्तर्हि विघ्नैः कश्चि[5]देतेषां मध्ये प्रतिहन्येत, अकस्माद्वज्रपातो वा भवेत्। अन्यद्वा किञ्चिदनिष्टं स्यात् न तु[6] किञ्चिदस्तीति ॥ २७ ॥

परस्परं सम्मन्त्र्य साहसमधिरुह्याऽऽहुः — निवारयाम इति। अकरिष्यन्[7], किं करिष्यन्ति निमिषार्धदुस्त्यजा-न्मुकुन्दसङ्गात् विध्वंसितानि वियोजितानि अत एव दीनानि चेतांसि यासां तासाम्, एवम्भूतानामस्माकं न मृत्यो रपि भय मित्यर्थः ॥ २८ ॥

इतोऽपि कारणादेव[8] अवश्यं साहस मेवालम्बनीय[9] मित्याहुः — **यस्येति। हे गोप्यः।** यस्य ललितं स्मितं वल्गुमन्त्रश्च लीलावलोकश्च 'परिरम्भणञ्च अनुरागेणैतानि[10] यस्यां रासगोष्ठ्यां **रासक्रीडासभायां नः अस्माभिः क्षणदा रात्रयः** क्षणमिव नीताः तममुं कृष्णं विना दुरन्तं तमः विरहदुःखं कथन्नु अतितरेम, न कथञ्चिदित्यर्थः ॥ २९ ॥

किञ्च आस्तां तावत्[11] तमोऽतितरणं, जीवनमेव कथं स्यादित्याहुः — **य इति। अह्नः क्षये** दिनावसाने **खुररजोभिः** छुरिता धूसरा अलकाः स्रजश्च यस्य सः। व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नश्चित्तं क्षिणोति हरति। अमुं कृष्णं विना कथं भवेम जीवेमेति ॥ ३० ॥

---

1. J,Va °होत्स° 2. J,Va ह्यगो° 3. J,Va °रं दे° 4. J,Va °रितवन्तः 5. J,Va °देषां 6. J,Va add तत् 7. J,Va omit किं 8. J,Va omit एव 9. J,Va °वावल° 10. Va °ण 11. P,V omit तावत्

**वीर०** किञ्च, अस्मदुत्सवभाजोऽन्ये एवाद्य भविष्यन्तीत्याहुः — **अद्येति।** तत्र पुरे दाशार्हादीनां **दशोर्दृष्टे** रद्य महानुत्सवः भविष्यते भविष्यति। आत्मनेपद मार्षम्। तथा ये च जनाः अध्वनि श्रीरमणं लक्ष्मीकान्तं गुणानां कल्याणाना माश्रयं देवकीसुतं द्रक्ष्यन्ति, तेषाञ्च दशः नून मुत्सवो भविष्यति। यद्वा दश इति द्वितीयाबहुवचनान्तम्, तेषां दशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यते, प्राप्त्यर्थस्य भवते रात्मनेपदित्वात् ॥ २५ ॥

अक्रूराय शपन्त्य आहुः — **मैवंविधस्येति।** एवंविधा विधानं कर्म यस्य। एतद्विधस्येतिपाठे, एषा विधा यस्य तस्य, अत एव निष्कृपस्य अक्रूर इतीदं नाम मा भूत्। तत्र हेतुरतीव दारुण इत्यादि। **दारुणः क्रूरः।** अतः क्रूर इत्येव व्यपदेष्टव्यः इति भावः। योऽसावक्रूरः, सुतरां, दुःखितं, जनमस्मत्समुदायात्मकमनाश्वास्य, असान्त्वयित्वा, प्रियात्प्राणादपि प्रियं कृष्णं अध्वनः पारं नेष्यति अस्मदगोचरमतिदूरदेशं नेष्यतीत्यर्थः ॥ २६ ॥

इत्थं ब्रुवतीनां सतीनां प्रभाते रथारूढं कृष्णमालक्ष्य शपन्त्य आहुः — **अनार्द्रधीरिति।** अनार्द्रा धीर्यस्य स एष कृष्णो रथमधिरूढः, तमनुसृत्यैवाऽमी दुर्मदा गोपाश्च अनोभिश्शकटैः गमनसाधनैः स्थविरैर्वृद्धैः उपेक्षितं मूर्खत्वा-त्तैरप्युपेक्षितम्, ते न निवारितवन्त इति भावः। तं कृष्णं त्वरयन्ति। किञ्च दैवमप्यद्य नोऽस्माकं प्रतिकूलं यथा तथा ईहते चेष्टते। अयं भावः — यदि दैव मस्माक मनुकूलं भवेत् विघ्नै रयं विहन्येत। अकस्मादधुनैव व्रजे किञ्चिदरिष्टं वा स्यात्, न तु तत्किञ्चिदस्ति। अतो दैवमपि प्रतिकूलमिति ॥ २७ ॥

परस्परं सम्मन्त्र्य साहस मधिरुह्याऽऽहुः — **निवारयाम** इति। तं माधव मुपेत्य वयं निवारयेम, व्रजे वृद्धा बान्धवाश्च नोऽस्माकं किमकरिष्यन्, न किञ्चिदपि करिष्यन्ति। तत्र हेतुं वदन्त्य आत्मनो विक्षिपन्ति निमिषार्ध मपि दुस्त्यजात् मुकुन्दस्य सङ्गात् दैवेन विध्वंसितानि वियोजितानि अत एव दीनानि चेतांसि यासां तासां, न इति सम्बन्धः। एवम्भूताना मस्माकं न मृत्यो रपि भय मस्तीत्यर्थः ॥ २८ ॥

इतोऽप्यवश्यं साहस मेवाऽवलम्बनीय मित्याहुः — यस्येति। [1-]हे गोप्यः[-1]! यस्य अनुरागेण ललितं स्मितञ्च वल्गुमन्त्रः, सुन्दरतररहस्सल्लापश्च लीलावलोकश्च परिरम्भणञ्च एतानि यस्यां तस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्र्यः क्षणमिव नीताः क्रमिताः तममुं श्रीकृष्णं बिना दुरन्तं तमो विरहजं दुःखं कथन्चतितरेम, न कथञ्चिदित्यर्थः ॥ २९ ॥

आस्तां तावत्तमोऽतितरणं, जीवनमेव कथं स्या दित्याहुः — य इति। योऽनन्तस्य रामस्य सखा। तत्सहित इत्यर्थः। गोपैश्च परिवृतः अह्नः क्षये दिनावसाने मयं खुररजोभिः छुरिता धूसरिता अलकाः स्रजश्च यस्य सः, व्रजं विशन् वेणुं वादयन् स्मितेन यत्कटाक्षवीक्षणं तेन नोऽस्माकं चित्तं क्षिणोति हरति। तममुं कृष्णं विना कथं भवेम जीवेम ॥ ३० ॥

---

1- -1. T,W omit

विज० तत्र मधुरायां दाशार्हादीनां दृशां महोत्सवो, भवितेति शेषः। महानुत्सव आनन्दो यस्य स तथा तम्, ये दाशार्हादयः देवकीसुतं द्रक्ष्यन्तीति यत्तस्मात्, ये चाऽध्वनि द्रक्ष्यन्ति तेषां दृशाञ्चेति ॥ २५ ॥

इदानी मक्रूरं शपन्ति मैतदिति। एवंविधस्य अतिदारुणे कर्मणि प्रवृत्तस्यैतद्विधस्य एतादृशस्य वा ॥ २६ ॥

कृष्णस्य ईश्वरत्वं संवदन्ते अनार्द्रधीरिति। अनेन निस्सङ्गत्वं हरेर्दर्शितम्। दुर्मदाः उत्तरकार्यान्धाः, स्थविरैः कुलवृद्धैः ॥ २७ ॥

नः किमनिष्ट मकरिष्यन्, विभ्रंशिताना मत एव दीनचेतसाम् ॥ २८ ॥

हे गोप्यः, क्षणदा निद्रावसरदाः सुरतोत्सवप्रदा वा। रात्र्यां तमो दुःखम् ॥ २९ ॥

अह्नः क्षये सन्ध्यासमये तं कृष्णमृते विना कृष्णादरातिशयात् अम्बेति सखीसम्बोधनम्। भवेम, तास्विति शेषः ॥ ३० ॥

## [1-]श्रीशुक उवाच[-1]

**एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्त[2]मानसाः।**
**विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति ॥ ३१ ॥**

**स्त्रीणामेवं रुदन्तीना मुदिते[3] सवितर्यथ।**
**अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ३२ ॥**

गोपा स्तमन्वसज्जन्त नन्दाद्या श्शकटै स्ततः।
आदायोपायनं भूरि कुम्भान्गोरससम्भृतान् ॥ ३३ ॥

गोप्यश्च[4] दयितं कृष्णमनुव्रज्यानुरञ्जिताः।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चाऽवतस्थिरे ॥ ३४ ॥

तास्तथा[5] तप्यती वीक्ष्य स्वप्रस्थाने यदूत्तमः।
सान्त्वयामास सम्प्रेष्यै[6] रायास्य इति दौत्यकैः ॥ ३५ ॥

---

1- -1 M,Ma omit 2 M,Ma नि° 3 M,Ma °त्र्या° 4 T,W °स्व 5 P,V °दा 6 G,J सप्रेमै, P,V वचनै°

**श्रीध०** **एवमिति**। कृष्णे विषक्तानि मानसानि यासां सुस्वर मुच्चैः। *क्रूर मक्रूरतः श्रुत्वा कंसं कंसनिषूदनः। गोपीमनोरथारामस्सरामः तत्पुरं[1] ययौ ॥ ३१ ॥

**स्त्रीणामिति**। ता अनादृत्य कृतमैत्रादिकः मैत्रं मित्रदैवत्यं[2] सन्ध्योपासनं तदादिकं[3] कर्म कृतं येन सः ॥ ३२ ॥

**गोपा** इति। अन्वसज्जन्त अन्वगच्छन् ॥ ३३ ॥

**गोप्य** इति। अनुरञ्जिताः परावृत्य निरीक्षणादिभिः किञ्चिदानन्दिताः, प्रत्यादेशं प्रत्याख्यानम् ॥ ३४ ॥

**ता** इति। तप्यतीः सन्तप्यमानाः ता[4] आयास्ये शीघ्र मागमिष्यामीति दूतवाक्यैः ॥ ३५ ॥

---

* श्रीधरीयोऽय श्लोकः। 1 J,Va स्वपुर 2 J Va °त 3 J,Va omit °क 4 J,Va omit ताः

**वीर०** इतीत्थं ब्रुवाणाः भृशं नितरां कृष्णविषक्तानि[1] मानसानि यासां ताः। अत एव तद्विरहेण भाविना आतुराः व्रजस्त्रियः लज्जां विसृज्य सुस्वर मुच्चैः, हे गोविन्द, दामोदर, हे माधवेति च रुरुदुः स्म ॥ ३१ ॥

इत्थं स्त्रीणां रुदतीनां[2] सतीनां सवितरि सूर्ये उदिते सति अनन्तरमक्रूरः कृतं मैत्रं मित्रस्य कृत्यं, तदादिर्यस्य तद्येन सः गोपेषु प्रदर्शितसौहृद इत्यर्थः। रथं चोदयामास। मैत्रं मित्रस्सूर्य स्तद्दैवत्यं प्रातस्सन्ध्योपासनं तदादि कर्म कृतं येनेति वा ॥ ३२ ॥

गोरसपूर्णकुम्भान् भूरि प्रभूतमुपायनञ्च आदाय ततो नन्दाद्या गोपाः शकटैः[3] तं रथ मनु पृष्ठतः समसज्जन्त सङ्गता ययुः ॥ ३३ ॥

तदा गोप्यः श्रीकृष्ण मनुव्रज्य तेनानुरञ्जिताः आश्वासिताः भगवतः प्रत्यादेशं प्रत्युत्तरं काङ्क्षन्त्यः तत्रैव अवतस्थिरे ॥ ३४ ॥

[4] तदा यदूत्तमो भगवान् स्वस्य प्रस्थाने निमित्ते तप्यतीः [5] तप्यमानाः ताः प्रत्यादेशाकाङ्क्षिणीः गोपी स्समवलोक्य शीघ्रमागमिष्यामिति दौत्यकै र्दूतद्वारा प्रेषितैः वाक्यैः सान्त्वयामास ॥ ३५ ॥

---

1 T,W °नि° 2. T,W °न्ती° 3 T,W omit शकटैः 4 K ततः 5. T,W परितपन्तीः

**विज०** कृतमैत्र्यादिकः कृतसूर्यमण्डलाधिष्ठितनारायणोपासनादिक्रियः ॥ ३१-३३ ॥

प्रत्यादेशं प्रतिवचनं, तिष्ठन्तु, नाऽऽयान्त्विति गमननिषेधपरं वचनं वा ॥ ३४ ॥

समीचीनतया प्रेषयितुं योग्यै र्दौत्यकैः दूतसम्बन्धिभिः वाक्यैः ॥ ३५ ॥

**यावदालक्ष्यते केतु र्यावद्रेणू रथस्य च।**
**अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः [1] ॥ ३६ ॥**

**ता निराशा निववृतु र्गोविन्दविनिवर्तने।**
**★ विशोका अहनि [2] निन्यु र्गायन्त्यः प्रियचेष्टितम् ॥ ३७ ॥**

**भगवानपि सम्प्राप्तो रामाक्रूरौ [3] तथा नृप।**
**रथेन वायुवेगेन कालिन्दी मघनाशनीम् ॥ ३८ ॥**

**तत्रोपस्पृश्य पानीयं प्रीत्वा मृष्टमणिप्रभम् [4]।**
**वृक्षषण्ड मृपव्रज्य स रामो रथ माविशत् ॥ ३९ ॥**

**अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि।**
**कालिन्द्या ह्रद मागत्य स्नानं विधिवदाचरत् ॥ ४० ॥**

---

1. K,M,Ma तस्थिरे ★ P,V अहानि निन्युर्गायन्त्यो विशोकाः प्रियचेष्टितम्। 2. K °हा° 3. G,J,K,T,W रामोऽक्रूरयुतो नृ° 4. G,J,K,M,Ma °ष्ट

**श्रीध०** **यावदिति।** कृष्ण मनुप्रस्थापिता आत्मानश्चित्तानि याभि स्ताः [1-] लेख्यानीव [-1] लेख्यमयपुत्रिका इव निश्चलाः ॥ ३६-३८ ॥

**तत्रेति।** वृक्षाणां षण्डं समूहमुपव्रज्य ॥ ३९ ॥

अक्रूर इति।[2] रथोपरि निवेश्य ॥ ४० ॥

---

1- -1. J,Va omit 2. J,Va add शत्रुभ्यः शङ्कितस्सन्

**वीर०** तदा श्रीकृष्ण मनुस्थापिताः आत्मानश्चित्तानि याभिस्ताः गोप्यः, यावत्केतुः पताका लक्ष्यते, यावच्च रथस्य रेणुः दृश्यते तावत्तत्रैव लेख्यानि चित्रस्थप्रतिमा इव उपतस्थिरे॥ ३६ ॥

ततो गोविन्दस्य विनिवर्तने दूरगमने सति निराशाः ताः गोप्यो निववृतुः न्यवर्तन्त। ततः प्रियस्य कृष्णस्यैव[1] चेष्टितं गायन्त्यः तेनैव विगतशोकाः अहानि निन्युः क्रमितवत्यः॥ ३७ ॥

हे नृप, रामाक्रूराभ्यां युक्तो भगवानपि वायोरिव वेगो यस्य तेन रथेन गमनसाधनेन अघं नाशयतीति तथा तां कालिन्दीं कालिन्दीगतं तीर्थविशेषं, प्राप्तः॥ ३८ ॥

मृष्टस्य निघर्षणेन निर्मलीकृतस्य मणे रिन्द्रनीलस्येव प्रभा यस्य तत्पानीयं जलं पीत्वा उपस्पृश्याऽऽचम्य च वृक्षाणां षण्डं समूहमुपव्रज्य सरामो रथ माविशत् आरूढवान्॥ ३९ ॥

तदा अक्रूरश्शत्रुभ्यश्शङ्कितः तौ रामकृष्णौ रथोपरि निवेश्य, आमन्त्र्य पृष्ट्वा माध्याह्निकार्थं कालिन्द्या ह्रद मागत्य तत्र यथाविधि स्नानमाचरत् कर्तु मारेभे॥ ४० ॥

---

1 T.W omit एव

**विज०** केतुः ध्वजः, लेख्यानि चित्राणि॥ ३६ ॥

गोविन्दविनिवर्तने कृष्णदर्शने॥ ३७,३८ ॥

श्याममणिप्रभम्॥ ३९,४० ॥

**निमज्ज्य तस्मिन् सलिले जपन्ब्रह्म सनातनम्।**
**तावेव[1-] ददृशेऽक्रूरो[-1] रामकृष्णौ समन्वितौ॥ ४१ ॥**

**तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः।**
**तर्हि स्वित्स्यन्दनेन स्त इत्युन्मज्ज्य व्यचष्ट सः ॥ ४२ ॥**

**तत्राऽपि च यथापूर्वमासीनौ पुनरेव सः ।**
**[2-]न्यमज्ज[-2] दर्शनं[3] यन्मे मृषा किं सलिले तयोः ॥ ४३ ॥**

भूय स्तत्राऽपि सोऽद्राक्षीत् स्तूयमानं[4]महीश्वरम्।
[5-]सिद्धै भुजङ्गपतिभिः[-5] असुरैर्नतकन्धरैः ॥ ४४ ॥

सहस्रशिरसं देवं सहस्रफणमौलिनम्।
नीलाम्बरं बिसश्वेतं शृङ्गैः श्वेतमिव स्थितम्॥ ४५ ॥

---

1- -1. P,V °वाऽपश्यदक्रूरो 2- -2. M,Ma निमज्जद° 3. J तन्मे ; M,Ma मेने 4. P,V °नं महे° 5- -5. G,J सिद्धचारणगन्धर्वैः; P,V सिद्धैर्गन्धर्वपतिभिः

**श्रीध०** **निमज्ज्येति**। ब्रह्म वेदं जपन्, "क्वेमौ बालौ क्व तौ मल्लाविति शङ्कितचेतसे, अक्रूराय जले रूप मत्याश्चर्यं व्यदर्शयत्" ॥ ४१-४३ ॥

**भूय** इति। सिद्धादिभिः स्तूयमानम् ॥ ४४ ॥

**सहस्रेति**। सहस्रं शिरांसि यस्य तम्, सहस्रफणेषु मौलयः [1]यस्य सन्तीति तथा तम्। नीले अम्बरे यस्य तम्। बिसवत् कमलना[2]लवत् श्वेतं, शृङ्गैः शिखरैः श्वेतं कैलासमिव स्थितम् ॥ ४५ ॥

---

★ श्रीधरीयोयं श्लोकः 1. P,V अस्य 2. P,V °कन्द°

**वीर०** तत्र जले सनातनं ब्रह्म नित्यब्रह्मस्वरूपावेदकं प्रणवं जपन् निमज्ज्य समन्वितौ सहभूतौ तावेव रामकृष्णौ ददर्श ॥ ४१ ॥

एवं दृष्ट्वा सोऽक्रूरः तावानकदुन्दुभे स्सुतौ रथस्थौ कथमिह स्तः? यदि रथादवरुह्येहाऽऽगतौ तर्हि रथे न स्तः इति वितर्क्य उन्मज्ज्य ददर्श ॥ ४२ ॥

तत्राऽपि रथेऽपि पूर्ववदासीनौ दृष्ट्वा, तयो स्सलिले मम दर्शनं मत्कर्तृकं[1] दर्शनं किं मृषा, उत सत्यम्? यदि स[2]त्यं, तर्हि पुनर्द्रक्ष्यामीति चिन्तयन् पुनर्न्यमज्जत्, पुनर्निमग्नः ॥ ४३ ॥

तत्राऽपि जले तावदहीश्वरं शेषं ददर्श। कथम्भूतम्? नता कन्धरा ग्रीवा येषां तै स्सिद्धादिभिः स्तूयमानम् ॥ ४४ ॥

सहस्रं शिरांशि फणा यस्य तं, देवं दीप्यमानं सहस्रफणेषु मौलयः किरीटानि अस्य सन्ति सहस्रफणमौलिनः। पामादेराकृतिगणत्वात् मत्वर्थीयो नप्रत्ययः। तं नीलं अम्बरं यस्य तम्, बिसवत्पद्मतन्तुवत् श्वेतं, हिरण्मयैः शृङ्गैः रजतगिरिमिव स्थितम् ॥ ४५ ॥

---

1. T,W °क° 2. T,W omit सत्यं

**विज०** ब्रह्म अघमर्षणसूक्तम्। "ब्रह्म वेदस्तपस्तत्त्वम्" (अम.को. 3-271) इति च ॥ ४१ ॥

स्यन्दने रथे न स्तः न विद्येते स्वित्किम् ॥ ४२ ॥

सलिले तयोः रामकृष्णयोः दर्शनं मृषा किमिति, मेने इति शेषः ॥ ४३ ॥

असुरै रसुषु रतैः, वशीकृतेन्द्रियै रित्यर्थः ॥ ४४ ॥

बिसश्वेतं श्वेतपद्मनालतन्तुवद्धवलं शिखरैस्सह श्वेतनामानं पर्वतम् ॥ ४५ ॥

**तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम्।**
**पुरुषं चतुर्भुजं शान्तं पद्मपत्रायतेक्षणम्[1] ॥ ४६ ॥**

**चारुप्रसन्नवदनं चारुहासनिरीक्षणम्।**
**सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥**

**प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम्।**
**कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ४८ ॥**

**बृहत्कटितटश्रोणि[2]करभोरुद्वयान्वितम्।**
**चारुजानुयुगं दीर्घं[3] जङ्घायुगलसंयुतम् ॥ ४९ ॥**

**तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम्[4]।**
**नवाङ्गुल्यङ्गुष्ठदलै र्विलसत्पादपङ्कजम् ॥ ५० ॥**

---

1. G,J,M,Ma °रुणे° 2. M,Ma श्रोणी 3. G,J,M,Ma,P,V चारु 4. K,W °र्नृप!

**श्रीध० तस्येति।** तस्योत्सङ्गे कुण्डलीकृतदेहार्धे 'विलोक्य' (भाग. 10/39/56) इत्येकादशश्लोकेनाऽन्वयः ॥ ४६ ॥

**चार्विति।** शोभने भ्रुवौ यस्य, उन्नता नासिका यस्य तच्च, तच्च। [2-] शोभनौ कपोलौ यस्य, अरुणावधरौ यस्य तच्च, तच्च [-2] ॥ ४७ ॥

**प्रलम्बेति।** तुङ्गावंसौ यस्य, उरःस्थले श्रीर्यस्य, तच्च, तच्च। वलिमत्पल्लवोदरं वलयः तिर्यक् निम्ना [3] रेखा यस्य सन्ति तद्वलिमत्; तच्च तत्पल्लववत् अश्वत्थदलसदृशमुदरं यस्य तम् ॥ ४८ ॥

**बृहदिति।** कटितटञ्च श्रोणिश्च करभसदृश मूरुद्वयञ्च, बृहच्च तत्कटितटश्रोणिकरभोरुद्वयञ्च, तेनान्वितम्। यद्वा, बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्वयेन चाऽन्वितम् ॥ ४९ ॥

**तुङ्गेति।** तुङ्गौ ईषदुन्नतौ गुल्फौ अरुणनखव्रातश्च तेषां दीधितिभिः; तथा नवाः कोमलाः अङ्गुल्यः अङ्गुष्ठौ [4] च तान्येव दलानि तैश्च विलसच्छोभमानं पादपङ्कजं यस्य तम् ॥ ५० ॥

---

1. J,Va °शेन 2- -2. P,V omit 3. J,Va °म्न° 4. P,V °ष्ठे°

**वीर०** तस्य अहीश्वरस्य उत्सङ्गे फणप्रान्तभोगे पुरुष मद्राक्षीत्। केमौ बालौ क्व मल्लौ इत्याशङ्कापजिहीर्षया प्रदर्शित मात्मान मद्राक्षीदिति भावः। कथम्भूतम्? नीलमेघवच्छ्यामं, पीते [1] कौशेये वाससी यस्य, चत्वारो भुजा यस्य तं, शान्तं प्रसन्नं, पद्मपत्रे इव आयते ईक्षणे नेत्रे यस्य ॥ ४६ ॥

चारु सुन्दरं, प्रसन्नञ्च वदनं यस्य, चारुहासेन युक्तं निरीक्षणं यस्य, शोभने भ्रुवौ उन्नता नासिका च यस्य, चारुकर्णौ श्रोत्रे यस्य, शोभनौ कपोलौ यस्य, अरुणः अधरो यस्य [2-] स चासौ य [-2] तम् ॥ ४७ ॥

प्रलम्बा आजानुलम्बिनः, पीवराश्च भुजा यस्य, तुङ्गौ उन्नतौ स्कन्धौ यस्य स चाऽसौ, उरसि श्री र्यस्य च तम्। कम्बुवत् शङ्खवत् रेखात्रयोपेतः नातिदीर्घो नातिह्रस्वश्च [3] पीनश्च कण्ठो यस्य, निम्ना नाभि र्यस्य, वलिमत् वलित्रयोपेतम् अश्वत्थपल्लववदुदरं यस्य ॥ ४८ ॥

बृहता कटितटेन श्रोण्या च, करभसदृशोरुद्वयेन च अन्वितं, चारु जान्वो र्युगं यस्य, दीर्घयो र्जङ्घयो र्युगलेन संयुतम् ॥ ४९ ॥

तुङ्गावीषदुन्नतौ गुल्फौ अरुणनखव्रातश्च, तेषाम् दीधितिभिः हे नृप, तथा नवाङ्गुल्यः नवाङ्गुष्ठौ च तान्येव दलानि तैश्च शोभमाने पादपङ्कजे यस्य तम् ॥ ५० ॥

---

1. W °त° 2- -2. W omits 3. K omits पीनश्च

**विज०** उत्सङ्गे भोगे वपुरङ्कं तत्सङ्गहीनो जनार्दन इति च ॥ ४६ ॥

सुभ्रूश्च उन्नसश्च सुभ्रून्नसः तम् ॥ ४७ ॥

तुङ्गांसश्च उरःस्थलश्रीश्च तुङ्गांसोरःस्थलश्रीः। तुङ्गावंसौ यस्य स तथा। उरःस्थले श्रीर्यस्य स तथा तम्, वलिमच्च पलुवश्चाऽऽकाशवच्च उदरं यस्य स तथा तम्। "पलुवश्च प्रकोष्ठे वाऽपि विस्तृतौ"[1] इति वैजयन्तीमाला। (वैज.को 7-5-58) सुन्दररेखाङ्कितानन्ताण्डकोटिनिवेशनोदरमित्यर्थः ॥ ४८ ॥

कनिष्ठिकामूलं करभः। काञ्चीपदं कटितटश्च श्रोणी च करभवद्रुचिरं मांसलं ऊरुद्वयञ्च तानि तैरन्वितः ॥ ४९, ५० ॥

---

1. उपलभ्यमानपाठः "पलुवन्त्वस्त्री प्रकोष्ठेऽप्यतिविस्तृतौ"।

[1-]महार्हमणिभिर्युक्त[-1]किरीटकटक[2]काङ्गदैः।
कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ५१ ॥

भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम्।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ५२ ॥

सुनन्दनन्दप्रमुखैः पार्षदैस्सनकादिभिः।
सुरेशैर्ब्रह्मरुद्राद्यै[3]र्नवभिश्च द्विजोत्तमैः ॥ ५३ ॥

प्रह्लादनारदवसु[4]प्रमुखै र्भागवतोत्तमैः।
स्तूयमानं पृथग्भावै[5]र्वचोभिरमलात्मभिः ॥ ५४ ॥

श्रिया पुष्ट्या गिरा कीर्त्या कान्त्या तुष्ट्येल[6]योर्जया।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५५ ॥

विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः।
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥

गिरा गद्गदयाऽस्तौषी त्सत्त्वमालम्ब्य सात्त्वतः।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटश्शनैः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
अक्रूरप्रतियाने एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

1- -1. G,J सुमहार्हमणिव्रात; M,Ma महार्हमणिविभ्राजत्; P,V महार्हमणिकव्रात 2 K,W °मकुटा° 3. K,W कविभिश्च 4 M,Ma omit प्र 5. M,Ma °ध्यार्गे 6. M,Ma °लयोऽजया

**श्रीध० महार्हेति।** सुमहार्हाः मणिव्राताः येषु तैः किरीटादिभिः॥ ५१-५३ ॥

**प्रह्लादेति।** पृथक् पृथक् भावोऽभिप्रायो येषां तैः तत्र पारिषदैः स्वामीति स्तूयमानं, सनकादिभिर्ब्रह्मेति, ब्रह्माद्यैर्महेश्वर[1] इति। मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापति रिति। वसुरुपरिचरः, प्रह्लादनारदवसवः प्रमुखा मुख्या येषां तैः परं दैवतमिति च श्रेष्ठैर्वचोभिः पृथग्भावै (गैः) र्वचोभि रिति वा॥ ५४ ॥

**श्रियेति।** विद्याऽविद्ये जीवानां मुक्तिसंसृतिहेतू माया तयोः कारणं, शक्तिः ह्लादिनी, संवित् ज्ञानम्, आभि-रन्याभिश्च निषेवितम्॥ ५५ ॥

**विलोक्येति।** विलोक्य सुभृशं प्रीतः अस्मत्कृष्णोऽसावेवम्भूतः परमेश्वर इति ज्ञात्वेति॥ ५६,५७ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकोनचत्वारिंशोऽध्यायः॥ ३९॥

---

1 P.V. omit °त०

**वीर०** महार्हा मणिव्राता येषु तैः किरीटादिभिर्भ्राजमानं पद्मं करे दक्षिणे यस्य तम्, अवशिष्टैः त्रिभिः करैः शङ्खचक्रगदाः धरतीति तथा तम्, श्रीवत्सो वक्षसि यस्य तं, भ्राजन् भ्राजमानः कौस्तुभो यस्य तम्। वनमालाऽस्यास्तीति तथा तम्॥ ५१,५२ ॥

सुनन्दादिभिः पार्षदैः सनकादिभिश्च सुरश्रेष्ठैः ब्रह्मरुद्रादिभिश्च कविभिः (नवभिः) द्विजोत्तमैः मरीच्यादिभिश्च विशुद्धमानसैः क्रमेण सर्वशेषीति, परब्रह्मेति, सर्वकारणमिति, प्रजापतिरिति - एवं पृथक् पृथक् अभिप्रायवद्भिः वचोभिः स्तूयमानं शक्त्यादिभिः मूर्तिविशिष्टे श्शक्तिभिः द्वादशभिः निषेवितम्॥ ५३-५५ ॥

एवम्भूतं विलोक्य नितरां प्रीतः उत्कृष्टया भक्त्या च युक्तः, अत एव हृष्यन्ति उदञ्चितानि तनूरुहाणि लोमानि यस्य, भावेन प्रीत्यतिशयेन परिक्लिन्न आर्द्रः आत्मा चित्तं लोचने च यस्य सः सात्त्वतोऽक्रूरः, सत्त्वं धैर्य मवलम्ब्य मूर्ध्ना प्रणम्य अवनतः प्रह्वः कृतमञ्जलिपुटं येन सः गद्गदया वाचा शनै स्तुष्टाव॥ ५६,५७ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनचत्वारिंशोऽध्यायः॥ ३९ ॥

**विज०** नवभिर्द्विजोत्तमैः कश्यपादिभिः ॥ ५१-५३ ॥

**पृथङ्मार्गैः** वैदिकतान्त्रिकमार्गविषयैः॥ ५४,५५ ॥

भावेन तद्भक्तिस्वभावेन परिक्लिन्ने आनन्दाश्रुजलस्नाते आत्मलोचने यस्य स तथा॥ ५६ ॥

सत्त्वं सत्त्वगुणं आत्मभावं वा॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
एकोनचत्वारिंशोऽध्यायः॥ ३९ ॥

(श्रीविजयध्वजरीत्या सप्तत्रिंशोऽध्यायः)

---

# चत्वारिंशोऽध्यायः

## (श्रीविजयध्वजरीत्या अष्टत्रिंशोऽध्यायः)

## -: अक्रूरकृत श्रीकृष्णस्तुतिः :-

### श्रीशुक उवाच

★एवं दृष्ट्वा तमक्रूरः प्रसन्नहृदयेन्द्रियः।
तुष्टाव पुण्डरीकाक्षं भक्त्याऽवनतकन्धरः ॥ १ ॥

### अक्रूर उवाच

नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं[1] नारायणं पूरुषमादिमव्ययम्[2]।
यन्नाभिजातादरविन्दकोशा द्ब्रह्माऽऽविरासीद्यत एष लोकः ॥ २ ॥

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि।
सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ ३ ॥

नैते स्वरूपं विदुरात्मनस्ते ह्यजादयो[3]न्यात्मतया[4] गृहीताः।
अजो नु बद्धस्स्वगुणै[5]रजाया गुणात्परं वेद न ते स्वरूपम् ॥ ४ ॥

त्वां योगिनो यजन्त्यद्धा महापुरुष मीश्वरम्।
साध्यात्मं साधिभूतश्च साधिदैवञ्च साधवः ॥ ५ ॥

त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः।
यजन्ते विविधै[6]र्यज्ञै र्नानारूपाऽमराख्यया ॥ ६ ॥

---

★ It is not found in G,J,K,P,V,W edns. 1. M,Ma मूतं 2. G,J,P,V °माद्य° 3. P,M,Ma,V अ° 4 G,J,P,V ना° 5. G,J,M,Ma,P,V °स्स° 6. G,J,M,Ma विततैः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम्। प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः॥

(एवं दृष्ट्वेति प्रथमश्लोकस्य श्रीधरीयव्याख्या नास्ति)

श्रीकृष्णं प्रणमति **नतोऽस्मीति**। हे कृष्ण, त्वा त्वां नतोऽस्मि, त्वमस्मत्पितृव्यः कुतो मां बालं नतोऽसि? तत्राऽऽह आद्यं पुरुषं अव्ययञ्च, अनादिनिधनमित्यर्थः। कुत एतत्? अखिलहेतूनां [1-]पञ्चमहाभूतानां[-1] हेतुम्। स तु नारायणो नाऽहमिति चेत् तत्राऽऽह — नारायणं त्वां, किं नारायण इति मां स्तौषि, काऽत्र स्तुतिः? सत्यमेवेत्याह यन्नाभिजातादिति। [2-]यस्य नाभिजातात् अरविन्दकोशात् ब्रह्मा आविरासीत्[-2] यतो ब्रह्मणः ॥ २ ॥

अखिलहेतुहेतुत्वं प्रपञ्चयति **भूरिति**।[3] आदिरहङ्कारः, अजा माया, तस्या आदिः पुरुषः एते ये जगतो हेतवः ते सर्वे ते[4] तवाऽङ्गभूताः अङ्गात् श्रीमूर्ते र्भूताः जाताः,[5] उपसर्जनभूता वा ॥ ३ ॥

नन्वतिस्तुतिः कथं क्रियते, अहमेवाऽन्यत उत्पन्नः तत्परतन्त्र[6-]श्चेति चेत् इत्या[-6]शङ्क्य, तवैषा माया त्वत्पारमार्थ्यं तु न कोऽपि वेदेत्याह — **नेति**। एते अजा[7] आदि र्येषां ते, आत्मनस्ते स्वरूपं न विदुः। अनात्मतया जडत्वेन कारणेन। जडत्वे हेतुः, गृहीताः प्रत्यक्षादिभिर्दृष्टाः। न ह्यजडो दृङ्गोचर इति भावः। ननु जडाः मां मा जानन्तु जीवस्तु ज्ञास्यति इत्यत आह — अज इति। स अजो ब्रह्माऽपि अजाया गुणैः अनुबद्ध आवृतः गुणातीतं ते तव[8] स्वरूपं न वेद। अतः[9] अन्यः कुतो ज्ञास्यतीति। यद्वा प्रकृत्यादयः आत्मनः स्वरूपं तव स्वरूपं च न विदुः जडत्वादेव। जीवस्तु तान् आत्मानञ्च वेत्ति न पुन स्त्वत्स्वरूपमिति। यथोक्तं हंसगुह्ये — "देहोऽसवोऽक्षामनवो भूतमात्रा नात्मानमन्यञ्च विदुः परं यत्। सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञ मनन्तमीडे" इति ॥ ४ ॥

ननु यदि केऽपि न जानन्ति कथं तर्हि संसारनिवृत्ति र्जीवानामित्याशङ्क्य साक्षादगोचरत्वेऽपि येन केनाऽपि मार्गेण भजतां त्वं गम्योऽसीत्याह - **त्वामिति**। हैरण्यगर्भादयः अध्यात्माधिभूताधिदैवसाक्षिणं महापुरुषं तदन्तर्यामिस्वरूपं ईश्वरं नियन्तारञ्च यजन्ति ॥ ५ ॥

तदेवं साङ्ख्ययोगावेकीकृत्योक्त्वा[10] त्रयीमार्गं कर्मज्ञानभेदेन दर्शयति — **त्रय्या** चेति द्वाभ्याम्।[11] वैतानिकाः कर्मयोगिनः त्वां वै त्वामेव यजन्ते। ननु ते इन्द्रवरुणवाय्वादीन् यजन्ते न तु मामित्यत आह - नानेति। नाना वज्रहस्तादीनि रूपाणि येषां ते ये अमरा स्तेषामाख्यया नाम्ना त्वामेव यजन्त इति। अयं भावः - ऐन्द्रवारुणादिसूक्तैः[12] इन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते, न च सर्वेश्वरा बहवस्सम्भवन्ति। अतो नामभेदेन त्वामेव यजन्त इति। तथा च श्रुतिः — "स प्रथम स्सङ्कृतिः विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः स प्रथमो बृहस्पति श्चिकित्वान् तस्मा इन्द्राय सुत माजुहोमि" इति ॥ ६ ॥

---

1- -1. J,Va omit 2- -2. J,Va omit 3. J,Va add स्वस्य 4. J,Va omit ते 5. J,Va omit जाताः 6- -6. J,Va °श्चेत्या° 7. Va omits अजा 8. P,V omit तव 9. J,Va omit अतः 10. J,Va त्तौ। 11. J,Va श्लोकद्वयेन 12. P,V इन्द्रवरुणा°

# श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अस्तौषी दित्युक्तं तां स्तुतिमेव दर्शयति चत्वारिंशेन, **नतोऽस्मीत्यादिना**। तावत्सर्वजगत्कारणत्वसर्वान्तरात्मत्वादिभिः स्तुवन्नमस्करोति, नतोऽस्मीत्यादि[1] द्वाभ्याम्। अखिलहेतुहेतुं त्वामहं नतोऽस्मि। अखिलस्य व्यष्टिप्रपञ्चस्य ये हेतवो महदादयः तेषामपि हेतुं कारणमित्यर्थः। नन्वखिलहेतुहेतुः सद्ब्रह्मात्माकाशप्राणादिषु अन्यतमो, न त्वहमित्यत्राऽऽह — नारायणमिति। कृत्स्नकारणत्वस्यानेकनिष्ठत्वे "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वेता.उ. 6-8) इत्युक्तरीत्या निस्समाभ्यधिकाद्वितीयवस्त्वसिद्ध्या तस्यैकनिष्ठत्वस्य वाच्यत्वात् सदादिसामान्यशब्दघटितकारणवाक्याभिप्रेतकारणवस्तुविशेषाकाङ्क्षाशामकेन विशेषशब्दात्मकनारायण पदघटितेन[2] "एको ह वै नारायण आसीत्" (मन्ना.उ. 1-1) इति वाक्येन नारायणेतरस्य निषेधपूर्वकं तस्यैव कारणत्वं श्रावयता कारणत्वेनाऽवगतो नारायण एव, स च त्वमेवेति भावः। नन्वस्त्वहं[3] नारायण इति, स एवाऽखिल हेतुरिति च, तथापि ममाऽपि कारणान्तरं स्यात्, तत्राऽऽह - पूरुषमादिं आदिपूरुषं कारणत्वपराकाष्ठाभूतं स्वयं कारणान्तररहित मित्यर्थः। एवमप्यव्ययं निर्विकारं विकाराणां शरीरभूतचिदचिद्गतत्वादिति[4] भावः। अखिलहेतुहेतुत्वमेव प्रपञ्चयति — यन्नाभीति। एष दृश्यमानो व्यष्टिप्रपञ्चः यतो बभूव स ब्रह्मा चतुर्मुखः यस्य तव नाभेः जातादरविन्दकोशादाविरासीत् उदभवत्। अनेन व्यष्टिसृष्टिश्चतुर्मुखद्वारिका समष्टिसृष्टिस्तु अद्वारिकेति दर्शिता (तम्) ॥ १,२ ॥

ननु किमिद मखिलहेतुत्वं निमित्तरूपमुतोपादानत्वरूपमित्याशङ्कायामुभयरूप(विध)श्चेत्यभिप्रेत्याऽऽह — **भूरिति**। पृथ्व्यादीन्याकाशान्तानि पञ्चभूतानि तेषामादिः कारणमहङ्कारः, तथा तस्यापि कारणं महान्, तस्याप्यादिः कारणमजा मूलप्रकृतिः। सा हि सर्वकार्याणा मादिभूता, तथा सात्त्विकाहङ्कारकार्यभूतानीन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि मनश्च तेषा मधिष्ठातारो विबुधा देवाः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रप्रजापतिचन्द्रमसः, इन्द्रियाणामर्था विषयाः शब्दादयश्चेति ये जगतो हेतवः ते सर्वे, ते तव अङ्गभूताः शरीरभूताः। अनेन मूलप्रकृतिविशिष्टो महदादिशरीरकतया तत्तद्रूपेण परिणत इत्युपादानत्व मुक्तम्। मूलप्रकृतेर्महदादीनाञ्च शरीरत्वकथनेन नियन्तृनियाम्यभावसिद्धेर्निमित्तत्वमप्युक्तम्। जगतो ये हेतव इति जगदन्तर्भूतज्ञानविकासात्मक कार्यावस्थजीवकारणभूतज्ञानसङ्कोचरूप कारणावस्थजीवानामपि तदङ्गत्वप्रतीत्या जीवान्प्रत्युपादान निमित्तत्वरूपोभयविध कारणत्वसिद्धिः ॥ ३ ॥

ननु त्वमिव सर्वेऽप्येवंविधं सर्वकारणं सर्वान्तरात्मानं सर्वशरीरकञ्च मां किं विजानीयुः? तत्राऽऽह — **नैते** इति। एते त्वच्छरीरभूता अजादयः (जीवादयः) अन्तरात्मनः तव स्वरूपं न विदुः। अजादय इत्यत्र आदिशब्दः प्रकृति तत्कार्यसङ्ग्राहकः, स च दृष्टान्तार्थः। जडाः प्रकृत्यादयो यथा न तव स्वरूपं विदुः, एवं जीवा अपि न विदुरित्यर्थः। ननु जडत्वात् प्रकृत्यादयो न विदुरिति युक्तम्, अजडा जीवास्तु कुतो न विदुः, इत्यत्राऽऽह — अन्यात्मतया गृहीता इति। अन्यस्मिन् स्वस्माद्भिन्ने देहे आत्मतया आत्माभिमानेन, तथा अन्यस्मिन् स्वतन्त्रात् त्वत्तोऽन्यस्मिन् स्वात्मनि आत्मतया स्वातन्त्र्याभिमानेन च गृहीता ग्रस्ताः देहात्माभिमानस्वतन्त्रात्माभिमानाभ्यां ग्रस्ताः स्वात्मानमेव देहविलक्षणमीश्वरपरतन्त्रञ्च न जानन्ति, कथन्तु (नु) त्वां विदुरित्यर्थः। इत्थमेव ब्रह्मापि न वेद, किमुत तत्सृज्यास्तदर्वाचीना इति कैमुत्यनयेनाऽऽह - अज इति। अजो ब्रह्माऽपि स्वगुणैः स्वशरीरारम्भकसत्त्वरजस्तमोगुणैः अनुबद्धः तत्परवश इति यावत्। अजायाः प्रकृतेः गुणात्, जातावेकवचनम्। गुणेभ्यः सत्त्वादिभ्यः परं विलक्षणं, तन्नियन्तृ तव स्वरूपं न वेद, किमुताऽन्ये न विदुरिति भावः।

अनात्मतयेति पाठे जडत्वेन दृष्टाः अजादयः प्रकृत्यादयः यथा न विदुः, एव मजो ब्रह्माऽपि न वेद किमुताऽन्ये न विदुरिति योजनीयम् ॥ ४ ॥

ननु सर्वै रवेद्यं मत्स्वरूपं शशविषाणप्रायं स्यादिति मा शङ्कीः (शङ्किष्टाः) देहात्माद्यभिमानिनां मांसचक्षुराद्यवेद्यमपि योगविशुद्धमनोवेद्यमेवेत्यभिप्रयन् तदेव नानाविधब्रह्मविद्याभिः ज्ञानयोगिनः कर्मयोगिनश्च यजन्तीत्याह - **त्वामिति**। योगिन इत्यस्य केचिदित्यादिः। केचिद्योगिनः आनन्दवल्ल्यादिविहितोपासनानिष्ठाः महापुरुषं, प्रकृतेः तत्संसृष्टाच्चेतनान्मुक्तान्नित्याच्च विलक्षण मीश्वरं त्वामद्धा त्वामेव। अद्धेत्यवधारणे। साक्षात्त्वामेव "सत्यं ज्ञान मनन्तम्" (तैत्ति.उ. 2-1-1) इत्याद्युक्तविधं यजन्ति आराधयन्ति। उपासत इति यावत्। केचित्साधवस्तु अन्तरादित्यप्रतर्दनादिविद्यानिष्ठास्तु साधिदैवम् आदित्यान्तःस्थमिन्द्रादि देवतान्तर्यामिण मिन्द्रादिशरीरकं त्वां, यजन्त्युपासनां कुर्वन्तीत्यर्थः। केचित्तु साध्यात्मम् आत्मनि शरीरे अध्यात्मं तेन सहितं साध्यात्मं शरीरावयवाक्षिहृदयादिषु वसन्तं त्वां यजन्ति। तथाहि — छान्दोग्ये "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। (छान्दो.उ.1-6-6) इत्युपक्रम्य "तस्य ऋक्सामगोष्णौ "इत्यधिदैवतम्" (छान्दो.उ. 1-6-8) "अथाध्यात्मं...य एषोऽन्तरक्षणि पुरुषो दृश्यते (छान्दा.उ. 1-7-5) इत्युक्तम्। अपरे तु योगिनः साधिभूतं सर्वभूतस्थं सर्वशरीरकं त्वां भजन्ति। "सर्वं खल्विदं ब्रह्म तज्जलान्" (छान्दो.उ. 3-14-1) इत्युक्तविधमुपासनं कुर्वन्तीत्यर्थः। तदेवमुपासनानां अद्वारकसद्वारकभेदेन द्वैविध्यं दर्शितम् ॥ ५ ॥

अथ कर्मणामपि तदाराधनात्मकानां द्वैविध्य मभिप्रयन् तावत्सद्वारककर्माराध्यत्व माह — **त्रय्या** चेति। केचि द्वैतानिकाः कर्मयोगिनो द्विजाः नानारूपामराः नानाविधत्वच्छरीरभूता इन्द्रादयो देवाः, तेषा माख्याः नामानि यस्यां तया त्रय्या विद्यया वेदपूर्व भागात्मिकया विद्यया बोधितैर्विविधै र्यज्ञै र्यजन्ते इन्द्रादिदेवतान्तरात्मानं, तच्छरीरकं त्वा माराधयन्तीत्यर्थः। यद्वा नानाविधानि रूपाणि वज्रहस्तत्वादीनि येषां तेषां इन्द्रादीनां आख्यया, अभिधेयमिति शेषः। आकृत्यधिकरणन्यायेन इन्द्राद्यन्तरात्मभूतत्वात्तत्पर्यन्ताभिधायिभिः इन्द्रादिनामभिः अभिधेयं [5] तच्छरीरकं त्वां यजन्तीत्यर्थः ॥ ६ ॥

---

1. W °दिना द्वा° 2. W °तैको 3. °र° 4. W omits सः 5. K adds तत्°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अक्रूरस्तुतिव्यपदेशेन विद्वदधिकारयोग्यं भगवदुपासनाप्रकारं निरूपयत्यस्मिन्नध्याये। तत्राक्रूरो भगवन्तं दृष्ट्वोत्तरं किञ्चकारेति परीक्षितो मानसीं शङ्कां शुकः परिहरति — **एवमिति** ॥ १ ॥

नम्यस्य [1] नम्ये वैशिष्ट्यस्य ज्ञापनाय व्यावर्तकलक्षणमाह — अखिलेति। कदाचित्कारणं कदाचिन्नेति अन्यथाप्रतीतिं निवारयति भूतमिति। यदेतन्निमित्तकारणत्वं तत्कदाचि न्नापगच्छतीत्यर्थः। अखिलहेतुहेतुमिति पाठे उपादानकारणानामपि कारणमित्यर्थः। किं नामधेयोऽयमिति तत्राऽऽह नारायणमिति। अरविरुद्धत्वान्नाराः गुणाः तेषामयनम्। ननु तर्हि किमयं शब्दगुणाश्रयत्वेन आकाश इति चेत् तत्राऽऽह — पूरुषमति। पूर्णषड्गुणम् आकाशस्यैकगुणत्वान्महान्विशेषः। ननु, "आकाशो

वै नाम नामरूपयो र्निर्वहिता" (छान्दो.उ. 8-14-1) इति श्रुतेः अविनाशित्वेनाखिलहेतुत्वम्। नरसमुदायो नारमिति नरसमुदायादि सर्वपदार्थस्यावकाशप्रदत्वेनाश्रयत्वेन नारायणशब्दवाच्यत्व माकाशस्य किं न स्यादित्यतो वाऽऽह पूरुषमिति। पूरुषस्यापि पितृपितामहादिवत् घटमृदादिवद्वा बीजपरम्परा स्यादिति तत्राऽऽह आदिमिति। वैशेषिकपक्षे यथा परमाणौ कारणत्वं पर्याप्तम्, एवमत्राऽपीत्यर्थः। एवंविधस्याऽपि सगर्भकर्कटवत् विनाशित्वं स्यात् किं नेत्याह — अव्यय मिति। न केवलं स्रष्टृत्वेनाऽस्य कारणत्वं पर्याप्तमपि तु संहर्तृत्वेनाऽपीति भावेनाऽऽह आदिमिति। 'अद भक्षणे' इति धातोः अत्तृत्वादादिमित्यर्थः। संहर्तृत्वमप्यस्मिन् पर्याप्तमिति प्रकटनायेणप्रत्ययप्रयोगः। "जीवो जीवस्य जीवनम्" इति न्यायेन अत्तुरस्याऽप्यन्योऽत्ता स्यादित्यतो वाऽऽह अव्ययमिति। सर्वकारणे विरिञ्चे जाग्रति पर्याप्तकारणत्वमस्य कथमिति तत्राऽऽह यन्नाभीति। विरिञ्चस्य कारणत्वं तर्हि कथमिति तत्राऽऽह — यत इति। यतो विरिञ्चाल्लोको, देवलोकोऽभूदिति शेषः ॥ २ ॥

आदित्वं स्पष्टयति- भूरिति। "आत्मन आकाश स्सम्भूतः" (तैत्ति.उ. 2-1-1) इति श्रुतिः। आदिर्भूतादिरहङ्कारः अजा च आदिश्च अजादिः प्रकृत्याख्यकारणमित्यर्थः। न केवलमस्य समस्ताचेतनहेतुत्वम् किन्तु चेतनराशेरित्याशयेन वाऽऽह अजादिरिति। ब्रह्मादिचेतनसङ्घः अजादिः, ये सर्वे अजादयो जगतो हेतवो यथायोग्यं कारणानि। ते सर्वे तवाऽङ्गभूता अङ्गेभ्यो जाताः - "पद्भ्यां भूमिः" इति श्रुतेः ॥ ३ ॥

त्वदङ्गजाताजाद्यविज्ञातमाहात्म्यं मर्त्येन मया न ज्ञायते इति किं वक्तव्यमित्याशयेनाऽऽह - नेति। अवेदने निमित्तमाह - अन्येति। अन्यात्मतया गृहीताः एते जीवात्मानो मत्तोऽन्ये इति भगवता गृहीताः। ईश्वरो भ्रान्तत्वात् तथा गृह्णातीति चेन्न, "अहं परो हि मद्भिन्ना जीवात्मानोऽल्पशक्तयः" (स्कान्दे.) इत्यादेः। "नहीश्वरस्य सर्वज्ञस्य भ्रान्तिरुपपद्यते" — "नहि द्रष्टुर्दृष्टे र्विपरिलोपो विद्यते" (बृह.उ. 4-3-23) इति श्रुतेः। ये तवाङ्गेभ्यो जाताः त एते अजादयः आत्मन स्तव स्वरूपं न विदुरित्यन्वयः। अजो ब्रह्मा आदि र्येषां रुद्रादीनां ते अजादय इति तद्गुणसंविज्ञाने बहुव्रीहौ ब्रह्मणोऽप्यज्ञानमापद्यते "वेदाऽह मेतं पुरुषम्" (पु.सू. 2-1) इति श्रुत्या तद्विज्ञानप्रतीतेः। अतो ब्रह्मकारणका रुद्रादयो न विदुरित्यर्थः किं न स्यादित्यत आह अज इति। अजाया गुणैः बद्ध इति हेतुगर्भं विशेषणम्। गुणात्परं दूरीभूतम्। अजादय इत्यत्र अजाशब्देन चित्प्रकृतिरपि ग्राह्या तस्या अपि सर्वात्मना तद्विषयज्ञानाभावात्; तदुक्तम् — "यथा हरिः स्वमात्मानं वेद तद्वद्रमाऽपिच" (माहात्म्ये) इत्यादि। अनेन वेदाहमित्यस्याऽपि गति रुक्ता भवति। अत ईश्वरस्य दुर्ज्ञेयत्वात् साधनानुष्ठानवैयर्थ्यमित्याशङ्का परास्ता। तत्प्रसादेन यथायोग्यज्ञानसम्भवाद्यथाशक्ति स्वहितमनुष्ठेयम् ॥ ४ ॥

अत्र किं प्रमाणमित्यतो वृद्धाचार एव प्रमाणमित्याह — त्वामिति। अधिष्ठानविशेषमाह- साध्यात्ममिति। आत्मशब्दोक्तनरैः सह ततोऽधिकत्वेन वर्तमानं भूतैः आकाशादिभिः सह तदुत्तमत्वेन वर्तमानं देवैर्ब्रह्मादिभिस्सह ततो विशिष्टगुणत्वेन तिष्ठन्तं तत्तदुपासनार्थं तत्तदधिष्ठानेषु तत्तद्गुणप्रवर्तकत्वेन तत्तदुत्तमत्वेन वर्तमानमित्यर्थः। तदुक्तम् "स्थितो ब्रह्मादि देवेषु खादिभूतेषु चेश्वरः" (अध्यात्मे) इत्यादि ॥ ५ ॥

योगिनो यजन्त्यद्धेति विशेषणात्केचि दन्यथा यजन्तीति ध्वनित मर्थ माह- त्रय्येति। त्रय्या विद्यया वेदविद्यया कर्मप्रधानप्रकाशिकया वैतानिकाः याज्ञिकाः यज्ञकर्मशीला इत्यर्थः। "अस्त्री वितान मुल्लोचे विस्ताराध्वरयोः क्षणे। त्रिषु

शून्ये च मन्दे च विषाण्युक्षेभशृङ्गिषु" (वैज.को. 7-5-76,77) इति। उक्तविशेषणैः अयमर्थो विज्ञायत इत्याह वितनैरिति। विस्तृतैः "इन्द्रं यजाऽग्निं यज" इत्यादिबहुदैवत्यकर्मणामेकविषयत्वं कथं सङ्गच्छत इत्यत्राऽऽह — नानारूपेति। नानाविधानि शुक्लादिरूपाणि सौन्दर्याणि वा स्वभावा वा यशांसि वा येषां ते नानारूपाः ते चाऽमराः देवाः नानारूपामराः तेषा माख्यया विशिष्टं, विष्णु मिति शेषः। "सर्वदेवेष्वपि हरिः सर्वदेवनियामकः" (अध्यात्मे) इत्यादिवचनबाहुल्यात् उपगन्तव्यम्। विष्णोः सर्वनामत्वम् अमरेति विशेषणेन वेदस्य वाच्याभावेनाऽप्रामाण्यं स्यादिति शङ्का निरस्ता। इदञ्च विष्णावेव मुख्यमिति॥ ६॥

---

1. Ma°म्य

एके[1] त्वाऽखिलकर्माणि सन्न्यस्योपशमं गताः।
ज्ञानिनो ज्ञानयज्ञेन यजन्ति[2] ज्ञानविग्रहम्॥ ७॥

अन्ये च[3] संस्कृतात्मानो विधिना[4] विहितेन ते[5]।
यजन्ति त्वन्मया स्त्वां वै बहुमूर्त्येकमूर्तिकम्[6]॥ ८॥

त्वामेवाऽन्ये शिवोक्तेन मार्गेण शिवरूपिणम्।
बह्वाचार्यविभेदेन भगवन् समुपासते॥ ९॥

सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्[7]।
ये[8] नानादेवताभक्ता यद्यप्यन्यधियः प्रभो॥ १०॥

यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिता[9] विभो।
विशन्ति सर्वतस्सिन्धुं तद्वत्त्वां गतयोऽन्ततः॥ ११॥

---

1. K केचित्त्वा°; M,Ma एके त्व° 2. W °न्ते 3. M,Ma तु 4. G,J,K,W °नाऽभि° 5. K,W च; M,Ma वै 6. M,Ma,W °र्त्यै 7. M,Ma °ह्रे° 8. G,J येऽप्यन्यदे° 9. G,J,K,W ताः प्रभो

**श्रीध०** **एक** इति। ज्ञानयज्ञेन समाधिना॥ ७॥

साङ्ख्ययोगत्रयीमार्गा उक्ताः। वैष्णवशैवमार्गावाह द्वयेन- **अन्ये चेति**। संस्कृतात्मानः वैष्णवशैवदीक्षया दीक्षितास्सन्तः, ते त्वया अभिहितेन पाञ्चरात्रादिविधिना त्वन्मयाः त्वन्मयत्वेनाऽऽत्मानं चिन्तयन्तः, त्वदेकप्रधाना इति वा। वासुदेवसङ्कर्षण प्रद्युम्नानिरुद्धभेदेन बहुरूपं[1] नारायणरूपेणैकमूर्तिकञ्च त्वामेव यजन्ति॥ ८॥

**त्वामिति**। बह्वाचार्यविभेदेनेति नानाभेदशैवपाशुपतादिमार्गेण॥ ९॥

येऽपि क्षुद्रदेवताभक्ताः तेऽपि त्वामेव यजन्तीत्याह **सर्व एवेति**। हे सर्वदेवमय! नन्वेते परस्परदेवताधिक्षेप कलहव्याकुलचित्ताः कथमेक मेव यजन्तीत्युच्यते, तत्राऽऽह — **यद्यप्यन्यधिय इति**। बुद्धिमात्रभेदो न वस्तुभेद इत्यर्थः॥ १०॥

तस्मात्सर्वे मार्गाः त्वय्येव पर्यवस्यन्तीति सदृष्टान्तमाह — **यथेति**। अद्रेस्सकाशात् सर्वतः प्रभवन्ति याः नद्यः ताः पुनः पर्जन्येनाऽऽपूरिता बहुस्रोतसस्सत्यः सर्वतस्सिन्धुमेव विशन्ति यथा, तद्वत् एता गतयः मार्गाः अन्ततः त्वामेव विशन्तीति ॥ ११ ॥

---

1. J,Va मूर्ति

**वीर०** सिंहावलोकनन्यायेन पुनस्साक्षात् ज्ञानयोगविशेषाराध्यमाह — **केचित्त्विति**। केचित् त्वा इति च्छेदः। त्वा त्वां यजन्तीति सम्बन्धः। केचित्तु ज्ञानिनः भगवच्छेषतैकरसात्मयाथात्म्यज्ञानिनः, भगवच्छेषतैकरसोऽहं तदायत्तस्वरूप स्थितिप्रवृत्तिश्च। भगवांस्त्वसङ्ख्येयैः कल्याणगुणैः परतर इत्येवं ज्ञानवन्त इत्यर्थः। अखिलकर्माणि उक्तविधस्वस्वरूपविरुद्धान्यहङ्कार[1] [2] ममकारगर्भाणि काम्यानि कर्माणि वा[3], सन्न्यस्य त्यक्त्वा। यद्वा "मयि सर्वाणि कर्माणि" (भ गी. 3-30) इत्युक्तरीत्या क्रियमाणानां नित्यनैमित्तिकादीनां फलसाधनताकारपरित्यागपूर्वकं भगवदाराधनरूपतामनुसन्धायेत्यर्थः। इदमेव हि भगवति कर्मणां [4]यत्तत्कैङ्कर्यरूपत्वानुसन्धानमिति। उपशमं शब्दादिविषयेषु भोग्यताबुद्धिराहित्यं, गताः प्राप्ताः ज्ञानयज्ञेन प्राप्यं प्रापकञ्चाऽन्यदपि यन्मनोरथविषयभूतं तत्सर्वं परमपुरुष एवेत्येवंविधज्ञानयोगेन ज्ञानस्वरूपं त्वां यजन्ति। यद्वा ज्ञानविग्रहं एवंविधज्ञानेन यजतामनिष्टपरिहारेष्टप्रापणोपयुक्तज्ञानाश्रयं त्वां यजन्तीत्यर्थः ॥ ७ ॥

अथाऽद्धारककर्माराध्यत्वमाह — **अन्ये चेति**। ते त्वया अभिहितेन विधिना पञ्चरात्रात्मकेन त्वदुक्त श्रीमत्पञ्चरात्रोक्तप्रकारेणेत्यर्थः। संस्कृतात्मानः तापादिभिः पञ्चभिस्संस्कारैः संस्कृता आत्मनः देहा येषां तथाभूताः त्वन्मयास्त्वज्ज्ञानप्रचुराः, अन्ये भगवच्छास्त्रनिष्ठाः साक्षत्त्वामेव व्यूहविभवरूपेण बहुमूर्तिकं पररूपेणैकमूर्तिकञ्च यजन्ति पाञ्चकालिकै धर्मैः आराधयन्ति ॥ ८ ॥

अथ "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम्" (भ.गी. 9-23) इत्युक्तरीत्या तत्तद्देवतामात्रपर्यवसितबुद्धिमत्कृतयजनस्य तत्तद्देवताशरीरकतदन्तरात्मभूतपरमपुरुषाराधनत्वेण[5-] कृततदाराधनत्तां[-5] वक्तुं तावत् प्रदर्शनार्थमाह — **त्वामेवाऽन्ये इति**। हे भगवन्, बहूनामाचार्याणां कापालिककालामुखशैवपाशुपतादिरूपाणां भेद[6] आचारभेदो यस्मिन् तेन शिवोपदिष्टमार्गेण शैवाद्यागमोक्तप्रकारेण त्वामेव शिवरूपिणमुपासते। उपासकानां तद्बुद्ध्यभावोऽप्युपासना तत्रैव पर्यवस्यत्येव। किन्तु तदुपासनमविधिपूर्वकम्, अत एव अन्तवत्फलसाधनमिति भावः ॥ ९ ॥

कथ मतद्विषयकोपासनानां तत्पर्यवसानमिति, अतस्सदृष्टान्तं तदुपपादयति — **सर्व एवेति** द्वाभ्याम्। हे प्रभो! [7]ये नानादेवताभक्ता स्ते यद्यप्यन्यधियः परमात्मेतरविषयोपासनात्मकधीमन्तस्तथाऽपि ते सर्वे त्वामेव यजन्ते। तत्र हेतुं वदन्विंशिनष्टि सर्वदेवमयेश्वरम् "स आत्मा, अङ्गान्यन्या देवताः" (तैत्ति.उ. 1-5-1) इत्युक्तरीत्या सर्वदेवताशरीरकत्वेन

तत्प्रचुरत्वात् सर्वदेवमयः, स चाऽऽसौ, तेषामीश्वरोऽन्तःप्रविश्य नियन्ता च। तं सर्वदेवानां त्वदायत्तसत्तादिमत्वेन त्वदपृथक्सिद्धविशेषणत्वेन त्वत्तोऽप्यतिरेकमावात् तद्विषयकोपासनाः त्वद्विषयका एवेति भावः ॥ १० ॥

त्वय्येव पर्यवस्यन्तीत्यत्र दृष्टान्तमाह यथेति। अद्रेस्सकाशात्प्रभवन्त्युत्पद्यन्त इति तथा। नद्यः पर्जन्येनाऽऽपूरिताः बहुस्रोतसस्सत्यः सर्वतस्सिन्धुं समुद्रमेव विशन्ति। तद्वत् गतयो बुद्धयोऽपि अन्ततः पर्यवसानतः त्वामेव विशेष्यभूतं विशन्ति विषयीकुर्वन्ति ॥ ११ ॥

---

1. K adds तदुक्त ° 2. K omits स्व 3. K omits वा 4. K यत्कै° 5- -5. W omits 6. K °ष्ठेन मा° 7. W omits ये

विज० प्रवृत्तिमार्गविहितोपासनाप्रकारमुक्त्वा अधुना निवृत्तिमार्गविषयोपास्तिविधानमाह — एक इति। तुशब्देन एषां मुख्यत्वं दर्शयति। उपशमं भगवन्निष्ठाम् ॥ ७ ॥

वैदिकमतमुक्त्वा तान्त्रिकमतमाह — अन्ये त्विति। अन्ये पाञ्चरात्रिकाः। तुशब्देन तत्राऽपि बाहुविध्यमस्तीति सूचयति। संस्कृतात्मानः शिक्षितबुद्धयः सम्प्रदायागतप्रज्ञा वा, शुद्धदेहा वा विहितेन विधिना पञ्चधा कथितेन कालेन वा 'पञ्चकालपरायणैः' इति वचनात् 'विधी तु दैवकालौ चेति' च। त्वमेव मयः सर्वोत्तम इति बुद्धि र्येषां ते तथा बहुमूर्त्या वै बहुरूपेण च भक्तानुग्रहार्थं बहुत्वग्रहणम्। निजमेकमेवेत्याह एकमूर्तिकमिति, व्यष्ट्या समष्ट्या च त्वामेव यजन्तीत्यर्थः ॥ ८ ॥

ननु शैवागमेषु शिवस्य यष्टव्यत्वेनोक्तत्वात्सर्वे त्वामेव यजन्तीति कथं युज्यते इति तत्राऽऽह त्वामेवेति। शिवरूपिणं पुरुषार्थमूर्तिं शिवे रुद्रे रूपं नियामकमस्यास्तीति। शिवान्तर्यामिणमित्यर्थः। दधीच्यादिब्रह्माचार्यविभेदेन शैवपाशुपताद्युपदेष्टृभेदेन वा ॥ ९ ॥

उपसंहरति सर्व एवेति। सर्वेषां देवानां ईश्वराः इन्द्रादयः तेषा मीश्वरः सर्वदेवमहेश्वरः सर्व इति क इति तत्राऽऽह- य इति। ये इन्द्रादिनानादेवतानां भक्ताः। अत एव तद्भक्तिपूर्त्यर्थमन्यधियः स्वातन्त्र्यबुद्धयो यद्यपि, तथाऽपि तव सर्वस्वामित्वं जानन्तो देवाः तद्दत्तबलिं त्वयि समर्प्य तत्फलार्थं स्वयं स्वीकुर्वन्ति। अन्यथा पश्यतोहरत्वं तेषां स्यात्। अतस्तन्न कुर्वन्ति। किन्तु तत्फलमन्तवदेव तथा श्रुतत्वादिति भावः। यद्वा, विष्णोरन्या विलक्षणा धीर्येषां ते तथा यद्यपि तथाऽपि पूर्वादृष्टवशान्नानादेवताभक्ताः ये ते त्वत्सर्वोत्तमत्वज्ञानाभावात् तेषामित्यतः प्रभो! इत्युक्तम् ॥ १० ॥

एतदेव विशदयति यथेति। अद्रिभ्यः प्रभवः उत्पत्ति र्यासां ताः अद्रिप्रभवाः। पर्जन्येन गर्जन्मेघेन आपूरिताः सिन्धुं समुद्रं त्वां गतयः पूजामार्गाः पुरुषार्थसाधनानि शास्त्राणि वा येऽन्ततः पूजावसाने ब्रह्मार्पणबुद्ध्याऽवसिता इत्यर्थः ॥ ११ ॥

**सत्त्वं रजस्तम इति भवतः[1] प्रकृते र्गुणाः।**
**तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥ १२ ॥**

तुभ्यं नमस्ते[2]ऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियाञ्च साक्षिणे।
गुणप्रवाहो[3]ऽय मविद्ययाऽसकृत्[4] प्रवर्त्तते देवनृतिर्यगात्मसु ॥ १३ ॥

अग्निर्मुखन्तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभि रथो दिशः श्रुतिः।
द्यौः कं सुरेन्द्रास्तव बाहवो[5]ऽर्णवाः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥ १४ ॥

रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः।
निमेषणं रात्र्यहनी प्रजापति र्मेढ्रस्तु[6] वृष्टि स्तव वीर्य मिष्यते ॥ १५ ॥

त्वय्यव्ययात्मन्पुरुषे प्रकल्पिता लोकास्सपाला बहुजीवसङ्कुलाः।
यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १६ ॥

---

1. M,Ma °न्ति 2 P,V °स्तेष्ववि° 3. K,T,W °हो यदवि° 4. G,J कृतः 5. M,Ma °वः 6 M,Ma मेढ्रन्तु

**श्रीध०** अत्र हेतुमाह — **सत्त्वमिति**। भवतश्शक्तिर्या प्रकृतिः तस्यास्सत्त्वादयो गुणाः अतः प्राकृताः प्रकृतिकार्योपाधयः ब्रह्मपर्यन्ताः स्थावरादयो जीवाः स्वोपाधिद्वारा तेषु गुणेषु प्रोताः प्रविष्टाः ते च प्रकृतौ। सा च त्वयीति। अतः क्रमेणोपाधिलयात्सर्वेऽपि त्वामेव प्रविशन्तीति[1]। यद्वा, भवतः प्रकृते र्गुणेषु प्रोता ब्रह्मादयो भवद्व्यतिरिक्ता न सन्ति। अत स्त्वमेव सर्वदेवमय इति ॥ १२ ॥

ननु भवतः प्रकृते रिति वदन् ममापि[2] प्रकृतिसम्बन्धं ब्रवीषि। ततश्च तेषां मम च को विशेषः स्यादित्याशङ्क्य विशेषमाह **तुभ्यमिति**। अविषक्तदृष्टये अविलिप्तबुद्धये। कुतः? सर्वात्मने स्वव्यतिरिक्ताभावादविषक्तदृष्टि स्त्वमित्यर्थः। किञ्च सर्वधियां साक्षिणे सर्वबुद्धिसाक्षित्वान्न क्वापि बुद्धिलोप इत्यर्थः। इतरे तु संसरन्तीत्याह गुणप्रवाह इति। देवनृतिर्यञ्च आत्मनो येषां तेषु देवादिशरीराभिमानिष्वित्यर्थः। त्वदविद्यया कृतोऽयं गुणप्रवाहः प्रवर्तते। अतो महान्विशेष इत्यर्थः ॥ १३ ॥

सर्वात्मन इत्यनेनोक्तं सगुणं रूपं[3] स्तौति द्वाभ्याम् **अग्निर्मुखमिति**। अग्न्यादीननूद्य ईश्वरावयवता विधीयते योऽयमग्निः स तु तव मुखमित्यादि वचनव्यक्त्या। ईक्षणं चक्षुः श्रुतिः श्रवणेन्द्रियं कं मूर्धा, प्राणश्च बलञ्च तत् ॥ १४ ॥

**रोमाणीति**। अद्रयः परस्य ते अस्थिनखानि ॥ १५ ॥

न केवलमेतावदेव[4]। किन्तु सर्वोप्ययं प्रपञ्चः त्वदवयवभूत एवेति वदन्[6], एवं सत्यपि प्रपञ्चस्य [5-]षड्जन्मादयो[-5] विकारास्त्वयि न[7] प्रसज्यन्ते तस्य त्वयि कल्पितत्वादित्याह — **त्वयीति**। अव्ययात्मन् अव्ययात्मनि, पुरुषे पूर्णे लोकादयः सञ्जिहते प्रचलन्ति। हे अव्ययात्मन्निति वा। कथम्भूते त्वयि मनोमये मनःप्रधाने मनोवृत्तिव्यङ्ग्ये। "दृश्यते त्वग्र्यया बुद्ध्या"[8] (कठ.उ. 3-12) "मनसैवानु द्रष्टव्यम्" (बृह.उ. 4-4-19) इत्यादि श्रुतेः। जले यथा[9] जलौकसः सूक्ष्मप्राण्यण्डराशयः, यथा वा उदुम्बरान्तःकेसरेषु मशकाः परस्परवार्तानभिज्ञाः, एव मनन्तानि ब्रह्माण्डानि त्वयि चरन्तीत्यर्थः ॥ १६ ॥

---

1. J,Va omit प्र 2. J,Va omit °वि° 3. J,Va omit रूपं 4. J,Va omit एव 5- -5. P,V omit 6. J,Va omit अव्ययात्मन् 7 J,Va °र° 8. J,Va च 9. J,Va add सं°

**वीर०** गतय इत्यनेन ज्ञानमात्रस्य विशेषणभूतप्रपञ्चविषयकस्य विशेष्यभूतपरमात्मपर्यन्तत्वं सूचितम्। तदेव व्यञ्जयितुं सर्वस्य चिदचिदात्मकप्रपञ्चस्य तद्विशेषणता माह — **सत्त्वमिति।** भवतः प्रकृतेः त्वच्छरीरभूतप्रधानस्येत्यर्थः। "यस्याऽव्यक्तं शरीरम्" (सुबा.उ. 7-1) इति श्रुतेः। ये सत्त्वादयो गुणाः तेष्वेव आब्रह्मस्थावरान्ताः प्राकृताः प्रकृतिपरिणामात्मकाः तन्तुषु पटवत्प्रोताः प्रविष्टाः ब्रह्मादिक्षेत्रज्ञाधिष्ठिता देहाः त्वदपृथक्सिद्धविशेषणभूतगुणमयप्रकृतिकार्यतया त्वदायत्तसत्तादिमन्त-स्त्वद्विशेषणभूता इत्यर्थः ॥ १२ ॥

एवमचेतनप्रपञ्चस्य त्वद्विशेषणत्वमुक्तम्। अथ ब्रह्मादिक्षेत्रज्ञानां तच्छरीरत्वेन तद्विशेषणत्वं, तदायत्तबन्धमोक्षादिमत्त्वं, तस्य बन्धापादनाद्युपयुक्तसर्वज्ञत्वं च वदन्नमस्करोति — **तुभ्यमिति।** सर्वात्मने सर्वेषां ब्रह्मादिक्षेत्रज्ञानां आत्मने। अनेन क्षेत्रज्ञानां तच्छरीरत्वेन तद्विशेषणत्वं फलितम्। यदि सर्वात्मा तर्हि जीववत्किं देहात्माभिमानी? नेत्याह — अविषक्तदृष्टये अविषक्ता देहादिष्वनभिनिविष्टा दृष्टिः यस्य तस्मै देहाभिमानरहितायेत्यर्थः। तत्र हेतुः — सर्वधियां साक्षिणे सर्वासां बुद्धीनां साक्षाद्द्रष्ट्रे। सर्वबुद्धिसाक्षित्वात् न क्वापि देहात्माद्यभिमानलेश इति भावः। किञ्च यदविद्यया यदीयया प्रकृत्या हेतुभूतया, देवनृतिर्यक्षु आत्मनो देहा येषां तेषु क्षेत्रज्ञेषु अयं परिदृश्यमानो गुणप्रवाहः गुणैः सत्त्वादिभिः निमित्तभूतैः प्रवहते प्राप्नोतीति तथा संसारः। असकृत् बहुकृत्वः प्रवर्तते तस्मै तुभ्यं ते नमः अस्तु। यदविद्ययेत्यनेन "दैवी ह्येषा गुणमयी मम" (भ.गी. 7-14) इत्यादिवचनार्थोऽभिप्रेतः ॥ १३ ॥

उक्तं चिदचिच्छरीरकत्वमेव प्रपञ्चयितुं विश्वरूपं स्तौति — **अग्निरित्यादिना।** अत्र अग्न्याद्यनुवादेन ईश्वरमुखाद्यवयवता विधीयते। योऽयमग्निस्स तव मुखमित्यादि। अवनिस्तवाङ्घ्रिः। अवनिशब्दः पातालप्रभृतिमहीतलपर्यन्तसङ्ग्राहकः। अङ्घ्रिशब्दस्तु पादमूलप्रभृतिजघनपर्यन्तावयवसङ्ग्राहकः, नाभिशब्दस्तु तत्प्रभृतीनामुरोग्रीवावदन ललाटानाम्। दिशस्तव श्रुतिश्श्रोत्रं, द्यौ स्सत्यलोकः तव कं शिरः, सुरेशा इन्द्रादयः तव बाहवः, अर्णवा स्समुद्राः तव कुक्षिः, मरुद्वायुः तव प्राणश्च बलञ्च तयो स्समाहारः तत्कल्पितं रचितं, त्वयेति शेषः। यद्वा उपासकैरिति शेषः। कल्पितं ध्यातमित्यर्थः॥ १४॥

वृक्षा ओषधयश्च तव रोमाणि। मेघास्तु शिरोरुहाः केशाः, अद्रयो गिरयः परस्य ते तव अस्थीनि नखानि च। रात्रिश्च अहश्च, ते तव निमेषणं, प्रजापतिः मेढ्रः, वृष्टिस्तव वीर्यम् इष्यते, उपासनाया मिति शेषः ॥ १५ ॥

न केवलमेतावदेव, किन्तु सर्वोऽप्ययं प्रपञ्चः त्वदवयवभूत एवेत्याह – **त्वयीति।** हे अव्ययात्मन्! अविकृतस्वरूप! विश्वशरीरकत्वेऽपि तद्गतविकारैः अस्पृष्टेति सम्बोधनाभिप्रायः। बहुभिर्जीवैः सङ्कुलाः व्याप्ताः पालकै स्सहिताः, सर्वे लोकाः मनोमये विशुद्धमनोग्राह्ये परमपुरुषे त्वयि कल्पिताः सञ्जिहते चरन्ति। जले यथा जलौकसः सूक्ष्मप्राणिराशयः, यथा वा उदुम्बरान्तःकेसरेषु मशकाः परस्परवार्ताऽनभिज्ञाः,एवमनन्तानि ब्रह्माण्डानि त्वयि सञ्जिहते चरन्तीत्यर्थः ॥ १६ ॥

**विज०** ननु पूजादिकं सर्वं भगवद्विषयञ्चेत् मतभेदः **कथमुत्पद्यते** इत्याशङ्क्य सत्त्वादिगुणोपरक्तत्वा तदाकृष्टबुद्धित्वेन तद्भेद इत्याशयेनाऽऽह **सत्त्वमिति।** प्राकृताः प्रकृतिनिमित्ताः तेषु सत्त्वादिषु प्रोताः सम्यक् स्यूताः संवलिता इत्यर्थः। 'कार्यते ह्यवशः' इत्यादि हिशब्देन गृहीतम् ॥ १२ ॥

ननु प्राकृतपदार्थेष्ववस्थितस्य हरेस्ततो विशिष्टत्वमहिमासम्भवात् किं विशेषेण प्रणतिः प्रार्थ्यते इति तत्राऽऽह- **तुभ्यमिति।** तुभ्यं नमोऽस्तु यस्सात्त्विकादिनानाजनकृतपूजाविषयत्वेनोक्तस्तस्मै ते भूयोऽपि नमोऽस्त्वित्यन्वादिश्यते। प्रतिविशेषणमनुसन्धेयमिति द्योतनाय वा। अविषक्तदृष्टये अप्रतिहतज्ञानाय एकैकस्यैकैकप्रतिहते ईष्टत्वात् अस्य **कथमप्रतिहतज्ञानत्व** मित्याशङ्क्य सर्वस्वामित्वेन स्वातन्त्र्यप्रतीते र्ज्ञानप्रतिबन्धकाभावो युक्त इति भावेनाऽऽह सर्वात्मन इति। सर्वेषां तत्तच्छक्तिमाकृष्य वशीकृत्य तिष्ठत इत्यर्थः। तदेव विशिनष्टि सर्वेति। "स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः" इत्यादेः। यद्वा, अनेनासङ्गत्वं स्पष्टयत इति। अस्य सर्वस्वातन्त्र्य मस्तीति कथमवगन्तुं शक्यमित्याशङ्क्य संसारस्य हरीच्छाधीनत्वज्ञानादित्याह- गुणप्रवाह इति। अस्य हरेर्विद्ययेच्छया — "अ निषेधे पुमान्विष्णावविचिन्त्रे स्मरे पुमान्" इति च। देवत्वोपाधिविशिष्ट आत्मनीति प्रत्येकमन्वेतव्यम् ॥ १३ ॥

नानादेवताभक्तैः क्रियमाणं यजनादिकं त्वद्विषयं कथं स्यादित्याशङ्क्य तेषां त्वदंशोद्भूतत्वेन त्वत्सम्बन्धित्वादिति भावेन तेषां त्वदङ्गजन्यत्वमाह — **अग्निर्मुखमिति।** मुखाज्जातोऽग्नि स्तव मुखमित्युच्यते — "मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायु रजायत" (पु.सू.6) इत्यादावितीदं त्वयैव च प्रकल्पितमहं पश्यामीत्येवं योजनीयम्। "विष्णोरङ्गसमुद्भूताः, विष्णोरङ्गानि देवताः" (अध्यात्मे) इत्यादेः। ईक्षणं नेत्रम्, कं शिरः। "पुंसि कः कं शिरोऽम्बुनोः" (अम.को. 3-160) इत्यमरः। सुरेन्द्राः लोकपालाः अर्णवं, वदन्तीति शेषः ॥ १४ ॥

निमेषणं निमेषोन्मेषौ। निमिषो मुकुलीभावो रात्रिः, उत्फुल्लता अहरुन्मेषः। प्रजापति र्दक्षः। वीर्यं रेतः ॥ १५॥

सन्निहिते सञ्जायन्ते। जलमेवाश्रित्य तिष्ठन्तीति जलौकसः मत्स्यादयः। उदुम्बरे जन्तुफले मशकाः पिपीलिका विशेषाः, मनोमये ज्ञानस्वरूपे ॥ १६ ॥

**यानि यानीह रूपाणि क्रीडार्थं[1] त्वं बिभर्षि हि।**
**तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १७ ॥**

**नमः कारणमत्स्याय प्रलयाब्धिचराय च।**
**हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १८ ॥**

**अकूपाराय बृहते[2] नमो मन्दरधारिणे।**
**क्षित्युद्धारविहाराय नमस्सूकरमूर्तये ॥ १९ ॥**

**नमस्तेऽद्भुतसिंहाय साधुलोकभयापह।**
**वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ २० ॥**

**नमो भृगूणां पतये [3]दृप्तक्षत्त्रवनच्छिदे।**
**नमस्ते रघुवर्याय रावणान्तकराय च ॥ २१ ॥**

---

1. G,J,M,Ma °ङ्नार्थं वि° 2. P,V म° 3. P,V दुष्ट°

श्रीध० [1]स्यादेवम्भूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथामृतमेव सन्तस्सेवन्त इत्याह — **यानीति**। आमृष्टा परिमार्जिता शुक् येषां ते ॥ १७ ॥

अतः स्वयमप्यवतारा न्नमस्यति — **नम** इति। हयशीर्ष्णे हयग्रीवाय। मधुकैटभयोर्मृत्यवे [2]निहन्त्रे ॥ १८ ॥

**अकूपारायेति**। अकूपाराय [3]कूर्माकाराय। क्षित्युद्धारो विहारो यस्य तस्मै ॥ १९,२० ॥

**नम** इति। भृगूणां पतये परशुरामाय ॥ २१ ॥

---

1. J,Va add तस्मादेव 2. J,Va omit नि 3. J,Va कूर्माय

**वीर०** तस्मादेवम्भूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथामृतमेव सेवन्त इत्याह — **यानीति**। त्वं क्रीडार्थं यानि यानि रूपाणि बिभर्षि तै रनुसंहितैः आमृष्टाः परिमार्जिताः शुचः आध्यात्मिकादितापाः येषां ते। लोका रसज्ञा जनाः मुदा तव यशो गायन्ति ॥ १७ ॥

कानि तानि रूपाणि यै रामृष्टशुच इत्यत्र कतिचित्तानि दर्शयन्नमस्करोति **नम** इत्यादिना। कारणमत्स्याय कारण पदेनाऽवतार प्रयोजनं सूच्यते। एवं मधुकैटभमृत्यवे इत्यनेन। एवमुत्तरत्राऽपि द्रष्टव्यम् ॥ १८ ॥

अकूपाराय कूर्माय क्षित्युद्धार एव विहारो यस्य तस्मा इति प्रयोजनमुच्यते ॥ १९ ॥

हे साधुलोकभयापह! इति सम्बोधनं प्रयोजन कथनाभिप्रायकम्। क्रान्तं त्रिभुवनं येन तस्मा इत्यवतारप्रयोजन मुच्यते ॥ २० ॥

दृप्तं गर्वितं प्रभूतं वा क्षत्त्रकुलमेव वनं तस्य छेत्त्रे इति प्रयोजनम्, [1-]दुष्टक्षेत्र, इति च पाठः[-1]। भृगूणां पतये परशुरामाय। रावणस्यान्तं नाशं कृतवानिति तथा, तस्मै इति प्रयोजनम् ॥ २१ ॥

---

1- -1. T,W omit.

**विज०** पुरुषसूक्तोक्तभगवन्मूर्तिविशेषं स्तुत्वा मत्स्याद्यवतारान् स्तोतुमुपक्रमते — **यानीति**। **आमृष्टशुचः** मार्जितशोकाः परिहृतदुःखाः। पूर्वं विद्यमानान्येव रूपाणि बिभर्षि, नाऽविद्यमानानीति, इममर्थं हिशब्दो वक्ति; "भृता मेव बिभर्तीशो ह्यवतार तनुं सदा" (तत्त्वनिर्णये) इत्यादेश्च ॥ १७ ॥

कारणमत्स्याय मन्वादिरक्षणं निमित्तीकृत्य मत्स्यवेषधारिणे इत्यर्थः। असुरमदं स्यति नाशयतीति मत्स्यः। 'षो अन्तकर्मणि' इति धातुः। मत्स्यानामुदकमेव परं जीवनमिति सूचनाय, प्रलयाब्धिचरणमन्यस्य न शक्यमिति ईश्वरत्वद्योतनाय वा। चशब्दो वक्ष्यमाणसमुच्चये वर्तते। मधुकैटभमृत्यवे केशवाय ॥ १८ ॥

अकूपाराय कूर्मरूपाय, "कूर्मेशोऽब्धावकूपारः" (वैज.को. 8-1-15) इति। बृहते नित्यबृद्धाय। किं कृत्यमित्यत उक्तं मन्दरेति ॥ १९ ॥

साधुलोकभयापह! देव जनस्य बल्यादेः प्राप्तभयमपहन्तीति। क्रान्तत्रिभुवनाय त्रिविक्रमाय ॥ २०,२१ ॥

**नमस्ते वासुदेवाय नमस्सङ्कर्षणाय च।**
**प्रद्युम्नायाऽनिरुद्धाय सात्त्वतां पतये नमः ॥ २२ ॥**

**नमश्शुद्धाय बुद्धाय दैत्यदानवमोहिने।**
**म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २३ ॥**

**भगवन् जीवलोको[1]ऽयं मोहितस्तव मायया।**
**अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २४ ॥**

**अहञ्चात्मात्मजागारदारार्थस्वजनादिषु।**
**भ्रमामि स्वप्नकल्पेषु मूढस्सत्यधिया[2] विभो ॥ २५ ॥**

**अनित्यानात्मदुःखेषु विपर्या[3]समतिर्ह्यहम्।**
**द्वन्द्वारामस्तमोविष्टो न जाने त्वा[4]ऽऽत्मनः प्रियम् ॥ २६ ॥**

---

1. P,V सर्व 2. M,Ma °श्शुद्ध° 3. G,J,M,Ma °र्यय° 4. M,Ma त्वां जगत्पते।

**श्रीध०** ([1-]सङ्कर्षणं रामं?[-1]) चतुर्व्यूहरूपेण प्रणमति — **नमस्ते वासुदेवायेति** ॥ २२,२३ ॥

एवं स्तुत्वा बन्धमोक्षं प्रार्थयितुमाह — **भगवन्निति**। असति देहादौ ग्राह आग्रहो यस्य सः। असन् ग्राहो यस्येति वा ॥ २४ ॥

न केवलं अयं लोकः अहमपि तथैवेत्याह-**अहञ्चेति** ॥ २५ ॥

मूढत्वमेव प्रकटयति — **अनित्येति**। विपर्यस्तमतिः[2] अनित्ये कर्मफले नित्यमिति। अनात्मनि देहादौ[3] आत्मेति[5], दुःखरूपे गृहादौ सुखमिति विपरीतमतिरित्यर्थः द्वन्द्वे सुखदुःखादिषु [4-]आरामः क्रीडा यस्य सः[-4]। ननु दुःखे कथं रति स्तत्राऽऽह — **तमोविष्टः** तमसा व्याप्तः, अत आत्मनः प्रियं प्रेमास्पदं त्वा[6] त्वां न जाने इत्यर्थः ॥ २६ ॥

---

1- -1. J,Va omit 2. G,J °र्यस्तमतिरिति 3. J,Va देहे 4- -4. J,Va आरमति क्रीडतीति तथा सः 5. J,Va कुतो 6. P,V,Va omit त्वा

**वीर०** रामकृष्णौ विभवौ वासुदेवसङ्कर्षणौ व्यूहौ च तन्त्रेणाभिप्रेत्य नमस्करोति — **नमस्ते वासुदेवायेत्यर्धेन।** प्रद्युम्नानिरुद्धौ व्यूहौ नमस्करोति प्रद्युम्नायानिरुद्धायेति। सर्वेषां प्रयोजनाभिप्रायेण विशिनष्टि सात्त्वतां पतय इति। साधुपरित्रात्रे इत्यर्थः। यद्वा, वासुदेवायेत्यादिभिश्चतुर्भि र्व्यूहचतुष्टयं नमस्क्रियते। सात्त्वतां पतये इत्यनेन रामकृष्णनमस्कृतिः, तेनैव प्रयोजनञ्चाऽभिप्रेतम् ॥ २२ ॥

वेदाप्रामाण्याद्युपदेष्टृत्वेऽपि शुद्धाय विशुद्धकर्मणे, तस्य दुष्कृन्निरसनार्थत्वात् इत्यभिप्रेत्य प्रयोजनञ्च वदन् विशिनष्टि- दैत्यदानवमोहिने इति। दैत्यान् दानवांश्च मोहयतीति तथा तस्मै, म्लेच्छप्रायं म्लेच्छतुल्यं, यत् क्षत्रकुलं तस्य हन्त्रे इति प्रयोजनमुक्तम् ॥ २३ ॥

एवं स्तुत्वा बन्धमोक्षं प्रार्थयन् (प्रार्थयमान) आह — **भगवन्निति।** हे भगवन्! सर्वो जनः तव मायया मोहितः, अत एव अनात्मन्यात्माभिमानरूपात्, अस्वस्मिन् स्वत्वाभिमानरूपाच्च, असतो दुष्टात् अनर्थकरात् ग्राहात् भ्रमात्मकज्ञानात् कर्मवर्त्मसु कर्ममार्गेषु शब्दादिविषयसाधनभूतेषु भ्राम्यते। यद्वा, अहं ममेति असति प्रकृतिपरिणामरूपदेहतदनुबन्ध्यादौ ग्राहः अभिनिवेशो यस्य तथा भूत इत्यर्थः ॥ २४ ॥

भ्राम्यत्वेवं लोकः तव किम्? तत्राऽऽह **अहञ्चेति।** अहमित्यादिभिश्चतुर्भिस्तावत् आत्मनः कार्पण्य मावेद्य, सोऽहमित्येकेन प्रपद्य शरण्यगुणाविष्कारपूर्वकं गोप्ता भवेति प्रार्थयते — यथा सर्वलोकस्तथा तदन्तर्गतोऽहमपि गेहापत्यादिषु स्वप्नपदार्थतुल्येषु, अनित्येष्वित्यर्थः। सत्यधिया नित्यबुद्ध्या भ्रमामि, अतोऽहं मूढः ॥ २५ ॥

मूढत्वमेवाऽऽविष्करोति — **अनित्येति।** अहमनित्यानात्मदुःखेषु विपर्यस्ता मति र्यस्य सः। अनित्येषु वस्तुषु नित्यमतिमान्, अनात्मनि देहे आत्माभिमानी अन्ततो दुःखात्मकेषु शब्दादिविषयेषु सुखाभिमानी चेत्यर्थः, द्वन्द्वेषु सुखदुःखादिषु आरमते क्रीडतीति तथा सः वैषयिकसुखानुबन्धितया प्राप्तं दुःखमपि सुखवन्मन्यमान इत्यभिप्रायः। तत्र हेतुः तमसा गुणेन व्याप्तः आत्मनः प्रियं न जाने निरतिशयनित्यनिरुपाधिकप्रीतिविषयं त्वां न जानामीत्यर्थः ॥ २६ ॥

**विज०** सङ्कर्षणादिषु हरेस्सन्निधानविशेषात्तेषामवतारान्तर्भावं कृत्वा नमनं क्रियते, न तु साक्षादधोक्षजावतारत्वेन। तदुक्तम् — "प्रद्युम्ने चाऽनिरुद्धे च बलदेवे च केशवे" (तत्त्वनिर्णये) इत्यादौ ॥ २२ ॥

बुद्धावतारप्रयोजनं दैत्यमोहनमेव, नाऽन्यदिति द्योतयति दैत्येत्यादिना ॥ २३,२४ ॥

आत्मा देहः। आत्मजः पुत्रः, अर्थो हिरण्यादिः। स्वजनो बन्धुजनादिः। भ्रमामि भ्रान्तिं करोमि ॥२५॥

अनित्यानात्मदुःखेषु विपर्ययमतिः। अनित्येषु नित्यबुद्धिः, अनात्मन्यात्मबुद्धिः ॥ २६ ॥

यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः।
अभ्येति मृगतृष्णां वै [1-]हित्वाऽहं त्वा[-1] पराङ्मुखः ॥ २७ ॥

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः।
रोद्धुं प्रमाथिभिश्[2]चाक्षैर्ह्रियमाणमितस्ततः ॥ २८ ॥

सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं [3]तच्चाऽप्यहं भवदनुग्रह[4]मीश मन्ये।
पुंसो भवेद्यर्हि संसरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥ २९ ॥

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे।
पुरु[5]षेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ ३० ॥

नमस्ते वासुदेवाय सर्वभूतक्षयाय च।
हृषीकेश नमस्[6]तुभ्यं प्रपन्नं पाहि मां [7]प्रभो ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे अक्रूरस्तुतिर्नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

1- -1. G,J तद्वत्त्वाऽहं 2. M,Ma °स्स्वाक्षै ; P,V °स्साक्षैः 3. M,Ma य° 4. G,J,P,V ईश 5. P,V °षु 6. M,Ma °स्तेऽस्तु 7. P,V विभो।

**श्रीध०** तदेव सदृष्टान्तमाह — **यथेति**। तस्माज्जलात् उद्भवन्तीति तदुद्भवानि तृणादीनि, तैः तथा माया-च्छन्नं त्वा त्वामहं हित्वा पराङ्मुखो [1-]देहाद्यभिमुखो[-1] वर्ते इति ॥ २७ ॥

नन्वेवं जानतः कुतो विषयाभिमुखता, तत्राऽऽह — **नोत्सह** इति। कृपणा विषयवासनायुक्ता धीर्यस्य सः। अत एव कामकर्मभ्यां हतं क्षुभितम् इन्द्रियैश्च बलिभिर्विषयसंयुक्तैः इतस्ततः आकृष्यमाणं मनः रोद्धुं नियन्तुं न शक्नोमीति॥ २८॥

**स** इति। तदेवमस्वतन्त्रो यः सोऽहं तवाङ्घ्रिमुपगतः शरणं प्राप्तः। नन्विन्द्रियपरतन्त्रस्यैतदपि कुतस्तत्राऽऽह-तच्चापीति। हे ईश! अन्तर्यामिन्, [2]तवाङ्घ्र्युपगमनञ्चाऽसतां दुरापम्, अतो भवतोऽनुग्रह एवेत्यहं मन्ये, अनुग्रहे सतीति वा। ननु सतां से[3]वयैवं भवति, किं मदनुग्रहेण इत्यत आह — पुंस इति। जीवस्य संसारस्य अपवर्गः समाप्तिर्यदा त्वत्कृपया भवेत्, सम्भावनास्पदं भवति। हे अब्जनाभ, तदा सदुपासना सम्पद्यते। [4-]तया तर्ह्येव[-4] त्वयि मति र्भवेत्। न त्वत्कृपां विना सत्सेवा [5-]न नितरां[-5] त्वन्मतिः; [6]न तेषां मुक्तिरित्यर्थः ॥ २९ ॥

पादयोः पतन् प्रार्थयते द्वयेन — **नम** इति। विज्ञान मेव मात्रा मूर्ति र्यस्य तस्मै, अत एव सर्वप्रत्यय-हेतवे समस्तज्ञानकारणाय। किञ्च [7-]पुरुषेशप्रधानाय[-7] पुरुषस्य ये ईशाः सुख[8]दुःखप्रापकाः कालकर्मस्वभावादयः तेषां प्रधानाय नियन्त्रे। कुतः ब्रह्मणे परिपूर्णाय। किञ्च अनन्तशक्तये अनन्ताः शक्तयो यस्य। यद्वा अनन्ता मायाख्या शक्तिर्यस्य तस्मै। अथ वा प्रधानं प्रकृतिः पुरुषः तत्प्रवर्तकः ईशः कालः एतन्नितयात्मने ब्रह्मणे। वक्ष्यति च भगवान् — "प्रकृतिह[9]र्यस्योपादान माधारः पुरुषः परः सतोऽभिव्यञ्जकः कालो [10]ब्रह्म तन्नितयन्त्वहम् (भाग 11-24-19) इति॥ ३०॥

सर्वप्रत्ययहेतुत्वमभिव्यञ्जयन् स्तौति — **नमस्त** इति। वासुदेवाय चित्ताधिष्ठात्रे। सर्वभूतक्षयाय, क्षय आश्रयः, अहङ्कारश्च प्राणिनामाश्रयः। ततश्चाऽहङ्काराधिष्ठात्रे सङ्कर्षणायेत्यर्थः। हृषीकेशेति बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयो रेकीकृत्य ग्रहणं, शरणागतं मां पाहीति प्रार्थ[11]नम् ॥ ३१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां

चत्वारिंशोऽध्यायः ॥ ४० ॥

---

1- -1. J,Va देहाभिमुखो; V omits देहाद्यभिमुखो 2. J,Va त्वद° 3. J,Va येदं 4- -4. J,Va तथैव 5- -5. J,Va नतरां 6. J,Va नतमां 7- -7. J,Va omit 8. J,Va °खादिप्रा° 9 P,V °र्यदुपा° 10. P,V ब्रह्मा 11. J,Va ना

**वीर०** उक्तमेव सदृष्टान्तमाह — **यथेति**। तस्माज्जलादुद्भवन्तीति तथा, तैस्तृणादिभि श्छन्नं जलं हित्वा, अत एवाऽबुधो मृगतृष्णां जलवदवभासमानां मरीचिकामभ्येति, तथा अहमपि त्वां निरतिशयपुरुषार्थभूतं तत्साधनभूतञ्च त्वां त्यक्त्वा पराङ्मुखः देहाद्यभिमुखो वर्ते इत्यर्थः ॥ २७ ॥

नन्वेवं जानतः कुतस्तव विषयाभिमुख्यम्? तत्राऽऽह **नोत्सहे** इति। कृपणा विषयवासनायुक्ता धीर्यस्य सः, अत एवाऽन्तः कामकर्मभ्यां हतं क्षुभितं इन्द्रियैः प्रमाथिभिर्बलिभि र्विषयसंयुक्तैरितस्ततः आकृष्यमाणं मनो रोद्धुं नियन्तुं नोत्सहे न शक्नोमि ॥ २८ ॥

तदेवं विषयपरवश स्साधनान्तररहितोऽहं तवाङ्घ्युपगतः अङ्घ्रिमुपगतः शरणं प्राप्तः। कथम्भूतमङ्घ्रिम्? असतां दुष्प्रापम्। [1-]सापेक्षस्य अङ्घ्रिशब्दस्याऽपि अत्र समासः आर्ष[-1]ः। नन्विन्द्रियपरवशस्यैतदपि कुतः? तत्राऽऽह तच्चापीति। तदङ्घ्युपगमनं भवदनुग्रहं त्वदनुग्रहमूलकं, मन्ये। अन्तरात्मतयाऽनुजिघृक्षो स्तवाऽनुग्रहकारितं मन्ये इत्यभिप्रायेण ईशेति सम्बोधयति। अनेन शरणवरणे स्वस्वातन्त्र्यनिवृत्ति स्सूचिता। ननु प्रपित्सा सत्सेवामूलिका, न तु मदनुग्रहमूलिका, इत्यत्राऽऽह। यदा पुंसः

संसारिणः संसरणस्य अपवर्गस्समाप्तिः यस्मात्सः, अनुग्रह इति विशेष्याध्याहारः। तथाभूतस्त्वदनुग्रहो भवेत्, तदा हे अब्जनाभ, सतामुपासनया त्वयि मतिस्स्यात्। त्वत्प्रपित्सात्मिका मतिः स्यादित्यर्थः। "ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तदा, विष्णोः कटाक्षः" इत्याद्युक्तरीत्या सत्सङ्गादिप्रणाड्यामपि त्वदनुगृह एव निदानमिति भावः ॥ २९ ॥

विज्ञानमात्राय[2] अनुकूलात्मकज्ञानमात्रस्वरूपाय। मात्रशब्देन स्वरूपे क्वचिदपि जडत्वशङ्काव्युदासः। सर्वप्रत्ययहेतवे सर्वेषां ज्ञानप्रदाय, पुरुषो जीव स्तस्येशः स चाऽसौ प्रधानश्च। प्रधानशब्दः तच्छरीरवाचकः। प्रधानपुरुषेश्वरायेत्यर्थः। यद्वा। पुरुषस्य ईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयः तेषां प्रधानाय नियन्त्रे। यद्वा। ईशः ईश्वरो हरिः प्रधानो यस्य पुरुषश्चासावीशप्रधानश्च तस्मै। हरिप्रधानभूतेन पुरुषेण रूपेण स्वरूपेण चाऽवस्थितायेत्यर्थः। ब्रह्मणे स्वरूपेण गणैश्च निरतिशयबृहते, अनन्ताश्शक्तयः जगत्सर्गाद्युपयुक्तसामर्थ्यविशेषाः यस्य तस्मै ॥ ३० ॥

वासुदेवशब्दार्थमाह — सर्वभूतक्षयाय सर्वभूतनिवासाय हे हृषीकेश! तुभ्यं नमः। अहं त्वच्छेषभूतः मम न, नाऽहं मच्छेषभूतः। एवं प्रपन्नं मां पाहि त्रायस्व। अत्र विज्ञानमात्रायेत्यनेन प्राप्यत्वोपयुक्तं निरतिशयानन्दस्वरूपं विवक्षितम्। सर्वप्रत्ययहेतव इत्यनेन प्रपित्साहेतुत्वं, पुरुषेशप्रधानायेत्यनेन सर्वशेषित्वम्, ब्रह्मण इत्यनेन वात्सल्यसौशील्यसौलभ्यादिगुणपूर्णत्वम्, अनन्तशक्तये इत्यनेन बन्धमोक्षाद्यापादनोपयुक्तसामर्थ्यवत्त्वं, वासुदेवायेत्यनेन धारकत्वं, हृषीकेशेत्यनेन नियन्तृत्वम् ॥ ३१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चत्वारिंशोऽध्यायः ॥ ४० ॥

---

1- -1. T,W omit 2. T omits मात्र

**विज०** तदुद्भवैः जलोद्भवैः शैवलादिभिः अबुधः मृगतृष्णां मृग्यन्त इति मृगा विषयास्तत्तृष्णाश्च ॥ २७ ॥

मनो रोद्धुं नोत्सहे ॥ २८ ॥

तथाऽपि प्रयते इत्याशयेनाऽऽह **सोऽहमिति**। यः मनस्समाधानकरणाशक्तः सोऽहम्। यच्च तवाङ्घ्र्युपगमनञ्च, अपिशब्द एवार्थे। स्वपदप्राप्तौ निमित्तं ध्वनयति — पुंस इति। यर्हि यदा संसरणात् संसारात् अपवर्गो मोक्षो भवेत्, कस्य पुंसस्तदाऽऽह - हे अब्जनाभ! सतां पुरुषाणां उपासनया सेवया हेतुना त्वयि मतिः मननबुद्धिः अवतरतीत्यर्थः ॥ २९ ॥

मननविषयरूपमाह **नम** इति। ज्ञानस्वरूपं नाऽन्यत्। "मात्रं कात्स्न्र्येऽवधारणे' (वैज.को. 6-5-1) इति यादवः। यद्वा, विज्ञानं मात्रा मानं प्रमाणं यस्मिन् स तथा तस्मै। "मात्रा परिच्छदेऽर्धेंशे प्रवृत्तौ कर्णभूषणे, अक्षरावयवे माने" (वैज.को. 6-5-62,63) इति च। "नैषा तर्केण मतिरापनेया" (कठ.उ. 2-9) इति च श्रुतिः। सर्वेषां ज्ञानानां हेतवे कारणाय विरिञ्चशङ्करयोः प्रत्ययहेतुत्वं औपचारिकमिति भावेनाऽऽह पुरुषेति। पुरुषेश्वरयोर्विरिञ्चिशङ्करयो रपि उत्तमोत्तमाय। एवंविधस्य किं नामधेयमित्यत उक्तं ब्रह्मण इति। "सत्यं ज्ञानमनन्तं ब्रह्म"(तैत्ति.उ. 2-1-1) इति श्रुतेः। विरिञ्च्याद्युत्तमत्वे को हेतुरित्यत उक्तं अनन्तेति ॥ ३० ॥

वासुदेवमूर्तेर्मोक्षहेतुत्वमिति कृत्वा तं नमति **नम** इति। सर्वभूतक्षयाय सर्वभूतनिवासाय "शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम्" इत्यादेः। हृषीकेश! इन्द्रियेश! प्रभो! समर्थ! ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥

(श्रीविजयध्वजरीत्या अष्टत्रिंशोऽध्यायः)

---

# एकचत्वारिंशोऽध्यायः

## (विजयध्वजरीत्या एकोनचत्वारिंशोऽध्यायः)

श्रीशुक उवाच

स्तुवत स्तस्य भगवान्दर्शयित्वा जले वपुः।
भूयस्समाहरत्कृष्णो नटो नाट्यमिवाऽऽत्मनः ॥ १ ॥

सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः।
कृत्वा चाऽऽवश्यकं सर्वं विस्मितो रथमाविशत्[1] ॥ २ ॥

तमपृच्छद्धृषीकेशः किं ते दृष्ट मिहा[2]ऽद्भुतम्।
भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥

अक्रूर उवाच

[3-]अद्भुतानीह यावन्ति[-3] भूमौ वियति वा जले।
[4-]त्वयि विश्वात्मके[-4] [5]सन्ति किं [6]मे दृष्टं विपश्यतः ॥ ४ ॥

यत्राऽद्भुतानि सर्वाणि भूमौ वियति वा जले।
तंत्वाऽनुपश्यतो ब्रह्मन् कि[7]म्मे दृष्ट मिहाद्भुतम् ॥ ५ ॥

---

1. G,J,P,V °गमत् 2. G,J °वा° 3- -3. T,W यत्राद्भुतानि सर्वाणि 4- -4. V तं त्वाऽनुपश्यतो 5. G,J,M,Ma,P तानि ; V ब्रह्मन् 6. G,J,M,Ma मेऽद्द° 7. M,Ma म्मेऽद्द°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकचत्वारिंशकेऽ हन् रजकं प्रविशन्पुरीम्। ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च।

सशङ्कमक्रूरमनः [1]प्रबोध्य स्वधामसन्दर्शनतः[2-] कृपालुः[-2]। स्वराजधानीं मधुरा मपश्य दलङ्कृतानन्तमहोत्सवाढ्याम्॥ १-३ ॥

**अद्भुतानीति**। भूमौ वियति जले वा यावन्त्यद्भुतानि तानि त्वय्येव सन्ति, तच्च त्वां विपश्यतो मे किमद्भुत मदृष्टम्? अपि तु सर्वं [3]दृष्टमेवेत्यर्थः ॥ ४ ॥

ननु मत्प्राप्तेः पूर्वमेव त्वं विस्मितमुखो लक्षितोऽसि, अतो भूमौ वियति जले वा किमप्यद्भुतं दृष्टं[4-] वद[-4] इत्यत आह — यत्रेति। अत्र त्वयि सर्वाण्यप्यद्भुतानि सन्ति[5]। तं त्वा मिह पश्यतो मे अन्यत्र भूम्यादौ किमद्भुतं दृष्टम्? त्वां विना न तत्र किञ्चिदद्भुतमित्यर्थः। हे ब्रह्मन्! हे परमेश्वर! इत्यर्थः। ब्रह्मे ति वा पाठः ॥ ५ ॥

---

1. P,V प्रमोच 2- -2. J,Va सत्कृपातः 3. J,Va दृष्ट मित्य° 4- -4. J,Va ऐवेति चेदत° 5. P,V omit सन्ति।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं प्रदर्शिताक्रूरसंस्तुतस्वासाधारणरूपो भगवान् अथ प्राप्त मधुरोपवनोऽङ्गीकृताक्रूरप्रार्थनः प्रेषिताक्रूरः श्वः प्रविष्टमधुरो निगृहीतरजकः तन्तुवायमालाकारौ परमभागवतौ अकरोदित्याह — एकचत्वारिंशेन **स्तुवत** इत्यादिना। भगवान् कृष्णः आत्मनः स्वस्य वपुः स्तुवतस्तस्याऽक्रूरस्य[1-] दर्शयित्वा[-1] स्वासाधारणरूपं प्रदर्श्य पुनस्समाहरत् अन्तर्धापयामास। यथा नटो नाट्यं नाट्यार्हरूपं दर्शयित्वा अन्तर्धापयति तथा तद्वत्[2] ॥ १ ॥

सोऽक्रूरोऽपि अन्तर्हितं वीक्ष्य ज्ञात्वा जलादुन्मज्ज्य त्वरया युक्तः आवश्यकं माध्याह्निकं नित्यकर्म सर्वं कृत्वा विस्मितस्सन् रथ माविशत् ॥ २ ॥

तमाविष्टवन्तमक्रूरं कृष्णः पप्रच्छ। प्रश्नमेवाऽऽह — **किं ते** इत्यादिना। इह रथे भूमौ वियत्याकाशे जले वा किमद्भुतं चित्रं[3] त्वया दृष्टम्? न किमपि दृष्टमिति मा वोचः इत्यभिप्रेत्याह — तथा दृष्टाद्भुतं त्वां लक्षयामहे चिह्नैः अनुमिनुमः ॥ ३ ॥

इत्थमापृष्टः प्राह अक्रूरः - **अद्भुतानीति**। भूम्यादिषु यावन्त्यद्भुतानि, तानि विश्वशरीरके त्वय्येव सन्ति। तच्च त्वां पश्यतो मे मया किं दृष्टं? न किमप्यद्भुतं त्वय्यविद्यमानं दृष्टमिति काक्वभिप्रेतोऽर्थः ॥ ४ ॥

दृष्टं वदेत्यत आह — **यत्रेति**। हे ब्रह्मन्, "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः" इति (वार्तिक) इति विकल्पा न्नलोपाभावः। यत्र त्वयि कर्माणि सर्वाण्यद्भुतानि, तं त्वा मिह पश्यतो मे अन्यत्र भूम्यादौ कि मद्भुतं दृष्टम्? त्वां विना न किञ्चिदद्भुत मित्यर्थः ॥ ५ ॥

---

1- -1. T omits 2 T,W omit तद्वत् 3. T,W omit चित्रम्।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

तस्मिन्निजजन्मनि योग्यताया अभिभवो नाऽस्ति। किन्तु सर्वत्राद्भुतत्व मेव यत्तदेतेषु द्विवाध्यायेषु व्यनक्ति। तत्रादौ अक्रूरदृष्टभगवद्रूपस्य अन्तर्धानकारणं कृष्णाक्रूरयोः प्रश्नोत्तराभ्यां हरेः सर्वैरचिन्त्याद्भुतमाहात्म्यञ्च वक्ति - स्तुवत इति। आत्मनो वपुः नटत्वेन दर्शितं नाट्यं नटनविषयं हनुमदादिरूपं यथा तिरोधत्ते तथा ॥ १ ॥

आवश्यकं नित्यकर्म ॥ २ ॥

दयालुः श्रीकृष्णः आत्मनो माहात्म्यं तेन वादयितुं अज्ञातवत्पृच्छति **-तमिति**। अद्भुत मदर्शि लक्षणैस्त्वां लक्षयामहे व्यावृत्तं पश्यामः ॥ ३ ॥

अक्रूरः परिहरति **अद्भुतानीति**। इह भूम्यादौ यावन्त्यद्भुतानि सन्ति विश्वात्मके विश्वरूपे त्वयि तानि विपश्यतो मे किमदृष्टम्? सर्वं दृष्टमेव। तानि विश्वात्मके त्वयि सन्ति। तस्मात्त्वां विपश्यतो मे किमदृष्टमिति वा ॥ ४ ॥

किं त्वयाऽद्भुतं दृष्टमिति प्रश्नस्य सर्वं दृष्टमेवेति परिहारः कथमागत इत्यत उक्तमेव स्फोरयति - **यत्रेति**। यत्र भूम्यादौ सन्ति सर्वाणि अद्भुतानि यत्र यस्मिन् त्वयि सन्ति तं त्वाऽनुपश्यतो मे किमद्भुत मदृष्टं? सर्वमद्भुतं दृष्टमित्यर्थः। ब्रह्मन्! पूर्ण! ॥ ५ ॥

### [1-]श्रीशुक उवाच[-1]

इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः।
मधुरामनय द्रामं कृष्णश्चैव दिनात्यये ॥ ६ ॥

मार्गे ग्रामजना राजंस्तत्र तत्रोपसङ्गताः।
वसुदेवसुतौ वीक्ष्य[2] प्रीता दृष्टिं न चाऽऽददुः ॥ ७ ॥

ताव द्व्रजौकस स्तत्र[3] नन्दगोपादयोऽग्रतः।
पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥

तान्समेत्याऽऽह भगवानक्रूरं जगदीश्वरः।
गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥

भवान्प्रविशतामग्रे[4] सहयानः पुरीं गृहम्[5]।
वयन्त्विहावमुच्याऽथ प्रातर्द्रक्ष्यामहे[6] पुरीम् ॥ १० ॥

---

1- -1. G,J,K,P,T,V,W omit 2. P,V दृष्ट्वा 3. M,Ma °स्तात! 4. P,V °दग्रे 5. M,Ma व्रज 6. G,T ततो द्र°; M,Ma तावद्द्र°

**श्रीध० इतीति**। गान्दिनीसुतः अक्रूरः ॥ ६ ॥

**मार्ग इति**। दृष्टिं नाऽऽददुः। पश्यन्त एव स्थिता इत्यर्थः ॥ ७ ॥

**तावदिति**। रामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥

**तानिति**। प्रश्रितं विनीतम् ॥ ९ ॥

**भवानिति**। स्वगृहञ्च प्रविशतात्[1] प्रविशतु[2]। अवमुच्योत्तार्य विश्राम्येत्यर्थः ॥ १० ॥

---

1. J,Va °ताम् 2. J,Va omit प्रविशतु।

**वीर०** इतीत्थ मुक्त्वा गान्दिनीसुतः अक्रूरः स्यन्दनं रथं चोदयामास [1- गमयामास -1]। ततो रामं कृष्णञ्च दिनात्यये दिनावसाने मधुरां प्रापयामास ॥ ६ ॥

तदा तत्र तत्र मार्गे ग्रामेषु जनाः वसुदेवस्य सुतौ रामकृष्णावुपसङ्गतास्सन्तः तौ दृष्ट्वा प्रीताः दृष्टिं नाऽऽददुः न प्रत्याजह्रुः, पश्यन्त एव स्थिता इत्यर्थः ॥ ७ ॥

**तावदिति**। यावद्रामकृष्णौ मधुरामनयत् तावदेव ततः पूर्वमेव नन्दादयो गोपा उपवनं प्राप्य श्रीरामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥

तान्नन्दादीन् समेत्य जगदीश्वरो भगवान् स्वपाणिना विनीतमक्रूरं पाणिं गृहीत्वा प्रहसन् वक्ष्यमाणं उवाच। इवशब्देन हास्ये ईषत्त्वं द्योत्यते ॥ ९ ॥

उक्तिमेवाऽऽह — **भवानिति**। भवान् सहयानस्सहरथः पुरीं तत्र स्वगृहमग्रे विशताम्। वयन्तु इहोपवने अवमुच्य उत्तार्य विश्राम्येत्यर्थः। अथ प्रातः वो युष्माकं पुरीं मधुरां द्रक्ष्यामः ॥ १० ॥

---

1- -1. T,W omit

**विज०** दिनात्यये अपराह्णे ॥ ६ ॥

तयो र्वसुदेवसुतयोः लग्नाः प्रीताः प्रसन्नाः दृष्टिं नाऽददुः प्रत्यादानं न चक्रुः ॥ ७ ॥

प्रतीक्षन्तः पश्यन्तः ॥ ८,९ ॥

भवानग्रे प्रविशतां पश्चात् त्वं गृहं व्रज, अवमुच्य स्कन्धावरोहं कृत्वा ॥ १० ॥

## अक्रूर उवाच

**नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मधुरापुरीम्[1]।**
**त्यक्तुं नाऽर्हसि मां नाथ! भक्तं ते भक्तवत्सल! ॥ ११ ॥**

★ त्यक्ष्ये कथं त्वत्पदपद्मयुग्मं वेक्ष्ये कथं ग्राम्यजनाग्निकुण्डम्।
वक्ष्ये कथं ग्राम्यवचो दुरन्तं द्रक्ष्ये कथं भिन्नतया जगत्पते॥

आगच्छ याम [2]गेहान्तस्सनाथान्कुर्वधोक्षज!
[3-]साग्रजस्सह [-3]गोपालै स्सुहृद्भिश्च [4]सुहृत्तम ॥ १२ ॥

पुनीहि पादरजसा [5]गृहान् नो गृहमेधिनाम्।
[6]यच्छौचेनाऽनुतृप्यन्ति पितरस्साग्नयस्सुराः ॥ १३ ॥

अवनिज्याऽङ्घ्रियुगल मासीच्छ्[7]लोक्यो बलि [8]र्महान्।
ऐश्वर्य मतुलं लेभे गतिश्चैकान्तिनां तु या ॥ १४ ॥

आपस्तेऽङ्घ्र्यवनेजन्य [9]स्त्रीन् लोकाञ्छुचयोऽपुनन्
शिरसाऽऽधत्त या श्शर्व स्स्वर्यातास्सगरात्मजाः ॥ १५ ॥

---

1. G,J,M,Ma °रां प्रभो! ★ अयं श्लोकः न क्वापि (G,J,K,M,Ma,P,V Edns) उपलभ्यते; तथाऽपि वीरराघवविदुषा व्याख्यात इति K प्रकाशे अधोज्ञापिकायां (foot note) मुद्रितः। व्याख्या च ११-१२ श्लोकव्याख्यानमध्ये योजिता अस्माभिस्तु एषश्लोकः मूले एव ११-१२ श्लोकयो र्मध्ये, क्रमसंख्यां विहाय योजितः। अस्य व्याख्या च उचिते स्थाने (११-१२) श्लोकव्याख्यामध्ये सङ्कलिता। 2 P,V गेहं न° 3- -3 G,J,P,V सहाऽग्रजः सगो० 4. K,T,W सुरोत्तम!; M,Ma सुहृत्तमः 5 K,T,W °हं नो 6. M,Ma °नाऽति° 7. M,Ma °च्छ्लाघ्यो 8 M,Ma °र्मखे 9. V °स्त्रिलो°

**श्रीध०** आगच्छेति। साग्रजः सह गोपालैरित्यर्थः ॥ ११-१२ ॥

पुनीहीति। यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहाङ्गणस्थितेन ॥ १३ ॥

अवनिज्येति। श्लोक्यः पुण्यकीर्त्यर्हः। [1-]एकान्तिनां[-1] एकान्तभक्तानां या गति स्तां च लेभे ॥ १४ ॥

आप इति। अपुनन् [2]पवित्रीकृतवत्यः। याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥ १५ ॥

---

1- -1. J,Va omit 2. J,Va °त्रितव°

**वीर०** एव मुक्तः प्राह अक्रूरः नाहमिति षड्भिः। हे विभो! भवद्भ्यां रहितो वियुक्तोऽहं पुरीं न प्रवेक्ष्ये। हे नाथ! भक्तं मां त्यक्तुं नाऽर्हसि। तत्र हेतुं वदन् सम्बोधयति - हे भक्तवत्सलेति ॥ ११ ॥

★ **त्यक्ष्य** इति। ग्राम्यजन एव अग्निकुण्डं तत् कथं वेक्ष्ये प्रवेक्ष्ये, दुरन्तं दुर्वचं ग्राम्यवचः ग्राम्यस्येव वचः "रामकृष्णा वानीतौ" इत्येवंविधं वाक्यं वक्ष्ये, कंसं प्रति इति शेषः। हे जगत्पते! कथं भिन्नतया द्रक्ष्ये तच्छरीरभूतत्वेन त्वदपृथक्सिद्धान् कंसादीन् त्वत्तः पृथक्सिद्धतया शत्रुभावेन कथं द्रक्ष्ये इत्यर्थः।

अतो हे अधोक्षज! त्व मागच्छ, यामः त्वयैव सह वयं गमिष्यामः। नोऽस्मान् सनाथान् सेश्वरान् कुरु साग्रजः सरामः गोपालैश्च सुहृद्भिस्सह हे सुरोत्तम! ॥ १२ ॥

पादरजसा गृहमेधिनामस्माकं गृहं पुनीहि पवित्रीकुरु। यस्य पादरजसः शौचेन क्षालनोदकेन पीतेन (गृहाङ्गणस्थितेन) शिरसि धृतेन चाऽस्माकं पितरोऽग्नयः सुराश्च तृप्यन्ति तृप्ता भवन्ति। तेन पादरजसेत्यन्वयः ॥ १३ ॥

किञ्च। तवाऽङ्घ्रियुगलमवनिज्य प्रक्षाल्य बलिर्वैरोचनिः श्लोक्यः बहुलकीर्त्यर्हः। महान्, गुणै रिति शेषः। आसीत् बभूव। त्वत्सङ्कल्पात् लब्धप्रायमैश्वर्यं लेभे प्राप्तवान्! तथैकान्तिनां अनन्यप्रयोजनानां प्रपन्नानां या गतिः त्वत्प्राप्तिरूपा ताञ्च लेभे, लब्धवत्प्रायो बभूव ॥ १४ ॥

किञ्च। तवाङ्घ्योरवनेजन्यः क्षालन्यः[1] आपः गाङ्गाः[2] शुचयः पवित्राः त्रीन् लोकान् अपुनन् पवित्रितवत्यः किञ्च या आपः शर्वो रुद्रः शिरसा धृतवान्। किञ्च, याभिरद्भिः सगरात्मजाः स्वर्गं गता बभूवुः। एवंविधमहामहिमशालिपवित्रतम गङ्गादिरूपतीर्थाश्रय पादरजसा पुनीहीत्यन्वयः ॥ १५ ॥

---

★ अधिक पाठश्लोकव्याख्या। 1 T,W °नाः 2. A,B °ङ्ग्यः

**विज॰** अवनिज्य प्रक्षाल्य एकान्तिनां भक्तमुख्यानां या गतिः क्लृप्ता ताम् ॥ ११-१४ ॥

अपुनन् शुद्धां चक्रुः ॥ १५ ॥

**देवदेव जगन्नाथ पुण्यश्रवणकीर्तन!**
**यदूत्तमोत्तमश्लोक नारायण नमोऽस्तुते ॥ १६ ॥**

**श्रीभगवानुवाच**

**आयास्ये भवतो गेह महमार्यसमन्वितः।**
**यदुचक्रद्रुहं[1] हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥**

## श्रीकृष्णबलरामयोः मथुरानगरप्रवेशघट्टः

### [2-]श्रीशुक उवाच[-2]

एवमुक्तो भगवता सोऽक्रूरो विमना इव।
पुरीं प्रविष्टः[3] कंसाय कर्माऽऽवेद्य गृहं ययौ ॥ १८ ॥

अथाऽपराह्णे[4] भगवान् कृष्णः सङ्कर्षणान्वितः।
मधुरां प्राविशद्गोपै र्दिदृक्षुः परिवारितः ॥ १९ ॥

ददर्श तां स्फाटिकतुङ्गगोपुर[5] [6-]द्वारां बृहद्धेम[-6]कवाट[7]तोरणाम्।
ताम्रारकोष्ठां[8] परिखा[9]दुरासदां उद्यानरम्योपवनो[10]पशोभिताम् ॥ २० ॥

सौवर्णशृङ्गाटकहर्म्यनिष्कुटै[11] श्श्रेणीसभाभिर्भवनै रुपस्कृताम्।
वैदूर्य[12]वज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥

जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम्।
संसिक्तरथ्याऽऽपणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥

आपूर्णकुम्भै र्दधिचन्दनोक्षितैः प्रसूनदीपावलिभि स्सपल्लवैः।
सवृन्त[13]रम्भाक्रमुकैस्सकेतुभि स्स्वलङ्कृतद्वारगृहां सपट्टिकैः[14] ॥ २३ ॥

---

1. M,Ma °वर्ग 2- -2. P,V omit 3 M,Ma प्रविश्य 4. M,Ma ततोऽप° 5. M,Ma °रां 6- -6. M,Ma बृहत्स्फुरद्धेम 7 G,J,M,Ma °पा° 8. M,Ma °ष्ठा 9. P,V °घा 10. M,Ma वनालि 11. M,Ma °टश्रे° 12. P,V °दू° 13. G,J वृन्द 14 M,Ma °काम्।

**श्रीध०** प्रार्थयमानो नमस्करोति - **देवदेवेति**। अतः परमन्यच्छ्रेयो नास्तीति मत्वा बहुधा सम्बोधयति ॥ १६ ॥

**आयास्ये** इति। आदौ तावत् यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये[1] दास्यामि[2] ॥ १७ ॥

**एवमिति**। रामकृष्णावानीतौ इति स्वकृतं कर्माऽऽवेद्य समर्प्येति ॥ १८ ॥

**अथेति**। गोपैः परिवारितः परिवृतः[3] प्राविशत् ॥ १९ ॥

श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः — **ददर्शेति**। स्फाटिकानि तुङ्गानि गोपुराणि पुरद्वाराणि [4] अन्यानि गृहद्वाराणि च यस्यां ताम्। बृहन्ति हेममयानि [5] कवाटानि तोरणानि च यस्यां ताम्। ताम्रञ्च आरः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्वशालादयश्च [6] यस्यां ताम्। परिखाः परितः खातगर्ताः ताभि र्दुरासदां दुर्गमाम्। उद्यानानि दूरस्थानि वनानि, रम्याण्युपवनानि च [7] निकटस्थानि तैरुपशोभिताम् ॥ २० ॥

**सौवर्णेति**। सौवर्णाः शृङ्गाटकाः चतुष्पथाः, हर्म्याणि धनिनां गृहाणि च [8] तेषु निष्कुटा गृहोचिता आरामाश्च तैः [9] श्रेणीनामेकरूपशिल्पोपजीविनां [10] सभाभिरुपवेशस्था [11-] नैश्च भवनै रन्यगृ [-11] है रुपस्कृताम् अलङ्कृताम्। अमलाः [12] स्फटिकाः [13] हरितो मरकताः। वैदूर्यादिरत्नै र्जुष्टेषु वलभ्यादिष्वाविष्टै रुपविष्टैः पारावतै र्बर्हिभिश्च नादिताम्। तत्र वलभ्यो [14-] गृहपुरोभा गस्तम्भनिहित छादनावष्टम्भवक्रदारूणि [-14], वेदयो वलभीना मधोदेशे विरचिता अवष्टम्भवेदिकाः। जालामुखरन्ध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धा भूमय स्तेष्विति। रथ्या राजमार्गाः, आपणाः पण्यवीथयः, मार्गा अन्ये च चत्वराणि अङ्गणानि संसिक्तानि रथ्यादीनि यस्यां ताम्। प्रकीर्णा माल्यादयो यस्यां ताम् ॥ २१, २२ ॥

**आपूर्णेति**। तथा स्वलङ्कृतानि द्वाराणि येषां ते गृहा यस्यां ताम्। कैः? आपूर्णैः [15-] अ द्भिः पूर्णै [-15] ः कुम्भैः दध्ना चन्दनेनचोक्षितैः सिक्तैः प्रसूनानां दीपानां चाऽऽवलयो येषु तैः। [16] वृन्तैः फलगुच्छैः उपलक्षिता रम्भाः क्रमुकाश्च तत्सहितैः। सकेतुभिः केतवो ध्वजा स्तत्सहितैः। पट्टिका वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैः। [17] अत्रेयं रीतिः — द्वारेषूभयत - स्तण्डुलानामुपरि कुम्भाः। तत्परितः प्रसूनावलयः कण्ठे पट्टिका मुखे चूतादिपल्लवाः, तदुपरि पात्रान्तरे दीपावलयः, तत्सन्निधौ रम्भाः क्रमुकाः केतवस्तोरणानि चेति ॥ २३ ॥

---

1. Va °ष्यामि 2. Va omits 3. J,Va omit परिवृतः। 4. J,Va omit अन्यानि 5. J,Va °पा° 6. P,V °घाः 7. J,Va °टानि 8. J,Va omit तेषु 9 J,Va omit रूप 10. P,V रुपसंवेशन 11- -11. J,Va स्थानैः अन्यैश्च भवनैर्गृ° 12. P,V °लः 13. P,V °कः 14- -14. J,Va भागेषु वक्रदारुच्छादनानि 15- -15. J,Va omit 16. J,Va वृन्दैः 17. J,Va त°

**वीर०** एवं प्रार्थयमानोऽनितरसाधारणधर्मयुक्तं सम्बोधयन्नमस्करोति — **देवदेवेति**। ब्रह्मादीनामपि देव! जगतो नाथ! पुण्यं शृण्वतां वदताञ्च पुण्यावहं यस्य श्रवणं कीर्तनञ्च तत् यस्य सः पुण्यश्रवणकीर्तनः, तस्य सम्बोधनम्। उत्तमैः ब्रह्मादिभिः श्लोक्यते ईड्यत इति तथा, उत्तमः श्लोको यशो यस्येति वा ॥ १६ ॥

इत्थं प्रार्थितः प्राह भगवान् **आयास्ये** इति। यदुचक्राय यदुवंशजसमूहाय द्रुह्यतीति यदुचक्रध्रुक् तं यदुचक्रद्रुहं कंसं हत्वा ततोऽग्रजसमन्वितोऽहं भवतो गृहं प्रत्यायास्ये आगमिष्यामि, तथाऽन्येषाञ्च सुहृदां प्रियं वितरिष्ये करिष्यामि॥ १७॥

इत्थं भगवतोक्तोऽक्रूरः विमना इव किञ्चिदसन्तुष्टमना इव भूत्वा पुरीं प्रविष्टः कर्म रामकृष्णावानीता विति स्वकृतं कर्म आवेद्य स्वगृहं ययौ ॥ १८ ॥

**अथ श्वोऽपराह्णे भगवान् कृष्णः सङ्कर्षणेनान्वितो गोपैः परिवृतो द्रष्टुमिच्छुः मधुरां प्राविशत् ॥ १९ ॥**

तां मधुरां ददर्श। कथम्भूताम्? स्फाटिकानि स्फटिकमयानि तुङ्गान्युच्छ्रितानि गोपुराणि पुरद्वाराणि अन्यानि च द्वाराणि यस्यां ताम्। ताम्रम् आरम् आरकूटश्च तन्मयाः प्रकोष्ठाः धान्यादिशालादयो यस्यां तां, परिखाभिः परितः खाताभिः दुर्गमाम्, उद्यानानि दूरस्थानि वनानि, रम्याण्युपवनानि च निकटानि तै रुपशोभितां, सौवर्णाः शृङ्गाटका श्चतुष्पथाः, हर्म्याणि धनिनां गृहाणि च तेषु निष्कुटाः गृहोचिता आरामाः, तैः श्रेणीनामेकरूपशिल्पोपजीविनां सभाभि रुपवेशस्थानैः अन्यैश्च भवनैः गृहैरुपस्कृतामलङ्कृताम्, अमलः स्फटिकः हरित् मरकतः, वैदूर्यादिरत्नैः जुष्टेषु संयुक्तेषु वलभ्यादिषु आविष्टैः पारावतैः मयूरैश्च नादिताम्। तत्र वलभ्यः गृहपुरोभागस्तम्भनिहिताच्छादनोपष्टम्भवक्रदारूणि, वेदयः वलभीनामधोदेशे विरचितावष्टम्भवेदिकाः, जालामुखरन्ध्राणि गवाक्षच्छिद्राणि, कुट्टिमानि मणिबद्धाः भूमयः, रथ्या राजमार्गाः आपणाः पण्यवीथयः, मार्गा अन्ये, चत्वराणि अङ्गणानि संसिक्तानि रथ्यादीनि यस्याम्, विकीर्णाः तत्र तत्र अवकीर्णा माल्यादयो यस्यां, तत्र माल्यानि मालार्हाणि पुष्पाणि आपूर्णैः कुम्भैः, दध्ना चन्दनेन च उक्षितैः सिक्तैः प्रसूनानां दीपानाञ्च आवलयो येषु तैः, सवृन्ताः फलगुच्छैस्सहिताः रम्भाः कदल्यः क्रमुकाश्च तैः, केतुभिश्च सहितैः, पट्टिकाः वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैश्च स्वलङ्कृतानि द्वाराणि येषां ते गृहा यस्यां ताम्। तत्रेयं रीतिः - [1-]द्वारभूम्युभ[-1]यतः तण्डुलाना मुपरि कुम्भाः तत्परितः प्रसूनावलयः कण्ठे [2]सपट्टिकाः, मुखे चूतादिपल्लवाः, तदुपरि पात्रान्तरे दीपावलयः तत्सन्निधौ रम्भाः क्रमुकाः केतवः तोरणानि च इति॥ २०-२३ ॥

---

1- -1. T,W द्वार्षूम° 2. K omits स

**विज०** यदुवर्गद्रुहं कंसम् ॥ १६-१७ ॥

त्वयोक्तं कर्म मया कृतमिति ॥ १८-१९ ॥

स्फाटिकानि स्फटिकरत्ननिर्मितानि तुङ्गानि उन्नतानि च गोपुराणि पुरद्वाराणि यस्यां सा तथा बृहन्ति विशालानि स्फुरन्ति शोभमानानि हेम्ना निर्मितानि कपाटानि तोरणानि च यस्यां सा तथा। ताम्रैरारैः आरकूटैर्लोहविशेषैः निर्मितानि कोष्ठान्यन्तर्भवनानि यस्यां सा तथा "आरण्यारकूटम्" इत्यभिधानम्। यद्वा ताम्रेण विरचिते आरकोष्ठे अट्टालावयववप्रे यस्यां सा। यद्वा ताम्रकृतानि अराणि दलानि यस्मिंस्तथा, ताम्रारं कोष्ठं यस्यां सा तथा सा च। असीमा परिखा खातनदी यस्यां सा। तथा ताम्रारकोष्ठापरिखां, अत एव दुरासदां दुष्प्रवेशां, ताम्रारकोष्ठां परिखादुरासदामिति पठन्ति। उद्यानैः सर्वसाधारणवनैः रम्या रमणीया च। उपवनानामारामाणां प्रमदावनानां आलिः पङ्क्तिः तया शोभिताम् उद्यानरम्योपवनालिशोभिताम्॥ २० ॥

सौवर्णैः सुवर्णबद्धैः शृङ्गाटकैः चतुष्पथैः, हर्म्यैः धनिनां निवासैः निष्कुटैः पथिकावासैः गृहवाटीभि र्वा। श्रेणीसभाभिः गृहपङ्क्तचन्तरालक्लृप्तसभाभिः, श्रेणी वेश्यागृहपङ्क्तिः तत्पुरतः कृतसभाभिर्वा, भवनैः प्रशस्तैः गृहै रुपस्कृताम् अलङ्कृताम् वेदिषु परिष्कृतभूमिषु वलभीषु आच्छादनवक्रदारुषु प्रोतचित्रफलकेषु मुक्ताहरिद्भिः मुक्तावलिरश्मिमिश्रितैः वैदूर्यादिभिः ॥ २१ ॥

जुष्टेषु न्युमेषु जालानां गवाक्षाणां आमुखरन्ध्रं मुखच्छिद्रपर्यन्तेषु विद्यमानेषु कुट्टिमेषु बद्धभूमिकेषु स्थलेषु आविष्टै रुपविष्टैः पारावतैः कपोतैः, बर्हिभिर्मयूरैश्च नादितां शब्दितां, चन्दनादिजलैः संसिक्ता आर्द्रीकृता रथ्या रथमार्गः आपणः निषद्यामार्गः पण्यवीथिकामार्गः प्रतिगृहं पन्थाः चत्वरश्चतुष्पथः विस्तृतमार्गः यस्यां सा तथा ताम् प्रकीर्णानि व्याप्तानि माल्याङ्कुरलाजतन्दुलानि यस्यां सा तथा ॥ २२ ॥

आपूर्णकुम्भैः स्वलङ्कृतानि द्वाराणि येषां ते तथा स्वलङ्कृतद्वारा गृहा यस्यां सा तथा ताम्। कीदृशैः आपूर्णकुम्भैः? दधिचन्दनरसेन च उक्षितैः सिक्तैः प्रसूनानां दीपानां आवलयो येषु ते तथा तैः सपल्लवैः किसलयसहितमुखैः सवृन्ता रम्भा कदली सवृन्तरम्भा तथा क्रमुकाः पूगाः तैः पट्टिकया उपर्याततवितानवस्त्रेण सहिता सपट्टिका ताम् ॥ २३ ॥

**तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना।**
**द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवाऽऽरुरुहुर्नृपोत्सुकाः ॥ २४ ॥**

**काश्चिद्विपर्यक्[1]कृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्व[3]थाऽपराः।**
**कृतैकपत्र[2]श्रवणैकनूपुरा नाङ्क्त्वा द्वितीयन्त्वपरा स्स्वलोचनम् ॥ २५ ॥**

**अश्नन्त्य एका स्तदपास्य [4-]सोत्सवा अभ्य[-4]ज्यमाना अकृतोपमज्जनाः[5]।**
**स्वपन्त्य उत्थाय निशम्य निस्वनं [6]निपाययन्त्योऽर्भमपोह्य मातरः ॥ २६ ॥**

**मनांसि तासा मरविन्दलोचनः [7]प्रगल्भलीलाहसितावलोकनैः।**
**जहार मत्तद्विरदेन्द्रविक्रमो दृशां [8]दधच्छ्रीर[9]मणो महोत्सवम् ॥ २७ ॥**

**दृष्ट्वा मुहुश्श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्ष[10-]णोत्स्मित[-10] सुधोक्षणलब्धमानाः।**
**आनन्दमूर्ति[11]मुपगूह्य दृशाऽऽत्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाऽऽधिम् ॥ २८ ॥**

**प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः।**
**अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥**

**दध्यक्षतैस्सोदपात्रै स्स्रग्ग्रन्थै [12]रप्युपायनैः**
**तावानर्चुः प्रमुदिता स्तत्र तत्र द्विजातयः ॥ ३० ॥**

---

1. G,J,K,P,V °ग्धृत 2. M,Ma °वस्त्र 3. G,J °राश्च लो° 4- -4. P,V भोजनश्चाभ्य° 5. T,W मार्जनाः 6. G,J प्र° 7. M,Ma प्रागल्भ्य 8. G,J दद° 9. G,J,P,V °मणात्मनोत्सवम् 10. M,Ma °क्षितोत्स्मित; T,W °क्षणस्मित 11. G,J,K,M,Ma गु° 12. G,J,M,Ma रम्यु।

**श्रीध०** **तामिति।** नरदेववर्त्मना राजमार्गेण तां पुरीं; सम्प्रविष्टाविति द्वितीयान्तम् ॥ २४ ॥

औत्सुक्यमेवाऽऽह द्वयेन **काश्चिदिति।** विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः। युगलेषु [1]युगलधार्येषु कुण्डलकङ्कणादिषु एकं विस्मृत्य समीयुः। कृतमेकमेव पत्रं[2] ययो स्ते श्रवणे यासाम्। एक मेव नूपुरं चरणाभरणं यासां, ताश्च ताश्च। नाङ्क्त्वा अनङ्क्त्वा एकस्मिन्नेव लोचने अञ्जनं[3] निधायैव ॥ २५ ॥

**अश्नन्त्य** इति। तद्भोजनं त्यक्त्वा[4] अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यङ्गाः [5-]अकृतोपमज्जना[-5] अकृतस्नानाः [6-]अर्भं बालकम्[-6] अपोह्य निरस्य ॥ २६ ॥

**मनांसीति।** प्रगल्भा याः[7] लीलाः, ताभिर्हसितानि ईक्षणानि[8] च तैः श्रियं रमयतीति श्रीरमणः तेनाऽऽत्मना वपुषा तासां दृशा मुत्सवं दधत्[9] मनांसि जहार ॥ २७ ॥

**दृष्ट्वेति।** मुहुः श्रुतत्वात् तद्गतचेतसः सद्यः तं दृष्ट्वा तस्य प्रेक्षणञ्च उत्स्मितञ्च तदेव सुधा तया सुधया[10] उक्षणं सेचनं तेन लब्धो मानो यभिस्ताः। दृशोद्घाटितेन नेत्रद्वारेण आत्मनि मनसि लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनित मनन्त माधिं मानसीं[11] व्यथां जहुः। हे अरिन्दम! निर्जितकामेति सम्बोधनं, शृङ्गाररसे निमग्नो मा भूदिति ॥ २८ ॥

प्रासादेति। सौमनस्यैः कुसुमसमूहैः शोभनमनोभावै र्वा ॥ २९, ३० ॥

---

1. J युग्म; Va omits युगल 2 P,V कज्जलं 3. P,V omit एव 4 P,V हित्वा 5- -5 P,V omit 6- -6. P,V omit 7 V omit याः 8. J,Va निरीक्षणानि 9. J,Va ॰द॰ 10. J,Va omit सुधया 11 P,V omit मानसीं।

**वीर॰** तामेवम्भूतां पुरीं वयस्यैः सखिभि स्सहितौ नरदेववर्त्मना राजवीथ्या प्रविष्टौ वसुदेवनन्दनौ द्रष्टुं पुरस्त्रियः त्वरिता स्समीयुः, तत्र तत्र समुदिता बभूवुः। तथा हे नृप! उत्सुका स्सत्यो हर्म्याण्यारुरुहुः ॥ २४ ॥

त्वरामौत्सुक्यञ्चाऽऽह द्वयेन **काश्चिदिति।** विपर्यक् विपरीतमयथायथं धृतानि वस्त्राणि भूषणानि च याभि स्ताः काश्चिदेवम्भूताः। अपरास्तु युगलेषु धार्येषु कुण्डलकङ्कणादिषु एकं विस्मृत्य, समीयुरित्यनुषङ्गः। अन्यास्तु धृतं निहितम् एकमेव पत्रं ताटङ्कः ययोस्ते श्रवणे श्रोत्रे यासां ताः, एकमेव नूपुरं चरणाभरणं यासां ताश्च स्वकीयमेकं लोचनं नाङ्क्त्वा एकस्मिन्नेव लोचने कज्जलं निधायेत्यर्थः ॥ २५ ॥

एका स्तु अश्नन्त्यः तद्भोजनं विहाय, काश्चित्तु अभ्यज्यमानाः सखीभिः क्रियमाणाभ्यङ्गा अकृतस्नाना एव। काश्चित्तु स्वपन्त्यो निस्वनं निशम्योत्थाय, अपरास्तु मातरः अर्भकं पाययन्त्यः, स्तन्यमिति शेषः। तमर्भकं विहाय समीयु रिति सर्वत्र सम्बन्धः ॥ २६ ॥

मत्तगजेन्द्रस्येव विक्रमः पादविक्षेपो यस्य सः, श्रियः कान्तो भगवान् प्रगल्भा या लीला स्ताभिः हसितानीक्षणानि च तैस्तासां पुरस्त्रीणां दृशां महोत्सवं महाहर्षं विदधानः तासां मनांसि चित्तानि अपहृतवान् ॥ २७ ॥

मुहुश्श्रुतत्वात्तद्गतचेतसः तं दृष्ट्वा हे अरिन्दम! तस्य प्रेक्षणञ्च स्मितञ्च तदेव सुधा तयोः उक्षणं सेचनं तेन लब्धो[1] मानो याभिस्ताः दृशा उद्घाटितनेत्रद्वारा आत्मनि मनसि लब्धं प्राप्तम् आनन्दमूर्तिं परिष्वज्य पुलकितत्वचः तदप्राप्तिजमनन्तमनवधिकमाधिं व्याथां जहुः ॥ २८ ॥

प्रीत्योत्फुल्लानि मुखाम्बुजानि यासां ताः प्रमदाः स्त्रियः सौमनस्यैः कुसुमसमूहैः रामकृष्णा वभ्यवर्षन् ॥ २९ ॥

द्विजातयो ब्राह्मण्यः तत्र तत्र प्रमुदितास्सत्यः दध्यादिभिः तौ[2] रामकृष्णावानर्चुः ॥ ३० ॥

---

1. T,W omit अनन्तं 2. T,w omit तौ।

**विज०** या पूर्वं कर्णाकर्णितसौन्दर्या तां, नरदेववर्त्मना राजमार्गेण ॥ २४ ॥

विपर्ययकृतानि व्यत्यस्तत्वेनालङ्कृतानि वस्त्राणि भूषणानि यासां ताः। वस्त्रस्थाने भूषणानि, भूषणस्थाने वस्त्राणीति युगलेषु मध्ये एकं विस्मृत्य; एतदेव स्फोरयति कृतैकेति। वस्त्रं परिधानमात्रं एकं श्रवणभूषणं एकं नूपुरञ्च यासां ताः। एक मङ्क्त्वा एकं लोचनं नाङ्क्त्वा अञ्जितं मषीकृतमकृत्वा ॥ २५ ॥

अभ्यज्यमानाः तैललेपनं कुर्वाणाः अकृतोपमज्जनाः अकृतजलस्नानाः, अर्भं बालं अपोह्य तिर्यक्कृत्वा ॥ २६ ॥

प्रागल्भ्येन धाष्टर्चेन लीलासहितहसितेन, अवलोकनेन कटाक्षनिरीक्षणेन ॥ २७ ॥

श्रुतं कृष्णरूपसौन्दर्यं स्त्रियः एकदाऽपि न दृष्टोऽय मित्याधिं मनःपीडां तद्दर्शनेन जहुरित्यन्वयः। तस्य कृष्णस्य प्रेक्षितं उत्कृष्टं स्मितञ्च तत्प्रेक्षितोत्स्मिते, ते एव[1] सुधा प्रेक्षितोत्स्मितसुधा तस्या उक्षणेन लब्धो मानो यासां ता स्तथा। आत्मनि मनसि लब्धं स्थितं हृष्यत्त्वचः रोमाञ्चाञ्चिताः ॥ २८ ॥

सौमनस्यैः सुमनसां पुष्पाणां राशिभिः ॥ २९ ॥

आनर्चुः पूजयामासुः ॥ ३० ॥

---

1. Ma °चि° ।

★ ऊचुः[1] पौरा अहो गोप्यः तपः कि मचरन्महत्।
याह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ३१ ॥

- रजकवध - वायकसुदामत्रिवक्रादीनां सम्मानघट्टः -

रजकं कञ्चि दायान्तं रङ्गकारं गदाग्रजः।
दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३२ ॥

देह्यावयो स्समुचितान्यङ्ग! वासांसि चाऽर्हतोः।
भविष्यति परं श्रेयो दातुस्ते नाऽत्र संशयः ॥ ३३ ॥

स याचितो भगवता परिपूर्णेन सर्वतः।
साक्षेपं रुषितः प्राह भृत्यो राज्ञ स्सुदुर्मदः ॥ ३४ ॥

ईदृशान्येव वासांसि नित्यं गिरिवनेचराः।
परिधत्त[2] किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३५ ॥

★ This verse is not found in M,Ma edns 1 T,W यर्हो° 2 M,Ma °त्थ°

श्रीध० **ऊचु रिति**। पौराः पुरस्त्रियः ॥ ३१ ॥

**रजक मिति**। रजको वस्त्रनिर्णेजकः, स एव वस्त्राणां रागमपि[1] कुर्वन् रङ्गकारः ॥ ३२, ३३ ॥

**स इति**। रुषितः कुपितः ॥ ३४ ॥

**ईदृशानीति**। [2-]हे उद्वृत्ताः[-2]! गिरौ वने चरथ ये ते यूयं नित्यं पूर्वं, परिधत्तेति सम्भावनायां लोट्। अभीप्सथ प्रार्थयथ[3] ॥ ३५ ॥

1 J,Va रङ्ग° 2- -2 P,V omit 3 J,V °यध्वम्।

वीर० पौराः स्त्रियः परस्परमूचुः। उक्तिमेवाऽऽह - अहो इत्यादिना। गोप्यः किं महत्तप श्चक्रुः, अन्यथैतन्न सम्भाव्यत इत्यभिप्रेत्याऽऽहुः। या गोप्यः नरलोकस्य महानुत्सवो याभ्यां तावेतौ रामकृष्णावनुपश्यन्ति॥ ३१ ॥

इत्थं तासु कथयन्तीषु सतीषु[1] तदा गदाग्रजो भगवान् कञ्चिदायान्तं, रजकः वस्त्रनिर्णेजकः स एव वस्त्राणां रङ्ग मपि कुर्वन् रङ्गकारः, तं दृष्ट्वा धौतानि निर्णिक्तानि अद्भुतानि च वस्त्राण्ययाचत ॥ ३२ ॥

याच्ञाप्रकार मेवाऽऽह - **देहीति**। अङ्ग! हे रजक! योग्ययोरावयोः समुचितानि वासांसि देहि। दातुस्तव परमुत्कृष्टं श्रेयो भविष्यति। नाऽस्मिन्नर्थे संशयोऽस्ति ॥ ३३ ॥

इत्थं भगवता सर्वतः परिपूर्णेन पूर्णकामेन याचित स्स रजकः राज्ञः कंसस्य भृत्यः दुर्मदश्च, हेतुगर्भ मिदं विशेषणद्वयम्। अतो रुषितः क्रुद्धः साक्षेपमाटोपगर्भं यथा तथा प्राह ॥ ३४ ॥

उक्तिमेवाऽऽह - **ईदृशानीति** द्वाभ्याम्। हे उद्वृत्ताः! उत्पथाः! गिरौ वने च चरन्ति ये ते यूयमीदृशान्येव वासांसि परिधत्त किम्? सम्भावनायां लोट्। राजद्रव्याण्यभीप्सथ, स्वाधिकारमनालोच्येति शेषः ॥ ३५ ॥

1 T,W omit सतीषु।

**विज०** रङ्ककारं वर्णकारकम् ॥ ३१-३४ ॥

साक्षेपवाक्यं विवृणोति - **ईदृशानीति**। परिधत्त परिधानं कुरुथ ॥ ३५ ॥

**याताऽऽशु बालिशा मैवं[1] प्रार्थ्यं यदि जिजीविषा।**
**बध्नन्ति घ्नन्ति लुम्पन्ति दुष्टान्[2]राजकुलानि हि[3] ॥ ३६ ॥**

**इत्थं[4] विकत्थमानस्य कुपितो देवकीसुतः।**
**रजकस्य कराग्रेण शिरः काया दपाहरत्[5] ॥ ३७ ॥**

**तस्याऽनुजीविनस्सर्वे वासःकोशान्विसृज्य वै।**
**दुद्रुवुस्सर्वतो मार्गं[6] वासांसि जगृहेऽच्युतः ॥ ३८ ॥**

**वसित्वाऽऽत्मप्रिये वस्त्रे कृष्णस्सङ्कर्षण स्तदा[7]।**
**शेषाण्य[8]दत्त गोपेभ्यो विसृज्य भुवि कानि चित् ॥ ३९ ॥**

**ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत्।**
**विचित्रवर्णै श्चैलेयै[9] राकल्पैरनुरूपतः ॥ ४० ॥**

---

1. P,V नैवं 2. G,J,M,Ma दृसं रा° 3. G,J,P,V वै; M,Ma च 4. G,J,P,V एवं 5. G,J,K,T,W °तयत् 6. M,Ma मार्गे; K मर्गान् 7. G,J,M,Ma,P,V °था 8. G,J,M,Ma °ण्या° 9. M,Ma श्शैलेयैः।

**श्रीध० यातेति**। राजकुलानि राजकीयाः लुम्पन्ति निस्स्वं कुर्वन्ति ॥ ३६, ३७ ॥

**तस्येति**। वासःकोशान् वस्त्रपुटकान् ॥ ३८-३९ ॥

**तत** इति। वायकः तन्तुवायविशेषः। वेषमलङ्कारम्। चैलेयैः वस्त्रमयै राकल्पैः भूषणैः ॥ ४० ॥

**वीर०** हे बालिशाः! आशु यात। यदि जीवितुमिच्छा तर्हि मैवं प्रार्थनीयम्। यद्येवं प्रार्थ्यते, तर्हि राजकुलानि राजकीयाः दुष्टान्युष्मान् बध्नन्ति बध्नीयुः, घ्नन्ति हन्युः, लुम्पन्ति निस्स्वं कुर्युः ॥ ३६ ॥

इत्थं रजकस्य विकत्थमानस्य सतः भगवान् क्रुद्धः कराग्रेण तस्य शिरः कायादपातयत् ॥ ३७ ॥

तत स्तस्य रजकस्य अनुजीविनः सर्वे वासःकोशान् वस्त्रपुटकान् विसृज्य सर्वतोमार्गान्प्रति दुद्रुवुः पलायितवन्तः। ततो भगवान् घासांस्यादत्त ॥ ३८ ॥

तदा सङ्कर्षणः कृष्णश्च आत्मप्रिये स्वाभीष्टवस्त्रे वसित्वा परिधाय शेषाणि गोपेभ्यः अदत्त अदात्। कानिचिद्वासांसि भुवि विसृज्य त्यक्त्वा, अगादिति शेषः ॥ ३९ ॥

ततः कश्चिद्वायकः तन्तुवायकः प्रीतः प्रीतियुक्तो विचित्रवर्णैश्चैलेयैः[1] वस्त्रमयैराकल्पैः भूषणैर्यथानुरूपं तयो रामकृष्णयोः वेषमलङ्कारमकल्पयत् विदधे ॥ ४० ॥

---

1. T,W °श्चे°

**विज०** जिजीविषा जीवितु मिच्छा। लुम्पन्ति अवच्छेदं कुर्वन्ति। राजकुलानि राज्ञां समूहाः ॥ ३६-३७॥

वासःकोशान् वस्त्राख्यराशीन्। "कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽर्थौघे गृहे तनौ" (वैज.को. 6-5-15) इति च। वस्त्रकरण्डकान्वा ॥ ३८ ॥

वस्त्रे परिधानोत्तरीये विसृज्य ॥ ३९ ॥

वायकः तन्तुवायकः वेषम् अद्भुतालङ्कारम्। एतदेव विशदयति विचित्रेति। विरचिता नानाविधा वर्णा नीलरक्तादयो येषां ते तथा। तैः शैलेयैः धातुभिः आकल्पैराभरणैः ॥ ४० ॥

**नानालक्षणवेषाभ्यां रामकृष्णौ विरेजतुः।**
**स्वलङ्कृतौ[1] बालगजौ पर्वणीव सितेतरौ ॥ ४१ ॥**

**तस्य प्रसन्नो भगवान् प्रादात्सारूप्यमात्मनः।**
**श्रियश्च परमां लोके बलैश्वर्यस्मृतीन्द्रियम्[2] ॥ ४२ ॥**

**तत स्सुदाम्नो भवनं मालाकारस्य जग्मतुः।**
**तौ दृष्ट्वा [3-]सहसोत्थाय[-3] ननाम शिरसा भुवि ॥ ४३ ॥**

**तयोरासनमानीय पाद्यश्चार्घ्यार्हणादिभिः[4]।**
**पूजां सानुगयो श्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ४४ ॥**

**प्राह नस्सार्थकं जन्म पावितञ्च[5] कुलं प्रभो।**
**पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४५ ॥**

1. M,Ma,P,V अ° 2. M,Ma °यान् 3- -3. G,J,M,Ma स समुत्थाय 4. J,M,Ma °ञ्चाथार्ह° 5. P,V °लि०

**श्रीध० [1-]नानेति।** पर्वण्युत्सवे[-1] ॥ ४१ ॥

**तस्येति।** इह लोके परमां श्रियञ्च बलञ्च ऐश्वर्यञ्च स्मृतिञ्चेन्द्रियं तत्पाटवञ्च [2]प्रादात् ॥ ४२-४५ ॥

1- -1 P,V omit 2. P,V omit प्रादात्।

**वीर०** तदा तौ रामकृष्णौ नानाविधवेषाभ्यां विरेजतुः यथा पर्वण्युत्सवे स्वलङ्कृतौ सितेतरौ श्वेतवर्णकृष्णवर्णौ बालगजौ, तद्वत् ॥ ४१ ॥

ततो भगवान्प्रसन्नः तस्य वायकस्य स्वसारूप्यं स्वसाधर्म्यं, मुक्ति मिति यावत्, प्रादात् देहावसाने दास्या मीति सङ्कल्पितवानित्यर्थः। श्रियमित्यादि, अस्य जीवद्दशायामिति शेषः। इह लोके परमां श्रियं बलमैश्वर्यं च स्वविषयकस्मृतिञ्च इन्द्रियं, तत्पाटवञ्च अदात् ॥ ४२ ॥

ततस्सुदाम्नः सुदामाख्यस्य मालाकारस्य गृहं जग्मतुः गतवन्तौ। स च तौ रामकृष्णौ दूरादेव दृष्ट्वोत्थाय अभ्येत्य शिरसा भुवि ननाम नमश्चक्रे ॥ ४३ ॥

तयोरासनमानीयाऽऽदाय समर्प्य, पाद्यञ्च, समर्प्येति शेषः। अर्घ्यार्हणादिभिः स्रगादिभिश्च सानुगयोस्तयोः पूजां चक्रे। अर्हणशब्द उपात्तेतरपूजासाधनसङ्ग्रहार्थः ॥ ४४ ॥

तत स्तौ प्राह च। उक्तिमेवाऽऽह - 'नस्सार्थक' मित्यादिना 'इत्यभिप्रेत्ये' त्यतःप्राक्तनेन। वां युवयोः आगमनेन नोऽस्माकं जन्म सार्थकं जातम्। नः कुलञ्च पावितं पवित्रीकृतम्। पित्रादयश्च मह्यं तुष्टा बभूवुः ॥ ४५ ॥

**विज०** लक्षणं मुद्रा पर्वणी इव पौर्णमास्यमावास्ये इव सितेतरौ श्वेतश्यामौ ॥ ४१ ॥

बलञ्च ऐश्वर्यञ्च स्मृतिश्च इन्द्रियञ्च बलैश्वर्यस्मृतीन्द्रियाः तान्। बलं शरीरशक्तिः, रूपं सौन्दर्यं वा, ऐश्वर्यमणिमादिः स्मृतिः भगवत्स्मरणं, इन्द्रियं ज्ञानेन्द्रियम् ॥ ४२, ४३ ॥

सार्थकं सप्रयोजनम्, पावितं शुद्धीकृतम् ॥ ४४,४५ ॥

**भवन्तौ किल विश्वस्य जगतः कारणं परम्।**
**अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४६ ॥**

**नहि वां विषमा दृष्टि स्सुहृदो र्जगदात्मनोः।**
**समयो स्सर्वभूतेषु भजन्तं भजतो रपि ॥ ४७ ॥**

[1]मामाज्ञापयतं भृत्यं किमहं करवाणि वाम्।
[2]पुंसस्त्वनुग्रहोह्येष [3]भवद्भि र्यन्नियुज्यते ॥ ४८ ॥

[4-]श्रीशुक उवाच[-4]

इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः:
शस्तै [5]स्सुगन्धैः कुसुमैर्माला[6] विरचिता[7] ददौ ॥ ४९ ॥

ताभि स्स्वलङ्कृतौ प्रीतौ रामकृष्णौ सहानुगौ।
प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ५० ॥

सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाऽखिलात्मनि।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५१ ॥

इति तस्मै [8]वरं दत्वा श्रियश्चान्वय[9]वृद्धिनीम्।
बलमायुर्यशः कान्तिं, निर्जगाम सहाग्रजः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
(श्रीविजयध्वजरीत्या एकोनचत्वारिंशोऽध्यायः)

---

1. G,J तावाज्ञापयत°; K साध्वाज्ञापयतं; M,Ma शाध्याज्ञापय मां 2. G,J,M,Ma पुंसोऽत्यनु°; T,W पुंसोह्यनु° 3. P,V भवद्भ्यां य° 4- -4 G,J,K,M,Ma,T,W omits 5. P,V °गन्धि 6. G,J,K,P,V °ला 7. K °ताः 8. P,V वरान् 9. G,J,M,Ma,T,W वर्धिनीम्; P,V वर्धनीम्।

**श्रीध० भवन्तौ** इति। क्षेमाय अभयाय। [1]भवाय उद्भवाय ॥ ४६ ॥

रजकवधेन वायकानुग्रहेण च युवयो र्विषमदृष्टितयाऽनीश्वरता नाऽऽशङ्कनीयेत्याह - **न हीति**। अत्र हेतुः समयो [2]रिति। अत्राऽपि हेतुद्वयम्। सुहृदोरिति, जगदात्मनो रिति च ॥ ४७,४८ ॥

**इतीति**। इति एवं विज्ञापयन् अभिप्रेत्य तन्मतं ज्ञात्वा ॥ ४९-५१ ॥

**इतीति**। अन्वय[3]वर्धनीं [4]वंशवृद्धिमती मित्यर्थः। [5-]अप्रार्थितं श्रीप्रभृतिकं च दत्त्वा ततो विनिर्जगामेति[-5]।

★ स्वैरं चरन्मधुपुरे रजकं निकृत्य कृष्णः प्रदाय च वरा नथ वायकाय।
मालाकृतं समनुकम्प्य चकार कुब्जामृज्वीं धनुश्च सहसा नमयन्बभञ्ज ॥ ५२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

1. V omits भवाय 2. P,V omit इति 3. J,Va °र्धि° 4. J,Va वंशे 5- -5. P,V omit ★ श्रीधरीयोऽयंश्लोकः।

**वीर०** कथं यादवयोरावयोरागमनमात्रेण सर्वमेतत्सम्पन्नम्? तत्राऽऽह - **भवन्ताविति।** विश्वस्य प्रपञ्चस्य भवन्तौ परं कारणं मूलकारणभूतावित्यर्थः। कथ मेवम्भूतयोः कर्मकृतं प्राकृतं जन्म? इत्यत आह - अवतीर्णाविति। अंशेन सङ्कल्परूपज्ञानेन न तु कर्मणेति भावः। इह लोके अवतीर्णौ जन्मनस्सुखदुःखार्थत्वं वारयन् प्रयोजनमाह - क्षेमाय, साधूनामितिशेषः। क्षेमः प्राप्तश्रियः पालनम्, भवोऽलब्धसुखप्रापणम् ॥ ४६ ॥

ननु कश्चिदनुगृह्णन्तौ कश्चिच्चाननुगृह्णन्तावावां नेश्वरौ, किन्तु प्राकृतौ जीवावित्यत आह -नहीति। जगत आत्मनोः, अत एव सुहृदोः। न हि स्वशरीरे कस्य चिदप्यसौहार्दं दृष्टमिति भावः। युवयो र्विषमा दृष्टिर्न विद्यते। तत्र हेतुं वदन्विशिनष्टि। भजन्तं भजतोरनुगृह्णतोरपि समयोः न हि भक्तेष्वनुग्रहो वैषम्यमूलकः। न ह्युपाश्रितार्थदस्य सुरद्रुमस्य वैषम्यमस्ति। वैषम्यपरिहारार्थमेव भजनात्मकं व्याजमपेक्षाथे इति भावः ॥ ४७ ॥

स्वस्मिन्नत्यन्तपारतन्त्र्यमावेदयितुं कैङ्कर्यानुशासनं प्रार्थयते साध्विति। वां युवयो रहं किङ्करवाणि किङ्करोऽस्मीत्यर्थः। अतो भृत्यं मां साधु यथातथा आज्ञापयतम्। एतावतैवाऽहमनुगृहीतो भविष्यामीत्यभिप्रेत्याह - पुंसस्त्विति भवद्भिर्नियुज्यते अनुशिष्यते [1-] इत्येष एव [-1] पुंसो जीवस्याऽनुग्रहः त्वत्कृतानुग्रहः ॥ ४८ ॥

इति इत्थं, विज्ञापयतीति शेषः। हे राजेन्द्र! अभिप्रेत्य तयो रभिमतं ज्ञात्वा प्रीतमानसः सुदामा प्रशस्तैः सुगन्धिभिश्च कुसुमैर्विरचितां[2] मालां[3] ताभ्यां ददौ ॥ ४९ ॥

ताभिर्मालाभिरलङ्कृतौ वरदौ तस्मै प्रपन्नाय शरणागताय वरान् इष्टार्थान् ददतुः ॥ ५० ॥

के ते वराः तेन वृताः यान् ददतुरित्यत आह - सोऽपीति। अखिलस्य चिदचिदात्मकस्य जगतः आत्मनि तस्मिन् भगवति अचलां भक्तिं, भागवतेषु सौहार्दमानुकूल्यं, भूतेषु भगवच्छरीर चेतनाचेतनात्मकेषु दयां स्वार्थनिरपेक्षपर दुःखासहिष्णुत्वरूपां वृतवान् ॥ ५१ ॥

इतीत्थं यथावृतं तस्मै वरं दत्त्वा तेनाऽवृतामन्वयवृद्धिर्नीं वंशवृद्धिमतीं श्रियं तथा बलादींश्च दत्त्वा सहाग्रजः ततो निर्जगाम। तत्र बलं देहधारणसामर्थ्यम् ॥ ५२ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

1- -1. T,W इत्यनेनैव 2. K ° ताः 3. K लाः

**विज०** शाधि शिक्षस्व, कर्तव्यमनुजानीहि चा। एतत्कुर्विति नियुज्यते प्रेर्यत इति यदेषः ॥ ४६-५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

(विजयध्वजरीत्या एकोनचत्वारिंशोऽध्यायः)

# द्विचत्वारिंशोऽध्यायः

(विजयध्वजरीत्या चत्वारिंशोऽध्यायः)

**श्रीशुक उवाच**

अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम्।
विलोक्य कुब्जां युवतीं वराननां पप्रच्छ [1-]यान्तीं प्रहसन्[-1] रसप्रदः ॥ १ ॥

का त्वं वरोर्व[2]तदिहानुलेपनं कस्याङ्गने [3-]वा कथयस्व साधु[-3] नः।
देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते नचिराद्भविष्यति ॥ २ ॥

**सैरन्ध्र्युवाच**

दास्यस्म्यहं [4-]सुन्दर कं[-4]ससम्मता त्रिवक्रना[5]म्नी ह्यनुलेपकर्मणि।
मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥

रूपपेशलमाधुर्य हसितालापवी[6]क्षितैः।
धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥

ततस्तावङ्गरागेण स्व[7]वर्णेतरशोभिना।
सम्प्रा[8]प्तपरभागेन शुशुभाते ऽनुरञ्जितौ ॥ ५ ॥

---

1- -1 M,Ma धात्रीं वचसा 2 G,J,P °तदुहा° 3- -3 M,Ma नयसि नः कथयस्व साधु 4- -4 M,Ma ते सुरवर्य 5 A,B,G,J,K,P,T,V,W मा6 K,T,W वीक्षणैः 7 M,Ma सु 8 M,Ma °प्ता°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्विचत्वारिंशके कुब्जोन्नमनं, धनुषो भिदा। वधस्तद्रक्षिणां कंसारि[1]ष्टं रङ्गोत्सवादि च ॥

**अथेति।** अङ्गविलेपाः चन्दनादयः। गृहीतान्यङ्ग[2-]विलेपानां[-2] भाजनानि यया ताम्। रसप्रदः सुखप्रदः ॥ १ ॥

**का त्वमिति।** हे अङ्गने! हे वरोरु! इति सोपहासं सम्बोध्य[3] पृच्छति - त्वं का? एतदनुलेपनं कस्य वा। उह इति निपातो[4] भ्रूविक्षेपयुक्ते वितर्के। अस्मत्सेवा [5-]सद्यः फलत्येवे[-5]त्याह नचिरादिति ॥ २ ॥

दासीति। तिस्रो श्रीवोरः[6]कटयो वक्रा इति त्रिवक्रेति नाम यस्यास्सा। अनुलेपन[7][8] क्रियायां कंसस्य बहुमता दास्यस्मि॥ ३॥

रूपेति। रूपं अङ्गसौष्ठवं पेशलं च सौकुमार्यं, माधुर्यं च रसिकता हसितं चालापश्च वीक्षितं च तैर्धर्षितात्मा मोहितचित्ता। सान्द्रं घनम् ॥ ४ ॥

तत इति। स्ववर्णेतरशोभिना रामकृष्णयोः वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितुं शीलं यस्य तेन। सम्प्राप्तपरभागेन सम्प्राप्तः परो नाभेरुपरितनो भागो येन सः। सम्प्राप्तः परभागः शोभातिशयो येनेति वा। तेनानुरञ्जितौ ॥ ५ ॥

---

1 P,V °ष्ठ° 2- -2 °लेप भा° 3 J add आ° 4 J °तौ 5- -5 PV सद्यः फलदेत्याह 6 J Va कटयो 7 J,Va omit °न 8 J,Va add साधन

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ त्रिवक्रासमर्पिताङ्गरागानुलिप्ताङ्गः ऋ[1]जूकृतत्रिवक्रो निर्भिन्नचापश्चापशकलघातित तत्पालकस्समुत्पादित कंसभयः पुनस्स्वनिवेशमाविवेशेत्याह - अथेत्यादिना द्विचत्वारिंशेन। अथ मालाकारानुग्रहानन्तरं राजमार्गेण व्रजन् गृहीतानि अङ्गविलेपानां [2-]सुगन्धिचन्दनानां[-2] भाजनानि पात्राणि यया, वरं सुन्दरमाननं यस्याः तां कुब्जां विलोक्य सुखप्रदो भगवान् प्रहसन् तां युवतीं पप्रच्छ ॥ १ ॥

प्रश्नप्रकारमेवाह - का त्वमिति। हे अङ्गने! हे वरोरु! इति सोपहासं सम्बोधनम्। त्वं का इहास्यां पुर्याम् एतदनुलेपनं कस्य वा कस्मै नयसीत्यर्थः। साधु यथार्थं नोऽस्मभ्यं कथयस्व। कस्मैचिद्भवतु, किन्तु उत्तममिदम[3]ङ्गलेपनमावयोरावाभ्यां देहि। ततः अनुलेपनदानेन हेतुना तवाचिरादेव श्रेयो भविष्यति ॥ २ ॥

इत्थमापृष्टा याचिता च सा प्राह - दासीति। हे सुन्दर! अहं कंसस्य सम्मता तस्य दासी त्रिवक्रनाम्नी नित्यमनुलेपकर्मणि तेन नियुक्ताऽस्मि। तिस्रो ग्रीवोरु[4]कटयः वक्राः यस्यास्सा त्रिवक्रेत्यन्वर्थं नाम। [5]कंससम्मतत्वे हेतुमाह- मद्भावितं मया साधितमनुलेपनं भोजपतेः कंसस्यातीव प्रियम्। अतोऽहं तत्सम्मतेति भावः। अतस्तत् राज्ञः प्रियमनुलेपनं वां विना भवन्तौ विना अन्यः को वा पुमानर्हति युवामेवार्हौ इत्यर्थः ॥ ३ ॥

रूपेति। भगवत इत्यादिः। भगवतो रूपादिभिः मोहित आत्मा चित्तं यस्यास्सा सान्द्रं तदनुलेपनमुभयोः ददौ। तत्र रूपमङ्गसौष्ठवम्। पेशलं सौकुमार्यम्। माधुर्यं रसिकत्वम् ॥ ४ ॥

तत इति। स्ववर्णेतरशोभिना स्वस्याङ्गरागस्य यो वर्णः वराहरुधिरवल्लोहितवर्णः तस्मादितरौ यौ वर्णौ तयोश्शरीरगतौ विशुद्धौ सितासितवर्णौ ताभ्यां शोभिना अत एव प्राप्तः परभागो महातिशयो येन तेन अनुरञ्जितौ तौ रामकृष्णौ शुशुभाते।

यद्वा, तौ रामकृष्णौ स्वदेहगतविशुद्धसितासितवर्णाभ्याम् इतरेणेतरवर्णेन अत एव शोभिना अत एव च सम्प्राप्तमहातिशयेन। यद्वा, सम्प्राप्तः परः उत्कृष्टः भागः शरीरैकदेशो येन तेनानुरञ्जितावित्यर्थः ॥ ५ ॥

---

1. T,W ऋज्वी° 2- -2. T omits 3. K मनुलेप° 4. T,W °कट्यः 5. K °त्व

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ निर्गमनानन्तरं धात्रीं सैरन्ध्रीं दृष्ट्वा पप्रच्छेत्यन्वयः। गृहीताङ्गविलेपभाजनां गृहीतचन्दनपात्रां कुब्जां वक्रशरीरां वयसा युवतीं तरुणीं वचसा रसप्रदः आनन्दप्रदः कामरागप्रदो वा ॥ १ ॥

हे वरोरु! साधु सत्यम्। "निर्दोषे पेशले सत्ये साधुशब्दं प्रयुञ्जते" इति ॥२॥

यच्छास्त्रविहितं ननु तदेव दासी अनुलेपकर्मणि चन्दनसौरभ्यकर्मणि सम्मता अविप्रतिपन्ना। अन्यतमः अन्येष्वपि श्रेष्ठतमः ॥ ३ ॥

धर्षितात्मा अस्ववशमनाः वशीकृतमनाः वा ॥ ४ ॥

सुवर्णादितरद्रजतं तेन कर्पूरो लक्ष्यते। कर्पूरसम्पर्केण शोभा परिमलातिशयलक्षणाऽस्यास्तीति सुवर्णेतरशोभिना भगवच्छरीरकान्तिमपेक्ष्य सम्प्राप्तः अपरभागो गुणोत्कर्षराहित्यं येन स तथा, तेन ईषद्गुणोत्कर्षं प्राप्तेन वा। भगवदङ्गसङ्गेन सम्यगुत्कर्षं प्राप्तेन वा। अनुरञ्जितौ स्वकान्त्यनुकूलरागशोभां प्राप्तौ ॥ ५ ॥

प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम्।
ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम् ॥ ६ ॥

पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुलो[1]त्तानपाणिना।
प्रगृह्य चि[2]बु[3]केऽध्यात्ममुदनीनमदच्युतः ॥ ७ ॥

सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा।
मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥

ततो रूपगुणौदा[4]र्यसम्प[5]न्ना प्राह केशवम्।
उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥ ९ ॥

एहि वीर गृहं या[6]मो न त्वां त्यक्तुमिहोत्सहे।
त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ! ॥ १० ॥

---

1. G,J,K °ल्यु° 2. G,J,M,Ma,P,V चु° 3. M,Ma °के ह्रस्या 4. T,W °रीयं समा° 5. M,Ma सस्मयं 6. P,V यावो

**श्रीध० प्रसन्न** इति। स्वदर्शने सद्यः फलं दर्शयन् ॥ ६ ॥

**पद्भ्यामिति**। तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे अङ्गुल्यावुत्ताने उन्नते यस्मिन्पाणौ तेन चुबुके मुखस्याधोभागे [1] धृत्वा अध्यात्मं देहमुन्नमयामास ॥ ७ ॥

**सेति**। तदैव [2] ऋजु समानमङ्गं यस्याः सा। [3-] बृहत्यौ श्रोणी पयोधरौ च यस्यास्सा। मुकुन्दस्पर्शनादिति मु[4]ख्यं कारणम् ॥ ८,९,१० ॥

---

1. P,V omit धृत्वा, 2. J,P,V ०व 3- -3. P,V बृहन्तौ श्रोणिपयोधरौ 4 P,V ०ख्य

**वीर०** "श्रेयस्ततस्ते नचिराद्भविष्यति" (भाग. 10-42-2) इत्युक्तं श्रेयश्चकारेत्याह - **प्रसन्न इति**। स्वदर्शनफलं तस्याः दर्शयन् तां त्रिवक्रामृज्वीं कर्तुम् अवक्रां कर्तुं मनश्चक्रे मनस्कारपूर्वकमृज्वीं चकारेत्यर्थः ॥ ६ ॥

तत्प्रकारमेवाह - **पद्भ्यामिति**। तस्याः प्रपदे पादाग्रद्वयं स्व[1]पद्भ्यामापीड्य आक्रमणेनावष्टभ्य द्वे अङ्गुली उत्ताने उन्नते यस्मिन् तथाभूतेन पाणिना तस्याश्चिबुके मुखस्याधोभागे गृहीत्वा अध्यात्मं देहम् उदनीनमत् उन्नमयामास ॥७॥

सा तदैव ऋजु समानम् अनुरूपं चाङ्गं यस्याः बृहत्यौ श्रोणी पयोधरौ च यस्याः, तथाभूता मुकुन्दस्पर्शनान्निदानात् सद्य एव प्रमदोत्तमा बभूव ॥ ८ ॥

किञ्च रूपादिसम्पन्ना सती जातः हृच्छयः कामो यस्यास्सा। अत एव स्मयन्ती मुकुन्दमुत्तरीयाग्रमाकृष्य प्राह। तत्र रूपं सौन्दर्यम्। गुणा यौवनादयः। औदार्यं गत्यवलोकनादिश्रैष्ठ्यम् ॥ ९ ॥

उक्तिमेवाह - **एहीति**। हे वीर! अस्मद्गृहं प्रत्यागच्छ, यामः। इह त्वां त्यक्तुं नोत्सहे न शक्नोमि। त्वयोन्मथितं क्षोभितं चित्तं यस्याः तस्या मम प्रसीद। हे पुरुषर्षभ! ॥ १० ॥

---

1. T,W स

**विज०** ऋज्वीकर्तुं समीकर्तुं आत्मनो दर्शने यत्फलं तद्दर्शयन् एष्यत्कंसहननं लोकान् प्रत्याययन्निति भावः ॥ ६ ॥

कुब्जायाः प्रपदे पादाग्रे स्वपादाभ्यामाक्रम्याऽवष्टभ्य द्वे अङ्गुले उत्ताने यस्मिन् पाणौ तेन द्व्यङ्गुलोत्तानपाणिना चुबुके मुखाधःप्रदेशे आस्यं प्रगृह्य उदनीनमत् उन्नमयाञ्चकार। ऊर्ध्वमाकृष्टवानित्यर्थः ॥ ७, ८ ॥

उत्तरीयान्तम् उत्तरीयवस्त्राञ्चलं सस्मयं समदं हृच्छयः कामः ॥ ९ ॥

त्वया कारणेन उन्मथितचित्तायाः विलोलितमनसः ॥ १० ॥

एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः।
मुखं वीक्ष्याऽनुगानां[1] च प्रहसंस्तामुवाच ह ॥ ११ ॥

एष्यामि ते गृहं सुभ्रु[2] पुंसामाधिविकर्शनम्।
साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ १२ ॥

विसृज्य वाण्या माध्व्या तां व्रजन्मार्गे वणिक्पथे[3]।
नानोपायनताम्बूल[4] स्रग्गन्धैस्साग्रजोऽर्चितः ॥ १३ ॥

★तद्दर्शनस्मरक्षोभादात्मानं नाविदन् स्त्रियः।
विस्रस्तवस्त्र[5]कबरवलया लेख्यमूर्तयः ॥ १४ ॥

ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः।
तस्मिन्प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १५ ॥

पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिम[6]त्।
वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ १६ ॥

---

1. J गोपानां 2. G,J °भ्रूः 3. G,J,M,Ma °थैः 4. G,J,K,T,W °लैः ★ This verse is not found in M,Ma edns. 5. G,J,K, °वासः 6. J °तम्

**श्रीध०** **एष्यामीति**। आधिविकर्शनं मनःपीडाशमनम्। कंसवधेन स्वयं[1] साधितोऽर्थः सुहृदां प्रयोजनं येन सः। अगृहाणा मकृतदाराणां पान्थानां प्रवासिनां परमयनमाश्रयस्त्वम् ॥ ११, १२ ॥

**विसृज्येति**। मधुरया गिरा तां प्रस्थाप्य व्रजन् वणिक्पथे[2] वणिग्भिरर्चितः ॥ १३ ॥

**तदिति**। लेख्याः चित्रन्यस्ता इव मूर्तयो यासां ताः ॥ १४ ॥

**तत इति**। धनुर्मखशालां पृच्छन् ॥ १५ ॥

**पुरुषैरिति**। प्रसह्य बलात्कारे[3]ण ॥ १६ ॥

---

1. P,V omit स्वयं 2. P,V °थैः 3. J,Va omit कारेण

**वीर०** इत्थं तथा स्त्रिया रामस्य पश्यतस्सतः याच्यमानो भगवाननुगानां गोपानां, चशब्दाद्रामस्य च मुखमवलोक्य प्रहसन् तामुवाच ॥ ११ ॥

उक्तिमेवाह - **एष्यामीति।** हे सुभ्रु! साधितः कंसवधरूपोऽर्थः प्रयोजनं येन तथाभूतः। पुंसामाधिविकर्शनं कामप्रयुक्तमनः पीडाशमनं तव गृहं प्रत्यागमिष्यामि। अगृहाणां न विद्यन्ते गृहाः अस्यां पुर्यां येषां तेषां पान्थानाम् अस्माकं त्वमेव परायणम् उपभोग्येत्यर्थः ॥ १२ ॥

एवंविधया माध्व्या मधुरया वाण्या तां विसृज्य उत्तरीयान्तं त्याजयित्वेति भावः। ततो मार्गे व्रजन् ततो वणिक्पथे प्रविष्टः तत्र नानाविधैरुपायनैः श्रेष्ठवस्तुभिः ताम्बूलादिभिश्च सरामस्समर्चितो बभूव ॥१३॥

तदा तस्य भगवतो दर्शनेन यः स्मरक्षोभस्तेन स्त्रियः आत्मानं देहं नाविदन् नानुसमदधत। वेदनाभावमेव दर्शयन्विशिनष्टि विस्रस्ताः वासःप्रभृतयो यासां ताः लेख्यवल्लिखितप्रतिमावन्निश्चला मूर्तयो यासां ताः ॥ १४ ॥

ततो धनुषः स्थानं धनुर्मखशालां पौरान् पृच्छमानोऽच्युतः तस्मिन्धनुषः स्थाने प्रविष्टः ऐन्द्रं धनुरिवाद्भुतं बहुभिः पुरुषैः गुप्तं अर्चितं परमा ऋद्धिः स्वर्णालङ्कारसम्पत्तिः अस्यास्तीति तथा तद्धनुः दृष्टवान्। तदा तत्रस्थैः पालकैः बहुधा वार्यमाणोऽपि कृष्णः प्रसह्य बलात्तद्धनुः आददे ॥ १५,१६ ॥

**विज०** हेत्यनेनाऽयमितिहासो लोके प्रवर्ततामिति सूचयन् तामाहेति ज्ञाप्यते इति ॥ ११ ॥

तरुणानां पुंसाम् आधिविकर्शनं मनःपीडापरिहारनिमित्तं गृहमागमिष्यामि, किन्तु किञ्चित्कार्यमस्तीत्याह-साधितार्थ इति। अर्थः कंसवधलक्षणः। त्वं सर्वथा परिहारार्था नेत्याह - अगृहाणामिति। अगृहाणां गृहरहितानां वनवासिनामित्यर्थः। पान्थानां पथिकानां नोऽस्माकं त्वं परायणं उत्तमाश्रयः। अनेनाऽसङ्गानामीश्वराणामस्माकं भक्ता एव पूजादिनाऽऽश्रयभूता इति दर्शितम् ॥ १२ ॥

माध्व्या मधुरया वणिजां पन्थानो येषां ते तथा तैः दर्शनार्थमागतैः पण्यवीथिकास्थितैः वैश्यैश्चार्चितः नानाविधोपायनं ताम्बूलादिकं येषां ते तथा तैः ॥ १३ ॥★

पृच्छमानः पृच्छन् ॥ १४,१५,१६ ॥

---

★ As the 14th verse is not taken by Vijayadhvaja, there is no commentary for the same.

**करेण वामेन[2] सलीलमुद्धृतं सज्यं[1] च कृत्वा निमिषेण पश्यताम्।**
**नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥ १७ ॥**

**धनुषो भज्यमानस्य शब्दः खं[3] रोदसी दिशः।**
**पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ १८ ॥**

तद्रक्षिणस्सानुचराः[4] कुपिता[5] आततायिनः।
ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति ॥ १९ ॥

अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ।
क्रुद्धौ धनुष[6] आदाय शकले तान्विजघ्नतुः[7] ॥ २० ॥

बलश्च कंसप्रहितं हत्वा शालामुखात्ततः।
निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥ २१ ॥

तयोस्तदद्भुतं वीर्यं निशाम्य[8] पुरवासिनः।
तेजः प्रागल्भ्य[9]रूपञ्च[10] मेनिरे विबुधोत्तमौ ॥ २२ ॥

तयोर्विचरतोस्स्वैरमादित्योऽस्तमुपेयिवान्।
कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ २३ ॥

---

1. P,V सज्जं 2. T,W प्र 3. T,W °सं जगाम ह। 4. T,W तं र° 5. K,T,W रुषिता 6. G,J धन्वन 7. G,J,M,Ma,P,V तांश्च ज° 8. M,Ma °श° 9. G °ल्भ्यं 10. P,V रूपे च

**श्रीध०** **करेणेति**। निमिषेणातिशीघ्रम्। मदकरी मत्तहस्ती ॥ १७,१८ ॥

**तदिति**। गृह्यतां बध्यतामिति वदन्तो जिघृक्षवः आवृतवन्तः ॥ १९ ॥

**अथेति**। न केवलं क्रुद्धौ, किन्तु भग्नस्य धनुषः शकले गृहीत्वा जघ्नतुश्चेति ॥ २० ॥

**बलमिति**। परतः प्रातर्गन्तव्यमिति शालामुखादेव पुनर्निष्क्रम्य ॥ २१ ॥

**तयोरिति**। तेजः प्रभावम्, प्रागल्भ्यं धृष्टताम् ॥ २२ ॥

**तयोरिति**। शकटं शकट[1]विमोचनस्थानम् ॥ २३ ॥

---

1. J,Va टाव

**वीर०** उरुक्रमो भगवान्सलीलं यथा तथा, वामेन करेणोद्धृतं धनुस्सज्यं समारोपितज्याकं कृत्वा निमिषेणाऽऽशु नृणां पश्यतां सतां विकृष्य मध्यतो बभञ्ज भग्नमकरोत्, यथा मत्तगजः इक्षुदण्डं तद्वत् ॥ १७ ॥

तदा भज्यमानस्य धनुषो ध्वनिः खमाकाशं रोदसी द्यावापृथिव्यौ दिशश्च पूरयामास, यं शब्दं श्रुत्वा कंसः त्रासं भयं प्राप्तवान् ॥ १८ ॥

तस्य धनुषो रक्षिणः पालकाः सानुचराः आततायिनः जिघांसया गृहीतशस्त्राः जिघृक्षवः गृह्यतां बध्यताम् इति ब्रुवाणाः आवव्रुः आवृतवन्तः ॥ १९ ॥

तानागतान् दुरभिप्रायात् जिघांसूनवलेक्य रामकृष्णौ धनुषः शकले आदाय ताभ्यां तान् जघ्नतुः ॥ २० ॥

तदा कंसेन प्रेषितं सैन्यं हत्वा ततः शलाद्वारान्निर्गत्य तत्र तत्र पुरसम्पदो निरीक्ष्य हृष्टौ चेरतुः ॥२१॥

तयोः रामकृष्णयोः तद्धनुर्भञ्जनाद्यात्मकं कर्म निशाम्य दृष्ट्वा श्रुत्वा च, तेजःपराभिभवनसामर्थ्यं, प्रागल्भ्यं धृष्टता-रूपं तेषां समूहः, तेनानितरसाधारणेन तौ देवोत्तमौ मेनिरे अमन्यन्त ॥ २२ ॥

स्वैरं यथा तथा तयोः विचरतोस्सतोः सूर्योऽस्तं प्राप्तः , ततः तौ गोपैस्सह पुरा च्छकटं शकटावमोचनस्थानं [1-] नन्दादीनां विश्रमस्थानं [-1] इति यावत्, ईयतुराजग्मतुः ॥ २३ ॥

---

1- -1. T omits

**विज०** ज्यया मौर्व्या सहितं सज्यं निमिषपरिमितेन कालेन अनिमिषेण निमेषणरहितेन वा, स्तिमितपक्ष्मणा नेत्रेणेत्यर्थः। मदकरी नित्यमदजलस्रावी गजः, मदयुक्तो गजो वा ॥ १७ ॥

रोदसी द्यावापृथिव्यौ ॥ १८ ॥

आततायिनः आयुधान्यातत्य विस्तृत्य आगच्छन्तः ॥ १९ ॥

धनुषः द्वे शकले खण्डे आदाय ॥ २० ॥

शालामुखाद्धनुर्गृहद्वारात्॥ २१ ॥

वीर्यं पराक्रमं, तेजः बलं प्रभावं वा, प्रागल्भ्यं धाष्टर्यं, रूपं सौन्दर्यं एकवद्भावादेकवचनं, तेजःप्रागल्भ्ययो रूपं चक्षुर्ग्राह्यमिव स्थितमित्यर्थः ॥ २२ ॥

अस्तं अस्तगिरिं शकटमुपशल्यं स्वावस्थानम् ॥ २३ ॥

***गोप्यो मुकुन्दविगमे विरहातुरा या आशासताऽशिष [1] ऋता मधुपुर्यभूवन् [2]।**
**सम्पश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरांस्तु भजत श्चकमे नु यच्छ्रीः ॥ २४ ॥**

**अवनिक्ता [3] ङ्घ्रियुगलौ [4] भुक्त्वा क्षीरोपसेचनम्।**
**ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ २५ ॥**

कंसस्तु [5] धनुषो [5] भङ्गं रक्षिणां स्वबलस्य च।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ २६ ॥

दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः।
बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७ ॥

अदर्शनं स्वशिरसः प्रतिरूपे च [6] सत्यपि।
असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां [7] तथा ॥ २८ ॥

छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः।
स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २९ ॥

स्वप्ने प्रेतपरिष्वङ्गः खरयानं [8] विषादनम्।
यायान्नलदमाल्येक [9] स्तैलाभ्यक्तो दिगम्बरः ॥ ३० ॥

---

* This verse is not found in MMa edns 1 GJ °रान्नु 2  2 GJ °मेऽयन श्रीः PV °मे नु या श्रीः TW °मे नु य श्रीः 3 TW °सिक्त MMa °निज्या° 4 MMa °त 5  5 PV °तद्धनुर्भङ्ग 6 MMaTW °षु सत्स्वपि 7 K,TW °षामपि 8 GJ विषा° 9 MMa °भ्यक्तो

**श्रीध० गोप्य** इति। मुकुन्दस्य विगमे व्रजान्निर्गमनसमये या आशिष आशासत "सुख प्रभाता [1] रजनीयम्" (भाग 10 39 23) अद्य ध्रुव [2] तत्र दृशो भविष्यते (भाग [2] 10 39 25) इत्यादि यदुक्तवत्यः ताः ऋताः सत्या बभूवुः। पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मी शोभाम्। कथम्भूतस्य गात्रस्य ? नु अहो इतरान्ब्रह्मादीन् हित्वा यदयनमाश्रय श्रीः कामयामास। या गात्रलक्ष्मीमिति वा ॥ २४ ॥

**अवनिक्तेति**। अवनिक्त क्षालितमङ्घ्रियुगल ययोस्तौ। क्षीरमिश्रमन्न भुक्त्वा सुख न्यवसताम् ॥ २५ ॥

**कस** इति। पर केवल गोविन्दरामयोर्विक्रीडित तत्, न तु पराक्रमः कश्चित् ॥ २६ ॥

**दीर्घेति**। उभयथा स्वप्नजागरितभेदेन प्रत्येक मृत्योर्दौत्यकराणि च। तथा च मन्त्रः- "इत्थादुलूक आपस्तत् (श्चापघ्नन्) हिरण्याक्षो अयोमुखः। रक्षसा दूत आगतः तमितो नाशयाऽग्ने" इत्यादि। तथा - "यदेतद्भूतान्यन्वाविश्य दैवीं वाच वदसि" इत्यादिश्च ॥ २७ ॥

तान्येव [3] दर्शयति **अदर्शनमिति** श्लोकत्रयेण - जलादौ प्रतिरूपे दृश्यमानेऽपि स्वशिरसः तत्रादर्शनम्। असत्यपि द्वितीये चक्षुषोऽन्तर्धानेऽङ्गुल्यादौ ज्योतिषा चन्द्रादीना द्वित्वम् ॥ २८ ॥

**छिद्रेति**। छायायां प्रतिबिम्बे छिद्रप्रतीतिः। पिहितकर्णपुटकयोः[4] अन्तः श्रूयमाणो ध्वनिः[5] प्राणघोष स्तस्याऽश्रवणम्। वृक्षेषु स्वर्णवर्णप्रतीतिः। रजःकर्दमादिषु स्वपदानामदर्शनम्। एतानि जागरित[6]जानि दुर्निमित्तानि ॥ २९ ॥

स्वाप्नान्याह - **स्वप्न** इति। प्रेतैः मृतैः परिष्वङ्गः खरमारुह्य यानम्। विषभक्षणम्। नलदमाली जपाकुसुममाली यायादिति यत् तदप्येकं दुर्निमित्तमिति ॥ ३० ॥

---

1. P,V omit ताः 2- -2. P,V गात्रलक्ष्मीं देहशोभाम् 3. J,Va omit एव 4 °स्य यीऽन्तः 5. J,Va add स 6. J,Va °तानि

**वीर०** मुकुन्दस्य विगमे व्रजान्निर्गमनवेलायां विरहेणाऽऽतुरा गोप्यः या या आशिषः आशासत "सुखं प्रभाता रजनीयम्" (भाग 10-39-23) "अद्य ध्रुवं तत्र दृशो भविष्यते" (भाग 10-39-25) इत्यादिकमुक्तवत्यः। तास्सर्वाः आशिषो मधुपुर्यां पुरुषभूषणस्य गात्रलक्ष्मीं पश्यतां जनानाम् ऋतास्सत्याः बभूवुः। कथम्भूतस्य गात्रस्य? भजतः सेवमानानितरान्ब्रह्मादीन् हित्वा श्रीः महालक्ष्मीः यद्गात्रमाश्रयं चकमे अचीकमत। यामिति पाठे यां गात्रलक्ष्मीमित्यर्थः। यमिति पाठे यं पुरुषभूषणमिति सम्बन्धः ॥ २४ ॥

अवनि[1]क्तं क्षालितमङ्घ्रियुगलं ययोस्तौ क्षीरमुपसेचनं यस्य तदन्नं क्षीरविमिश्रान्नमित्यर्थः। भुक्त्वा [2]परेद्युः कंसचिकीर्षितं ज्ञात्वा तौ[3] च सुखं यथा तथा तां रात्रिमूषतुः उषितवन्तौ ॥ २५ ॥

कंसस्तु रामकृष्णयोः केवलं क्रीडारूपं धनुर्भङ्गं, तद्रक्षिणां स्वबलस्य च वधं निशम्याऽऽकर्ण्य भीतो दीर्घप्रजागरः अलब्धनिद्रः दुःखितो बहूनि, उभयथा स्वाप्नजागरितभेदेन स्वाप्नानि जागरितानि च मृत्योः दौत्यकराणि दुष्टानि निमित्तानि अचष्ट ददर्श ॥ २६,२७ ॥

तान्येव कानिचिदाह त्रिभिः[4]। जागरितानि तान्याह - **अदर्शन**मिति द्वाभ्याम्। वियज्जलादौ प्रतिरूपे दृश्यमाने सति स्वशिरसः तत्रादर्शनम् असत्यपि द्वितीये ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

छायायां छिद्रप्रतीतिः [5]कर्णरन्ध्रयोः पिहितयोस्सतोरन्तश्श्रूयमाणो यो ध्वनिः स प्राणघोषः तस्याऽश्रवणं, वृक्षेषु स्वर्णवर्णप्रतीतिः, रजःकर्दमादिषु स्वपदानामदर्शनमित्यादीनि जागरितानि दुर्निमित्तानि ॥ २९ ॥

अथ स्वाप्नान्याह - **स्वप्न** इति। प्रेतानां मृतानां परिष्वङ्गः आलिङ्गनं, खरमारुह्य यानं, बिसभक्षणं, नलदमाली जपाकुसुममाली तैलेन अभ्यक्तः दिगम्बरश्चैकोऽसहायो यायात् गच्छेदिति यत्तदेकं दुर्निमित्तमिति ॥ ३० ॥

---

1. T,W सिक्तं, 2. T,W add अ० 3. T,W omit तौ 4. T,W add तावत् 5. T,W omit कर्ण

**विज०** क्षीरोपसेचनं क्षीरोपसेचकभूयिष्ठमन्नम् ॥ २४,२५ ॥

धनूरक्षिणां वधं प्रेषितस्वबलस्य वधं च, किंकृतमिति तत्राऽऽह - गोविन्देति। गोविन्दरामाभ्यां विक्रीडितम्॥ २६॥

दीर्घः प्रजागरः निद्राराहित्यं यस्य स तथा अचष्ट अपश्यत्। उभयथा दैहिकानि बाह्यानि च। यद्वा जाग्रति स्वप्ने च दौत्यकराणि सूचकानि ॥ २७ ॥

तान्येव व्यनक्ति - **अदर्शनमित्यादिना।** प्रतिरूपेषु छायालक्षणेषु सत्स्वपि स्वशिरसोऽदर्शनं, द्वितीये चन्द्रादावसति अविद्यमानेऽपि ज्योतिषां चन्द्रादीनां द्वैरूप्यं द्विमूर्तित्वं द्वौ चन्द्रावित्यादि। बहुवचनेन दीपादयो ग्राह्याः द्विशिखात्वमित्यादिना ॥ २८ ॥

छायायां छिद्रप्रतीतिः सुषिरदर्शनं, कर्णे प्रतिष्टब्धे करेण प्राणघोषस्य शरीरवायोः प्रणवमुच्चरतो मन्द्रध्वनेरनुपश्रुतिश्रवणं वृक्षेषु स्वर्णच्छायादर्शनं पृथिव्यां स्वपदानां पादलाञ्छनानामदर्शनम् ॥ २९ ॥

प्रेतपरिष्वङ्गः मृतालिङ्गनं स्वप्ने विसादनं पद्मकन्दभक्षणलक्षणं "नलदमाली दक्षिणामुखो व्राजयति" इति श्रुतिः। "पद्ममालां शिरःकृत्वा यो गच्छेद्दक्षिणामुखः। एवं पश्यन्निशि स्वप्ने तत्क्षणान्मृत्युमेष्यति" इति स्वप्नदर्शने इति। यद्वा चक्ररक्तपुष्पं मृणालशून्यं वर्षासु जायमानं नलदं तत्कृतमालाधारी। "अभयं नलदं सेव्यममृणालं जलाशयम्" (अम.को. 2-210) ॥ ३० ॥

अन्यानि चेत्यभूतानि स्वप्न[1]जागरितानि च।
पश्यन्मरणसन्त्रस्तो निद्रां लेभे न चिन्तया ॥ ३१ ॥

व्युष्टायां निशि कौरव्य! सूर्ये चा[2]द्भ्य स्समुत्थिते।
कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३२ ॥

आनर्चुः पुरुषा[3] रङ्गं तूर्यभेर्यश्च जघ्निरे[4]।
मञ्चाश्चाऽलङ्कृता स्स्रग्भिः पताकाः चेलतोरणैः ॥ ३३ ॥

तेषु पौरा[5] जानपदा ब्रह्मक्षत्त्रपुरोगमाः।
यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३४ ॥

कंसः परिवृतोऽमात्यै राजमञ्च [6]उपाविशत्।
मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३५ ॥

वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च।
मल्लास्स्वलङ्कृता दृप्ताः सोपाध्यायाः स्स[7]माविशन् ॥ ३६॥

चाणूरो मुष्टिकः कूट श्शल स्तोस[8]ल एव च।
त[9] आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३७ ॥

**नन्दगोपादयो गोपाः भोजराजसमाहुताः।**
**निवेदितोपायनास्ते एकस्मिन्मञ्च आविशन् ॥ ३८ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे मल्लरङ्गोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः॥ ४२ ॥

---

1 K,T,W स्वा 2 M,Ma चाऽभिस० 3. K,T,W स्खल० 4 G,J,M,Ma चै० 5. K ०वेशं 6 K,T,W मु० 7 J समासत; T,W उपाविशन् 8. G,J,M,Ma ०शल 9 K,T,W तदासे०

**श्रीध० व्युष्टायामिति।** व्युष्टायाम्[1] कष्टेन कथञ्चित्प्रभातायां पुनः सूर्ये चाऽद्भ्यः समुत्थित इति। तथा च श्रुतिः[2-]"अद्भ्यो वा" (छान्दो.उ. 7-10-2) इति[-2]। "य उदगान्महतोऽर्णवात् विभ्राजमानः सरिरस्य मध्यात् समा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु" इति च ॥ ३१ - ३३ ॥

**तेष्विति।** यथोपजोषं यथासुखम् ॥ ३४,३५ ॥

**वाद्यमानेष्विति।** मल्लतालाः[3] उत्तरे[4] उपरि उच्चैः श्रूयन्ते येषु तेषु तूर्येषु। उपाध्यायाः[6] मल्लाचार्याः[7] ॥ ३६॥

**चाणूर इति।** उपस्थानं मल्लरङ्गम् ॥ ३७॥

**नन्देति।** समाहुताः समाहूताः। निवेदितान्युपायनानि यैस्तै ॥ ३८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

1 J,Va omit व्युष्टायाम् 2- -2. P,V omit 3 J,Va लः 4. J,Va रः 5. J,Va ०ते 6 P,V ०यः 7. JV ०र्यः

**वीर०** अथ[1] अन्यान्यपि इत्थंभूतानि स्वाप्ननि जागरितानि च दुष्टानि निमित्तानि पश्यन् तत्सूचितमरणादतीव भीतः चिन्तया निद्रां न लेभे न प्राप्तवान् ॥ ३१ ॥

**हे कौरव्य! कथञ्चिन्निशि व्युष्टायां प्रभातायां सत्याम् अद्भ्यस्सकाशात् सूर्ये समुत्थिते सति** "य उदगान्महतोऽर्णवात् विभ्राजमानस्सरिरस्य मध्यात्समावृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु" इति श्रौतीं प्रसिद्धिमुपजीव्य अद्भ्यस्सूर्ये समुत्थिते इत्युक्तम्। मल्लानां क्रीडैव महानुत्सवः तं, यद्वा मल्लानां क्रीडार्थं यस्तेषामुत्सवः मङ्गलस्नानादिरूपः तं कंसः कारयामास ॥ ३२ ॥

पुरुषा भृत्याः रङ्गं मल्लक्रीडास्थानमानर्चुः, मार्जनचन्दनाम्भस्सेचनादिभिरिति शेषः। तूर्याणि भेर्यो भेरीश्च जघ्निरे ताडितवन्तः। स्रग्भिः पताकाभिश्चेलैश्चित्रपटैस्तोरणैश्च मञ्चाः दिदृक्षूणामुपवेशस्थानान्युच्चानि स्वलङ्कृताः ॥ ३३ ॥

ततस्तेषु मञ्चेषु ब्राह्मण क्षत्रियादयः पौराः पुरवासिनः जानपदा देशवासिनश्च जनाः यथोपवेशं राजाज्ञामनतिक्रम्य। यथोपजोषम् इति पाठे यथासुखं, विविशुः, तथा राजानः ये[2] देशान्तरेभ्यस्समाहूताः ते राजानः कृतानि परिगृहीतान्यासनानि सिंहासनानि यैस्तथाभूताः ॥ ३४ ॥

कंसस्तु मण्डलेश्वरमध्यस्थः विदूयता तप्यमानेन हृदयेन, सहित इति शेषः, अमात्यैर्मन्त्रिभिः परिवृतो राजमञ्चमखण्डमण्डलेश्वरोपयोज्यं मञ्चमुपाविशत् ॥ ३५ ॥

तदा मल्लानां तालैः करतलैः भुजास्फालनम् उत्तरः उच्चैश्श्रूयमाणो येषु तेषु तूर्येषु वाद्यमानेषु सत्सु उपाध्यायाः मल्लाचार्याः तैस्सहितास्सर्वे मल्लास्स्वलङ्कृतास्समाविशन् ॥ ३६ ॥

तदा चाणूरादयो मल्लाः वल्गुवाद्यैः मधुरवाद्यैः प्रहर्षिताः तदुपस्थानं मल्लरङ्गम् आसेदुः आजग्मुः ॥ ३७ ॥

तदा नन्दादयो गोपाश्च भोजराजेन कंसेन आहूताः, निवेदितान्युपायनानि यैस्ते एकस्मिन्मञ्चे आविविशुः ॥ ३८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

1. T,W omit अथ 2. T,W omit ये

**विज०** अन्यानि "वनभूकर्णसप्तानां पञ्चनेत्रं विनासिका। एकजिह्वेति पञ्चत्वलक्षणं विबुधा विदुः" इत्यादीनि ॥ ३१ ॥

निशि व्युष्टायां निवृत्तायां अभिसमुत्थिते, उदयपर्वतादिति शेषः ॥ ३२ ॥

पणवगोमुखादि तूर्यम् ॥ ३३ ॥

ब्रह्माणः ब्राह्मणाः क्षत्रा मण्डलेश्वराः पुरोगमा मुख्या येषां ते तथा यथोपजोषं यथासुखम्। राज्ञो विशिनष्टि-राजान इति ॥ ३४ ॥

विदूयता तप्यमानेन ॥ ३५ ॥

मल्लानां तालशब्दोत्तरेषु उच्चैः श्रावितताल शब्देष्वित्यर्थः। उपाध्यायाः मल्लशिक्षाचार्याः तैस्सहिताः ॥ ३६ ॥

कांश्चिन्मल्लान्नाम्ना निर्दिशति - **चाणूर** इति। ये चाणूरप्रभृतयः त एव मल्लेषु प्रधानाः, त एवमुपस्थानं रङ्गसमीपम् ॥ ३७ ॥

भोजराजेन समाहूता ये नन्दादिगोपाः ते किमकुर्वन्निति तत्राऽऽह - नन्दगोपादय इति। निवेदितोपायनाः दत्तप्राभृताः॥ ३८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

(विजयध्वजरीत्या चत्वारिंशोऽध्यायः)

---

# त्रिचत्वारिंशोऽध्यायः

## (विजयध्वजरीत्या एकचत्वारिंशोऽध्यायः)

[1]श्रीशुक उवाच[-1]

अथ कृष्णश्च रामश्च कृतशौचौ परन्तप[2]! ।
मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः॥ १ ॥

- कुवलयापीडाख्यगजतन्निषादिवधकथा -

रङ्गद्वारं[3] समासाद्य तस्मिन्गजमवस्थितम्[4]।
[5]अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठ प्रचोदितम्॥ २ ॥

बद्ध्वा परिकरं शौरिस्समूह्य[6] कुटिलालकान्।
उवाच हस्तिपं वाचा मेघनादगभीरया॥ ३ ॥

अम्बष्ठाम्बष्ठ! मार्गं नो[7] देह्यपक्रम[8] मा चिरम्।
नो चेत्सकुञ्जरं त्वाऽद्य नयामि यमसादनम्॥ ४ ॥

एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं[9] गजम्।
चोदयामास कृष्णाय कालान्तक यमोपमम्॥ ५ ॥

---

1- -1 P.V. omit 2 M.Ma ०पौ 3 P.V. ०रमुपा० 4 G.J.K ०न्नाग 5. P.V. पश्यन्कु० 6 G.J.M.Ma ०मु० 7 G.J.M.Ma नौ 8 P.V.M.Ma ०क्राम 9 P.V. कोपय

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रिचत्वारिंशके हत्वा गजेन्द्रं रामकृष्णयोः। रङ्गप्रवेश सौभाग्यं चाणूरेणानु[1] भाषणम्॥

**अथेति**। पूर्वेद्युरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ। एतदुक्तं भवति - धनुर्भङ्गादिनाऽऽवाभ्यां निजैश्वर्ये सूचितेऽपि पितरौ न मुञ्चति, आवां पुनः जिघांसति। अतोऽस्य मातुलस्यापि वधे नाऽवयोः दोष इत्येवं कृतापराधपरिहाराविति। मल्लानां दुन्दुभीनां च निर्घोषं[2] मल्लतालदुन्दुभिनिर्घोषं[3] वा॥ १ ॥

**रङ्गद्वारमिति।** अम्बष्ठो हस्तिपकः[4] तेन प्रचोदितम्[5]॥ २ ॥

**बद्ध्वेति।** परिकरं युद्धोचितं[6] परिधानं कृत्वा समुह्य[7] बद्ध्वा[8]॥ ३,४ ॥

**एवमिति।** अन्तको मृत्युः, कालस्तन्निमित्तं, यमस्तन्नियन्ता-तैरुपमा यस्य तम्॥ ५ ॥

---

1. J.Va ०ण च 2 P.V. omit निर् 3. P.V. omit निर् 4. P.V. ०पः 5. J.Va omit प्र 6. J.Va ०त 7 P.V. ०मू० 8. J.Va निबध्य

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम्" (भाग० 10-43-25) इत्युक्तम्। अथकिं परेद्युः कंसचिकीर्षितम्, किं वा तावकुरुतामित्यत्राह- **अथेत्यादिना।** हे परन्तप! अथ परेद्युः प्रातः रामः कृष्णश्च कृतशौचौ कृतं शौचं स्नानादिकर्म याभ्यां तौ मल्लानां दुन्दुभीनां च निर्घोषं श्रुत्वा द्रष्टुम् आजग्मतुः॥ १ ॥

रङ्गस्य मल्लक्रीडास्थानस्य द्वारमासाद्य तस्मिन् द्वारे अवस्थितम् अम्बष्ठेन हस्तिपेन प्रचोदितं कुवलयापीडाख्यं गजं भगवानपश्यत्॥ २ ॥

परिकरं परिधानं यथोचितं बद्ध्वा कुटिलालकान् समूह्य गर्जितवद्गम्भीरया वाचा हस्तिपमुवाच॥ ३ ॥

उक्तिमेवाह- **अम्बष्ठेति।** अपक्रम मार्गं परित्यज, मा चिरं विलम्बं मा कार्षीः। नो चेत् मार्गं न दास्यसि चेत् अद्य सकुञ्जरं त्वां हत्वा[1] यमलोकं प्रापयामि॥ ४ ॥

इत्थं निर्भर्त्सितो हस्तिपः क्रुद्धः कोपितं [2-]कोपं प्रापितम्[-2] अन्तको मृत्युः, कालस्तन्निमित्तं, यमस्तु तन्नियन्ता [3]तैः उपमा यस्य तं गजं कृष्णाय चोदयामास। कृष्णं प्रति प्रद्रावयामासेत्यर्थः॥ ५ ॥

---

1. K omits हत्वा 2- -2 T.W. omit 3 T.W. omit तैः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

कृष्णरामाभ्यां नन्दादिभिः सहस्थित मुत पृथगिति संशयनिरासार्थं तत्कर्म कथयति-**अथेति।** कृतशौचौ मुखप्रक्षालनादिना प्राप्तशुद्धी यद्वा कृतं पर्याप्तं पूर्णं शौचं शुचेरग्नेः सर्वदहनत्वं ययोस्तौ अग्निवत्सर्वदाहकावित्यर्थः। अत्रापि विशेषोऽस्तीत्याह- **परन्तपाविति। शत्रूणामेव तापकौ न सर्वेषामित्यर्थः। मल्लदुन्दुभिनिर्घोषं** मल्लयुद्धोचितं दुन्दुभिध्वनिं, मल्लयुद्धं द्रष्टुं **तत्समीपमाजग्मतुः॥ १,२ ॥**

परिकरं कक्षाख्यमुदरबन्धं काञ्चीं वा कुटिलालकान् समुह्य एकीकृत्य बद्ध्वा॥ ३ ॥

अपक्रम अपसर, यमसादनं यमगृहम्॥ ४ ॥

बलादाकर्षणे कालः मृत्युर्वा "कालो मृत्यौ (दिष्टे) यमे चैव (काचो) (वैज.को.6.1.15) इति। संहारे अन्तको रुद्र इव "रुद्रो माविशान्तक" इति श्रुतिः। क्लेशजनने यम इव स्थितः कालान्तकयमोपमः तम्॥ ५ ॥

करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत्।
कराद्विगलितस्सोऽमुं निहत्याङ्घ्रिष्वलीयत॥ ६ ॥

संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिस्स केशवम्।
परामृशत्पुष्करेण स प्रसह्य विनिर्गतः॥ ७ ॥

पुच्छे प्रगृह्यातिबलं[1] धनुषः पञ्चविंशतिम्।
विचकर्ष यथा नागं सुपर्ण इव लीलया॥ ८ ॥

स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः।
बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः॥ ९ ॥

ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम्।
प्राद्रवन्पातयामास[2] स्पृश्यमानः पदे पदे॥ १० ॥

---

1 P.V. ०लो 2 T.W. प्रद्रवन्पात०; M.Ma प्राद्रवद्याप०

**श्रीध० करीन्द्र** इति। विगलितः विच्युतः। सः[1] मुष्टिना निहत्य अलीयताऽदृश्यो बभूव॥ ६ ॥

**संक्रुद्ध** इति। अचक्षाणोऽपश्यन्। घ्राणमाघ्राणं[2] तेन दृष्टिर्दर्शनं यस्य सः। लोचनागोचरमपि पशवो हि घ्राणेन जानन्तीति प्रसिद्धम्। परामृशत् धृतवान्। पुष्करेण शुण्डाग्रेण। स कृष्णः। प्रसह्य बलेन॥ ७ ॥

**पुच्छे** इति। धनुषो धनुषां पञ्चविंशतिर्यावत्तावन्तं देशं गजं[3] विचकर्ष आकृष्य नीतवान्। कं क इव विचकर्ष? यथा नागं सर्पवद्वर्तमानं गजं सुपर्ण इव[4] स्वयमिति। "आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" (भाग.10-3-8) इतिवत्॥ ८ ॥

**स** इति। पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं[5] यदि दक्षिणतः परिवर्तते गजस्तर्हि सव्यतो[6] भ्रामयति। यदा सव्यतः परिवर्तते तदा दक्षिणतो भ्रामयन् तेन सह बहु बभ्राम। गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णो यथाऽन्यो वा बालक इवेति॥ ९ ॥

तत इति। वारणं गजं प्राद्रवन् प्रकर्षेण आसमन्ततो धावन् पातयामास यथाऽऽपतति तथा तं वञ्चयन् प्राद्रवदित्यर्थः॥ १० ॥

---

1 J.Va omit सः 2 J.Va ०मवग्रा० 3. J.Va omit गजं 4 J.Va ०वत्स्य० 5 J.Va omit बहु 6 P.V. हि

**वीर०** करीन्द्रः तं कृष्णम् अभिद्रुत्य बलात्करेणाऽग्रहीत्, स कृष्णः कराद्विगलितः विच्युतः अमुं करीन्द्रं निहत्य मुष्टिना प्रताड्य तस्याङ्घ्रिषु चरणानां मध्ये अलीयत तस्याऽदृश्यो बभूवेत्यर्थः॥ ६ ॥

तं कृष्णमचक्षाणोऽपश्यन् अत एव संक्रुद्धः स करीन्द्रः घ्राणदृष्टिः हस्ताग्रे दृष्टिर्यस्य तथाभूतः केशवं पुष्करेण तुण्डाग्रेण परामृशत् अन्वेषयामास। स कृष्णः प्रसह्य बलात्कारेण अङ्घ्रिमध्याद्विनिर्गतः॥ ७ ॥

तमतिबलं पुच्छे प्रगृह्य धनुषः पञ्चविंशतिर्यावत्तावन्तं देशं विचकर्ष आकृष्टवान् यथा सुपर्णः गरुडः लीलया नागं सर्पं कर्षति तद्वत्॥ ८ ॥

स इति। स भगवान् पुच्छग्राहिणमात्मानं ग्रहीतुं यदि गजो दक्षिणतः परिवर्तते तर्हि सव्यतो भ्रामयन् यदाऽपसव्यतः[1] परिवर्तते तदा दक्षिणतो भ्रामयन् एवं पर्यावर्तमानेन करिणा सह स्वयं बभ्राम। यथा बालो भ्राम्यमाणेन गोवत्सेन सह भ्राम्यति तद्वत्। अत्र बालकः श्रीकृष्ण एव। बाल्यदशावस्थो दृष्टान्ततया विवक्षितः॥ ९ ॥

ततो वारणं गजमभिमुखमभ्येत्य पाणिना आहत्य प्राद्रवन्[2] धावन्[3] पदे पदे वारणेन स्पृश्यमानः पातयामास। स यथा [4-]पतन्निव[-4] तथा तं वञ्चयन् प्राद्रवदित्यर्थः॥ १० ॥

---

1. T.W. ०व्यः 2 T.W. प्र 3. T.W. omit धावन् 4- -4 T.W. भ्रमति

**विज०** करीन्द्रकराद्विगलितः विश्लथितः स कृष्णः अमुं करीन्द्रं निहत्य मुष्टिनाऽपहत्य करीन्द्रस्याङ्घ्रिषु पादेषु अलीयत निलीनोऽभूत्॥ ६ ॥

अचक्षाणः अपश्यन् घ्राणेदृष्टिः यस्य स तथा गजो घ्राणेन पादमध्ये निलीनं केशवं ज्ञात्वा पुष्करेण शुण्डाग्रेण तं कृष्णं परामृशत् आकृष्टवान्। स कृष्णः पुष्करग्रहणात् प्रसह्य सहसा विनिर्गतः॥ ७ ॥

विनिर्गत्य किं चकारेति तत्राह-पुच्छ इति। पञ्चविंशद्धनुःपरिमितस्थलपर्यन्तं, नागं सर्पम्॥ ८ ॥

सोऽच्युतः सव्यदक्षिणतो बभ्राम पुच्छं गृहीत्वेति शेषः। परि परित आवर्तमानेन पुनः पुनः सव्यतो दक्षिणतश्च भ्रमता गजेन गृह्यत इति। कथमिव? बालको भ्राम्यमाणेन गोपुच्छेन गृहीतेन भ्रमति यथा तथेति॥ ९ ॥

ततः किमनया लीलयेति मत्वा। पुच्छं मुक्त्वा करीन्द्रस्याभिमुखं गत्वा पाणिना वारणम् आहत्य प्राद्रवदित्यन्वयः। ततः किमभूदिति तत्राह- यापयामासेति। प्राद्रवन् कृष्णः करीन्द्रं यापयामास स्वपृष्ठत आगमयामास गजोऽपि तमन्वाद्रवदित्यर्थः॥ १०॥

स धावन्[1]क्रीडया भूमौ पतित्वा[2] सहसोत्थितः।
तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत्क्षितिम्॥ ११ ॥

स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः।
चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा॥ १२ ॥

तमापतन्तमासाद्य भगवान्मधुसूदनः।
[3]प्रगृह्य पाणिना हस्तं पातयामास भूतले॥ १३ ॥

पतितं[4] तं पदाऽऽक्रम्य मृगेन्द्र इव लीलया।
दन्तमुत्पाट्य [5]तेनैव हस्ति[6]पंश्चाऽहनद्धरिः॥ १४ ॥

मृतकं द्विपमुत्सृज्य दन्त[7]पाणिस्समाविशत्।
अंसन्यस्तविषाणो[8]ऽसृङ्मद[9]बिन्दुभिरङ्कितः॥
[10]विरूढस्वेदकणिक वदनाम्बुरुहो बभौ॥ १५ ॥

---

1 P.V. ०न्वी 2 P.V. ०तः 3 G.J.P.V नि० 4. G.J.K.M.Ma.T.W ०तस्य 5 G.J.P.V. तेनेऽऽभं; T.W. तेनाशु; 6 G.J.P.V. ०पांश्चाह०; M.Ma ०पानाह० 7. M.Ma ०पाणी विरेजतुः 8 M.Ma ०णाऽ० 9. M.Ma रञ्जि(ञ्चि) तौ 10. G.J. ०का 11 M.Ma रुहावुभौ

**श्रीध०** स इति। किञ्च अहनत् अहन्॥ ११-१४ ॥

**मृतकमिति**। रङ्गं समाविशत् तदा वीरश्रिया बभौ। **कथम्भूतः**? अंसे न्यस्तं **विषाणं गजदन्तो येन सः**। असृजो रक्तस्य मदस्य च बिन्दुभिः परितोऽङ्कितः। विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनाम्बुरुहं यस्य सः॥ १५॥

**वीर०** यदा च गजः पतति तदा स भगवानपि क्रीडया धावन् भूमौ पतति पतितं दृष्ट्वा स यदाऽभिधावति तदा भगवानुत्थितो धावति, गजस्तु पतितं स्थितमेव मत्वा क्रुद्धः केवलं दन्ताभ्यां क्षितितलमहनत्॥ ११ ॥

इत्येवं स्वस्य गजस्य विक्रमे प्रतिहते क्षीयमाणे [1]सति कुञ्जरेन्द्रः केवलमत्यन्तं क्रोधमात्रयुक्तः हस्तिपैर्बलाच्चोद्यमानः प्रेर्यमाणः कृष्णं रुषाऽभ्यद्रवत् अभ्यधावत्॥ १२ ॥

तदा भगवानापतन्तं गजमासाद्य स्वपाणिना हस्तं तस्य शुण्डां[2] प्रगृह्य भूतले पातयामास॥ १३ ॥

पतितं गजेन्द्रं पदा पादेनाऽऽक्रम्य अवष्टभ्य सिंह इव दन्तमुत्पाट्य तेनैव दन्तेनैव हस्तिपमहनत्॥ १४ ॥

मृतं गजमुत्सृज्य दन्तः पाणौ यस्य तथाभूतः ततः अंसे न्यस्तः निहितो विषाणो गजदन्तो येन सः असृजः रुधिरस्य मदोदकस्य च बिन्दुभिः अङ्कितः विरूढाः उद्गताः स्वेदकणिका यस्मिन् तद्वदनाम्बुरुहं यस्य तथाभूतो बभौ॥ १५॥

---

1 K omits सति 2 T.W. ०ण्डं

विज० तेन दन्तेन हस्तिपान् महामात्रान्॥ ११-१४ ॥

द्विपं गजं विषाणोपरक्तेन असृजा रुधिरेण मदजलबिन्दुभिश्च विरूढा विस्तृता स्वेदजलकणिका यस्मिन् तत् विरूढस्वेदकणिकं तादृशं वदनाम्बुरुहं ययोस्तौ तथा॥ १५ ॥

वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ।
रङ्गं विविशतू राजन् गजदन्तवरायुधौ॥ १६ ॥

मल्लानामशनिर्नृणां नरवरस्त्रीणां[1] स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोश्शिशुः
मृत्युर्भोज[2-]पतेर्विराडविदुषां[-2] तत्त्वं परं योगिनां
वृष्णीनां [3-]परदेवतेति विदितो रङ्गं[-3] गतस्साग्रजः॥ १७ ॥

- चाणूरमुष्टिकादिमल्लवधकथा -

हतं कुवलयापीडं दृष्ट्वा तावपि[4] दुर्जयौ।
कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप॥ १८ ॥

तौ रेजतूरङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ।
यथा नटावुत्तमवेषधारिणौ मनःक्षिपन्तौ प्रभया निरीक्षताम्॥ १९ ॥

निरीक्ष्य तावुत्तमपूरुषौ जनाः[5] मञ्चस्थिता नागरराष्ट्रका नृपाः[6]।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्नतृप्ता नयनैस्तदाननम्॥ २० ॥

---

1 M.Ma मृतां 2- -2 M.Ma ०विधातृविहितः 3- -3 M.Ma च पतिः सदैव शुशुभे रङ्गेऽच्युत० 4 K.T.W. ०ति 5 P. तदा; V. तथा 6 G.J.M.Ma ०प!

**श्रीध०** न केवलं साग्रजः स एव रङ्गं समाविशत्, किन्तु **वृतौ गोपैरिति** ॥ १६ ॥

तत्र शृङ्गारादिसर्वरसकदम्बमूर्तिः भगवान् तत्तदभिप्रायानुसारेण बभौ, न साकल्येन सर्वेषामित्याह- **मल्लानामिति।** मल्लादीनां दशानां द्रष्टॄणामशन्यादिरूपेण दशधा विदितस्सन् साग्रजो रङ्गं गत इत्यन्वयः। मल्लादिष्वभिव्यक्तारसाः क्रमेण श्लोकेन निबध्यन्ते- "रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा। भयानकश्च बीभत्सः शान्तः सप्रेम भक्तिकः"॥ अविदुषां विराट् विकलः अपर्याप्तो राजत इति तथा, अनेन बीभत्सरसः उक्तः। विकलत्वं च "क वज्रसारसर्वाङ्गौ" (भाग.10-44-8) इत्यादिना वक्ष्यति॥ १७ ॥

**हतमिति।** उद्विविजे भीतो बभूव॥ १८ ॥

**तौ** इति। यथा नटाविति निर्भयत्वं दर्शितम्॥ १९ ॥

**निरीक्ष्येति।** प्रहर्षवेगेनोत्कलितानि उज्जृम्भितानि ईक्षणानि आननानि च येषां ते। तयोराननं पपुः परं, न तु तृप्ताः; निराकाङ्क्षा न बभूवुरित्यर्थः॥ २० ॥

---

1- -1 J Va स एकः 2 Va omits न 3 J.Va नामज्ञानां 4 P.V. omit रसः 5 J.Va ०ते

**वीर०** रामकृष्णौ कतिपयैर्गोपैः परिवृतौ गजदन्तावेव वरे श्रेष्ठे आयुधे ययोस्तौ हे राजन्! रङ्गं मल्लक्रीडास्थानं विविशतुः॥ १६ ॥

तत्र शृङ्गारादिसर्वरसकदम्बैकमूर्तिः भगवान् तत्तदभिप्रायानुसारेण बभौ, न साकल्येन सर्वेषामित्याह-**मल्लानामिति।** मल्लादीनां द्रष्टॄणामशन्यादि रूपेण दशधा विदितस्सन्साग्रजो रङ्गस्थानं गत इत्यन्वयः। **अशनिः** अशनिवद्रौद्रः, स्त्रीणां मूर्तिमान् स्मरः विदितः, असतां दुष्टानां क्षितिभृतां शास्ता स्वपित्रोश्शिशुः, अनेन करुणरसः प्रदर्शितो भवति। भोजपतेः कंसस्य मृत्युः, अनेन भयानकरसः, अविदुषां देहात्माभिमानिनां विराट् देहमात्रबुद्धिविषयः, योगिनां परमात्मोपासनात्मकयोगनिष्ठानां परं तत्त्वमिति विदितः स्वोपास्यवस्तुत्वेन विदित इत्यर्थः॥ १७ ॥

**हतमिति।** हतं कुवलयापीडं दृष्ट्वा ततः तौ रामकृष्णौ अतिदुर्जयाविति ज्ञात्वा मनस्वी धीरोऽपि कंसः हे नृप! नितराम् उद्विविजे भीतो बभूव॥ १८ ॥

**ताविति।** विचित्रो वेषः तथा आभरणानि स्रजश्च ययोस्तौ रामकृष्णौ स्वकान्त्या पश्यतां जनानां मनः क्षिपन्तौ क्षोभयन्तौ, अपहरन्तौ वा रेजतुः। यथोत्तमवेषधारिणौ नटौ तद्वत्॥ १९ ॥

**निरीक्ष्येति।** हे नृप! पौरा जानपदाश्च जनाः तौ उत्तमपूरुषौ निरीक्ष्याऽवस्थिताः निश्चलाः प्रहर्षवेगेन उत्कलितानि उज्जृम्भितानि ईक्षणान्याननानि च येषां ते नयनैः लावण्यपानपात्रभूतैस्तयोराननं पपुः आननगतं लावण्यरसं पीतवन्त इत्यर्थः। परं तु न तृप्ता, निराकाङ्क्षा न बभूवुरित्यर्थः॥ २० ॥

---

1 T.W. उद्विजते 2- -2 T.W. omit

**विज०** मल्लानामशनिरिव भासमानः, उपर्यप्येवम्। योगिनां परं तत्त्वं ब्रह्म "ब्रह्म वेदस्तपस्तत्त्वम्" (वेदस्तत्त्वं तपो ब्रह्म) (अम.को. 3-271 इति च। भोजपतेः कंसस्य मृत्युरिव, नित्यमेवेति योज्यम्॥ १६,१७॥

मनस्वी शूरोऽपि उद्विविजे 'ओ विजी भयचलनयोः' इति धातुः भीतोऽभूत्॥ १८ ॥

देहप्रभया निरीक्षतां मनः क्षिपन्तौ आकर्षन्तौ॥ १९ ॥

नागराः नगरवासिनः राष्ट्राः जनपदवासिनः प्रहर्षवेगेन उत्कलितमुत्फुल्लमीक्षणम् आननं च येषां ते तथा॥ २०॥

**पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया।**
**जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः॥ २१ ॥**

**ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम्।**
**तद्रूपगुणमाधुर्य प्रागल्भ्यस्मारिता इव॥ २२ ॥**

**एतौ भगवतस्साक्षा द्धरेर्नारायणस्य हि।**
**अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि॥ २३ ॥**

**स[1] एष किल देवक्यां जातो नीतश्च गोकुलम्[2]।**
**कालमेतं वसन्गूढो ववृधे नन्दवेश्मनि॥ २४ ॥**

**पूतनाऽनेन निहता[3] चक्रवातश्च दानवः।**
**अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधाः॥ २५ ॥**

---

1. G.J. एष वै 2 M.Ma ०ले 3 G.J.M.Ma नीताऽन्तं

**श्रीध०** तदेवाह-**पिबन्त** इवेति। श्लिष्यन्तः परिष्वङ्गं कुर्वन्त इव लक्षिता इत्यर्थः[1]॥ २१ ॥

**ऊचुरिति**। यथादृष्टं धनुर्भङ्गादि, यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य, तदनुरूपमित्यर्थः। प्रत्यक्षं च तयो रूपं गजदन्तादि युक्तं, गुणाः शौर्यादयो, माधुर्यं हसितालापादि, प्रागल्भ्यं धाष्टर्य तैः, स्मारिता इव स्मरणं प्रापिता इवेत्यर्थः॥ २२ ॥

विस्मितानां वाक्यान्याह अष्टभिः **एतावित्यादिभिः[2]**॥ २३ ॥

**स** इति। किलेति सर्वत्रान्वयः॥ २४ ॥

**पूतनेति।** गुह्यकः शङ्खचूडः। अन्ये चाघासुरादयः॥ २५ ॥

---

1 J.Va omit इत्यर्थः 2 P.V. omit आदिभिः

**वीर०** तदेवाह- **पिबन्त** इवेति। श्लिष्यन्तः परिष्वङ्गं कुर्वन्त इव इत्थं लक्षिता इत्यर्थः॥ २१ ॥

**ऊचुरिति। यथादृष्टं** धनुर्भङ्गादि, **यथाश्रुतं** गोवर्धनोद्धरणादि तदनतिक्रम्य तदनुरूपमित्यर्थः। ते **नागराष्ट्रकाः** परस्परमूचुः। कथम्भूताः? तयोः रूपं गजदन्तादियुक्तं गुणाः शौर्यादयः माधुर्यं हसितालापादिगतं प्रागल्भ्यं धार्ष्ट्यं तैः स्मारिता इव स्मरणं प्रापिता इव अनितरसाधारणतद्रूपगुणादियाथात्म्यवेदिन इव, इवशब्दोऽनतिरिक्तद्योतकः॥ २२ ॥

तदेव दर्शयन् तेषामुक्तिमाह-**एतावित्यादिभिरष्टभिः।** एतौ रामकृष्णौ नारायणस्यांशेनावतीर्णौ नारायण एव स्वसङ्कल्परूपेणांशेन रामकृष्णरूपेणावतीर्ण इत्यर्थः। यद्वा छत्रिन्यायेन अंशेनावतीर्णौ इत्युक्तम्; श्रीकृष्णस्य साक्षान्नारायणावतारत्वात्, रामस्य तदंशभूतसङ्कर्षणावतारत्वात्॥ २३ ॥

तत्र कृष्णस्य चरित्रं जन्मन आरभ्य सङ्कल्पन्ति-**स एष** इति। देवक्यां जातः वसुदेवादित्यध्याहारः। गोकुलं प्रति नीतः वसुदेवेनेति शेषः। किलेत्याश्चर्ये प्रसिद्धौ वा। एतावन्तं कालम् अत्यन्तसंयोगे द्वितीया। नन्दगेहे **गूढः** इतरैरविज्ञातो वसन् ववृधे एधाञ्चक्रे॥ २४ ॥

अनेन श्रीकृष्णेन पूतना निहता, तथा चक्रवातस्तृणावर्तश्च दानवो निहतः, अर्जुनाविति। पातितावितिति शेषः। अनेन इत्यनुषङ्गः। धेनुकादयश्च तथाविधा, अन्ये च अघासुरादयो निहताः। तत्र गुह्यकः शङ्खचूडः॥ २५ ॥

**विज०** तयोः कृष्णरामयोः रूपगुणः शब्दगुणः माधुर्यं च तेन। यद्वा रूपगुणेन कान्तिगुणेन कीर्तिगुणेन वा माधुर्येण वा। वाच इति शेषः। प्रागल्भ्येन वैशारद्येन च स्मारिताः स्मृतिं कारिताः। "रूपं शब्दे पशौ श्लोके" (वैज.को.6-3-28) इत्यादेः॥ २१,२२,२३ ॥

एतं कालम् एतावन्तं कालम्॥ २४ ॥

अन्तं नाशं नीताः। गुह्यकः शङ्खचूडः॥ २५ ॥

**गावस्सपाला एतेन दवाग्नेः[1] परिमोचिताः।**
**कालियो दमितस्सर्प[2] इन्द्रश्च विमदः कृतः॥ २६ ॥**

**समाहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना।**
**वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम्॥ २७ ॥**

गोप्यो[3]ऽस्य नित्यमुदितं[4] हसितप्रेक्षणं मुखम्।
पश्यन्त्यो विविधा[5]स्तापांस्तरन्ति[-5] स्मा[6]ऽश्रमं मुदा॥ २८ ॥

वदन्त्यनेन वंशोऽयं यदोस्सु[7]बहुवि[8]श्रुतः।
श्रियं[9] यशो महत्त्वं च लप्स्यते परिरक्षितः॥ २९ ॥

अयं चास्याग्रजः श्रीमान्रामःकमललोचनः।
प्रलम्बो निहतो[10]ऽनेन व[11]त्सको धेनुकादय[-11]ः॥ ३० ॥

---

1. G.J.M.Ma दा० 2 M.Maशक्र० 3 M Ma गोप्यश्च 4 P V ०ताः 5- -5 V धांस्तांस्तांस्त० 6 M.Maस्म श्र० 7 T W ०स्तु 8 Kविस्तरः 9 V. प्रियं 10 G.J.K.T.W. ०तो येन 11- -11 G.J.K. वत्सको ये बकादयः; M.Ma बहवो धेनुकादयः; T.W. वत्स गो धेनुकादयः

**श्रीध० गोप्य** इति। अश्रममीषच्छ्रमयुक्तं मुखं, अश्रमं सुखमिति वा। यद्वा अश्रमं यथा भवति तथा तरन्ति स्मेति॥ २६-२८ ॥

**वदन्तीति**। अनेन परिरक्षितो यदोर्वंशः सुबहुविश्रुतस्सन् श्र्यादि लप्स्यते, इति वदन्तीति॥ २९ ॥

**अयमिति**। धेनुकबकवत्सासुरेषु विपर्ययोक्तिः जनवादेष्वनिश्चयात्॥ ३० ॥

**वीर०** एतेनैव गोपालैस्सहिता गावश्च अग्नेस्सकाशात् परिमोचिताः, कालियाख्यः सर्पश्च अनेनैव दमितः, विगतः मदो यस्य तथाभूतः इन्द्रश्च कृतः॥ २६ ॥

अद्रिप्रवरो गोवर्धनः अमुना कृष्णेन कर्त्रा एकेन हस्तेन धृतः वर्षधाराभ्योऽशनिभ्यश्च गोकुलं परित्रातं रक्षितम्[1]॥ २७॥

नित्यमुदितं हसितमीक्षणं च यस्मिन् तदस्य मुखं पश्यन्त्यः, यद्वा नित्यविकसितं हसितेनेक्षणाभ्यां च युक्त अस्य मुखं मुदा पश्यन्त्यः विविधान् तापान् आध्यात्मिकादीन्, अश्रमं न विद्यते श्रमो यस्मिन् तद्यथा भवति तथा तरन्ति स्म अतिवर्तन्ते स्म॥ २८ ॥

अनेन परिरक्षितो यदोर्वंशः सुबहुविस्तरस्सन्। विश्रुत इति पाठे प्रसिद्धस्सन् श्रियं कीर्तिं महत्तां पूज्यतां च लप्स्यते।। २९ ॥

अथ रामस्य गुणान् सङ्ग्रहेणाहुः-**अयं चेति**। अस्य श्रीकृष्णस्याग्रजोऽयं रामः कमललोचनः श्रीमान् कल्याणगुणसमृद्धिमान्, अनेन प्रलम्बादयो निहताश्च॥ ३० ॥

---

1 T.W. omitरक्षितम्

विज० श्रमं च तरन्ति॥ २६ - २८ ॥

इति वदन्ति अनेन कृष्णेन॥ २९,३० ॥

श्रीशुक उवाच[1-1]

जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च।
कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत्॥ ३१ ॥

हे नन्दसूनो हे राम भवन्तौ वीर्यसम्मतौ[2]।
नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा[3]॥ ३२ ॥

प्रियं राज्ञः प्रकुर्वत्यः[4] श्रेयो विन्दन्ति वै[5] प्रजाः।
मनसा कर्मणा वाचा विपरीतमतोऽन्यथा॥ ३३ ॥

नित्यं[6] प्रमुदिता गोपा वत्सपालास्तथा[7] स्फुटम्।
वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः॥ ३४ ॥

तस्माद्राज्ञः प्रियं यूयं वयं च करवाम हे।
भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः॥ ३५ ॥

---

1- -1 G.J.K.M.Ma T.W. omit 2 G.J.K.T.W ०र० 3 T.W. ०क्षया। 4 G.M.Ma.P.V. ०न्त्यः 5 K.T.W. हि 6 M.Ma नित्य 7 G.J. ०ला यथा

श्रीध० जनेष्विति। जनेष्वेवं ब्रुवाणेषु सत्सु तदसहमानश्चाणूरोऽब्रवीदिति॥ ३१-३४ ॥

तस्मादिति। हे कृष्ण! प्रियं करवामेति। राज्ञि प्रीते भूतानि च प्रसीदेयुः॥ ३५ ॥

वीर० इति[1] इत्थं ब्रुवाणेषु जनेषु तूर्येषु वाद्येषु वाद्यमानेषु च सत्सु चाणूरः कृष्णरामौ समाभाष्य सम्बोध्य वाक्यमुवाच॥ ३१ ॥

तदेवाह- हे नन्दसूनो! इति चतुर्भिः। भवन्तौ वीराणां सम्मतौ मल्लयुद्धे प्रवीणाविति च श्रुत्वा दिदृक्षुणा -युद्धदर्शनेच्छुना राज्ञा आहूतौ॥ ३२ ॥

मनःप्रभृतिकरणत्रयेण राज्ञः प्रियं कुर्वत्यः प्रजाः श्रेयः सुखं लभन्ते, अतोऽन्यथा अप्रियं कुर्वत्यस्तु विपरीतमश्रेयो दुःखं विन्दन्ति॥ ३३ ॥

नाऽऽवां नियुद्धे कुशलावित्यत आह-**नित्यमिति।** वत्सपालाः वत्सपालनयोग्यात्[3] वयस आरभ्येति भावः। गोपाः यावद्गोपालनयोग्यवयसः भवन्तः वने मल्लयुद्धेन क्रीडन्त एव गाश्चारयन्ति। अतो नियुद्धकुशलावेवेति भावः॥ ३४ ॥

तस्माद्यूयं वयं च राज्ञः प्रियं करवामहै। एवं राज्ञि प्रीते सर्वाणि भूतानि नोऽस्माकं प्रसीदन्ति, कुतः? यतो राजा सर्वभूतमयः सर्वभूतात्मकः॥ ३५ ॥

---

1 T.W. omit इति 2 T.W omit अतः 3 K ०य्यव०

**विज०** वीर्येण पराक्रमेण सम्मतौ सम्यक्प्रख्यातौ नियुद्धं बाहुयुद्धं मल्लयुद्धमिति यावत् तस्मिन्कुशलौ निपुणौ॥ ३१,३२,३३॥

तत्कथमवगतमिति तत्राह- **नित्येति।** नियुद्धेन क्रीडन्तः गोपालवत्सपालाश्च गोवत्सांश्च चारयन्तीति किंवदन्त्याऽवगतमित्यर्थः॥ ३४ ॥

किं कलहेन फलमिति तत्राह-भूतानीति॥ ३५ ॥

**तन्निशम्याऽब्रवीत्कृष्णो देशकालोचितं वचः।**
**नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्यच॥ ३६ ॥**

**[1]श्रीकृष्ण उवाच[-1]**

**प्रजा भोजपते[2]रस्य वयं चापि वनेचराः।**
**करवाम प्रियं नित्यं तन्नः परमनुग्रहः॥ ३७ ॥**

**बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम्।**
**भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः॥ ३८ ॥**

**चाणूरउवाच**

**न बालो न किशोरस्त्वं बलश्च बलिनां वरः।**
**लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत्॥ ३९ ॥**

**तस्माद्[3]बलिभ्यां बलिभिर्योद्धव्यं नाऽनयोऽत्र वै।**
**[4]मया विक्रम वार्ष्णेय बलेन सह मुष्टिकः॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः॥ ४३ ॥

---

1- -1 G.J.P.V. omit; M.Ma श्रीभगवानुवाच 2 M.Ma ०तेर्यूयं 3. G.J.M.Ma.P.V. ०त्त्वदृश्यां 4 G.J.M.Ma मयि

**श्रीध० बाला** इति। यथोचितं नियुद्धं बाहुयुद्धं भवेत्। मल्लसभासदो मल्लसभाधिकृतान् जनान[1]धर्मो मा स्पृशेन्न स्पृशेदित्यर्थः[2]। हे मल्लेति वा॥ ३६-३८ ॥

**नेति।** सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा॥ ३९ ॥

**तस्मादिति।** तथा[3] बलिभिर्मार्दशैस्सह। अनयोऽधर्मः विक्रम पराक्रम कुरु। मुष्टिको विक्रमतादित्यनुषङ्गः॥ ४०॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
त्रिचत्वारिंशोऽध्यायः॥ ४३ ॥

---

1 P.V. omit जनान् 2 P.V. ०त्येतदर्थं 3 J.V.a omit तथा 4 P.V. omit अनुषङ्गः

**वीर०** तच्चाणूरवाक्यं निशम्य आकर्ण्य भगवान् नियुद्धं स्वस्याभिमतमेव मन्यमानोऽत एव तद्वचोऽभिनन्द्य देशकालोचितं वचोऽब्रवीत्॥ ३६ ॥

तदेवाह- **प्रजा इति।** अस्य भोजपतेः कंसस्य वनेचरा वयमपि प्रजा एव तद्देशवनोपजीवित्वाद्वयमपि कथञ्चित् प्रजा एवेत्यर्थः। न तु युष्मद्विधा इति भावः। अतः तस्य प्रियं करवाम। परं केवलं तत्कथञ्चित् तत्प्रीतीति रित्येत न्नोऽस्माकम् अस्मद्विषयोऽनुग्रहः॥ ३७ ॥

वयं तु बालाः अतः तुल्यबलैस्सह क्रीडिष्यामः। न त्वधिकबलैः भवद्भिरिति भावः। यथोचितं नियुद्धं भवेत्, मल्लसभासदः मल्लसभाधिकृतानधर्मो मा स्पृशेत्। हे मल्लेति सम्बोधनं वा॥ ३८ ॥

एवमुक्तः प्राह चाणूरः-**न बाल इति।** बालशब्दोऽत्यन्तशैशवपरः, तच्च दृष्टान्तार्थम्। यथा नात्यन्तशिशुः तथा न किशोरोऽपि, किन्तु युवेति भावः। अथापि बलहीन इत्यत आह- बलिनां वरः, यतस्त्वं तादृश एव रामोऽपीत्याह-बलश्चेति। बलिनां वरत्वे लिङ्गं वदन् विशिनष्टि येन त्वया लीलयैव सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा इभो गजः कुवलयापीडो हतः॥ ३९ ॥

तस्माद्बलिभ्यां युवाभ्यां बलवद्भिर्मादृशैस्सह[1] योद्धव्यम्। अत्र युद्धे अनयः अधर्मो न विद्यते, वै नूनम्। हे वार्ष्णेय! मया सह विक्रम पराक्रमं कुरु युध्यस्वेति यावत्। बलेन रामेण सह मुष्टिको विक्रमिष्यते॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रिचत्वारिंशोऽध्यायः॥ ४३॥

---

1 T.W. omit सह

**विज०** यूयं भोजपतेः प्रजाः वयं चापि। विशेषोऽस्ति- वयं वनेचराः यूयं तत्समीपचराः, अतो विशेषप्रियाश्च। तथापि वयं तस्य नित्यं प्रियं करवामो नाऽप्रियमिति यत्तस्मान्नः परमनुग्रह एव॥ ३६,३७ ॥

तत्रापि किञ्चित्कर्तव्यमस्तीत्याह-**बाला इति।** वयं बाला इति यदतः तुल्यबलैः मल्लैः समं नियुद्धमिदमित्ययं धर्मः, अधर्मो मा स्पृशेत् न स्पृशतु॥३८ ॥

चाणूरः कृष्णोक्तं परिहरति-**नेति** ॥ ३९ ॥

अनयोऽन्यायलक्षणः अधर्मः। विक्रम विक्रमस्व। मुष्टिको बलेन रामेण सह विक्रमं करोत्विति॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
टीकायां त्रिचत्वारिंशोऽध्यायः॥ ४३ ॥

(विजयध्वजरीत्या एकचत्वारिंशोऽध्यायः)

---

# चतुश्चत्वारिंशोऽध्यायः

(विजयध्वजरीत्या द्विचत्वारिंशोऽध्यायः)

[1-] श्रीशुक उवाच [-1]

एवं [2]चर्चितसङ्कल्पो भगवान्मधुसूदनः।
[3]आससादाऽथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥

★हस्ताभ्यां हस्तयो र्बद्ध्वा पद्भ्या मेव च पादयोः।
विचकर्षतु रन्योन्यं प्रसह्य विजिगीषया ॥ २ ॥

अरत्नी द्वे अरत्निभ्यां जानुभ्याञ्चैव जानुनी।
शिरश्शीर्ष्णोरसोरस्तावन्योन्य मभिजघ्नतुः ॥ ३ ॥

[4]परिभ्रामणविक्षेप परिरम्भावपातनैः।
उत्सर्पणा[5-]पसर्पैश्च ह्यन्योन्य[-5] [6]प्रत्यरुन्धताम् ॥ ४ ॥

उत्थापनैरुन्न[7]यनै श्चालनैः स्थापनै रपि।
परस्परं जिगीषन्ता [8-]वपचक्रतुरात्मनः।[-8] ॥ ५ ॥

---

1- -1 P.V. omit 2. M.Ma चिन्तित 3. M.Ma ०द ह ★ An extra verse is found in P & V edns. between 1& 2 verses- आस्फोटच हस्तौ हस्ताभ्या मूरूचैव पुनः पुनः। विसृज्य भूय स्सङ्गृह्य परिक्रम्य परस्परम्॥ 4 T,W °भ्र° 5- -5 G,J सर्पणैश्चान्योन्यं; M.Ma, सर्पैश्चाप्यन्योन्यं; P.V सर्पैस्तावन्योन्यं 6. M.Ma °युध्यताम् 7. M, Ma, °म° 8- -8 M,Ma °वन्योन्यमभिचक्रतुः।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम्। कंसयोषित्स[1]माश्वास स्ताभ्यां पित्रोश्च दर्शनम्॥

**एव मिति।** चर्चितः निश्चितः एव [2]स्वसङ्कल्पो यस्य सः॥ १, २ ॥

**अरत्नीति।** बाहुमध्यात् कनिष्ठाङ्गुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः॥ ३ ॥

**परिभ्रामणेति।** परिभ्रामणं हस्तादिषु गृहीत्वा परित[3]श्चालनम्। विक्षेपो नोदनम्। परिरम्भो बाहुभ्यां निष्पीडनम्। अवपातन मधःक्षेपः। उत्सर्पण मुत्सृज्य पुरतो गमनम्। अपसर्पणं अपसृज्य पृष्ठतो गमनम् - एतैः प्रत्यवरुन्धतां प्रत्यावृतवन्तौ॥ ४॥

**उत्थापनैरिति।** उत्थापनं जानुनी पादौ[4] च पिण्डीकृत्य पतितस्योच्चाटनम्। उन्नयनं हस्ताभ्या मुद्धृत्य नयनम्। चालनं कण्ठादिलग्नस्य निस्सारणम्। स्थापनं पाणिपादादिपिण्डीकरणम्। एवं परस्परमात्मनो देहस्य अपचक्रतुः अपकारं कृतवन्तौ ॥ ५ ॥

1 P,V ०त आ० 2. J.Va omit स्व 3. J.Va omit अपसृज्य 4. J.Va omit पाणि।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ चाणूरमुष्टिककूटशलतोसलकंसवधात्मकं कर्माऽनुवर्णयति चतुश्चत्वारिंशेन। एवं[1] चर्चितः निश्चितः स्वसङ्कल्प एव यस्य सः चाणूरमाससाद अभ्यपतत्। अथ रोहिणीसुतो रामः मुष्टिकमाससाद ॥ १॥

तदा तौ कृष्णचाणूरौ राममुष्टिकौ च हस्तयोः हस्ताभ्यां, पादयोः पादाभ्यां च बद्ध्वा परस्परं जेतुमिच्छया अन्योन्यं विचकर्षतुः विकृष्टवन्तौ ॥ २ ॥

[2-]कनिष्ठां विना[-2] कृतमुष्टिः हस्तोऽरत्निः। अरत्निभ्यां द्वे अरत्नी मिथोऽभिजघ्नतुः। तथा जानुभ्यां जानुनी, शिरसा शिरः, उरसा उरश्च अभिजघ्नतुः ॥ ३ ॥

परिभ्रा[3]मणं हस्तादिषु गृहीत्वा परितश्चालनम्। विक्षेपो नोदनम्। परिरम्भो बाहुभ्यां पीडनम्। अवपातनमधः पातनम्। उत्सर्पण मुत्सृज्य पुरतो गमनम्। अपसर्पणं पृष्ठतो गमनम् - एतै स्तौ कृष्णचाणूरौ राममुष्टिकौ च अन्योन्यं प्रत्यवरुन्धतां प्रत्यावृतवन्तौ ॥ ४ ॥

उत्[4]थापनं पादौ जानुनी च पिण्डीकृत्य पतितस्योत्थापनम्। उन्नयनं हस्ताभ्यामुद्धृत्य नयनम्। चालनं काष्ठादिषु लग्नस्य निस्सारणम्। स्थापनं पाणिपादादेः पिण्डीकरणम्। - एभिः परस्परमात्मनो देहस्य अपचक्रतुः अपकृतवन्तौ ॥५॥

1. T,W इत्थं 2- -2 T,W omit 3. T,W ०भ्र० 4. T,W० स्स०।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

एवं चाणूरोक्तप्रकारेण चिन्तितस्सङ्कल्पो मनोरथो येन स तथा। हेति युद्धप्रारम्भे "प्रत्यारम्भे प्रसिद्धौ ह" (वैज. को. 8-7-8) इति च ॥ १ ॥

तत्र मल्लयुद्धकरणप्रकारं कथयति **हस्ताभ्यामिति**। "आस्फोट्य हस्तौ हस्ताभ्या मूरू चैव परस्परम्। विसृज्य, भूय स्सङ्गृह्य परिक्रम्य परस्परम्" इत्येकश्लोकमादित्वेन केचित्पठन्ति॥ २,३ ॥

विक्षेप आकृष्य मोचनम्। अवपातन मधोमुखेन पातनम्। उत्सर्पणं उत्क्षेपः। अपसर्पः पृष्ठतो गमनम्॥ ४॥

उन्नमनमुत्तानीकरणम्। अभिचक्रतुः मुख्यनियुद्धं कृतवन्तौ। "मल्लयुद्धं नियुद्धज्ञा विंशद्भेदं प्रचक्षते। द्वात्रिंशद्भेदमपरे चत्वारिंशद्विधं तथा"॥ इति सङ्ग्रामविजयवचनात्। सर्वनियुद्धविधिदर्शनार्थं भगवतैवं क्रीडितं तत्तद्विद्यायाः साभावादय मेवाऽर्थ उपरि "तै स्तै र्नियुद्धविधिभि र्विविधै रच्युतेतरौ युयुधाते" (भाग. 10-44-19) इत्यादिना सूच्यते च

**[1]तद्बलाबलवद्युद्धं समेता स्सर्वयोषितः।**
**ऊचुः परस्परं [2]राजन् सा[3-]नुकम्पावरू[-3]थशः॥ ६ ॥**

**महानयं बताऽधर्म एषां राजसभासदाम्।**
**ये [4]बलाबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥**

**क्व वज्रसारस्सर्वाङ्गौ मल्लौ शैलेन्द्र[5]सन्निभौ।**
**क्व चाऽतिसुकुमाराङ्गौ किशोरौ नाऽऽप्तयौवनौ॥ ८ ॥**

**धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्।**
**यत्राऽधर्मस्समुत्तिष्ठे न्नस्थेयं तत्र कर्हि चित्॥ ९ ॥**

**न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन्।**
**अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते॥ १० ॥**

---

1 M, Ma तद्दा° 2 M, Ma प्रेक्ष्य 3- -3 P,V ° म्पाश्च यू° 4 G,J ° बाल 5 P.V सम्मतौ॥

**श्रीध०** तदिति। तद्युद्धं बलाबलवत् एकतो बल मन्यतोऽबलम्। तद्युद्धं विषम मित्यूचु रित्यर्थः ॥६॥

तदेव दर्शयति - **महानिति**। यद्वा [1]तत् [2]बालबलवतोः युद्धं दृष्ट्वा[3] महा नयमधर्म इत्यूचु रित्यन्वयः। बालयो र्बलवतोश्च युद्धं राजा चेत्पश्येत् स्वयं वारणीयः। एते तु राज्ञः पश्यतः स्वयमपि अन्विच्छन्ति अनुमन्यन्त इति महानधर्म इत्यर्थः॥ ७॥

बलाबलवद्युद्धतांप्रपञ्चयति पञ्चभिः क्वेति। वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यङ्गानि ययो स्तौ॥ ८ ॥

**धर्मेति**। समाजस्य सभायाः॥ ९ ॥

अपरा ऊचुः- **न सभामिति**। अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन्। विब्रुवन् विपरीतं ब्रुवन्, अज्ञो न जानामीति ब्रुवन् । अतः प्राज्ञा न सभां प्रविशेदिति ॥ १० ॥

---

1 J, Va omit तत् 2 V बलाब° 3 J, Va omit अपि।

**वीर०** तदा हे राजन्, सर्वा योषितः सङ्घशः समेतास्सहिताः सानुकम्पाः रामकृष्णविषयकानुकम्पायुक्ताः, अत एव परस्परं बलाबलवदूचुः ,एकतो बलमन्यतोऽबलं तद्युक्तं विषममित्यूचु रित्यर्थः ॥ ६ ॥

तदेव दर्शयितुं तासामुक्ति माह- **महानयमिति**। एषां राजसभासदां राजसभाधिकृतानामयं महानधर्मः। बतेति खेदे। कोऽसावधर्म इत्यत्र विशेषणमुखेनाऽऽहुः -य इति। ये राजसभासदः बालयोश्च बलवतोश्च युद्धमन्विच्छन्ति। राजाचेत् पश्येत् स्वयं वारणीयः। एते तु राज्ञः पश्यतः स्वयमप्यन्विच्छन्ति अनुमन्यन्ते - इत्ययं महानधर्म इत्यर्थः ॥७॥

बालबलवद्युद्धमेव दर्शयन्ति पञ्चभिः **क्वेति**। **वज्रवत्कठिनानि सर्वाण्यङ्गानि ययोस्तौ शैलेन्द्रतुल्यौ मल्लौ क्व**? अतिसुकुमाराण्यङ्गानि ययोः नाऽऽप्तमप्राप्तं यौवनं याभ्यां तावेतौ किशोरौ क्व? ॥ ८ ॥

अतोऽस्य समाजस्य सभायाः महान् धर्मव्यतिक्रमः धर्मविपर्ययः अधर्मो भवेत्। किं विधेय मिति काभिश्चिदुक्ते काश्चिदाहुः - यत्राऽधर्म इति। समुत्तिष्ठेत्प्रवर्तेत तत्र कर्हि चित् क्षणमपि न स्थेयमिति॥ ९ ॥

अपरा आहुः। **न सभामिति**। सभ्यानां दोषमनुस्मरन् प्राज्ञश्चेत्[1] सभां न प्रविशेत्। अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन्, विब्रुवन् विपरीतं ब्रुवन्, अज्ञः अज्ञ इव तिष्ठन् ज्ञात्वाऽपि न जानामीति ब्रुवन्नित्यर्थः। एवंविधो यो नरः सः किल्बिष मश्नुते प्राप्नोति ॥ १० ॥

---

1 T, W add तां

**विज०** बालबलवतोः कृष्णचाणूरयोः युद्धं तत्प्रेक्ष्य। वरूथशः सङ्घशः ॥ ६ ॥

राजसभायां सीदन्ति उपविशन्ति इति राजसभासदः तेषां कोऽयमधर्म इत्याहुः य इति, बालस्य बलवता सह युद्धमन्विच्छन्ति अनुकूलं मन्वते। राज्ञः पश्यतस्सत इत्यनेन उभयेषामप्यधर्मः प्राप्त इति ज्ञायते॥७॥

**कथमधर्म आसीदिति,तत्राऽऽहुः - क्वेति। वज्रवत्साराणि बलाढ्यानि सर्वाणि अङ्गानि करचरणादीनि ययो स्तौ तथा, "सारो बले स्थिरांशेऽर्थे पुमा न्याय्ये वरेऽर्थवत्" (वैज.को .6.5.97) इति च** ॥ ८ ॥

समाजस्य सभ्यसमूहस्य। अर्थतो मन्वादिवाक्यं प्रतीक्षयन्ति यत्रेति॥ ९ ॥

किमित्यप्रवेश इति तत्राऽऽहुः - **अन्नुवन्निति**। विब्रुवन् विपरीतं ब्रुवन्। "आत्मसर्वाङ्गसम्बन्धमलं किल्बिष" मुच्यते इति च। अनपायि मलं किल्बिष मित्यर्थः॥ १०॥

वल्गत श्शत्रुमभितः कृष्णस्य वदनाम्बुजम्।
वीक्ष्यतां श्रमवार्[1]यामं पद्मकोश मिवाम्बुभिः ॥ ११॥

किं न पश्यत रामस्य मुखमाताम्रलोचनम्।
मुष्टिकं प्रति सामर्[2]षं हास[3]संरम्भ[-3]शोभनम्॥ १२॥

पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो वनचित्रमा[4]ल्यः।
[5]गाः पालयन्[-5] सहबलः क्वण[6]यन् स्म वेणुं विक्रीडयाऽञ्चति [7]गिरित्ररमा[-7]र्चिताङ्घ्रिः॥ १३॥

गोप्यस्ततः किमचर न्यदमुष्य रूपं लावण्यसार[8]मसमोर्[-8]ध्वमनन्यसिद्धम्।
दृग्भिः पिबन्त्यनु[9]सवाभिनवं दुराप मेकान्तधाम यशसश्श्रिय [10]ईश्वरस्य॥ १४॥

या दोहने[11]ऽवहनने मथनोप[12]लेप प्रे[13]ङ्खेङ्खनाऽर्भरुदितोक्षणमा[14]र्जनादौ।
गायन्तिचैनमनुरक्तधियोऽश्रुकण्ठ्यः [15]धन्या व्रजस्त्रिय उरुक्रमचित्तया[16]नाः ॥ १५॥

---

1 G. J, P, V वार्युतं; M, Ma पर्यातं 2, M, Ma ०र्षं० 3- -3 G, J, संरम्भशोभितम्; T, W सम्भ्रमशोभनम् 4 T. W माली 5 M, Ma गाश्चारयन् 6. G, J, M, Ma ०यंश्चवेणुम्; P, V ०यन्स्ववेणुं 7- -7 M, Ma गिरा चमरा० 8- -8 M, Ma मथनोत्थ 9 K, T, W ०न० 10 G, J, ऐ० 11 K, T, W ०नोदवहने 12 M, Ma जल्प 13 T, W प्रेङ्खोलितार्भ० 14. M, Ma मज्ज० 15. M, Ma पुण्या 16. M, Ma ०माः

**श्रीध० वल्गत** इति। वलातः शत्रुमभितः शत्रोस्सर्वतो धावतः कृष्णस्य श्रमवारिणा व्याप्त वदनाम्बुज दृश्यताम्॥ ११॥

अन्या ऊचुः - **किमिति**। सामर्ष सक्रोधम्। हासेन संरम्भः आवेशः तेन शो[2]भनम्॥ १२॥

अन्या ऊचुः - **पुण्या** इति। नृलिङ्गेन मनुष्यदेहेन गूढः। वनस्थानि चित्राणि माल्यानि यस्य सः। अयं भावः - धिगिमां सभाम्, यस्यामयं पराभूयते। तास्तु व्रजभुवो धन्याः। यत् यासु अयं कृष्णो विविधक्रीडया अञ्चति गच्छतीति॥ १३॥

अहो! कष्ट मल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयं कृष्णः[3]। गोप्यस्तु बहुपुण्या इत्याऽहुस्त्रिभिः - गोप्य इति। अमुष्य श्रीकृष्णस्य रूपमङ्गं लावण्येन सारं श्रेष्ठम्। किञ्च असमोर्ध्वं न विद्यते सममूर्ध्वं अधिकञ्च यस्य तम्। तदपि नाऽन्येन आभरणादिना सिद्धम्, किन्तु स्वत एव। यशसः श्रियः[4] ऐश्वर्यस्य एकान्तधाम ऐश्वर्यस्य च अव्यभिचारि स्थानम्। पाठान्तरे अमुष्य ईश्वरस्येत्यन्वयः। एवम्भूतं [5-]अनुसवा[-5]भिनवं नित्यनवीनं रूपं या नेत्रैः पश्यन्तीति॥ १४॥

या इति। किञ्च, या दोहनादिष्वेनं गायन्ति, ता व्रजस्त्रियो धन्याः। प्रेङ्खेङ्खनं दोलान्दोलनम् । उक्षणं सेचनम्। कथम्भूताः ? [6-]उरुक्रमचित्तयानाः[-6] उरुक्रमे चित्तं [7-]उ[-7]रुक्रमचित्तं तेनैवं यानं सर्वविषयप्राप्ति र्यासां ताः। पाठान्तरे (उरुक्रमचिन्तयानाः इति) उरुक्रमं चिन्तयन्त्य इत्यर्थः कुतः? अनुरक्तधियः। तत्र लिङ्गम् - अश्रुकण्ठ्यः॥ १५॥

---

1 J, Va मुखाम्बु० 2 J, Va शोभितम् 3 J, Va omit कृष्णः 4 J, Va omit यशसः श्रियः, 5 J, Va omit 6- -6 J, Va omit 7- -7 P, Va omit.

वीर० अन्यास्त्वाहुः वल्गत इति। शत्रुमभितः शत्रोस्सर्वतः वल्गतो धावतः कृष्णस्य अम्बुकणैः पद्मकोशमिव श्रमवारिणाऽऽसं व्याप्तं वदनाम्बुजं दृश्यताम् ॥ ११।

अपरा ऊचुः- किं न पश्यतेति। आ[1] ईषत् समन्ताद्वा। ताम्रे लोचने यस्मिंस्तत्, मुष्टिकं प्रति सामर्षं सक्रोधं, हासेन संरम्भ आवेशः तेन शेभनं रामस्य मुखं किं न पश्यत॥ १२॥

अन्या ऊचुः - पुण्या बतेति। स्वयं पुराणपुरुषः श्रीमन्नारायणस्सन् नृलिङ्गेन मनुष्यस्येव शरीरेण गूढः तिरोधापित स्वस्वरूपगुणः वनस्थानि विचित्राणि माल्यानि यस्य सः। गिरित्ररमाभ्यां रुद्रमहालक्ष्मीभ्या मर्चितावङ्घ्री यस्य सः। गिरित्रग्रहणं चतुर्मुखादीनामप्युपलक्षणम्। सहबलः बलरामेण सहितः वेणुं वादयन् गाश्च पालयन् विक्रीडयाऽञ्चति अटति। अयम्भावः - धिगिमां सभाम्। यस्यामयं परिभूयते। तास्तु व्रजभुवो धन्याः यतोऽयं स्वयं कृष्णो विविधक्रीडया चरतीति॥ १३॥

अहो! अल्पपुण्या वयं यतोऽस्माभिरनवसरेऽयं दृष्टः, गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः - गोप्य इति। गोप्यः किं तप स्समाचरन्, ताभिराचरितं तपोऽनिर्वचनीयमित्यर्थः। कुतः ? यत् यस्मात् अमुष्य श्रीकृष्णस्य रूपमङ्गं लावण्येन सारं श्रेष्ठम्। किञ्च! असमोर्ध्वं न सममूर्ध्वमधिकञ्च यस्य तत् निस्समाभ्यधिक मित्यर्थः। तदपि नाऽन्येनाऽऽभरणादिना सिद्धं, किन्तु स्वत एव अकर्मायत्तं वा। किञ्च, यशसः श्रियो लक्ष्म्याः ईश्वरस्य, भावप्रधानोऽयं निर्देशः, ऐश्वर्यस्य च एकान्तधाम अव्यभिचारस्यनं, सदा नवाभिनवं, दुरापमकृतपुण्यानां चक्षुषाऽपि प्राप्तुमशक्यम्। एवम्भूतं रूपं याः नेत्रैः अनुपिबन्ति पश्यन्तीति॥ १४॥

किञ्च, याः दोहनादिषु एनं गायन्ति ता व्रजस्त्रियो धन्याः। कथम्भूताः? उरुक्रमे चित्तं उरुक्रमचित्तं, तदेव यानं सर्वपुरुषार्थप्राप्तिस्थानं यासां ताः। पाठान्तरे (उरुक्रमचिन्तयाना इति) उरुक्रमं चिन्तयमाना इत्यर्थः। कुतः? अनुरक्तधियः। तत्र लिङ्ग मश्रुकण्ठ्यः आनन्दाश्रुनिरुद्धकण्ठ्यः तत्र दोहनं गवाम्। उदवहनं जलानयनं, मथनं दध्नः, उपलेपो गृहाणां, [2]प्रेङ्खणं, प्रेङ्खोलनं दोलान्दोलनम्। अर्भरुदितम् रुददर्भकसान्त्वनम्, उक्षणं सेचनं, मार्जनं गृहसम्मार्जनम्॥ १५ ॥

---

1 T,W omit आ 2 K. प्रेङ्खनम्

विज० श्रमपर्याप्तं श्रमवारिव्याप्तं पद्मकोशं पद्ममुकुलम्॥ ११॥

हे सख्यः! रामस्य मुखं न पश्यत किं, पश्यतेत्यन्वयः। अमर्षेण सहितो हासः सामर्षहासः तेन संरम्भेण च शोभनं चारुतरम्॥ १२॥

नृणां लिङ्गेन लक्षणेन गूढः छन्नः अयं कृष्णनाम। पुराणपुरुषः यत् यासु व्रजभूमिषु विक्रीडया क्रीडेच्छया अञ्चति गच्छति, पादाभ्यामिति शेषः। गाश्चारयन् गिरावञ्चति च ता व्रजभुवः स गिरिश्च पुण्याः पावनाः। बत! आश्चर्यविधेः स्थितिः । किंविशिष्टः? वने विद्यमानानि विचित्राणि नानावर्णानि माल्यानि पुष्पाणि यस्य सः तथा। गिरावमरैर्देवै-रर्चिताङ्घ्रिः व्रजभुवि अमैरमलैः शुद्धान्तःकरणै र्गोपालैरर्चितश्रीचरणः॥ १३॥

अमुष्येश्वरस्य यल्लावण्यसारमथनोत्थं शृङ्गाररसमथनादुत्पन्नम्। न चेदंकृत्रिममित्याह-अनन्यसिद्धमिति। अन्यस्मात् प्रकृतेः जातं न भवतीति, अन्येषामविद्यमानं वा। अनुसवं प्रतिक्षणे अभिनवं नूतनं, ज्ञानमन्तरेण दुष्प्रापं श्रियो यशसश्च एकान्तधाम नियतस्थानरूपं द्रव्याश्रयलक्षणगुणम्। तत् याः दृग्भिः पिबन्ति, ताः गोप्यः किं तपः अचरन् चक्रुरित्यन्वयः॥१४॥

या गोप्यः गोदोहनादौ एनं कृष्णं गायन्ति, ता गोकुलस्त्रियः पुण्या इत्यन्वयः। अवहनने व्रीहिताडन काले, दधिमन्थनवेलायां उपजल्पे मिथस्सम्भाषणसमये। उपलेप इति केचित् पठन्ति, गोमयादिना स्थललेपनकाले, प्रेङ्खेङ्खने दोला चलनकाले, अर्भरुदिते बालरोदनकाले, उक्षणे प्राङ्गणसेचनसमये, मज्जने स्नानकाले। मार्जन इति केचित् । आदिशब्देन स्खलनपतनादिकं गृह्यते। उरुक्रमचित्ते यामः कालविशेषो यासां ता स्तथा। उरुक्रमचित्तेन गतो यामो यासां ता इति वा॥ १५॥

प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिस्समं क्वणयतोऽस्य निशाम्य वेणुम्।
निर्गत्य[1] तूर्ण मबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम्॥ १६॥

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः।
शत्रुं हन्तुं मन श्चक्रे भगवान्भरतर्षभ॥ १७॥

★[2-]उपश्रुत्य गिरः स्त्रीणां[-2] पुत्रस्नेह [3]शुगातुरौ।
पितरावन्वतप्येताम् [4-]अजानन्तौ तयो र्बलम्[-4]॥ १८॥

तैस्तै र्नियुद्धविधिभिः [5-]विविधै रच्युतेतरौ[-5]
युयुधाते [6]यथाऽन्योन्यं तथैव बलमुष्टिकौ॥ १९॥

भगवद्गात्रनिष्पातै र्वज्रनिष्पेषनिष्ठुरैः।
चाणूरो भज्यमानाङ्गो मुहुर्ग्लानि मवाप ह॥ २०॥

---

1 G, J, P, V °म्य ★ This verse is not found in M, Ma edns. 2- -2 G,J, सभयाः स्त्रीगिरः श्रुत्वा 3 G,J,P,V, शुचाऽऽ० 4- -4 G, J,P,V पुत्रयो रबुधौ बलम् 5- -5 p,v, उभौ चाणूरकेशवौ 6. M,Ma त०

**श्रीध०** [1]अपिच, **प्रातरिति**। या अबला अस्य वेणुं निशाम्य गृहात्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यन्ति ता भूरिपुण्या इति॥ १६॥

**एवमिति**। एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये कृष्णः शत्रुं हन्तुं मन श्चक्रे॥१७॥

**उपश्रुत्येति**। सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आतुरौ विह्वलौ पुत्रयो र्बलमजानन्तौ पितरावनुतापं प्राप्ताविति॥ १८, १९॥

**भगवदिति**। तदा भगवतो गात्राणामरत्निजान्वादीनां निष्पातैः प्रहारैः वज्रस्य निष्पेषः तीव्र[2]प्रपातः तद्वन्निष्ठुरैः भज्यमानाङ्गः [3]श्लथद्गात्रः॥ २०॥

---

1 J,Va omit अपि च 2 P,V omit प्र 3 J,Va गात्रः।

**वीर०** अपि च **प्रातरिति**। या अबलाः गोभिस्सह प्रातः व्रजान्निर्गच्छतः ततस्सायमाविशतश्च, वेणुं क्वणयतस्तस्य वेणुरवमाकर्ण्य गृहात्तूर्णं निर्गत्य पथि तस्य सदयोऽवलोको यस्मिन् स्मितयुक्तं मुखं पश्यन्ति, ता भूरिपुण्याः ॥ १६॥

इत्थं स्त्रीषु प्रभाषमाणासु सतीषु हे भरतर्षभ, योगेश्वरो भगवान् हरिः श्रीकृष्णः शत्रुं हन्तुं मनश्चक्रे॥ १७॥

तदा पितरौ देवकीवसुदेवौ नन्दवसुदेवौ वा पुत्रयोः रामकृष्णयोः बलमजानन्तौ केवलं स्त्रीणामुक्तरीत्या प्रभाषमाणानां गिरो वचांस्याकर्ण्य अन्वतप्येता मनुतप्तवन्तौ ॥ १८ ॥

अच्युतेतरौ कृष्णचाणूरौ अन्योन्यं नानाविधे स्तै स्तैः नियुद्धविधिभिः पूर्वोक्तपरिभ्रमणविक्षेपादिभिः यथा युयुधाते तथैव बलमुष्टिकौ [1-] राममुष्टिकौ [-1] च युयुधाते ॥ १९ ॥

तदा भगवतो गात्रस्य निष्पातैः अरत्निजान्वादिप्रहारैः वज्रस्य निष्पेषः तीव्रप्रहारः तद्वन्निष्ठुरैः भज्यमानाङ्गश्चाणूरो मुहुः ग्लानिम् [2] आप प्राप्तवान् ॥ २० ॥

---

1- -1 K omits 2 T,W omit अवाप।

**विज०** वेणुरवं निशम्य व्रजान्निर्गत्य पथि स्थित्वा ॥ १६,१७ ॥

इतरः चाणूरः ॥ १८,१९ ॥

ग्लानिं प्राणसन्देहक्लेशाम् ॥ २० ॥

**स श्येनवेग उ[1]त्पत्य मुष्टीकृत्य[2] करा वुभौ।**
**भगवन्तं वासुदेवं क्रुध्दो व[3]क्षस्यताडयत् ॥ २१ ॥**

**नाऽचलत्तत्प्रहारेण स्र[4]जा हत इव द्विपः**
**बाह्वो र्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः ॥ २२ ॥**

**भूपृष्ठे पोथयामास तरसा क्षी[5]णजीवितम्**
**विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवाऽपतत् ॥ २३ ॥**

**तथैव मुष्टिकः पूर्वं स्वमुष्ट्या[6]भिहतेन वै।**
**बलभद्रेण बलिना तलेनाऽभिहतो भृशम् ॥ २४ ॥**

**प्रवेपितस्य रुधिरमुद्वमन्मुखतोऽर्दितः ।**
**व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ २५ ॥**

---

1 P,T,V,W उत्प्लुत्य 2 K,T,W ०त 3. G,J,P,T,V,W ०स्यबाधत 4 G,J मालाहत, K,T,W स्रग्भिर्हत 5 K,T,W त्यक्त 6 k ०ष्टयभि० ।

**श्रीध०** **स** इति। श्येनस्येव वेगो यस्य सः **चाणूरः**। **अवाधत** अताडयत्॥२१,२२,॥

**भूपृष्ठ** इति। भूपृष्ठे भुवउपरि। पोथयामास आस्फोटयत्[1]।इन्द्रध्वजो वज्रम्। यद्वा, इन्द्रध्वजो नाम[2] गौडदेशेषु[3] प्रसिद्धः कस्मिंश्चिदुत्सवे महान् स्तम्भो ध्वजपताकाद्यलङ्कृतः पुरुषाकृतिरुच्छ्रीयते स यथा पतति तद्वद[4]पतदिति॥२३, २४॥

**प्रवेपित** इति। अर्दितः पीडितः उर्व्युपस्थे भूतले ॥२५॥

---

1 J,Va ०स्फाल० 2 J, Va omit नाम 3 J,Va गौडेषु 4 P,V,omit अपतत्।

**वीर०** स चाणूरः श्येनस्येव वेगो यस्य सः उत्पत्य क्रुद्धः उभौ मुष्टीकृतकरौ वासुदेवं वक्षस्यताडयत् मुष्टीकृतकराभ्यां वासुदेवस्य वक्षस्यताडयदित्यर्थः। मुष्टीकृत्य इति पाठे उभौ करौ मुष्टीकृत्य॥२१।

भगवान् तत्प्रहारेण नाऽचलत्, यथा स्रग्भिः हतस्ताडितो द्विपो गजो न चलति तद्वत् किन्तु तरसा चाणूरं बाह्वोर्गृहीत्वा बहुकृत्वो भ्रामयन् तेनैव त्यक्तं जीवितं येन तं गतप्राणं भूपृष्ठे पोथयामास आस्फोटयत्। तेनैवं पातितः चाणूरः बिस्रस्ता विक्षिप्ताः केशा आकल्पाः आभरणानि स्रजश्च यस्य तथाभूतो न्यपतत्। इन्द्रध्वजो नाम गौडदेशेषु प्रसिद्धः कस्मिंश्चिदुत्सवे महान् स्तम्भो ध्वजपताकाद्यलङ्कृतः पुरुषाकृतिः उच्छ्रीयते स यथा पतति तद्वदिति॥२२,२३॥

तथा मुष्टिकोऽपि तावत् स्वमुष्टिना ताडितेन रामेण कर्त्रा भृशं करतलेनाऽभिताडितः प्रवेपितः कम्पितः अर्दितः पीडितः मुखतो रुधिरमुद्वमन् उद्गिरन् गतप्राणो, वातेन चण्डमारुतेनाऽऽहतः उन्मूलितमूलोऽङ्घ्रिपो वृक्ष इव उर्व्युपस्थे भूपृष्ठे पपात॥२४,२५॥

**विज०** उर्व्युपस्थे भूमिपृष्ठे॥२१-२५॥

**ततः कूट मनुप्राप्तं रामः प्रहरतां वरः।**
**अवधील्लीलया राजन् सावज्ञं वाममुष्टिना॥२६॥**

**त[1]थैव हि शलः कृ[2-]ष्णपदाऽपहत[-2]शीर्षकः।**
**द्विधा वि[3]दीर्णस्तोस[4]लक उभावपि निपेततुः॥२७॥**

**चाणूरे मुष्टिके कूटे [5-]शले तोसलके[-5] हते।**
**शेषाः प्रदुद्रुवुर्मल्ला स्सर्वे प्राणपरीप्सवः[6]॥२८॥**

**गोपान्वयस्यानाकृ[7]ष्य तैस्संसृ[8]ज्य विजह्रतुः।**
**वाद्यमानेषु तूर्येषु वल्गन्तौ चा[9]रुन्नूपुरौ॥२९॥**

**जनाः प्रजहृषु स्सर्वे कर्मणा रामकृष्णयोः।**
**ऋते कंसं विप्रमुख्या स्साधव स्साधु साध्विति॥ ३०॥**

---

1 G,J,P,V तर्ह्येव 2- -2 K प्रपदाहत; T,W, पादावहत 3 p,v कीर्ण; T,W, विशीर्ण 4 G,J,M,Ma ०श० 5- -5 G,J शले तोशलके; M,Ma तोशले शलके 6 K °या 7 P,V ०हूय 8 T,V ०हत्य 9 G,J,P,V रुत; M,Ma नुत।

**श्रीध० गोपानिति।** वल्गन्तौ नृत्यादि कुर्वन्तौ॥ २६-२९॥

**जना इति।** साधु साधु इति वदन्तः॥ ३०॥

**वीर०** ततो रामः अनु समनन्तरं प्राप्तं कूटाख्यं मल्लं सावज्ञं सावहेलनं यथा तथा लीलया वाममुष्टिना अवधीत्॥ २६॥

तथैव कृष्णस्य प्रपदा पादाग्रेण ताडितशिराः शलाख्यो मल्लः, तोशलस्तु द्विधा विदीर्णः विदारितः, उभौ तावेतौ शलतोसलकौ निपेततुः॥ २७॥

इत्थं चाणूरादिषु हतेषु अवशिष्टा स्सर्वे मल्लाः प्राणपरीप्सया प्राणानाप्तुमिच्छया, जीवितुमिच्छयेति यावत्। प्रदुद्रुवुः पलायितवन्तः प्राणपरीप्सव इति पाठे जीवितुमिच्छव इत्यर्थः ॥ २८॥

ततो रामकृष्णौ वयस्यान् सखीन्गोपान् आकृष्याऽऽहूय तैस्संसृज्य सङ्गम्य तूर्येषु वाद्येषु वाद्यमानेषु सत्सु चारुणी नूपुरे ययोस्तौ, वल्गन्तौ नृत्यादिकं कुर्वन्तौ विहृतवन्तौ। २९॥

तदा कंसं विना सर्वे जनाः रामकृष्णयोः कर्मणा नियुद्धात्मकेन नितरां हृष्टवन्तः तथा साधवो विप्रश्रेष्ठाश्च साधुसाध्वित्यूचुः॥ ३०॥

**विज०** सावज्ञ मनायासम् ॥ २६-२८॥

संसृज्य सङ्गम्य वल्गन्तौ नृत्यन्तौ तौ[1] वीक्ष्य नुतनूपुरौ स्तुततुलाकोटी। नूत (नूत्न) नूपुरौ इति केचित्। "तुलाकोटिस्तु नूपुरम्" (हला; को 2- 406) इति॥ २९, ३०॥

---

1 Ma omits तौ।

**हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट्।**
**न्यवारयत्स्वतूर्याणि वाक्यश्चेदमुवाच ह॥ ३१॥**

**निस्सारयत दुर्वृत्तौ वसुदेवात्मजौ[1] पुरात्।**
**धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम्॥ ३२॥**

**वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः।**
**उग्रसेनः पिता चाऽपि सानुगः परपक्षगः॥ ३३॥**

**कंसवधघट्टः**

**एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः।**
**लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत्॥ ३४॥**

**तमापतन्त[2] मालोक्य मृत्युमात्मन आसनात्**
**मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी॥ ३५॥**

---

1 T,W ०व सुतौ 2 G,J ०विशन्त०

**श्रीध०** **एवमिति।** अव्ययोऽश्रमः। लघिम्ना लाघवेन॥ ३१-३५॥

**वीर०** इत्थं मल्लवर्येषु [1-]चाणूरादिषु हतेषु[-1], अवशिष्टेषु [2-]पलायितेषु[-2] च सत्सु भोजराट् कंसः तूर्याणि न्यवारयत्। [3]इदं वक्ष्यमाणं वाक्यमुवाच च ॥ ३१॥

तदेवाऽऽह - **निस्सारयतेति** द्वाभ्याम्। दुर्वृत्तौ वसुदेवस्याऽऽत्मजौ, द्वितीयान्तमिदम्। पुरान्निस्सारयत निष्कासयत। स्वभृत्यान् प्रति इयमुक्तिः। गोपानां धनं हरत गृह्णीत। तथा दुष्टा बुद्धि र्यस्य तं नन्दं बध्नीत बद्धं कुरुत॥ ३२॥

असत्तमो दुरात्मा वसुदेवः आशु [4]शीघ्रं हन्यताम्। तथा नोऽस्माकं पिता उग्रसेनश्च परपक्षगः शत्रुपक्षपाती, हेतुगर्भमिदम्। तत्त्वात् सानुगो हन्यताम्॥ ३३॥

इत्येवं कंसे विकत्थमाने विरुद्धं यथा तथा कथयति सति अव्ययो भगवान् प्रकुपितो लघिम्ना लाघवेन [5]उत्पत्य तरसा बलेन उत्तुङ्गमुन्नतं मञ्चं कंसाधिष्ठितं पीठ मारुरोह॥ ३४॥

तदा तात्कालिककर्तव्याभिज्ञः कंसः स्वमृत्युमिवाऽऽपतन्तं कृष्णमालोक्य सहसा त्वरया आसनादुत्थाय खड्गखेटौ जगृहे॥ ३५॥

---

1- -1 T omits 2- -2 T omits 3 T.w इत्थं 4 T.W omit शीघ्रं 5 T,W उत्प्लुत्य।

**विज.** निस्सारयत निर्गमयत॥ ३१, ३२॥

**लघिम्ना पक्षिवत् लाघवेन। अव्ययः योगवित्। प्रधानपुरुषेश्वरः इत्यर्थः॥** ३३, ३४॥

**मनस्वी धीरः॥** ३५॥

तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे।
समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य॥ ३६ ॥

[1] प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात्।
तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः॥ ३७ ॥★

[2] कंसं परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः।
हा हेति शब्दस्सुमहांस्तदाऽभूदुदीरितस्सर्वजनैर्नरेन्द्र॥ ३८ ॥

स नित्यदोद्विग्नधिया तमीश्वरं पिबन्[3-]नदन्वा वि[-3]चरन् स्वपन् श्वसन्।
ददर्श चक्रायु[4-]धमग्रतो य[-4]त स्तदेव रूपं दुरवाप माप॥ ३९ ॥

तस्याऽनुगा[5] भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः।
अभ्यधाव[6]न्नति क्रुद्धा भ्रातु[7] र्निर्वेश कारिणः॥ ४० ॥

---

1 M, Ma नि, ★ कंसोऽपि कृष्णेन जगत्त्रयैकनिवासभूतेन निपात्य सोऽधः। तेनाऽऽत्मतन्त्रेण च पीडितोऽसुं तत्याज राजन्निमिषान्तरेण। This extra verse is found in M,Ma edns. without commentary. 2. G,J. तं सम्य० 3 G,J,K ०न्वदन् वावि०, T.W. ०न्वदन्वाऽपि 4- -4 M ०मच्युतं यत; Ma मच्युतं यतः 5. G,J,M,Ma,P,V ०जा 6 G,J ०न्नभि 7 M ०तुनि०।

**श्रीध० तमिति।** दुर्विषहम[1]विषह्य मुग्रं तेजो यस्य स श्रीकृष्णः॥ ३६ ॥

**प्रगृह्येति।** गरिष्ठत्वाय विश्वाश्रयत्व मुक्तम्। तत्र हेतुः - अब्जनाभः। कुतः? तस्योपर्येव पपात। यत आत्मतन्त्रः [2] स्वतन्त्रः॥ ३७ - ३९ ॥

**तस्येति।** निर्वेशो निष्कृतिरानृण्यमित्यर्थः। तत्कारिणस्सन्तः ते अभ्यधावन्॥ ४० ॥

---

1 P,V °मसह्य० 2 P,V omit स्वतन्त्रः॥

**वीर०** अविषह्यमुग्रं तेजो यस्य स भगवान् खड्गः पाणौ यस्य तं दक्षिणतो वामतः अम्बरे ऊर्ध्वञ्च श्येनं यथा श्येनमिव चरन्तं कंसं समग्रहीत्, यथा तार्क्ष्यसुतः कश्यपपुत्रो गरुडः प्रसह्य बलादुरगं सर्पं गृह्णाति तद्वत्॥ ३६॥

ततः केशेषु प्रगृह्य दृढं गृहीत्वा चलद्विक्षिप्तं किरीटं यस्य तं कंसम् उन्नतान्मञ्चाद्रङ्गोपरि निपात्य तस्य कंसस्योपरिष्टात् स्वयमब्जनाभो भगवान्पपात। कथम्भूतः? विश्वाधारः। अनेन गरिष्ठत्व मुक्तम्। आत्मतन्त्रः स्वतन्त्रः संहर्तेत्यर्थः॥ ३७॥

ततः जगतो जनस्य पश्यतस्सतः परेतं गतप्राणं कंसं भूमौ विचकर्ष, यथा हरिः सिंहः इभं गजं, तद्वत्। तदा हे नरेन्द्र, सर्वैर्जनैः सुमहानत्युच्चैः हा हेति शब्दः उदीरितः उद्घोषितोऽभूत्॥३८॥

यतस्सदा उद्विग्नया भीतया धिया तमीश्वरं कृष्णमेव पानभोजनाद्यवस्थासु अग्रतः चक्रायुधं ददर्श, तत स्स कंसो दुरासदमपि तदेव रूपं प्राप्तवान् तत्सारूप्यलक्षणं मुक्तिमवापेत्यर्थः॥ ३९ ॥

ततस्तस्य कंसस्य भ्रातरः कङ्कादयोऽष्टौ भ्रातु र्निर्वेशं निष्कृतिमानृण्यं, तत्कारिणः अतिक्रुद्धाः अभ्यधावन्॥४०॥

**विज०** दुर्विषहे च उग्रे च तेजसी बलार्चिषी यस्य स तथेति॥ ३६ ॥

उत्तुङ्गमञ्चादवपातनादङ्गभङ्गः कथं नाऽभूत्? तत्राऽऽह - विश्वाश्रय इति। विश्वमाश्रायो यस्येति विग्रहे उक्तचोद्यनिस्तार इत्यत उक्तम् आत्मतन्त्र इति, अपराधीनत्वात्॥३७,३८॥

स कंसः चीर्णपुण्यफलदानार्थं कंसे स्थितो वायुः संसारावस्थायां तदुद्विग्नबुद्ध्या भीतबुद्ध्या, अन्यत्र मरणा दुद्विग्नबुद्ध्या तमीश्वरं ध्यायन् नित्यदाप्यनादौ पुनः दैत्यस्य मृत्युसमये मञ्चेऽग्रतःस्थितं यदच्युतं अविनाशि नित्यं चक्रं सुदर्शनं आयुधं यस्य स तथा ददर्श हरे रूपमाप आविष्ट इत्यर्थः। अन्यस्त्वच्युतं चक्रं छद्मैवाऽऽयुधं यस्याः तमोदेवतायाः तच्चक्रायुधमन्यथाज्ञानसाध्यं यद्ददर्श तदेव तमोदेवतायाः रूपं नित्यदुःखलक्षणमाप। दुरवापमित्युभयत्रसमम्। "चक्रं सैन्ये जलावर्ते रथाङ्गे चयराष्ट्रयोः, संसारे मण्डले वृत्ते छद्मभेदास्त्रभेदयोः" (वेज.को 6-3-7) इति च॥३९,४०॥

तदाऽतिरभसांस्तांस्तु[1] संयत्तान्रोहिणीसुतः।
अहन् परिघमुद्यम्य पशूनिव मृगाधिपः॥ ४१ ॥

नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः।
पुष्पैः किरन्तस्तम्प्रीता[2] श्शशंसुर्ननृतुः स्त्रियः॥ ४२ ॥

तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः।
तत्राऽभ्ययु[3] र्विनिघ्नन्त्य[4] श्शीर्षाण्यश्रुविलोचनाः[5]॥ ४३ ॥

शयानान्वीरशय्यायां पतीनालिङ्ग्य शोचतीः।
विलेपुस्सुस्वरं नार्यो विसृजन्त्यो मुहुश्शुचः॥ ४४ ॥

हा नाथ प्रिय धर्मज्ञ करुणानाथ वत्सल।
त्वया हतेन निहता वयं ते सगृहप्रजाः॥ ४५ ॥

1 G,J,M,Ma,P,V तथा 2. K,T,W ०स्स० 3 G,J,M,Ma ०ऽभीयु० 4 M,Ma,add ०स्व० 5 M,Ma omit वि.

**श्रीध० तदेति।** तथा तादृगतिरभसो वेगो येषां तान्। संयत्तानुद्युक्तान्॥ ४१ - ४३ ॥

**शयानानिति।** शोचन्त्यो विलापांश्चक्रुः। शुचः अश्रूणि॥ ४४ ॥

**हा नाथेति।** धर्मज्ञ इत्यादिनि विलापे प्रेमसम्बोधनानि॥ ४५ ॥

**वीर०** तदा अतिमात्रो रभसो वेगो येषां तान् संयत्तान् उद्युक्तान् रामः परिघमुद्यम्य अहन् जघान। मृगाधिपः सिंहः पशूनिव॥ ४१ ॥

तदा स्वविभूतिभूता ब्रह्मरुद्रादयः पुष्पैः किरन्तः शशंसुः तुष्टुवुः। स्त्रियोऽप्सरसो ननृतुः॥ ४२ ॥

तेषा मिति। हे महाराज तेषां कंसकङ्कादीनां स्त्रियः पत्न्यः भर्तृमरणेन हेतुना दुःखिताः स्वशिरांसि विनिध्नन्त्यः अश्रूणि लोचनयोः यासां ताः, तत्र भर्तृसन्निधावाजग्मुः॥ ४३ ॥

वीरशय्यायां युद्धभूमौ शयानान् स्वभर्तॄनालिङ्ग्य शोचन्त्यः मुहुः शुचोऽश्रूणि विसृजन्त्यः सुस्वरं यथा तथा विलेपुः विलापं चक्रुः॥ ४४ ॥

विलापनप्रकारमेवाऽऽह - हा नाथेति। नाथेत्यादीनि विलापे प्रेमसम्बोधनानि। हतेन त्वया सहैव ते त्वदीयाः सगृहास्सप्रजाश्च वय मपि निहतप्रायाः॥ ४५ ॥

**विज०** [1-]भ्रातुर्निर्वेशो निष्कृतिः आनृण्यं तत्कारिणः[-1]। "सिंहव्याघ्रौ मृगाधिपौ" इति च॥ ४१ ॥

विभूतयः हरिविशेषसन्निधानपात्राणि॥ ४२, ४३ ॥

वीरशय्यायां रणभूमौ विलेपुः विलापं चक्रुः विसृजन्त्यः ददत्यः। "त्यागो विहापितं दानमुत्सर्जनविसर्जने।" (अम.को 2-428) इति (हलायुधः),॥ ४४ ॥

करुणया नाथन्ते प्रार्थयन्ते इति करुणानाथाः। तेषु वत्सल, स्निग्ध! ते तव **विद्यमानाः** ये पुरा सनाथा स्ते वय मिति वा॥ ४५ ॥

---

1- -1 Ma omits.

त्वया विरहिता पत्या पुरीयं [1]पुरुषर्षभ।
न शोभते वयमिव निवृत्तोत्सवमङ्गला॥ ४६ ॥

अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम्।
तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम्॥ ४७ ॥

[2]सर्वेषामेव भूताना मेष हि प्रभवाप्ययः।
गोप्ता च, तदव [3-]ध्यायी न क्वचि [-3]त्सुख मेधते॥ ४८ ॥

[4-]श्रीशुक उवाच[-4]

राजयोषित आश्वास्य भगवान् [5]लोकभावनः।
या माहुर्लौकिकीं संस्थां हतानां [6]समकारयत्॥ ४९ ॥

मातरं पितरञ्चैव मोचयित्वाऽथ बन्धनात्।
रामकृष्णौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः॥ ५० ॥

देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ।
कृतसंवन्दनौ पुत्रौ सस्वजाते न शङ्कितौ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे
पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥

(विजयध्वजरीत्या द्विचत्वारिंशोऽध्यायः॥)

---

1. M,Ma भरत० 2. G,J,M,Ma ०मिह 3- -3 M,Ma ० ज्ञाय न तथा सु० 4- -4 T,W omit 5. P भूति०; V भूत० 6. K,T,W ता०

**श्रीध० त्वयेति।** [1]ते त्वदीया [2]वयमिव त्वया पत्या विरहिता पुरीयं न शोभते इति स्वदृष्ट्या अभिधानम्॥ ४६॥

**अनागसामिति।** अनागसामिति तु परमार्थाभिधानम्॥ ४७ ॥

**सर्वेषामिति।** एष कृष्णः। प्रभवन्त्यस्मादिति प्रभवः। अपियन्ति [3]लीयन्ते अस्मिन्नित्यप्ययः। स च स च। [4]तस्यावध्यानं [5-]अवज्ञानं [-5]कर्तुं शीलं यस्य सः॥ ४८, ४९ ॥

**मातरमिति।** आस्पृश्य ईषत्स्पृष्ट्वा॥ ५० ॥

**देवकीति।** पुत्रं भ्रान्तिं विहाय जगदीश्वराविति ज्ञात्वा शङ्कितौ सन्तौ न सस्वजाते नाऽलिङ्गितवन्तौ। किन्तु बद्धाञ्जली तस्थतुरित्यर्थः। ★ प्रसह्य हत्वा हस्तीन्द्रं मल्लेन्द्रान्मल्ललीलया। बीभत्सचरितं कंसं सबीभत्समममारयत्॥ ५१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्याया

चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥

---

1 PV omit ते 2 J,Va omit इव। 3 P,J,Va omit लीयन्ते 4 J,Va तदव० 5- -5 तदवज्ञा तत्क० 6 J,Va omit सन्तौ। ★ श्रीधरीयोऽयं श्लोकः॥

**वीर०** पत्या प्रभुणा त्वया विरहितेयं पुरी हे पुरुषर्षभ! यथा वयं, तद्वत् निवृत्ताः उत्सवाः मङ्गलानि सुखानि च यस्यां तथाभूता पूर्ववन्न शोभते इति कुदृष्ट्या ऊचुः॥ ४६ ॥

अथ परमार्थदृष्ट्या[1] ऊचुः - **अनागसामिति।** त्वं निरपराधानां भूतानां दुस्सहं द्रोहं कृतवान्। तेन कारणेन भो भर्तः! इमां दशां प्राप्तः। भूतेभ्यो[2] द्रुह्यतीति तथा, सः कोवा शं सुखं लभेत? किन्तु दुःखमेवेति भावः॥ ४७॥

**किञ्च।** एष श्रीकृष्णः सर्वेषां भूतानां प्रभवः प्रभवन्त्यस्मादिति प्रभवः, स्रष्टेत्यर्थः। अपियन्ति लीयन्तेऽस्मिन्निति अप्ययः। संहर्तेत्यर्थः। गोप्ता रक्षिता च। अत स्तदवध्यायी तस्मिन्विषये, अवध्यानमवज्ञा, तत्कर्तुं शीलं यस्य सः। क्वचिदपि सुखं यथा तथा नैधते न वर्धते; किन्तु दुःखमेवाऽनुवन्नश्यतीत्यर्थः॥ ४८ ॥

इत्थं शोचतो राजयोषितः सान्त्वयित्वा, लोकभावनः लोकं भावयति श्रेयोयुक्तं करोतीति तथा। तस्मात् हतानां यां लौकिकीं स्मार्तीं संस्थां दाहादिक्रिया माहुः मनुयाज्ञवल्क्यादयः, तामकारयत्॥ ४९ ॥

ततो रामकृष्णौ मातरं पितरं देवकीं वसुदेवञ्च बन्धनात् मोचयित्वा, तयोः पादयोः शिरसा ईषत् स्पृष्ट्वा ववन्दाते॥ ५० ॥

कृतं संचन्दनं याभ्यां तौ पुत्रौ जगदीश्वरौ विज्ञाय न शङ्कितौ कंसभयशङ्कारहितौ सस्वजाते आलिङ्गितवन्तौ॥ ५१॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥

---

1 T,W ०मात्म 2 T,W भूतानि।

**विज०** प्रभव उत्पादकः अप्यय स्संहारहेतुः। "प्रभवाप्ययौ हि भूतानाम्" (नृ पू. उ 4-2) इति श्रुतिः। यथा सुखं भवति तथा नैधते न वर्धते॥ ४६-४८ ॥

संस्थां मृतसंस्कारम्॥ ४९, ५० ॥

न सस्वजाते आलिङ्गनं न कुर्वाति। [1]किन्तु बद्धाञ्जली तस्थुरित्यर्थः[1]॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥

(श्रीविजयध्वजरीत्या द्विचत्वारिंशोऽध्यायः)

---

1- -1 Ma omits

# पञ्चचत्वारिंशोऽध्यायः

(विजयध्वजरीत्या त्रिचत्वारिंशोऽध्यायः)

पितृसान्त्वनघट्टः

[1-] श्रीशुक उवाच [-1]

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः।
मा भूदिति निजां मायां ततान जनमोहिनीम्॥ १ ॥

उवाच पितरावेत्य साग्रजस्सात्त्वतर्षभः।
प्रश्रयावनतः प्रीणन्नम्ब! तातेति सादरम्॥ २ ॥

[2-] श्रीकृष्ण उवाच [-2]

नाऽस्मत्तो युवयो स्तात! नित्योत्कण्ठितयोरपि
बाल्यपौगण्डकैशोराः पुत्राभ्याम[3]भवन्क्वचित्॥ ३ ॥

न लब्धो दैवहतयो र्वासो नौ भवदन्तिके।
[4]यां बालाः पितृगेहस्था [5]विन्दन्ते लालिता मुदम्॥ ४ ॥

सर्वार्थसम्भवो देहो जनितः पोषि[6]तो यतः।
न तयोर्याति निर्वेशं पित्रो र्मर्त्यश्शतायुषा॥ ५ ॥

---

1- -1 K,T,W बादरायणिरुवाच 2- -2 G,J,M,Ma,P,V omit 3 M,Ma °मगम० 4 M,Ma ये 5 M,Ma विन्दते 6, M,Ma ताः पुनः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम्। उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः॥

पितराविति। आत्तम्भार्थौ विदित्वेति। अयमर्थः- उप समीपे आवयोः पुत्रबुद्ध्या सांसारिकपरमसुखभोगा त्पूर्वमेव लब्धार्थौ लब्धः आवामीश्वराविति प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तौ तथाभूतौ ज्ञात्वा, मयि प्रसन्ने सति अनयो र्ज्ञानं नाम किं दुर्लभं स्यात्? दुर्लभन्तु मयि पुत्रप्रेम[1]। अत इदानी मेव तत्त्वज्ञानं[2] मा[3] भूदिति निजां स्वाधीनां मायां तयोः प्रसारितवानिति॥ १ ॥

तदेव दर्शयति उवाचेत्यादिभिः अष्टभिः। प्रीणन् प्रीणयन् सादरमब्रवीत्[4]॥ २ ॥

नेति। अस्मत्तोऽस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यामावाभ्यां[5] कृत्वा बाल्यपौगण्डकैशोराः तत्तदवस्थानुभवसुखानीत्यर्थः[6], नाऽभवन्निति। अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा॥ ३ ॥

किञ्च।आवामेव दैवहीनावित्याह - न लब्ध इति। पितृगेहस्था बालाः[7] यां मुद विन्दन्ते सा च न लब्धेति॥ ४॥

एवं तावत् श्लोकद्वयेन युवयोरावयोश्च कामहानि जतित्युक्तम्। आवयोः पुनः युष्मत्परिचर्यालोपेन धर्महानि रपि जातेत्याह- सर्वेति। सर्वेषां धर्माद्यर्थाना सम्भवो यस्मिन्स देहो यतो याभ्यां जनितः पोषितश्च, तयोः पित्रो र्निर्विशं निष्कृतिम्[8] आनृण्यमित्यर्थः[9]। मर्त्यः शतसंवत्सरमात्रेणाऽऽयुषा न प्राप्नोति॥ ५ ॥

---

1 J,Va पुत्रतया 2 J,Va तज्ज्ञान 3 Va नाऽभू० 4 J,Va ° मब्रुवन् 5 P,V omit आवाभ्या 6 P V add युवयोः 7 P,V omit बालाः 8 P,V omit निष्कृतिम् 9 J,Va omit इत्यर्थः।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ पितृसान्त्वनोग्रसेनराज्याभिषेचनोपनयनगुर्वभिगमनविद्याग्रहणगुरुदक्षिणाप्रदानात्मकं चरित्रमनुवर्णयति पञ्च चत्वारिंशेन। "विज्ञाय जगदीश्वरौ" (भाग 10-44-51) इत्युक्तम्। तत्र भगवान् मयि पुत्रे सति अनयो र्मद्विषयकं ज्ञानं न दुर्लभम्। किन्तु मद्याथात्म्यानुभवादपि मयि पुत्रप्रेमजानन्दोऽतिरिच्यते[1] इत्यालोच्य स्वविषयकयाथात्म्यज्ञानतिरोधापिनीं मायामाततानेत्याह - पितराविति। उपलब्धः विज्ञातः अर्थः निरतिशयपुरुषार्थः आत्मा याभ्यां तथाभूतौ पितरौ विदित्वा पुरुषोत्तमो भगवान् मा भूदिति अविच्छिन्नं स्वयाथात्म्यज्ञानं मा भूदिति जनमोहिनीं माया ततान विस्तृतवान् आच्छादितवानित्यर्थः॥ १ ॥

तत स्साग्रजः सरामस्सात्वतर्षभो भगवानात्ममायया आत्मानं केवलं पुत्रमेव मन्वानौ पितरौ उपेत्य प्रश्रयेन विनयेन अवनतो नम्रः सादरं यथातथा हे अम्ब! हे तात! इति सम्बोधनेन प्रीणन् प्रीतिं जनयन् उवाच॥ २ ॥

उक्तिमेवाऽऽह नाऽस्मत्त इति सतभिः। हे तात!अस्मत्तोऽस्मन्निमित्त नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्या पुत्रयो रावयोः बाल्याद्यवस्थाः कचिद्भवदन्तिके नाऽभवन्, अन्यत्र इयान्कालो गतः, न तु युष्मदन्तिके इत्यर्थः॥ ३॥

तदेवाऽऽह न लब्ध इति। दैवेन हतयोः हतभाग्ययोः नौ आवयोः भवदन्तिके वासो न लब्धः आवामेव भाग्यहीना वित्यर्थः पितृगेहस्था बालाः या मुद विन्दन्ति, सा च न लब्धेति॥ ४ ॥

एव युवयोरावयोश्च कामहानिः जातेत्युक्तम्। अथ आवयोः पुनः युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह - सर्वार्थसम्भव इति। सर्वेषा पुरुषार्थाना धर्मादीना सम्भवो यस्मिन् स देहो यतो याभ्यां जनितः, पोषितश्च। तयो र्निर्वेश निष्कृतिमानृण्य मर्त्यः शतवत्सरमात्रेणाऽपि नैति न प्राप्नोति॥ ५ ॥

---

1 TW पुत्रे।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मुरारेर्भगवतो बन्धनशक्तेः प्रकारः प्रतिपाद्यतेऽस्मिन्नध्याये। तत्र शुकः कसवधानन्तर श्रीकृष्णेन किमकारीति राज्ञो मानस प्रश्न परिहरति पितराविति। उपलब्धः सम्यक् ज्ञातोऽर्थः[1] वस्तु नित्याप्रतिहत भगवत्स्वरूप अस्मत्सुतौ नेति याभ्य तौ तथाविधौ ज्ञात्वा मा भूत् ज्ञातमत्स्वरूपौ मा भूतामिति निरूप्य निजा माया बन्धकशक्तिं ततान विस्तृतवान्॥ १॥

प्रीणयन् प्रीति मुत्पादयन् प्रश्रये प्रकृष्टसेवायाम् अवनतः मग्नः॥ २ ॥

अस्मन्निमित्त नित्योत्कण्ठितयोर्युवयोः पुत्राभ्यामावाभ्या बाल्यपौगण्डकैशोरा वयोवस्थाः पित्रोरानन्दहेतवो नागमन् युष्मत्पुरतो बाल्याद्युचिता लीला न प्राप्ता इत्यर्थः॥ ३ ॥

अप्राप्तौ निमित्त माह - नेति। दैवहतयोः भाग्यहीनयोः नौ आवयोः भवत्समीपे वासो न लब्ध इति यस्मात् ये बाला स्ते पित्रो गृहे स्थिताः या मुद विन्दन्ते सापि न लब्धेत्यन्वयः। विन्दते इति छान्दसः "अभय प्रतिष्ठा विन्दते" (तैत्ति उ 2-7) इति श्रुतिः॥ ४ ॥

सर्वेषामर्थाना मोक्षादिपुरुषार्थाना सम्भव उत्पत्तिः यस्मात् सर्वार्थसम्भवो देहो याभ्या जनितः पुनः पोषितश्च तयोः पित्रोः शतायुषा वर्षसहस्रेणाऽपि निर्वेशं निष्कृतिं न याति मर्त्यः अल्पायुः॥ ५ ॥

---

1 Ma ज्ञातमर्थः।

यस्तयोरात्मजः कल्यः[1] आत्मना च धनेन च।
वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि॥ ६ ॥

मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम्।
गुरुं[2] विप्रं प्रपन्नश्च कल्योऽबिभ्रच्छ्वसन्मृतः[3]॥ ७ ॥

तन्नावकल्ययोः[4] कंसान्नित्यमुद्विग्नचेतसोः[5]।
मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः॥ ८ ॥

तत्क्षन्तुमर्हथस्तात[6]! मातर्नौ परतन्त्रयोः।
अकुर्वतो वां शुश्रूषां क्लिष्टयोर्दुर्हृदा[7] भृशम्॥ ९ ॥

[8-]श्रीशुक उवाच[-8]

[9]इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा।
मोहितावङ्कमारोप्य परिष्वज्याऽऽपतुर्मुदम्॥ १० ॥

---

1 G,J,M,Ma कल्पः 2 P,V गुरून् 3 G,J,M,Ma कल्पोऽ 4 G,J,M,Ma कल्प० 5 G,J,M,Ma,P,V °०सान्नित्य० 6 K,T,W ° स्तत्र7 G,J,P,V °दामृ० 8- -8 M,Ma,P,V omit 9 P,V इत्थं।

श्रीध० य इति। तन्मध्ये पितु र्यः पुत्रः कल्यः[1] समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न सम्पादयेत्, तं प्रेत्य लोकान्तरे यमदूताः स्वस्यैव मांसं खादयन्ति[2] हि [3-]स्वमांस मिति वा[-3]॥ ६ ॥

किञ्च मात्रादिशुश्रूषामकुर्वन् विफलजीवितश्च भवतीत्याह-मातरमिति। अबिभ्रत् अपुष्णन् श्वसन्नपि मृततुल्य एवेत्यर्थः[4]॥ ७ ॥

तदिति। तत्तस्मात् नौ आवयोः मोघं व्यर्थम्। अनर्चतोः अपूजयतोः[5] ॥ ८ ॥

तदिति। दुर्हृदा कंसेन[6] ॥ ९,१० ।

---

1 J,Va कल्पः 2 J,Va न्तीति। 3- -3 J,Va omit 4 J,Va एवेति। 5 P,V omit अपूजयतोः 6 J,Va add कृत्वा।

वीर० तन्मध्ये पितु र्यः पुत्रः कल्यस्समर्थस्सन् आत्मना देहेन धनेन च पित्रो र्वृत्तिं जीविकां न दद्यात् न कल्पयेत् तं प्रेत्य लोकान्तरे यमदूताः स्वस्यैव मांसं खादयन्ति हि॥ ६ ॥

किञ्च समर्थोऽपि मात्रादीन्यथोचितमबिभ्रदपुष्णन् श्वसन्नपि जीवन्नपि मृतप्रायः॥ ७ ॥

तत्तस्मात् उद्विग्नं भीतं चेतो ययोस्तयोर्वां युवयोः अनर्चतोरपूजयतोः। वामिति कर्मणस्सम्बन्धविवक्षया षष्ठी। असमर्थयोर्नौ आवयोः मोघं वृथा बहव एते दिवसाः व्यतिक्रान्ताः। यद्वा वामिति द्वितीया। युवामनर्चतोः, तत्र हेतुः अकल्पयोः असमर्थयोः[1], तत्राऽपि हेतुः नित्य कंसादुद्विग्नचेतसो नौ आवयोः मोघमेते व्यतिक्रान्ता इत्यन्वयः। कंसा-दुद्विग्नचेतसोः इत्यनैश्वर्यमभिनयतोरुक्तिः॥ ८ ॥

हे मातः! परतन्त्रयोरावयोः तत्र युष्मदर्चनायां निमित्तभूतायां तद्भागः अनुमर्हथ। कंसभूतयोः? भृशं नितरां क्लिष्टयोर्वां युवयोः शुश्रूषामकुर्वतोः, अत एव दुर्हृदोर्दुरात्मनोः॥ ९ ॥

इतीत्थं मायया स्वसङ्कल्पेन मनुष्यस्य हरेर्गिरा मोहितौ देवकीवसुदेवौ पुत्रावङ्कमारोप्य परिष्वज्य च मुदं प्रापतुः ॥ १० ॥

---

1 K omits असमर्थयोः

विज० अल्पायुश्चेत्कथं निष्करोतीत्यतो यावदायुः पितृपरिचर्या कार्या, अन्यथाऽनर्थः स्यादिति वक्ति-यस्तयो रिति। यस्तयोः पित्रोः आत्मना प्रेषितपुरुषमन्तरेण स्वयमेव धनेनाऽलम्बुद्धिजनकेन च द्रव्येण च वृत्तिं जीवनं न दद्यात् तं प्रेत्य यमलोके स्वमांसं खादयन्ति, यमभटा इति शेषः। अत्मज औरसोऽपि निर्धनश्चेत् किं कुर्यादित्यत आह-कल्प इति। देहेन धनेन च कर्तुं समर्थ इत्यर्थः। हिनाऽत्र "वृद्धौ च मातापितरौ" (मनु स्मृ. 11-1 प्रक्षिप्तः) इति स्मृतिं प्रमाणयति॥ ६ ॥

सूचित स्मृतिमर्थतः प्रतीकयति - मातरमिति। मातरं सर्वावस्थासु मानयोग्यां पितरं वृद्धं जरसा ग्रस्तं, भार्यां भरणयोग्यामपि साध्वीमक्षतव्रता, सुतं शिशुं स्वजीवनप्रवृत्तौ असमर्थं, गुरुं ज्ञानोपदेष्टारं, विप्रं ज्ञानपूर्णं, प्रपन्नं शरणागतञ्च एतानबिभ्रत् भरणमकुर्वन् सः श्वसन्नपि जविन्नपि मृतः मृतकल्प इत्यर्थः। कञ्चन वृद्धं काञ्चन साध्वीं, कञ्चन शिशुं प्रेङ्खायां शयानं, कञ्चन विप्रमिति पृथग्वा अन्वेतव्यमिति॥ ७ ॥

नन्वेवमस्तु, प्रकृते किमिति तत्राऽऽह- तन्नाविति। यत एवं शास्त्रार्थः, तस्मात्कंसात् 'कसि हिंसायाम्' इति धातोः सर्वहिंसाधिकरणत्वेन, तन्नाम्नो भोजपतेः नित्यमहोरात्रमुद्विग्नचित्तयोः, अत एव वामनर्चतोः अकल्पयोः शक्तिसामग्रीहीनयोः नौ आवयोः एते इतः पूर्वे दिवसाः मोघं व्यतिक्रान्ताः इत्यन्वयः॥

एतदेव विशिनष्टि-तत्रान्तु मिति। दुर्हृदोः दुःखयुक्तमनसोः, "दुरशोभनदुःखयोः" (वैज को 8-7-4) इति यादवः॥ ९॥

विश्वात्मनः सर्वान्तर्यामिणः॥ १० ॥

सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन संवृतौ[1]।
न किञ्चिदूचतूराजन् बाष्पकण्ठौ विमोहितौ॥ ११ ॥

एवमाश्वास्य पितरौ भगवान्देवकीसुतः।
मातामहं तूग्रसेनं यदूनामकरोन्नृपम्[2]॥ १२ ॥

आह चाऽस्मान् महाराज[3]! प्रजा स्त्वाज्ञप्तु[4] मर्हसि।
ययातिशापाद्यदुभिः[5] नाऽऽसितव्यं नृपासने॥ १३ ॥

मयि भृत्यउपासीने भवतो विबुधादयः।
बलिं हरन्त्यवनताः किमुताऽन्ये नराधिपाः॥ १४ ॥

★ सर्वान् [6-]स्वज्ञाति[-6]सम्बन्धान् दिग्भ्यः कंसभयाद्गतान्[7]।
यदुवृष्ण्यन्धकमधु दाशार्ह[8]कुकुरादिकान्॥ १५ ॥

---

1 G,J,P,V चा० 2 P,V °त्पतिम् 3 K,T,W °भाग 4 G,J,K °श्व० 5 T,W °षु० ★ These additional verses(2) are found in P&V editions इत्युक्त्वाऽऽहूय पवन मुग्रसेनाय भूभुजे। सुधर्माख्या सभा शक्रादाहरेत्याह केशवः॥ मारुतश्च तथाऽऽहेन्द्र वासुदेवस्य शासनात्। प्रायच्छद्देव राजोऽपि सभा कृष्णानुभाववित्॥ 6- -6 G,J स्वाञ्ज्ञाति, M,Ma स्वजाति 7 G,J °कुलान् 8 M,Ma °र्ह०, P,V °र्य०

---

श्रीध० एवमिति। आश्वास्य सान्त्वयित्वा॥ ११, १२ ॥

आहेति। त्वमेवाऽऽज्ञापयेति मा वदेत्याह - ययातिशापादिति। तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः॥ १३ ॥

मम तादृशी शक्तिः नास्तीति चेत्तत्राऽऽह- मयीति। मत्प्रसादेन सर्वं भविष्यतीत्यर्थः॥ १४ ॥

सर्वानिति। स्वान् ज्ञातीन् सम्बन्धिनश्च[1] दिग्भ्य आनाय्येति॥ १५ ॥

---

1 J,Va °न्धां श्च।

वीर० हे राजन्! विमोहितौ अतएव स्नेह धाराभिः पुत्रावभिषिञ्चन्तौ बाष्पः कण्ठयो र्ययोस्तौ किञ्चिदपि नोचतुः॥ ११ ॥

इत्थ भगवान्देवकीसुतः पितरावाश्वास्य सान्त्वयित्वा मातामहमुग्रसेनं यदूनामधिपतिमकरोत् ॥ १२ ॥

तमुवाच। उक्ति मेवाऽऽह - "अस्मान् महाभाग" इत्यादिना, "नराधिपः" इत्यन्तेन। हे महाभाग! त्वमस्मान् त्वत्प्रजाभूतान् आज्ञप्तुमर्हसि। विधेयान् कर्तुमर्हसि। अधिपतिर्भवितुमर्हसीत्यर्थः। ननु समर्थस्त्वमेव राजा भवितु मर्हसीत्यत आह- ययातिशापादिति। नृपासने नाऽऽसितव्य नोपवेष्टव्यम्। तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः॥ १३॥

नन्वहमसमर्थः, कथमधिपति र्भवितु मर्हामीत्यत आह - **मयीति**। त्वद्भृत्ये मयि त्वा सेवमाने सति विबुधश्रेष्ठा अपि अवनता नम्रास्सन्तो भवते बलि हरन्ति समर्पयन्ति। किमुत अन्ये नराधिपा अर्पयन्तीति, मत्प्रभावा त्सर्व भविष्यतीत्यर्थः॥ १४॥

ततो विश्वदृग्भगवान् सर्वान् स्वज्ञातीन् स्वसम्बन्धिनश्च यादवादीन् कसभयात्पलायितान् [1]दिग्भ्य[1] आनाय्य सान्त्वयित्वा सभाजितान् सम्मानितान् कृत्वा परदेशावासेन कृशीभूतान् वित्तैस्सन्तर्प्य स्वस्वगेहेषु न्यवासयत्॥ १५ ॥

---

1- -1 TW omit

**बिज०** स्वाः प्रजाः अस्मान् ज्ञप्तु आज्ञप्तुम्। यद्वा प्रजास्वासु काश्चिदस्मानिति, ययातिशापात् नृपासने यदुभिर्नाऽऽसितव्य, न स्थातव्य मिति शङ्का त्यजेति शेषः॥ ११ - १३ ॥

शङ्कात्यागे कैमुत्येन निमित्तमाह-**मयीति**। उपासीने सेवमाने सति॥ १४ ॥

विश्व सर्व सृजति ददातीति विश्वसृक्। दिग्भ्य आनीय॥ १५ ॥

**सभाजितान् समाश्वास्य विदेशावासकर्शितान्।**
**न्यवासयत्स्वगेहेषु वित्तैस्सन्तर्प्य विश्वदृक्[1]॥ १६ ॥**

**कृष्णसङ्कर्षणभुजै र्गुप्ता लब्धमनोरथाः।**
**गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः॥ १७ ॥**

**वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम्।**
**[2]नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम्॥ १८ ॥**

**तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः।**
**पिबन्तोऽक्षैर्मुकुन्दस्य[3] मुखाम्बुजसुधां मुहुः॥ १९ ॥**

**श्रीशुक उवाच**

**अथ नन्दं समासाद्य भगवान् देवकीसुतः।**
**सङ्कर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः॥ २० ॥**

1 G,J °कृत्, M,Ma °सृक् 2 M,Ma नित्य 3 P V °म्भोज 4- -4 G J K M Ma,T W omit

**श्रीध०** **कृष्णेति।** सिद्धाः पूर्णाः। कृष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो येषा ते॥ १६,१७ ॥

**वीक्षन्त** इति। सदयस्मितं वीक्षण यस्मिन् तत्॥ १८ ॥

**तत्रेति।** प्रवयसो वृद्धा अपि अतिशयित बलमोजश्च येषा ते॥ १९,२० ॥

**वीर०** ततः कृष्णरामाभ्या गतो निवृत्तो ज्वरस्तापो येषा, लब्धो मनोरथः यैस्ते। सिद्धाः पूर्णकामाः कृष्णसङ्कर्षणयोः भुजैर्गुप्ताः पालिताः गृहेषु रेमिरे॥ १६,१७ ॥

दयास्मिताभ्या सहिते वीक्षणे यस्मिन् श्रीमत्सौन्दर्यवत् नित्य प्रमुदित विकसित मुकुन्दस्य मुखाम्बुज महरहः पश्यन्तो रेमिरे इत्यनुषङ्गः॥ १८ ॥

तत्र तदा प्रवयसो वृद्धा अपि मुहुर्मुकुन्दस्य मुखाम्बुजसुधा नेत्रैः पिबन्तो युवानो नितरा बलीयांसश्चाऽऽसन्। "अतिबलौजसः" इति पाठे, अतिशयित बलमोजश्च येषा तेआसन्॥ १९ ॥

**अथेति।** नन्द समासाद्य समीपमेत्य हे राजेन्द्र! तमालिङ्ग्येदं वक्ष्यमाणमूचतुः॥ २० ॥

**विज०** सिद्धा इति लुप्तोपमा, मुक्ता इव। कृष्णरामाभ्या गतज्वराः नष्टसन्तापाः कृष्णे रामेण रमणेन रत्या वा॥ १६-१८ ॥

तत्र मधुरायां प्रवयसो वृद्धा अपि युवान आसन्। तत्र किमौषधमिति तत्राऽऽह - पिबन्त इति॥ १९,२०॥

**पित र्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम्।**
**पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि॥ २१ ॥**

**स पिता सा[1] च जननी यौ[2] पुष्णीतां स्वपुत्रवत्।**
**शिशून् बन्धुभिरुत्सृष्टा नकल्पैः पोषरक्षणे॥ २२ ॥**

**यात यूयं[3] व्रजं तात! वयञ्च स्नेहदुःखितान्[4]।**
**ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्॥ २३ ॥**

**एवं सान्त्वय्य भगवान्नन्दं सव्रज मच्युतः।**
**वासोऽलङ्कारकुप्याद्यैः[5] अर्हयामास सादरम्॥ २४ ॥**

**इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः।**
**पूरयन्नश्रुभिर्नेत्रे [6-]सह गोपैर्व्रजं ययौ[-6]॥ २५ ॥**

---

1 P,V साऽपि 2 G,J,M,Ma °कल्पैः 3 M,Ma °न्नो 4 K,M,Ma,T,W प्रियम् 5 M,Ma °ग्रैः 6- -6 K,T,W सगोपो व्रजमाययौ॥

**श्रीध० पितरिति।** भृशमात्मनोऽप्याधिक्येन पोषितौ। न चाऽऽश्चर्यमेतदित्याह - **पित्रोरिति।** आत्मनो देहादप्यात्मजेष्वभ्यधिका हि प्रीतिरिति॥ २१ ॥

देवकीवसुदेवयोः पुत्रौ युवा, नाऽस्मत्पुत्रौ[1] इति न वाच्यमित्याह - **स पितेति॥** २२, २३,॥

**एवमिति।** सव्रजं व्रजवासिभिस्सहितम्। कुप्यानि स्वर्णरजतातिरिक्तकांस्यपात्रादीनि, **तत्प्रभृतिभिः॥ २४,२५॥**

---

1 J,Va इत्यपि

**वीर०** उक्ति मेवाऽऽह त्रिभिः। हे पितः। स्निग्धाभ्याम् अनुरक्ताभ्यां युवाभ्यां भृशमात्मनोऽप्याधिक्येन पोषितौ लालितौ च। न च आश्चर्यमेतदित्याहतुः- पित्रोरिति। मातापित्रोः आत्मनः स्वशरीरादप्यात्मजेषु अभ्यधिका हि प्रीतिरिति॥ २१ ॥

ननु युवयोः पितरौ देवकीवसुदेवौ नाऽऽवामित्यत्राऽऽहतुः- **स पितेति।** पोषणे रक्षणे च अकल्पैरसमर्थैर्बन्धुभिः उत्सृष्टान् त्यक्तान् शिशून्यौ स्व[1]पुत्रवत् पुष्णीतां पोषितवन्तौ, तावेव पितरावित्यर्थः॥ २२ ॥

अस्तु, प्रकृते किम्? तत्राऽऽहतुः-यातेति। हे तात! यूयं व्रजं प्रति गच्छत। वयं तु अत्रत्यानां सुहृदां प्रियं विधाय अस्मत्स्नेहेन दुःखितान् युष्माकं ज्ञातीन् द्रष्टुमेष्यामः आगमिष्यामः॥ २३ ॥

इत्थं सभायां सव्रजं व्रजवासिभिस्सहितं नन्दं सान्त्वय्य वस्त्रादिभिः सादरं यथातथा अर्हयामास। तत्र कुप्यानि स्वर्णरजतादिव्यतिरिक्तानि कांस्यादिपात्राणि, तत्प्रभृतिभिः॥ २४ ॥

इत्थमुक्तो नन्द स्तौ रामकृष्णावालिङ्ग्य प्रणयेनाऽनुरागेण विह्वलः अश्रुभिः नेत्रे पूरयन् गोपै स्सह व्रजं प्रति ययौ॥ २५ ॥

---

1 T,W omit स्व।

**विज०** आत्मनः स्वस्मादपि॥ २१ ॥

पुष्णीतां अपुष्णातां पोषण मकुर्वताम्। पोषरक्षणे पोषणरक्षणयोः॥ २२ ॥

वयं नोऽस्माकं, ज्ञातीन् स्नेहनिमित्तेन दुःखितान् युष्मान् द्रष्टुमेष्यामोऽधुना व्रजं यात। इदानीं आगन्तुककार्य मस्ति- तत्संसाध्येत्याह - विधायेति॥ २३ ॥

सान्त्वय्य सान्त्वयित्वा सव्रज सगोपं वासोभिरलङ्कारैश्च कुप्याग्रैः रजतहेमादिव्यतिरिक्तद्रव्यश्रेष्ठैश्च। "अकुप्यं रूप्यहेमादि (हेमाख्यं) कुप्यमन्यद्धनादिकम् (मन्यद्धनं भवेत्) (हला.को.-1-81) इति हलायुधः॥ २४,२५ ॥

श्रीरामकृष्णयोरुपनयन गुरुकुलवास गुरुपुत्रानयन घट्टः।

अथ शूरसुतो राजन् पुत्रयोस्स[1]मकारयत्।<br>पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम्॥ २६ ॥

तेभ्योऽदाद्दक्षिणा[2] गावो रुक्ममाला स्स्वलङ्कृताः।<br>स्वलङ्कृतेभ्यस्सम्पूज्य सवत्साः क्षौममालिनीः॥ २७ ॥

याः कृष्णरामजन्मर्क्षे मनोदत्ता महाम[3]तिः।<br>ताश्चाऽददादनुस्मृत्य कंसेनाऽधर्मतो हृताः॥ २८ ॥

ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ।<br>गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ॥ २९ ॥

प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ।<br>नान्यसिद्धाऽमलं ज्ञानं गूहमानौ नरेहितैः॥ ३० ॥

---

1 PV स्सम्ब० 2 G,J,P,V °णाः 3 PV °श्रुतिः

श्रीध० अथेति। पुरोधसा गर्गाचार्येण द्विजसंस्कृतिमुपनयनम्॥ २६ ॥

तेभ्य इति। गावो गाः, रुक्मस्य माला विद्यन्ते यासां ताः, क्षौमवस्त्रमालावतीः॥ २७ ॥

या इति। याः पूर्वं मनोदत्ता आसन् ता एवाऽददात्। ननु ताः कंसेनाऽपहृताः? सत्यम्। राजगोष्ठा दाच्छिद्य दत्ता इत्याह - कंसेनाऽधर्मत इति॥ २८ ॥

तत इति। गायत्रं व्रतं ब्रह्मचर्यम्॥ २९ ॥

प्रभवाविति। प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ। अतएव सर्वज्ञौ स्वतस्सिद्धममलं ज्ञानम् प्रच्छादयन्तौ नरचेष्टितैः॥ ३० ॥

**वीर०** अथाऽनन्तरं शूरसुतो वसुदेवः पुरोधसा गर्गाचार्येण ब्राह्मणैश्च यथाविधि उभयोः रामकृष्णयोः द्विजन्मसंस्कृतिं द्विजत्वाऽऽपादकसंस्कारम् उपनयनं सम्यगकारयत्॥ २६ ॥

ततः सुष्ठ्वलङ्कृतेभ्यो ब्राह्मणेभ्य स्सम्पूज्य दक्षिणां गावो गाश्च अदात्। कथम्भूताः? रुक्मस्य सुवर्णस्य माला यासां ताः सुष्ठु अलङ्कृताः वत्सै स्सहिताः क्षौमवस्त्रमालावतीः॥ २७ ॥

रामकृष्णजन्मनक्षत्रे या गावो मनोदत्ताः ताश्चाऽनुस्मृत्य (अददात्) ददौ। ननु ताः कंसेनाऽपहृताः? सत्यम्। राजगोष्ठादाच्छिद्य दत्ता इत्याह - कंसेनाऽधर्मत इति॥ २८ ॥

**ततश्चेति।** लब्धस्संस्कार उपनयनाख्यो याभ्यां तौ द्विजत्वं प्राप्य यदुकुलस्याचार्याद्गर्गाद्गायत्रं गर्गोपदिष्टं ब्रह्मचर्यम् आस्थितौ आश्रितौ॥ २९ ॥

अथो ततः सर्वविद्यानां प्रभवौ प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ, अतएव सर्वज्ञौ स्वतस्सिद्धममलं ज्ञानं नरचेष्टाभिः प्रच्छादयन्तौ गुरुकुले वासमिच्छन्तौ काश्यं काश्यपगोत्रजमवन्तीपुरवासिनं सान्दीपनाख्यं गुरुमभिजग्मतुः॥ ३०॥ [1]

---

1 T,W काश्यगो०

**विज०** द्विजसंस्कृतिं ब्राह्मणसंस्कारं उपनयनलक्षणम्॥ २६ ॥

गावो गाः, रुक्मं सुवर्णं, क्षौमाणि पुष्पमालाश्च आसां सन्तीति क्षौममालिनीः॥ २७ ॥

याः कृष्णरामयोः जन्मनक्षत्रे मनसा दत्तास्सङ्कल्पिताः ताश्च अददात्। याः कंसेनाऽधर्मेण हृताः ता अपि॥ २८॥

द्विजत्वमुपनीतत्वं प्राप्य, लब्धसंस्कारौ लब्धदेहशुद्धी गायत्रं व्रतं गायत्रीजपनियमं, ब्रह्मचर्यं वा॥ २९ ॥

प्रभवौ मूलकारणे, नान्येत्येकं पद, नगनाकशब्दवत्। अन्यस्य सिद्धं न भवतीति नान्यसिद्धम् औत्पत्तिकमत एवाऽऽमलं यत् ज्ञानं तन्नरेहितैः मनुष्यचेष्टाभिः छादयन्तौ॥ ३० ॥

**अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः।**
**काश्यं[1] सान्दीपनं[2] नाम अवन्ती[3]पुरवासिनम्[4]॥ ३१ ॥**

**अथोपसाद्य[5] तौ दान्तौ गुरौ वृत्ति मविन्दताम्।**
**ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवाऽऽहतौ॥ ३२ ॥**

**तयोर्द्विजवरस्तुष्ट श्शुद्धभावानुवृत्तिभिः।**
**प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः॥ ३३ ॥**

सरहस्यं धनुर्वेदं[6] धर्मन्यायपथांस्तथा।
तथाचाऽऽन्वीक्षिकीं[7] विद्यां राजनीतिञ्च षड्विधाम्॥ ३४ ॥

सर्वं[8] तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ।
सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप॥ ३५ ॥

---

1 P,V स्यां 2 G,J,M,Ma °पनिं 3 G,J ह्य० 4 G,J,M,Ma °न्ति० 5 G,J,M,Ma,P,V य० 6 G,J,P,V °र्मान्या० 7 K,P,T,V,W °क्ष० 8 G,J नरवर; P,V तद्विबुध

**श्रीध० यथेति।** यथा यथावत्। उपसाद्य प्राप्य। गुरौ वृत्तिमन्यान् ग्राहयन्तौ शिक्षयन्तौ, गुरुमुपेता वुपगतौ सेवितवन्तावित्यर्थः॥ ३१,३२ ॥

**तयोरिति।** शुद्धो भावो यासु ताभिरनुवृत्तिभिः। साङ्गोपनिषदः अङ्गानि षडङ्गानि[1] शिक्षादीनि तैरुपनिषद्भिश्च सहितान्॥ ३३ ॥

**सरहस्यमिति।** सरहस्यं मन्त्रदेवताज्ञानसहितम्। धर्मान् मन्वादिधर्मशास्त्राणि। न्यायपथान् मीमांसादीन्। आन्वीक्षिकीं तर्कविद्याम्। षड्विधां - "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" (अम.को 2-4-75) इत्येवं षड्विधां राजनीतिम्॥ ३४॥

**सर्वमिति।** सकृन्निगदमात्रेण एकवारं गुरोरुच्चारणमात्रेण[2]॥ ३५॥

---

1 P,V omit षडङ्गानि 2 P.V. ०रूच्चा०

**वीर० तौ** रामकृष्णौ यथावत् तमुपसाद्य दान्तौ जितेन्द्रियौ सन्तौ निर्दुष्टां गुरौ[1] वृत्तिम् अन्यान् ग्राहयन्तौ शिक्षयन्तौ आदरयुक्तौ देवमिव भक्त्या गुरुमुपेतौ सेवितवन्ता वित्यर्थः॥ ३१, ३२ ॥

शुद्धो भावो यासु ताभिः अनुवृत्तिभिः तुष्टो द्विजवरो गुरुरङ्गैश्शिक्षाकल्पादिभिः षड्भिः उपनिषद्भिश्च सहितानखिलान् वेदान् तयोः प्रोवाच॥ ३३ ॥

तथा सरहस्यं मन्त्रदेवताज्ञानसहितं धनुर्वेदं, धर्मन्यायपथान् मन्वादिधर्मशास्त्राणि मीमांसान्यायादींश्च आन्वीक्षिकीं तर्कविद्यां, षड्विधां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयरूपां राजनीतिञ्च प्रोवाचेत्यन्वयः॥ ३४ ॥

**सर्वमिति।** हेनृप! तावमरश्रेष्ठौ परमपुरुषौ अतएव सर्वविद्याप्रवर्तकौ, अतएव सकृन्निगदमात्रेण उक्तिमात्रेणैव तद्गुरूपदिष्टं सर्वं सञ्जगृहतुः सम्यग्गृहीतवन्तौ॥ ३५ ॥

---

1 K गुरु

विज० यस्मादथ तस्मात्काश्यं काश्यपगोत्रजातम्[1]॥ ३१ ॥

यथावदुपासाद्य समित्पाणी उपेतौ स्म प्रापतुः। भक्त्या दैवमिवेत्यनेन "यस्य देवे पराभक्तिः यथा देवे तथा गुरौ!" (श्वेता. उ. 6-23) इति श्रुतिं सूचयति॥ ३२ ॥

अङ्गैः शिक्षादिभिः उपनिषद्भिर्वेदान्तैः तदुपयोगिभीरहस्यज्ञानै र्वा सहितान्॥ ३३ ॥

सरहस्यं प्रयोगोपसंहारसहितं धर्मपथः वर्णाश्रमधर्मलक्षणः पूर्वमीमांसालक्षणोवा, न्यायपथान् ब्रह्मतर्कादि तर्कशास्त्रलक्षणांश्च, आन्वीक्षिकीं मीमांसाशास्त्रं वेदेतिहासाद्यर्थनिर्णायकम्। "सन्धिश्च विग्रहश्चैव यान मासन मेव च द्वैधीभावं संश्रयश्च षड्गुणान् कवयो विदुः" इति षड्विधाम्॥ ३४ ॥

सकृन्निगदमात्रेण एकवारं पाठमात्रेण॥ ३५ ॥

---

1 Ma क०

अहोरात्रै[1]श्चतुष्षष्ट्या सं[2]यतौ तावतीः कलाः।
★ततश्च कृतविद्यौ तौ कृतास्त्रौ रामकेशवौ।
गुरदक्षिणयाऽऽचार्यं छन्दयामासतु र्नृप!॥ ३६ ॥

द्विज स्तयोस्तं[3] महिमानमद्भुतं सं[4]लक्ष्य राजन्नतिमानुषीं म[5]तिम्[6]।
सम्मन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयाम्बभूव ह॥ ३७ ॥

तथेत्यथाऽऽरुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ।
वेलामुपव्रज्य निषेदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत्तयोः॥ ३८ ॥

तमाह भगवा नाशु गुरुपुत्रः प्रदीयताम्।
योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा॥ ३९॥

[7-]समुद्र उवाच[-7]

★ [8-]नाऽहार्षं तमहं[-8] देव दैत्यः पञ्चजनो [9]महान्।
अन्तर्जलचरः कृष्ण! शङ्खरूपधरोऽसुरः॥ ४० ॥

---

1 K °त्र० 2 G,J संयत्तौ; M,Ma संयातौ * This extra half verse is found in M,Ma editions only 3 P,V °स्तन्म० 4 K,T,W संवीक्ष्य 5 K T W ग० 6 P,V omit ह 7- -7 P,V सिन्धुरुवाच; M,Ma omit समुद्रउवाच ★ An extra half verse- तमाह वरुणो देवो विनयावनतः स्थितः is found in M,Ma editions only 8- -8 G,J नैवाऽहार्षमहं; M,Ma नचाऽहार्षं महं 9 M,Ma °नोऽहरत्

**श्रीध० अहोरात्रैरिति।** तावतीश्चतुष्षष्टिकलाः ताश्च शैवतन्त्रप्रोक्ता[1] लिख्यन्ते; यथा-

1. गीतम् 2. वाद्यम् 3. नृत्यम्[2] 4. नाटचम् 5. आलेख्यम् 6 [3-]विशेषकच्छेद्यम्[-3] 7. तण्डुलकुसुमबलिविकाराः 8. पुष्पास्तरणम् 9. [4-]दशनवसनाङ्गरागाः[-4]10. मणिभूमिकाकर्म 11. शयनरचनम् 12 उदकवाद्यमुदकघातः 13. चित्रयोगाः 14. माल्यग्रथनविकल्पाः 15. शेखरापीडयोजनम् 16. नेपथ्ययोगाः17 कर्णपत्रभङ्गाः[5] 18. सुगन्धयुक्तिः[6] 19. भूषणयोजनम् 20 ऐन्द्रजालम् 21. कौचुमारयोगाः 22. हस्तलाघवम् 23. चित्रशाकापूप[7]भक्ष्यविकारक्रिया: 24. पानकरसरागासवयोजनम् 25. सूचीवाय[8]कर्म 26. [9-]सूत्रक्रीडा[-9] 27. वीणाडमरुकवाद्यानि 28. प्रहेलिका 29 [10-]प्रतिमाला[-10] 30. दुर्वाचक[11]योगाः 31. पुस्तकवाचनम् 32 नाटकाख्यायिकादर्शनम् 33. काव्यसमस्यापूरणम् 34. पट्टिकावेत्रबाणविकल्पाः 35 तर्ककर्माणि 36 तक्षणम् 37. वास्तुविद्या 38. रूप्यरत्नपरीक्षा 39 धातुवादः 40. मणिरागज्ञानम् 41. आकरज्ञानम् 42. वृक्षायुर्वेदयोगाः 43. मेषकुक्कुटलाव[12]कयुद्धविधिः 44. शुकशारिकाप्रलापनम् 45. उत्सादनम् 46. केशमार्जनकौशलम् 47. अक्षरमुष्टिकाकथनम् 48. म्लेच्छितकु[13-]तर्कवि[-13]कल्पाः 49 देशभाषाज्ञानम् 50. पुरुषशकटिकानि[14] र्मितिज्ञानम् 51. यन्त्रमातृका धारणमातृका 52. संवाच्यम् 53. मानसोकाव्यक्रिया 54. अभिधानकोशः 55 छन्दोज्ञानम् 56. क्रियावि[15]कल्पाः 57. छलितक[16] योगाः 58. व[17]स्त्रगोपनानि 59. द्यूतविशेषः 60 आकर्षक्रीडा 61. बालक्रीडनकानि62 वैनायिकी[18] नां विद्यानां ज्ञानम् 63. वैजयिकी[19] नां विद्यानां ज्ञानम् 64. वैतालिकी[20] नां विद्यानां ज्ञानम् इति चतुष्षष्टिकलाः छन्दयामासतुः उपलोभितवन्तौ॥ ३६ ॥

**द्विज इति।** प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयामास॥ ३७ ॥

**तथेति।** ईश्वराविति विदित्वा ज्ञात्वा समुद्रः तयोरर्हणमाजहारेति॥ ३८, ३९ ॥

**नेति।** पञ्चजनस्त्वसुरोऽहार्षीत्। स च महान्, मम असाध्य इत्यर्थः॥ ४० ॥

---

1 J,Va °न्त्रोक्ता 2 J,Va °त्य० 3- -3 J,Va तिलकम् नानारचना, विशेषकभेद्यम् 4- -4 Ml,V अदर्शनम् 5 Ml,V योगाः 6 Ml,V शुद्धिः 7 Ml,V add °मुख० 8 Ml,V वान 9- -9 Ml,V सर्ववस्तुप्रतिकृतिनिर्माणम् 10- -10 Ml,V स्वस्मिन्नरूपरचना 11 Ml,V दुर्वक्षक 12 Ml,V °वु० 13- -13 Ml,V °कवि० 14 Ml,V निमित्त 15 Ml,V omit °वि० 16 Ml,V omit °क० 17 Ml,V वस्तु 18 Ml,V °कानां 19 Ml,V °कानां 20 Ml,V °कानां

**वीर०** कियता कालेन कति विद्याः सञ्जगृहतुः इत्यत्राऽऽह **-अहोरात्रैति।** अहोरात्राणां चतुष्षष्ट्या चतुष्षष्टिसंख्याकै र्दिवसैः चतुष्षष्टिविद्याः सञ्जगृहतुरित्यन्वयः। ततो हे नृप! **गुरुदक्षिणयेति** हेत्वर्थे तृतीया। गुरवे देयदक्षिणार्थ माचार्यं छन्दयामासतुः॥ ३६ ॥

**द्विज इति।** हे राजन्! द्विजस्सान्दीपनः तयोरामकृष्णयोः तं चतुष्षष्टिदिवसैः तावत्कलाग्रहणात्मकमद्भुतं महिमानम् अतिमानुषीं मनुष्येष्वसम्भावितां चेष्टां गतिञ्चाऽवलोक्य महापुरुषाविमाविति, निश्चित्येतिशेषः। पत्न्या सह आलोच्य प्रभासे क्षेत्रे महार्णवे मृतं बालं स्वपुत्रमयाचत। हेति विस्मये। मृतप्रत्यादानमसम्भावितमिति विस्मीयते॥ ३७॥

तदा तथेत्यङ्गीकृत्य महारथौ रामकृष्णौ रथमारुह्य दुरन्तोऽपारो विक्रमो ययो स्तौ प्रभासं प्राप्य तत्र वेलां तीरं, समुद्रस्येति शेषः, उपव्रज्य क्षणं निषेदतुः उपविष्टवन्तौ। तदा सिन्धुस्समुद्रो विदित्वा ईश्वराविमावितिज्ञात्वा तयोरर्हणं पूजामाजहार समर्पयामास, चकारेति यावत्॥ ३८ ॥

भगवान् सिन्धुमाह- किमिति। इह यो बालको द्विजपुत्त्रस्त्वया कर्त्रा महतोर्मिणा तरङ्गेण ग्रस्तः अन्तर्धापितः सोऽस्मद्गुरुपुत्त्रः आशु प्रदीयता मिति॥ ३९ ॥

इत्थ मुक्तः प्राह सिन्धुः- नाऽहार्षमिति। हे देव तं द्विजपुत्त्रमहं नाऽहार्षं नाऽपहृतवान्। किन्तु हे कृष्ण! पञ्चजनाख्यो दैत्योऽहार्षीत्। स च महान् ममाऽसाध्य इत्यर्थः। तदेवाऽऽह- सोऽसुरः अन्तर्जलचरः शङ्खाकृतिधरश्चाऽऽस्ते विवेक्तुमशक्य इति भावः। येन पञ्चजनेन नूनमपहृत इति सिन्धोर्वचः श्रुत्वा प्रभुः श्रीकृष्णः सत्वरं यथा तथा जलमाविश्य पञ्चजनं हत्वा तस्योदरे बालं नाऽपश्यत्। किन्तु तस्य पञ्चजनस्याऽङ्गाज्जातं शङ्खं पाञ्चजन्याख्यमादाय रथ मारुरोह॥ ४०॥

विज० चतुष्षष्ट्या संख्यया सङ्ख्यातैरहोरात्रैः कालावयवैस्तावतीः तावत्सङ्ख्याः कलाः चतुष्षष्टिकलाः विद्या इत्यर्थः। संयातौ सम्यक्प्राप्तौ। छन्दयामासतुः प्रार्थयामासतुः॥ ३६ ॥

महार्णवे प्रभासे तीर्थे॥ ३७ ॥

वेलां तीरसीमाख्याम्॥ ३८ ॥

योऽसौ गुरुपुत्त्रः त्वया महतोर्मिणा ग्रस्तः, सः प्रदीयता मित्यन्वयः॥ ३९ ॥

तं कृष्णम्॥ ४० ॥

★[1-]आस्ते तेनाऽऽहृतो नूनं गुरुपुत्त्रस्तव प्रभो![-1]
जलमाविश्य तं हत्वा गृह्यता मित्युवाच ह[2]॥ ४१ ॥

[3]तदसौ जलमाविश्य हत्वा[4] तं जलवासिनम्।
विदार्यजठरं तस्य नाऽपश्यदुदरे[5]ऽर्भकम्।
तदङ्गप्रभवं शङ्ख मादाय रथ माविशत्॥ ४२ ॥

तत स्संयमनीं नाम यमस्य दयितां पुरीम्।
गत्वा जनार्दनश्शङ्खं प्रदध्मौ स हलायुधः॥ ४३ ॥

शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः।
तयोस्सपर्यां महतीं चक्रे भक्त्युपबृंहिताम्[6]॥ ४४ ॥

उवाचाऽवनतः [7-]कृष्णं सर्वभूताशयालयम्।
लीला मानुष हे विष्णो[-7] युवयोः करवाम किम्?।
◊इत्युक्त स्तेन देवेशो देवकीनन्दनोऽब्रवीत्॥ ४५॥

श्रीभगवानुवाच-

गुरुपुत्रमिहानीतं[8] निजकर्मनिबन्धनम्।
आनयस्व महाराज मच्छासनपुरस्कृतः। ४६॥

तथेति तेनोप[9]नीतं गुरुपुत्रं यदूत्तमौ।
दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः☆ ॥ ४७॥

[10-]गु रु[-10] रुवाच

सम्यक्सम्पादितो[11] व[12]त्सौ भवद्भ्यां गुरुनि[13]ष्क्रि।
को नु युष्मद्विधगुरोः कामानामवशिष्यते॥ ४८॥

गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी।०
गुरुणैव मनुज्ञातौ रथेनाऽनिलरंहसा।
आयातौ[14] स्वपु[15]रं तात पर्जन्यनिनदेन वै[16]॥ ४९॥

समनन्दन्प्रजा स्सर्वा दृष्ट्वा रामजनार्दनौ।
अपश्यन्त्यौ बह्वहानि नष्टलब्धधना इव॥ ५०॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
गुरुपुत्रानयनं नाम पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

---

★ 'आस्ते तेनाऽऽहृतो नूनं' इति पादेनारब्धस्य, 'आदाय रथ माविशत्' इति पादपर्यन्तस्य भागस्य स्थाने G,J,K,T,W प्रकाशेषु लभ्यमानः पाठः एव मस्ति - आस्ते तेनाऽऽहृतो नूनं, तच्छ्रुत्वा सत्वरं प्रभुः। जलमाविश्य तं हत्वानाऽपश्यदुदरेऽर्भकम्। तदङ्गप्रभवं शङ्ख मादाय रथ मारुहत्॥ (मागमत्- J) 1- -1 This half verse is not found in M,Ma editions. 2 M,Ma सः 3 M,Ma ततस्तौ 4 M,Ma°त्वाऽन्तः 5 M,Ma °मागमत् 6 M,Ma °तः 7- -7 G,J,M,Ma मनुष्य हे विष्णो; P,V मानुषयो विष्णोः (ष्ण्वोः) ◊ This half Verse is found in M,Ma edns only. 8 P,V °भाग 9 G,J पानी० ☆ The following extra verse is found in M,Ma edns. ततः प्रीतमना राजन्निदं वचन मब्रवीत्। सान्दीपनि र्महा भागो रामकृष्णा वरिन्दमौ॥ 10- -10 M,Ma, T,W omit 11 M,Ma °ता 12 G,J,P,V,T,W वत्स 13 T,W निष्क्रियः; M.Ma निष्क्रिया

o An extra half verse छन्दांस्ययातयामानि भवन्त्विह परत्र च' is found in G,J, edns only 14 P,V °तां 15 K,T,W गृहं 16 K वा

**श्रीध० शङ्खेति।** सपर्यां पूजाम्॥ ४१-४४ ॥

**उवाचेति।** सर्वेषां भूतानामाशया अन्तःकरणानि, तानि आलयो निवासो यस्य तम्॥ ४५ ॥

**गुरुपुत्रमिति।** निजं कर्मैव निबन्धनं यस्य तम्, तथाभूतमपि मदाज्ञापुरस्कारेण आनयतस्ते न दोषइत्यर्थः॥ ४६-४७॥

**सम्यगिति।** वत्सेति प्राधान्येन एकस्य सम्बोधनम्। "गुरोर्निष्क्रियो गुरोर्दक्षिणा, युष्मद्विधगुरोः [1]मम कामानां मध्ये को नु कामोऽवशिष्यते, न कोऽपीति॥ ४८॥

**गच्छतमिति।** [2-]हे वीरौ[-2]! अनिलवद्रंहो [3]वेगो यस्य तेन। पर्जन्यो मेघः, तद्वन्निनदो यस्य तेन॥ ४९ ॥

**समनन्दन्निति।** नष्टमदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
पञ्चचत्वारिंशोऽध्यायः॥ ४५ ॥

---

1 P,V omit मम 2- -2 P,V omit 3 P,V omit वेगो

**वीर०** ततो यमस्य प्रियां संयमनीं नाम पुरीं गत्वा शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास॥ ४१ - ४३ ॥

तदा प्रजानां शास्त्रातिलङ्घिनीनां शास्ता यमः शङ्खनिर्ह्रादं श्रुत्वा आगत्य भक्त्युत्कलितां तयोः पूजां चक्रे॥ ४४॥

सर्वेषां भूतानां आशया हृदयानि [1]तान्यालयो यस्य तं कृष्णम् अवनतः प्राह- किमिति? हे लीलामानुष! लीलार्थं परिगृहीतमनुष्यसंस्थान! हे विष्णो! युवयोः किं करवाम किङ्करा वयमित्यर्थः॥ ४५ ॥

इत्थमुक्तः प्राह भगवान्- **गुरुपुत्र मिति।** इह त्वत्सन्निधावानीतं, त्वद्भटैरिति शेषः। निजकर्मनिबन्धनं स्वकर्माधीनं स्वकर्मणेह [2]प्रापितमपि अस्मद्गुरुपुत्रं, हे महाराज! यम! मच्छासनपुरस्कृतस्त्वमानयस्व मदाज्ञापुरस्कारेण आनयतस्तव न दोष इति भावः॥ ४६ ॥

तथेत्यङ्गीकृत्य तेन यमेनोपनीतं गुरुपुत्रमादायाऽऽगत्य स्वगुरवे दत्त्वा पुनर्वरान्तरं वृणीष्वेत्यूचतुः॥ ४७ ॥

एवमुक्तः प्राह द्विजः - सम्यक्सिद्धि¹ हे वत्सौ! भवद्भ्यां गुरुनिष्क्रियः गुरुदक्षिणा सम्यक्सम्पादितः। युष्मद्विधयो - र्गुरोर्मम कामानां मध्ये को नु कामोऽवशिष्यते, न कोऽपि। अतो हे वीरौ! स्वगृहं गच्छतम्। वा युवयोः कीर्तिलोकं पुनाना अस्तु, विपुला भवतु॥ ४८ ॥

इत्थं गुरुणा अनुज्ञातौ हे तात! अनिलवद्रंहो वेगो यस्य, पर्जन्यो मेघः तद्वान्निनदो यस्य तेन रथेन गृह माजग्मतुः॥ ४९ ॥

तावद्बहून्यहानि। अत्यन्तसंयोगे द्वितीया। अपश्यन्त्यः प्रजाः मधुरास्थाः, तदा रामजनार्दनौ, नष्टमदृष्टं पुनर्लब्धं धनं याभिः तादृश्य इव समनन्दन् सञ्जहृषुः॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चचत्वारिंशोऽध्यायः॥ ४५ ॥

---

1 T,W°लयाः 2 T,W omit अपि

विज० शङ्खमत्स्यरूपधरः॥ ४१-४४ ॥

सर्वभूतानामाशयो हृदयस्थानमालयो यस्य स तथा तम्॥ ४५-४७ ॥

गुरुनिष्क्रिया गुरुकृतप्रतिक्रिया। युष्मद्विधानां पुंसां गुरोः को नु कामानां मध्ये कामोऽवशिष्यते, सर्वोऽपि कामः सिद्धो भवतीत्यर्थः॥ ४८,४९ ॥

तौ अपश्यन्त्यः॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
पञ्चचत्वारिंशोऽध्यायः॥ ४५ ॥

(श्रीविजयध्वजरीत्या त्रिचत्वारिंशोऽध्यायः)

---

# षट्चत्वारिंशोऽध्यायः

(विजयध्वजरीत्या चतुश्चत्वारिंशोऽध्यायः)

-: गोकुलं प्रति उद्धवप्रेषणादिकथाप्रारम्भघट्टः :-

[1-] श्रीशुक उवाच [-1]

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयित स्सखा।
शिष्यो बृहस्पते स्साक्षा दुद्धवो बुद्धिसत्तमः॥ १ ॥

तमाह भगवान् प्रेष्ठं[2] भक्तमेकान्तिनं क्वचित्।
गृहीत्वा पाणिना पाणिं प्रपन्नार्ति हरो हरिः॥ २ ॥

गच्छोद्धव व्रजं सौम्य पित्रो नः[3] प्रीतिमावह।
गोपीनां मद्वियोगाधिं[4] मत्सन्देशै र्विमोचय॥ ३ ॥

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः।
★मामेव दयितं प्रेष्ठ[5] मात्मानं मनसा[6] गताः
ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम्॥ ४ ॥

मयि ताःप्रेयसां प्रेष्ठे[7] दूरस्थे गोकुलस्त्रियः।
स्मरन्त्योऽङ्ग[8] विमुह्यन्ति विरहौत्कण्ठ्यविक्लबाः[9]॥ ५ ॥

धारयन्त्यति कृच्छ्रेण प्रायः प्राणान्कथञ्चन।
प्रत्यागमन सन्देशै र्वल्लव्यो[10] मे मदात्मिकाः॥ ६ ॥

---

1- -1 K.T.W. बादरायणिरुवाच 2 K.T.W. श्रे० 3. G.J. नौं 4. K.T.W. ०र्तिं ★ This extra halt verse is not found in J.edition 5. K.T.W श्रे० 6. K.T.W ०साऽगमन् 'बिभर्मि' इत्यस्य स्थाने 'बिभेमि' इति पाठान्तरम् विजयध्वजरीत्या स्यात् इति ज्ञायते। 7. K.T.W. श्रे० 8 M.Ma ०न्त्यङ्ग 9. G.J K.M.I.V. विह्वलाः 10. M.Ma र्वल्लव्या

## श्रीधरस्वामि विरचिता भावार्थदीपिका

षट्चत्वारिंशके घोष मुद्धवं प्रेष्य तद्गिरा। यशोदा नन्दयोश्चक्रे कृष्णश्शोकापनोदनम्॥

कामचारं द्विजाति स्सन्परित्यज्याति संयतः। गुरोर्ज्ञान मनुप्राप्य सख्या गोपी स्स्पादिशत्॥

गोपीनां सान्त्वनमतिरहस्यं सन्मन्त्रिसाध्यमिति तदर्थमुद्धवं विशिनाष्टि - **वृष्णीना** मिति। प्रवरः उच्चकुलत्वात् मन्त्री विश्वासास्पदत्वात् श्रीकृष्णस्याऽतिवल्लभत्वात् यादवैर्वृष्णिभिश्चादरणीयः। बुद्धिसत्तमः बुद्ध्या अतिश्रेष्ठः॥ २-३ ॥

गोपीनां विशेषतस्सन्देशे कारणमाह - **ता** इति। मय्येव सङ्कल्पात्मकं मनो यासां ताः अहमेव प्राणा यासां ताः, मम प्राणभूता इति वा। मदर्थे त्यक्ता दैहिकाः पतिपुत्रादयः भोजनपानवस्त्रभूषणस्रक्ताम्बूलादयो वा याभि स्ताः। ततः किमत आह - **य** इति। मन्निमित्तं त्यक्ता लोक धर्मा इहाऽमुत्र सुखे तत्साधनानि च यैस्तान् बिभर्मि पुष्णामि सुखयामीत्यर्थः॥ ४ ॥

तासां वियोगाधिं दर्शयति श्लोकद्वयेन **मयीति**। विरहेणौत्कण्ठ्यं तेन विह्वलाः परवशाः॥ ५ ॥

**धारयन्तीति**। गोकुलान्निर्गमन समये शीघ्रमागमिष्यामीति ये प्रत्यागमनसन्देशा स्तैः मे मदीया वल्ल०यो गोप्यः मदात्मिका इति, तासामात्मा स्वदेहे यदिस्यात् तर्हि विरहतापेन दह्येतैव। तस्य मयि वर्तमानत्वात्कथञ्चिजीवन्तीति भावः॥ ६॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथाऽध्यायत्रयेण भगवतस्स्वसखोद्धवमुखेन गोपीसान्त्वनात्मकं चरित्रमनुवर्ण्यते। गोपीसान्त्वनमतिरहस्यं सन्मित्रसाध्यमित्येतदर्थमुद्धवं विशिनष्टि **वृष्णीनामिति**। दयितस्सखा प्रियसखः साक्षात् बृहस्पतेः शिष्यः। अनेन बुद्धिकौशलं सूचितम्। **बुद्धि सत्तमः** निसर्गतोऽपि बुद्ध्या श्रेष्ठः॥ १ ॥

**तमिति**। क्वचिन्निर्जने देशे। प्रपन्नार्तिहरः हेतुगर्भमिदम्; तस्मात्सन्देश प्रेषण मुचितमितिभावः॥ २ ॥

1- -1 तदेवाऽऽह - **गच्छेति**। हे उद्धव। हे सौम्य। नोऽस्माकं पित्रोः नन्दयशोदयोः प्रीतिमावह हर्षं जनय, मत्सन्देशैरित्यपकर्षः। मद्वियोगाद्धेतोः य आधिर्मनः पीडा तं मोचय त्याजय॥ ३ ॥

गोपीनां विशेषतः सन्देशनयनकारणमाह - **ता** इति। मय्येव सङ्कल्पात्मकं मनो यासाम्, अहमेव प्राणो यासां ताः। मदर्थे त्यक्तदैहिकाः त्यक्तदेहपोषणाः मामेव दयितं दयाऽस्य सञ्जातेति दयितः तं दयावन्तं प्रियतमम् तत्र हेतुः - आत्मानं मनसा अगमन्। गत्यर्थाः बुद्ध्यर्थाः, अध्यवसितवत्यः सन्त्वेवं विधास्ताः किं तव इत्यत आह - ये जनाः मदर्थे त्यक्ता लोकधर्मा यैस्ते तान् बिभर्मि संवर्धयामि सुखयामीति यावत्॥ ४ ॥

तासां वियोगाधिं दर्शयति द्वयेन - **मयि ता इति** प्रेयसां प्रीतिविषयाणां मध्ये निरतिशय प्रीतिविषये दूरस्थेऽपि मयि विप्रय भूते स्मरन्त्यः ता गोकुलस्थाः स्त्रियः अङ्ग हे उद्धव। विरहेण यदौत्कण्ठ्यं तेन विह्वलाः परवशाः मुह्यन्ति देहधर्मान्विस्मरन्ति॥ ५ ॥

किञ्च, गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमन सन्देशाः तैर्मदीया वल्लव्यो गोप्यः, मच्चित्ताः कथञ्चित् कृच्छ्रेण क्लेशेन प्रायः[2] प्राणान् धारयन्ति। विरहतापेन दह्यन्त एव। मच्चित्तत्वात्कथञ्चिज्जीवन्तीति भावः॥ ६॥

---

1- -1 T.W. omit 2. T.W. omit प्रायः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवन्मनोवशीकरणार्थं भक्तिरेव प्रधानसाधनमिति दर्शयितुं हरेर्गोपीष्वनुकम्पित्वं निरूपयत्यस्मिन्नध्याये। तत्र कृष्ण उद्धवं गोकुलं गमयितुं वक्ति **वृष्णीनामिति**॥ १ ॥

य एवंविधगुणोपेत उद्धव स्तमाह क्वचिद्रहसि॥ २ ॥

मद्वियोगेन मम विरहेण य आधिस्तं मत्सन्देशैर्मदीयाज्ञावचनैः॥ ३ ॥

अहमेव प्राणो जीवनं यासां तास्तथा। त्यक्तदैहिकाः दूरीकृतदेहधर्माः दयितं इष्टस्य दातारं प्रेष्ठं स्वशरीरादेरपि प्रियतमं आत्मानं सन्ततानुगतरूपम्। स्व स्व भक्तवात्सल्यं कथयति य इति। ये ये जना मदर्थे मां निमित्तीकृत्य त्यक्तलोकधर्माः लोको देहः तद्धर्माः अशनवसनानुलेपनादि लक्षणा स्त्यक्ता यै स्ते तथा। यद्वा त्यक्ताः स्वर्गादि लोक विषयाः धर्माः यागादि सुकृत लक्षणाः मदर्थे मन्निमित्ते निवृत्तौ वर्तमाना ये ते। यद्वा मामुद्दिश्य त्यक्ता दत्ता लोकधर्माः जनविषयाः नमनाद्याचारा यै स्ते। अहं तान् बिभेमि तेभ्यो भीतोऽस्मि। बिभर्मि रक्षितास्मि। मत्सायुज्य मावहन्तीति भक्तवश्यतां दर्शयति बिभर्मि वा॥ ४ ॥

विरहेणोत्पन्नमौत्कण्ठ्यं उत्कण्ठारागित्वं तेन विक्लवाः॥ ५ ॥

प्रत्यागमनसन्देशैः आगमिष्यति युष्मत्प्रेष्ठः कृष्ण इत्यादिवाक्यैः। मयिआत्मा मति र्मननशक्तिः, मतिर्बुद्धिः यासां ताः। तथा मत्स्वभावा वा॥ ६ ॥

### [1]श्रीशुक उवाच[-1]

**इत्युक्त उद्धवो राजन् सन्देशं[2] भर्तु[3] राहृतः।**
**आदाय रथमारुह्य प्रययौ नन्दगोकुलम्॥ ७ ॥**

**प्राप्तो नन्दव्रजं श्रीमान्[4] निम्लोचति[5] विभावसौ।**
**छन्नयानः प्रविशतां पशूनां खुररेणुभिः॥ ८ ॥**

वाशितार्थे[6] नियुध्यद्भिः नादितं शुष्मिभिर्वृषैः।
धावन्तीभिश्च वास्राभि[7] रूधो भारै[8]श्च वत्सकान्॥ ९ ॥

इतस्ततो [9-]विलङ्घद्भिः गोवत्सै मण्डितं सितै[-9]।
गोदोह शब्दाभिरवं[10] वेणूनां [11]निस्वनेन च॥ १० ॥

गायन्तीभिश्च कर्माणि [12]शुभानि बलकृष्णयोः।
स्वलङ्कृताभि र्गोपीभि [13-]र्गोपैश्च[-13] सुविराजितम्॥ ११ ॥

---

1- -1 M.Ma.T.W. omit 2 M.Ma ०शान् 3. M.I.V. ०रात्मनः 4. K.T.W. ०मन् 5 M.I.V. निम्नो 6. G.J.M.I.V. ०र्थेऽभि० 7. M.I.V. ०श्रा० 8. M.Ma भरेण व०; G,J,M,L,V.भरैः स्व० 9- -9 M.Ma ववृधद्भिः गोभिर्वत्सैश्च गुम्फितम्। 10. K.T.W. ०वैः 11. G.J.M.Ma निः 12. K.T.W. शुद्धानि 13- -13 M.Ma गोवत्सैर्मण्डितं सितैः

**श्रीध० इतीति।** सन्देशं "भवतीनां वियोगो मे नहि सर्वात्मना क्वचित्" (भाग०. 10-47-29) इत्यादिकम्॥ ७॥

**प्राप्त** इति। निम्नोचति अस्तं गच्छति सति, छन्नं यानं यस्येति। तदा गोपीभि रज्ञातत्वेन नन्दसङ्गं लब्धवानिति सूचयितुम्[1]॥ ८ ॥

व्रजं वर्णयति पञ्चभिः **वाशितार्थ** इति। वाशिताः पुष्पवत्यो गावः तन्निमित्तमभितो युध्यद्भिः शुष्मिभिः मत्तै र्गोवृषै र्नादितं वाश्राभिः धेनुभिः, स्ववत्सकान्प्रति॥ ९ ॥

**इतस्तत** इति। विलङ्घद्भिः उत्पतद्भिः गोदोहशब्दैः सहाभितो रवाः मुञ्च, मां मुञ्च नय, आनय, गृहाण देहि इत्यादयो यस्मिन् तत्। वेणूनां निस्वनेन च मण्डितम्[2]॥ १० ॥

**गायन्तीभिरिति।** गायन्तीभिः गोपीभिः[3] गोपैश्च सुविराजितम्॥ ११ ॥

---

1. J. ०यति ॥ ८ ॥ 2. M.I.V. omit मण्डितम् 3. V. omits गोपीभिः।

**वीर०** इत्थमुक्त उद्धवः हे राजन् आहतः भर्तुर्भगवतस्सन्देशं "भवतीनां वियोगो मे नहि सर्वात्मना क्वचित्" (भाग० 10-47-29) इत्यादिना वक्ष्यमाण मादाय रथमारुह्य नन्दगोकुलं जगाम॥ ७ ॥

[1-]तदा कीदृशश्च प्राप्तः इत्यत आह[-1] **प्राप्त इति।** विभावसौ सूर्ये [2]निम्रोचति अस्तङ्गच्छति सति श्रीमत्सम्पत्तिमत् नन्दव्रजं प्राप्तः, अक्रूरवद्भक्त्युद्रेकात् मध्ये विलम्ब्याऽस्तमयवेलायां व्रजं प्राप्त इति भावः। कथम्भूतः? प्रविशतां पशूनां[3], खुररेणुभिः छन्नं यानं रथो यस्य सः। अनेन गोपीभिरज्ञात स्सन्नन्दसङ्गमं लब्धवानिति सूच्यते॥ ८ ॥

**व्रज वर्णयति पञ्चभिः।** वाशिताः पुष्पिण्यो गावः, तदर्थं सयोगार्थमिति यावत्। परस्पर नियुध्यद्भिः शुष्मिभिः **मत्तैः वृषै नादित,** तथा **वास्राभिः** धेनुभिः ऊधो भारैः उपलक्षिताभिरिति शेषः। वत्सान् प्रति धावन्तीभिः मण्डितम्॥ ९॥

तथा इतस्ततः विलङ्घद्भिः सितैर्बुद्धैश्च गोवत्सैश्च मण्डित गोदोहशब्दैस्सह अभिरवाः वत्स मुञ्च, मामुञ्च, नय मा नय इत्यादि विधाः तैः वेणूना स्वनेन च॥ १० ॥

रामकृष्णयोश्चेष्टितानि गायन्तीभिः गोपीभिः गोपैश्च स्वलङ्कृतैरिति लिङ्ग०यत्ययेन सम्बन्धः सुविराजितम्॥ ११॥

---

1- -1 TW omit 2 K. निम्लो० 3 K omits पशूना

**विज०** विभावसौ सूर्ये निम्लोचति अस्त गच्छति सति "सूर्यवह्नी विभावसू" (अम को 3-381) इति। दिवाकरे (पाठान्तर) इति केचित्। यान रथः॥ ७, ८ ॥

वाशितार्थे सम्भोगार्थे, वृषकामिनी वासिता वा शुष्म स्थेमा दृढ बलमेषामस्तीति शुष्मिणः तैः। ऊधोभारेण युक्ताभिः वास्राभिः वत्सलोलुपाभिः॥ ९ ॥

गोभिः वत्सैश्च गुम्फित नादित "गवा यो निनदो गुम्फा" (वैज को ) इति यादवः। "इतस्ततो ववृधद्भिः गोपैश्च सुविराजितम्" इति पाठः। ववृधद्भिः उत्पतद्भिर्नृत्यद्भिर्वा। इतस्ततो विलङ्घद्भिः" इति केचित्पठन्ति। विलङ्घन कुर्वद्भिः॥ १०, ११ ॥

**अग्न्यर्कातिथि गोविप्र पितृदेवार्चनान्वितैः।**
**धूपदीपैश्च[1] माल्यैश्च गोपावासैर्मनोरमम्॥ १२ ॥**

**सर्वतः पुष्पितवनं द्विजालिकुलनादितम्।**
**हंसकारण्डवाकीर्णैः[2] पद्मषण्डैश्च[3] मण्डितम्॥ १३ ॥**

**तमागतं समालोक्य[4] कृष्णस्यानुचरं प्रियम्।**
**नन्दः प्रीतः परिष्वज्य वासुदेवधियाऽऽर्चयत्॥ १४ ॥**

**भोजितं परमान्नेन संविष्टं कशिपौ सुखम्।**
**गतश्रमं पर्यपृच्छत्पाद संवाहनादिभिः॥ १५ ॥**

**[5-]नन्द उवाच[-5]**

**कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः।**
**आस्ते कुशल्यपत्याद्यै र्युक्तो मुक्तः सुहृद्वृतः॥ १६ ॥**

---

1 MMa ०पैर्दी० 2 KTW ०र्णं० 3 MMa ०खं० 4 GJMIV ०गम्य, KTW ०कर्य 5- -5 GJMIV omit

**श्रीध० अग्नीति।** अम्न्याद्यर्चनान्वितैः गोपगृहैः धूपदीपादिभिश्च मनोरमम्॥ १२ ॥

**सर्वत** इति। [1-] ष ण्डा स्समूहाः [-1]॥ १३ ॥

**तमिति।** आर्चयत् पूजयामास॥ १४ - १६ ॥

---

1- -1 J षण्डे स्समूहैः

**वीर०** अम्न्याद्यर्चनान्वितैः गोपगृहैः धूपादिभिश्च मनोरमम्। मनोरमैरिति पाठे तै र्गोपावासै र्धूपादिभिश्च सु विराजितमिति सम्बन्धः॥ १२ ॥

परितः पुष्पितानि वनानि यस्मिन्, द्विजानां पक्षिणां भृङ्गाणाञ्च समूहै र्नादितं, हंसैः कारण्डवै र्जलकुक्कुटैश्चावकीर्णं व्याप्तं पद्मसमूहैश्च मण्डितं, हंसकारण्डवाद्याकीर्णपद्मषण्डमण्डितसरः प्रान्तवर्ति द्विजालिकुलनादित पुष्पितवन मण्डितमित्यर्थः॥ १३॥

तावत्कश्चित्समागतं ततस्तं कृष्णस्यानुचरं प्रियश्चोद्धवमाकर्ण्य, अभ्येत्येति शेषः। प्रीतः परिष्वज्य भगवद्बुद्ध्या पूजयामास॥ १४ ॥

ततः परमेणोत्कृष्टेन अन्नेन भोजितम्। परमान्नेनेति कर्मणः करणत्वविवक्षया तृतीया। परमान्नं भोजितमित्यर्थः। कशिपौ पर्यङ्के सुखं यथा तथा संविष्टं, गतोध्वश्रमो यस्य तम् उद्धवं पादसंवाहनादिभिः परिचरन्निति शेषः। पर्यपृच्छत्॥ २५॥

प्रश्नमेवाह - **कच्चिदित्यादिना।** अङ्ग! हे महाभाग! नोऽस्माकं सखा शूरनन्दनो वसुदेवः मुक्तः बन्धनादिति शेषः। सुहृद्भिः वृतः अपत्याद्यैस्सह कुशली सुखी आस्ते कच्चित्॥ १६॥

**विज०** कशिपौ शयनतल्पे॥ १२ - १५ ॥

मुक्तः बन्धनक्लेशात्॥ १६ ॥

**दिष्ट्या कंसो हतः पापः सानुगःस्वेन पाप्मना।**
**साधूनां धर्मशीलानां यदूनां द्वेष्टि य स्सदा॥ १७ ॥**

**अपि स्मरति नः कृष्णो मातरं सुहृदस्सखीन्।**
**गोपान्व्रजश्चाऽऽत्मनाथं गावो बृन्दावनं गिरिम्॥ १८ ॥**

अप्यायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम्[2]।
तर्हि[3] द्रक्ष्यामि[4] तद्वक्त्रं सूनासं[5] सुस्मितेक्षणम्॥ १९ ॥

दवाग्ने[6] र्वातवर्षाच्च वृषात्सर्पाच्च[7] रक्षिताः।
दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना॥ २० ॥

स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षणम्[8]।
हसितं भाषितञ्चाङ्ग! सर्वा न श्शिथिलाः क्रियाः॥ २१ ॥

---

1 MIV, नाथान् 2 MMa ०नं स० 3 MIV क० 4 GJMMaMIV ०म 5 GJKMMa ०न० 6 GJMMa दा० 7 GJMIV ०षस 8 GJMIV ०क्षितम्

**श्रीध० दिष्ट्येति**। साधूनामित्यादि कर्मणि षष्टी॥ १७ ॥

**अपीति**। गावो गाः, गिरिं गोवर्धनम्॥ १८ ॥

**अपीति**। अप्यायास्यति आगमिष्यति किम्॥ १९ ॥

श्रीकृष्णोपकार स्मरणादिभिः अनुपमाऽऽनन्देन अभिभूयमान आह - **दवाग्नेरिति**। वाताद्वर्षाच्चेति। वृषात्सर्पाच्चेति। अन्येभ्यः दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्मः॥ २० ॥

किञ्च **स्मरता मिति**। लीलया अपाङ्गेन निरीक्षितम् अङ्ग! हे उद्धव!॥ २१ ॥

**वीर०** पापः कंसः सानुगः स्वकीयेन दुष्टेन कर्मणा निदानेन हतः, दिष्ट्या! अयं नो महानानन्द इत्यर्थः। पापमेव व्यनक्ति - साधूनामिति। कर्मणि षष्टी। यः कंसः साधून् धर्मएव शीलं येषां तान्यदून् द्वेष्टि अद्विक्षत् इत्यर्थः॥ १७॥

पित्रादिरूपान्नोऽस्मान् आत्मा स्वयं नाथो यस्य तं व्रजम्, गावो गाः, बृन्दावनं गिरिं गोवर्धनञ्च अपि स्मरति स्मरति किमित्यर्थः॥ १८ ॥

अप्यायास्यति आगमिष्यति किम्? तर्हि यदा आयास्यति तदा तस्य मुकुन्दस्य वक्त्रं द्रक्ष्यामि कथम्भूतम्? शोभना नासिका यस्मिन्, सुस्मिते शोभनस्मितयुक्ते ईक्षणे यस्मिन् तत्॥ १९ ॥

भगवत्कृतानुपकारान् अनुस्मरति **दवाग्नेरिति**। वाताद्वर्षाच्च, वृषात्सर्पाच्च, अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः कृष्णेन वयं रक्षिताः। कथम्भूतेन? सुमहात्मना आश्रितार्तिहारि स्वभावेन॥ २० ॥

आत्मनामवस्थानप्रकारमेवाऽऽह- अङ्ग! हे उद्धव, भगवतो वीर्याणि चेष्टितानि, लीलया अपाङ्गेन निरीक्षणञ्च हसितञ्च भाषितञ्च स्मरतां[1] नोऽस्माकं, सर्वाः क्रिया व्यापारास्शिथिलाः॥ २१ ॥

---

1 TW. omit स्मरतां

**विज०** दिष्ट्या स्वकृतेन। यदूनामिति षष्ठी द्वितीयार्थे, कर्मपद मित्यध्याहार्यं वा॥ १७ ॥

मातरः मातॄः, गावो गाः॥ १८ - २० ॥

क्रियाः गृहादिविषयाः॥ २१ ॥

**सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान्।**
**आक्रीडानीक्षमाणानां मनो याति तदात्मताम्॥ २२ ॥**

**मन्ये कृष्णञ्च रामञ्च प्राप्ताविह सुरोत्तमौ।**
**सुराणां महदर्थाय[1] गर्गस्य वचनं यथा॥ २३ ॥**

**कंसं नागायुतप्राणं मल्लान्[2] गजपतिं तथा।**
**अवधिष्टां[3] लीलयैव पशूनिव मृगाधिपः॥ २४ ॥**

**तालत्रयं महासारं धनुर्यष्टिमिवेभराट्।**
**बभञ्जैकेन हस्तेन सप्ताह मदधाद्गिरिम्॥ २५ ॥**

**प्रलम्बो[4] धेनुको[5]ऽरिष्टः[-5] तृणावर्त[6]बकादयः।**
**दैत्याः सुरासुरजितो हता ये नेह लीलया॥ २६ ॥**

---

1 K.T.W ०तेऽ० 2 G.J.M.Ma ०ल्लौ 3 M.V ०धीतान् 4 M.V ०म्ब 5- -5 M ०कारिष्ट 6 G.J ०र्तौ

**श्रीध०** न केवलं शिथिला एव। किन्तु, शनैरुपरमन्तीत्याह - **सरिदिति**। सरितश्च शैलाश्च वनोद्देशाश्च तान् आक्रीडान् क्रीडास्थानानि॥ २२ ॥

**मन्य** इति। सुराणामर्थाय, महद्गम्भीरं, गर्गस्य वचनं यथा॥ २३ ॥

न केवलं तद्वचनानुसारेणैव व्यवहारसम्बन्धादपीत्याह - **कंसमिति**॥ २४ ॥

**तालत्रयमिति।** इभराट् यष्टिमिव। तालत्रय प्रमाणं धनुः बभञ्ज॥ २५, २६ ॥

---

1 JVa सबादा०

**वीर०** न केवलं शिथिला एव। किन्तु शनैरुपरमन्तीत्याह[1-] [-1] - **सरिदिति।** सरितश्च शैलाश्च, वनोद्देशाश्च तानाक्रीडान् क्रीडास्थानानि च ईक्षमाणानां नो मनः, तदात्मतां कृष्णात्मतां कृष्णानन्यविषयकतां प्राप्नोति॥ २२ ॥

अनितरसाधारणचेष्टितैर्लिङ्गैः रामकृष्णौ भगवदवताराविति अध्यवस्यति **मन्ये** इति। रामं कृष्णञ्च सुरोत्तमौ सङ्कर्षण नारायणौ इह लोके प्राप्तावतीर्णौ मन्ये। किमर्थम्? सुराणां महते अर्थाय प्रयोजनाय। तत्र शिष्टसंवादं प्रमाणयति गर्गस्य वचनं यथेति॥ २३ ॥

तत्र लिङ्गान्यप्याह **कंसमिति** त्रिभिः। नागायुतस्य गजायुतस्य प्राणो बलं यस्य तं, कंसं। बहुवचनान्तपाठे, तान् मल्लान् गजपतिं गजेन्द्रं कुवलयापीडं लीलयैव अवधिष्टां हतवन्तौ। यथा सिंहः पशून्, तद्वत्॥ २४ ॥

तालं परिमाणविशेषः, तत्त्रयपरिमितं महासारं अयोवद्दृढं धनुर्बभञ्ज। यथा गजेन्द्रो यष्टि मिक्षुदण्डं, तद्वत्। तथैकेन हस्तेन गिरिं गोवर्धनं सप्ताहम्। अत्यन्तसंयोगे द्वितीया अदधाद्धार॥ २५ ॥

तथा देवदानवजयिनः, प्रलम्बादयो दैत्याः, येन कृष्णेन हताः। एतान्यमानुषाणि चेष्टितानि परत्वलिङ्गानीति भावः। येनेति प्रयोज्य प्रयोजककर्त्रो स्तन्त्रेण निर्देशः। अतः प्रलम्बो हत इत्यस्याऽविरोधः॥ २६ ॥

---

1- -1 K omits

**विज०** तदात्मतां तस्मिन्नेव०याप्तताम्॥ २२ ॥

महते अर्थाय प्रयोजनाय॥ २३ ॥

नागायुतवत् प्राणो बलचेष्टा यस्य स तथा तम्॥ २४ ॥

अङ्गुष्ठमध्यमे विस्तृते यत्परिमाण स ताल इत्युच्यते। एतादृशतालत्रयपरिमाणं "प्रादेश तालगोकर्णाः" (अम को. 2-343) इति। यष्टिं इक्षुदण्डम्॥ २५ ॥

सुरासुराञ्जयन्तीति सुरासुरजितः॥ २६ ॥

## श्रीशुक उवाच

**इति[1] संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः।**
**अश्रुकण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः॥ २७ ॥**

यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च।
शृण्व न्त्यश्रूण्यवास्राक्षी त्स्नेहस्नुत पयोधरा॥ २८ ॥

तयोरित्थं भगवति कृष्णे नन्दयशोदयोः।
वीक्ष्याऽनुरागं परमं नन्द माहोद्धवो मुदा॥ २९ ॥

उद्धव उवाच

युवां श्लाघ्यतमौ नूनं देहिना[2] मिह मानद।
नारायणेऽखिलगुरौ यत्कृता मति रीदृशी॥ ३० ॥

एतौ हि विश्वस्य च[4-] बीजयोनी [3-]रामो मुकुन्दः पुरुषः प्रधानम्[-3]।
अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ॥ ३१ ॥

यस्मिञ्[5]जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम्।
[6]निर्हृत्य कर्माशय माशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः॥ ३२ ॥

---

1 GJ अत्युत्क० 2 MIV रति 3- -3 MMa इमौ प्रधान पुरुषः पुराणः। 4- -4 MMa ०णेषु विज्ञाय ईशा० 5 KTW ०ञ्जगत्प्रा० 6 MMa निर्गृह्य

**श्रीध०** अखिलगुरुत्वमेव जनकत्वेन नियन्तृत्वेन चाऽऽह - **एताविति**। रामो मुकुन्दश्चेतौ विश्वस्य बीजयोनी निमित्तोपादाने। ननु पुरुषप्रधानयो र्बीजयोनित्वं प्रसिद्धमत आह - पुरुषः प्रधानमिति पुरुषोंऽशः[1] प्रधानं शक्तिः, अतः प्रधानपुरुषावप्येतावेवेत्यर्थः। एवं जनकत्व मुक्तम्। किञ्च अन्वीयभूतेषु भूतेष्वनुप्रविश्य भूतानां मध्ये तदुपहितस्य विलक्षणस्य नानाभेदस्य ज्ञानस्य च जीवस्य च ईशाते ईश्वरौ नियन्तारौ भवतः। कुतः? पुराणौ अनादी अनादित्वात्कारणत्वं, ततश्च नियन्तृत्वमित्यर्थः॥ २७ - ३१ ॥

ननु सृष्ट्यादि कर्मविशात् मनुष्यादिजन्मदर्शनाच्च तस्याऽन्येभ्यः को विशेषः इत्याशङ्क्याह द्वाभ्याम्[2] — **यस्मिन्निति**। कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवान्, अर्कवर्णः शुद्धसत्त्वमूर्तिस्सन् परां गतिं तत्परं पदं याति॥ ३२॥

---

1 JVa. omit मध्ये 2 JVa. omit पर

**वीर०** इतीति। कृष्णे अनुरक्ता अनुरागयुक्ता धी र्यस्य अश्रूणि कण्ठे यस्य प्रेमसंरम्भेण प्रेमोद्रेकेण विह्वलः परवशः तूष्णीं बभूव नकिञ्चिदुवाच॥ २७ ॥

तदा यशोदा च वर्ण्यमानानि, भर्त्रेतिशेषः, पुत्रचरितानि शृण्वती स्नेहेन स्नुतौ प्रसृतस्तन्यौ पयोधरौ यस्या स्सा अश्रूण्यवास्राक्षीत् आक्रन्दज नेत्रजलबिन्दून् ववर्ष॥ २८ ॥

इत्थं तयोः[1] नन्दयशोदयोः भगवति [2-]षाड्गु ण्यपूर्णे श्रीकृष्णे[-2] परमं सर्वोत्कृष्टं[3] अनुरागं अवलोक्य उद्धवः मुदा नन्द माह॥ २९ ॥

उक्तिमेवाऽऽह युवामित्यादिना — एवं निशा सा इत्यतः प्राक्तनेन ग्रन्थेन[4]। हे मानद, युवां दम्पती देवाना मपि श्लाघ्यतमौ पूज्यतमावित्यर्थः। कुतः? यद्यस्मात् अखिलगुरौ नारायणे कृष्णे भगवति एवं विधानुरागयुक्ता मतिः कृता। अनेन कृतकृत्यत्वं सूचितम्। हितकृत्त्वेन नियन्तृत्वेन जनकत्वेन चाऽखिलगुरुत्वं विवक्षितम्॥ ३० ॥

तदेवोपपादयति **एताविति**। रामो मुकुन्दश्चेत्येतौ विश्वस्य बीजयोनी बीजभूतानां पृथिव्यादिनां कारणभूतौ। ननु विश्वसजातीयौ प्रकृतिपुरुषौ तस्य बीजयोनी नैतावित्यत आह पुरुषः प्रधानम्, प्रधान पुरुष शरीरका वेतावेव बीजयोनी इत्यर्थः। अनेन जनकत्वं स्पष्टीकृतम्। इमौ पुराणौ पुरुषौ विलक्षणेषु देवमनुष्यादि रूपेण नानाविधेषु भूतेषु अन्वीय अन्तः प्रविश्य ज्ञानस्य ईशाते। विलक्षणस्येति पाठे शब्दादि विषयगोचरस्य ज्ञानस्य ईशाते नियन्तारौ प्रवर्तकौ भवत इति यावत्। अनेन नियन्तृत्वमुक्तम्। यद्वा विलक्षणस्य ज्ञानस्येति सम्यग्ज्ञानस्य प्रवर्तकत्वेन हितकृत्त्वं। ईशाते इति नियन्तृत्वञ्चोक्तम्॥ ३१ ॥

यत्कृतामतिरीदृशीत्यनेन सूचितां कृतकृत्यता मेवोपपादयति **यस्मिन्निति** द्वाभ्याम्। यस्मिन्नित्यस्य तस्मिन्नित्युत्तरेण सम्बन्धः। क्षणं क्षणमात्रमपि विशुद्धं विषयान्तर विमुखं मनो यस्मिन् निधाय कर्माशयं कर्मवासनां निर्हृत्य दग्ध्वा ब्रह्ममयः ज्ञानप्रचुरः अर्कवर्णोऽप्राकृतरूपः परां गतिं तत्पदं याति॥ ३२ ॥

---

1 TW omit तयोः 2- -2 TW omit 3 TW omit सर्वोत्कृष्ट 4 TW omit ग्रन्थेन

**विज०** प्रेमप्रसरेण प्रेमसन्दोहेन विह्वलः विवशः॥ २७ ॥

अवास्राक्षीत् निरन्तरममुञ्चत्॥ २८, २९ ॥

नून मिदानीम्॥ ३० ॥

नारायणशतावर्यौ, ऐरावतो नागरङ्गः इतिवत् नारायणो नाम कश्चित्किं न स्यात्, अखिलगुरुत्वञ्च पाषाणवत् इति तत्राऽऽह - **एताविति**। एतौ कृष्णरामौ विश्वस्य प्रपञ्चस्य बीजयोनी बीजत्वेन रतिहेतुत्वात् रेतस्त्वेनोपजीव्यत्वेन वा योनित्वेन स्वमहिम्ना रेतोनिधानस्थानत्वेन कारणत्वेन वा कीर्तितावितिशेषः। "बीजं शुक्रे फलास्थ्न्यले (वैज. को. 6-3-23) इति यादवः। "योनिः स्त्रीणां भगेस्थाने कारणे ताम्रकेपणेऽप्येषण् (वैज.को. 6-5-66) इति च। यद्वा, विश्वनाम्नो हरेः बीजे फले निष्पन्नरूपौ योनी गोवर्धनस्योद्धरणादि कर्मणा तत्त्वस्य योग्यौ च। "योग्यं यत्न क्षमारूप धानोपाधिषु वन्दने" (योग्यं यन्त्र क्षमापूप यानेनपायिषु चन्दने (वैज.को. 6-5-67) इति। "लाभे निष्पत्ति भोगेषु बीजे फले धने फलम्" (वैज.को. 6-5-52) इति च। यद्ययं न विष्णुः, तर्हि गोवर्धनोद्धरणादि कर्म न कुर्यात् मानवबलासाध्यत्वात् इत्यादि हि शब्दो वक्ति। "अजा मेकां लोहित शुक्लकृष्णां" (मना.उ. 8-4) "प्रधाना दिद मुत्पन्नम्" इत्यादिना प्रकृते बीजयोनित्व प्रतीतेः कथ मेतयो र्युज्यते इति तत्राऽऽह — इमाविति। "यस्त्वेष पुरुषः प्रकृतिः" इति श्रुतेः। प्रधानं प्रकृति

मूलकारण मित्यर्थः। अनेन विरिञ्चस्य कारणत्ववाच्यपि चित्प्रयुक्तेत्याशयेनाऽऽह पुरुष इति। "प्रकृतिं पुरुषञ्चैव प्रविश्य पुरुषोत्तमः" इत्यादेः तत्कारणत्ववाचोऽपि गति रुक्ता भवतीति। असङ्गस्य तत्प्रवेशः कथमित्यत उक्तं पुराण इति। पुरमणति प्राप्नोतीति, "तदेवाऽनुप्राविशत्" (तैत्ति उ. 2-6) इति श्रुते रसङ्गस्यापि प्रवेशो युज्यत इत्यर्थः। यद्वा, बीजयोनित्वे हेतुमाह प्रधानमिति। प्रधानत्वात्, सर्वस्मादुत्तमत्वात् "एक मेवाऽद्वितीयम्" (छान्दो उ .6-2-1) इति श्रुतिः। उत्तमत्वं कुत इत्यत्राऽऽह पुरुष इति। पुरातन पुरुषत्वात् अन्येषा मर्वाचीन पुरुषत्वा दित्यर्थः। केवलमवताप्रयोजनं कंसादि हननं न भवति, किन्तु स्वोपदिष्टज्ञानरक्षणञ्चेति भावेनाऽऽह - अन्वीयेति। इमौ पुराणौ पूर्णानन्दौ कृष्णरामौ विलक्षणेषु विविधलक्षणेषु नानाविध०यावर्तक धर्मेषु भूतेषु अन्वीय अवतीर्य विज्ञाय ०यासाद्यात्मना विशिष्टज्ञान मुत्पाद्य असुरजनप्रकृति जनेन तन्नाशं विज्ञाय तद्धननेन तिरोहित ज्ञानोपदेशेन च ज्ञानस्येशाते समर्थयेते रक्षतः इत्यन्वयः॥ ३१ ॥

जन्मादिकं श्रोतव्यं श्रीकृष्णस्यैव मोक्षहेतुत्वात् तस्येति भावेनाऽऽह **यस्मिन्निति**। कर्माशयं शरीरारम्भक कर्मसमूहं यस्मिन्मनो वा निगृह्य विनियम्य विनाश्य ब्रह्ममयः ज्ञानप्रधान इत्यर्थः। अर्कवत्स्फटिकवत् वर्णः प्रकाशो यस्य स तथा, अतिस्वच्छ इत्यर्थः॥ ३२ ॥

**तस्मिन्भवन्ता वखिलात्म हेतौ[1] नारायणे कारणमर्त्यमूर्तौ।**
**भावं व्यधत्तां[2] नितरां महात्मन् किंवावशिष्टं युवयोस्तु[3]कृत्यम्॥ ३३ ॥**

**आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः।**
**प्रियं विधास्यते पित्रो र्भगवान्सात्त्वतां पतिः॥ ३४ ॥**

**हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्त्वताम्।**
**यदाह वस्समागम्य[4] कृष्णः सत्यं करोति तत्॥ ३५ ॥**

**मा खिद्यतं[5] महाभागौ द्रक्ष्यथः कृष्णमन्तिके।**
**अन्तर्हृदि सभूताना मास्ते ज्योति रवैधसि॥ ३६ ॥**

**न ह्यस्याति[6] प्रियः कश्चिन्नाऽप्रियो वाऽस्त्य[7]मानिनः।**
**नोत्तमोना[8]ऽधमो वा[9]ऽपि समानस्य[10] समोऽपि वा[11]॥ ३७ ॥**

**न माता न पिता तस्य न भार्या न सुतादयः।**
**नाऽऽत्मीयो न[12] परश्चाऽपि न देहः[13] कर्मचैव वा॥ ३८ ॥**

---

1. M.Ma T.W. योनौ 2. G.J. विधात्रां; MI.V. विधत्तो 3. G.J.M.Ma ०यो स्सु० 4. G.J.K.T.W. ०त्य 5. M.Ma ०द्येतां 6. G.J.K. स्याऽस्ति 7. T.W. ०मस्त्य० 8. T.W. ०माध० 9. G. नाऽपि 10. G.J. ०स्याऽस० 11. M.Ma. च 12. M.Ma. न परश्चास्य; MI.V. नापरश्चापि 13. G.J. देहोजन्म एव च; M.Ma देहो जन्मकर्मवा; MI. देहो जन्म चैव हा; V. देहो जन्म चैव वा

**श्रीध० तस्मिन्निति।** अखिलस्याऽऽत्मा च हेतुश्च तस्मिन्, कारणेन मनुष्याकृतौ, महात्मन् महात्मनि परिपूर्णे भवन्तौ भक्तिं कुरुतः, अतः कृतार्थावित्यर्थः[1]॥ ३३ ॥

प्रस्तुतमाह आगमिष्यतीति, पित्रोर्युवयोः॥ ३४ ॥

**हत्वेति।** "यात यूयं व्रजं तात, वयञ्च स्नेह दुःखितान्, ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" (भाग. 10-45-23) इति यदाह कृष्णः तत्सत्यं करिष्यतीति॥ ३५ ॥

कालविलम्ब[2] मसहमानौ। प्रत्याह - **मा खिद्यतमिति।** हे महाभागौ अन्तिके इदानीमेव, समीपं[3] कृत इत्यत आह अन्तर्हृदीति। तर्हि सर्वैः किमिति न दृश्यते तत्राऽऽह ज्योतिरिवैधसीति। ज्यो [4-]तिर्यथा[-4] मथनं विना न दृश्यते। तथा भक्तिं विना श्रीकृष्णोऽपीति भावः॥ ३६ ॥

अहो आस्तामेतत् तस्य त्विहाऽऽगमनं स्वस्याऽतिप्रियान् पित्रादीन् विहाय न सङ्गच्छत इति मन्ये[5] तत्राऽऽह-**नेति।** अस्य प्रियादयो नहि सन्ति। तत्र हेतुः[6] अमानिनः समानस्येति च॥ ३७,३८ ॥

---

1 JVa कृत कृत्यावि० 2 JVa ०म्बन० 3 JVa add वा 4- -4 JVa तद्यथा 5 JVa मन्येत 6 JVa ०तू

**वीर०** तस्मिन्नारायणे कारणमर्त्यमूर्तौ साधुपरित्राणरूपनिमित्तात् स्वसङ्कल्पोपात्तमनुष्य विग्रहे महात्मानि अखिलस्य चिदचिदात्मकस्य जगतः आत्मनि कारणभूतेच भवन्तावत्यन्तं भाव मनुरागं व्यधत्ता मकुरुताम्। अतो युवयोः किंकृत्यमवशिष्टं न किञ्चिदित्यर्थः॥ ३३ ॥

प्रस्तुतमाह **आगमिष्यतीति।** अदीर्घेणाऽल्पेन कालेन अच्युतो व्रजं प्रत्यागमिष्यति। तदा भगवान् पित्रो र्युवयोः प्रियं विधास्यते करिष्यति॥ ३४ ॥

सर्वेषां सात्त्वतानां यादवानां भगवद्भक्तानां वा, प्रतीपं प्रतिकूलं कंसं रङ्गमध्ये हत्वा भगवान्कृष्णः वो युष्मान्प्रति यदाह - "यात यूयं व्रजंतात, वयञ्च स्नेहदुःखितान्, ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां प्रियम्" (भाग०.10-45-23) इति यदाऽऽह तत्सत्यं करिष्यति॥ ३५ ॥

विलम्बमसहमानौ प्रत्याह - **मा खिद्यतमिति।** हे महाभागौ, मा खिद्यतं खेदं मा कुरुतम्। अन्तिके अनतिविप्रकृष्ट काले कृष्णं द्रक्ष्यथः। किञ्च न भगवान् मधुरायामेवाऽऽस्ते किन्तु अत्राऽऽपि इत्याशयेनाह अन्तर्हृदीति। तर्हि सर्वैः किमिति न दृश्यते? तत्राऽऽह ज्योतिरिवैधसीति। यथैधसि दारुणि ज्योतिरग्निः मथनाद्युपाय मन्तरेण न दृश्यते, तद्वत् भगवान् कृष्णो भक्तिं विना न दृश्यत इत्यर्थः॥ ३६ ॥

अस्मत्तोऽपि प्रियतमान् वसुदेवादीन् विहायाऽत्राऽऽगमिष्यति इत्येत दसम्भावित मित्यत्राऽऽह - **न ह्यस्येति।** अस्य भगवतः प्रियादयो न सन्ति। तत्र हेतु रमानिनः समानस्येतिच। अमानिनः ममताभिमान रहितस्य, सर्वसमानस्य॥ ३७॥

मात्रादयस्सन्त्येवेत्यत्राऽऽह - **न मातेति**। तत्र हेतु र्न देह इति। देहस्यैवाभावे कुतस्तत्सम्बन्धिनो मात्रादय इति भावः। ननूपलभ्यते तस्यापिदेहः, तत्कथं नचास्यदेह इति ब्रूषे? अत आह **कर्मचैवेति**। पुण्यपापात्मक कर्मारब्ध देहो नाऽस्तीत्यर्थः॥ ३८ ॥

**विज०** भावं भक्तिम्। यद्वा लीलादिकं वा। यद्विषयमन्तरेण किमपि नास्तीत्यर्थः। व्यधत्तां व्यदधातां कृतवन्तावित्यर्थः। महात्मन् महात्मनि चेतनोत्तमे इत्यर्थः॥ ३३, ३४ ॥

प्रतीपं प्रतिकूलम्॥ ३५ ॥

अन्तिके कालक्षेपंविना बालबुद्धिमन्तरेण कृष्णस्य दूरस्थत्वं नास्तीत्याऽऽह। **अन्तर्ह्रदीति**। एधसि काष्टे। ज्योति रग्निः॥ ३६ ॥

प्रेष्टानां हृद्यैव वर्तते नाऽन्येषामिति नियमोनास्तीति भावेनाऽऽह- **न हीति**। अमानिनः अहम्ममाभिमानरहितस्य योग्यतानुसारेण। 'समानस्य समोऽपि च' इति पाठः॥ ३७, ३८ ॥

[1-]न चास्य कर्म वा लोके[-1] सदसान्मिश्रयोनिषु।
क्रीडार्थ[2] सोऽपि साधूनां परित्राणाय कल्पते॥ ३९ ॥

सत्त्वं रजस्तम इति भजते निर्गुणो[3] गुणान्।
क्रीडन्[4-]नीहोऽपि[-4] गुणैः सृजत्यवति हन्त्यजः॥ ४० ॥

★ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव मही[5]यते।
चित्ते कर्तरि तत्रात्मा कर्तेवाऽहन्धिया स्मृतः॥ ४१ ॥

युवयोरेव नैवाऽऽयमात्मजो भगवान्हरिः।
सर्वेषामात्मजोह्यात्मा पिता माता स ईश्वरः॥ ४२ ॥

दृष्टं श्रुतं भूतभवद्भविष्यत्[6]स्थास्नु[7]श्चरिष्णुर्महदल्पकं च[8]
विनाऽच्युता [9-]द्वस्त्वितरं नकिञ्चित्[-9] स एव सर्वं परमात्मभूतः[10]॥ ४३ ॥

---

1- -1 K.T.W. न चास्य जन्म वा लोके; M.Ma लोकेस्य जन्मकर्माणि 2. G.J. MI.V. ० र्थः 3. M.Ma. महान् 4- -4 G.J. ०न्नतीतोऽत्र; K.T.W. ०न्नतीतोऽपि; M.Ma ०न्ननीहोऽनु ★ This verse is not found in M & Ma edns. 5. MI.V. तथा 6. ०M.Ma स्नु च ० 7. M.Ma. ० ष्णु म ० 8. MI.V. वा 9- -9 G.J.MI.V. ० द्वस्तु तरां न वाच्यं०; M.Ma द्वस्तुतया न चान्यत् 10 G.J.MI.V. मार्थभूतः; M.Ma मार्थरूपः

**श्रीध० नेति।** सोऽपि जन्मकर्मादिरहितोऽपि[1] क्रीडा प्रयत्नेन सन्[2] साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्त्विक राजस तामस मिश्रयोनिषु[3]। यद्वा, देवादि मत्स्यादि नृसिंहादि योनिषु कल्पते आविर्भवतीत्यर्थः॥ ३९ ॥

ननु जन्मकर्मादि रहितस्य कुत एतदित्यत आह **सत्त्वमिति।** क्रीडाया [4-]मनीहोऽपि[-4]क्रीडन्, तथाऽपि माया गुणै र्घटत इत्यर्थः॥ ४० ॥

अत्राऽविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टान्तीकुर्वन् तस्याविद्ययैव कर्तृत्वमिति सदृष्टान्तमाह - **यथेति।** भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यतीव[5] यथा[6] प्रतीयते। एवं चित्ते कर्तरि सति तत्र चित्ते अहन्धिया आत्माध्यासेन आत्माकर्ता स्मृतो यथा तद्वदिति॥ ४१ ॥

किञ्च। युवयोरेव नाऽयमात्मजः किन्तु सर्वेषामपि। तत्राऽपि नाऽत्मज एव किन्तु शत्रुमित्रादि रूपोपीति सर्वात्मत्व[7] निरूपणेन मोहनिवृत्तये सम्बन्धमनैकान्तिकं[8] करोति द्वाभ्यां **युवयोरिति**॥ ४२ ॥

**दृष्टमिति।** अच्युता द्विनातरां नितरा तत्त्वतो वाच्यं निर्वचनार्हं वस्तुनास्तीति॥ ४३ ॥

---

1 Va omits अपि 2 J,Va add सः 3 J,Va omit मिश्र 4- -4 J,Va °हामतीतोऽपि 5 J,Va °ति 6 Va त० 7 MI,V omit °त्व० 8 J,Va °की०

**वीर०** ननूपलब्धा तस्याऽपि देहोत्पत्तिः तत्राऽऽह - **नचाऽस्य जन्मेति।** तस्योत्पत्तिरवतारूपेति भावः। किमर्थमवतारस्तत्राऽह लोक इति। सोऽपि जन्म कर्मादि रहितोऽपि क्रीडार्थं साधूनां[1] परित्राणरूप परमप्रयोजनाय च, लोके सदसन्मिश्रयोनिषु उत्तमाधम मध्यमयोनिषु देवतिर्यङ्मनुष्ययोनिषु[2] कल्पते आविर्भवति। **अनेन बिलक्षण** जन्मकर्मादिभिर्जीव वैलक्षण्यं सूचितम्॥ ३९ ॥

तदेव विशदयति - **सत्त्वमिति।** निर्गुणस्सत्त्वादि प्राकृतगुणेभ्यो निर्गतः पारवश्यरहित इत्यर्थः। जीवस्तु सत्त्वादि गुणवश्य इति भावः। सत्त्वादीन् गुणान् भजते। स्वलीलोपकरणतया नियाम्यतया च तान्परिगृह्णाति। जीवस्तु भोग्यतया नियमनाशक्त्या चताननुवर्तत इति भावः। गुणैरुपकरण भूतैः, क्रीडन्नपि तानतीतः अतिक्रान्तः स्वरूपतस्स्वभावश्च गुणैरनभिभूत इत्यर्थः। जीवस्तु तै स्स्वभावतोऽभिभूत, इति भावः। क्रीडन्नित्यनेन जीवस्य गुणकार्य शब्दादिविषयभोगस्सूचितः। काऽसौ क्रीडेत्यतः तां दर्शयति सृजतीति। विश्वमिति कर्मपद मध्याहार्यम्। अजः स्वयं विश्वगतोत्पत्त्यादिरहितः। सृजति अवति रक्षति संहरति च। जगद्व्यापारस्तस्य क्रीडेति दर्शितं भवति। अनेन जीवस्तु सुखदुःखाद्यनुभवाय पुण्यपापात्मककर्माणि करोतीति[3] सूचितम्। अज इत्यनेन विश्वगतोत्पत्त्यादि भाग्भवति जीवः, जातोऽहं, मृतोऽहमिति देहधर्मानात्मनि मन्यत इति च॥ ४० ॥

एतदेवदृष्टान्तमुखेनोपपादयति **यथेति।** भ्रमरिका अतिवेग भ्रमणक्रिया तया उपलक्षितया दृष्ट्या यथाभूरपि भ्राम्यतीव बम्भ्रम्यमाणेव ईयते प्रतीयते, तथा आत्मा कर्ता च सन्नेवजीवः तत्रानात्मनि अकर्तरि च चित्ते चित्तशब्दोपलक्षिते देहे

अहन्धिया स्वामेधाभिमानेन स्मृतःमतः। स्वगत कर्तृत्वात्मत्वज्ञातृत्वादीन् विस्मृत्य देहमेव तथाविधं मन्यत इत्यर्थः यद्वा, एवं जीवविलक्षणो भगवान्कृष्णः तद्याथात्म्याविद्भि स्वतुल्यतया दृश्यत इति सदृष्टान्तमाह- **यथेति**। स्वयं भ्रमरिकारहिताऽपि भूर्यथा भ्रमरिकादृष्ट्या भ्राम्यतीव प्रतीयते तथाऽऽयं कृष्णः अहन्धिया स्वतुल्य बुद्ध्या कर्ता पुण्यपापात्मक कर्मकर्ता य आत्मा जीवः स इव चित्ते अकर्तीरे स्मृतः करणभूते चित्तेऽनुसन्धीयत इत्यर्थः। यद्वा, कर्तरीत्येवच्छेदः कर्तीरे जीवे यच्चित्तं तस्मिन्नहन्धिया। तामेव प्रपञ्चयति - तत्र चित्ते आत्मा कर्तेव पुण्यपापादिकर्ता तदायत्त देहभाग्जीव इव स्मृतः मतः॥ ४१ ॥

एवं जीववैलक्षण्य मुपपाद्य तयोस्तस्मिन् केवलं पुत्रत्वाभिमानं वारयन् तदनवगत सम्बन्धान्तराण्युपदिशन् तानि च सर्वसाधारणानीत्याह **युवयोरिति**। अयं ज्ञानादिकल्याणगुणाकरःनिरस्तनिखिल दोषः आश्रितबन्धहरः श्रीकृष्णः युवयोरेव आत्मज एव न भवति, किन्तु सर्वेषामप्यात्मजः। कुतः हि[4] यस्मात् आत्मा सर्वान्तरात्मा तत्तदात्मजाद्यन्तरात्मतया तच्छरीरकत्वेन तद्रूपत्वादिति भावः। न केवलमात्मज एव। अपितु पिता सर्वकारणत्वादिति भावः। माता च हितैककारित्वादिति भावः। यद्वा सर्वात्मकत्वात् मात्रादिरूपोऽपि स एवेति भावः। ईश्वरः स्वामी च अनेन "माता पिता भ्राता निवास श्शरणं सुहृद्गतिश्च नारायणः' (सुब; उ 6-2-1) इति श्रुत्यर्थोऽभिसंहितः॥ ४२ ॥

सर्वेषामात्मेत्यनेनोक्तं सर्वात्मकत्वमेव[5] प्रपञ्चयति दृष्टमिति। दृष्टाद्यन्यतमं यत्किञ्चिद्वस्तु तदच्युतं[6] विना नास्ति। सर्वमच्युतायत्तसत्तादि मत्त्वेन तच्छरीरत्वेव च तदात्मकमेवेत्यर्थः। कुतः ? यतः, परमात्मभूतः लोकत्रयमप्यन्तःप्रविश्य प्रशासनेन तस्य भर्ता व्याप्यगत दोषास्पष्टश्च। अत स्सर्वं जगत्स एव। विशेषणबुद्धिशब्दयो राकृत्यधिकरणन्यायेन विशेष्यपर्यन्तत्व स्वाभाव्याद्विशेषणस्य च विशिष्टवत्स्वन्तर्भूतत्वेन विशिष्टात्पृथग्वस्तुत्वाच्च जगद्रूपेण स एवाऽनु सन्धेय इत्यर्थः॥ ४३ ॥

---

1 T,W omit लोके 2 T W ॰र्वभूव 3 K विशेषः। 4 T,W यत् 5 T,W त्स्यमेव 6 T W omit तत्

**विज॰** नन्वेवं विधस्य हरेः कथं जन्मादिक मुपपद्यते इति तत्राऽऽह - लोक इति। सदसन्मिश्रयोनिषु सुरनरतिर्यग्योनिषु॥ ३९॥

**अनुगुणैस्तत्तत्कर्मानुकूलैः सत्तादिभिः॥ ४०,४१॥**

**सम्यक् प्रणिहिते आत्मनि मनसि जायते प्रकाशते इत्यात्मज इत्यध्यात्मम्॥ ४२ ॥**

युवयोरेकं तत्त्वं संक्षिप्य वदामीत्याह- **दृष्टमिति**। भविष्यत् भूतं भवद्वर्तमानं, स्थास्नु स्थावरं, चरिष्णुजङ्गमम्। अच्युताद्विना अन्यत् ब्रह्मादिकं वस्तुतया स्वातन्त्र्येण नैवास्ति। किन्तु सर्वं स एव तदधीनमेव। सकीदृशः परमार्थरूपः नित्याप्रतिहत स्वरूप इति बुध्यध्वमिति॥ ४३ ॥

श्रीशुक[1-] उवाच[-1]

एवं निशा सा ब्रुवतो व्यतीता[2] नन्दस्य कृष्णानुचरस्य राजन्।
गोप्यस्समुत्थाय निरूप्य दीपान् वास्तून्समभ्यर्च्य दधीन्यमन्थन्॥ ४४ ॥

तादीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः[3 4- -4]।
चलन्नितम्बस्तनहारकुण्डल त्विषत्कपोलारुण कुङ्कुमाननाः॥ ४५ ॥

उद्गायतीना मरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः।
दध्नश्च निर्मन्थन शब्दमिश्रितो निरस्यते येन दिशाममङ्गलम्॥ ४६ ॥

भगवत्युदिते सूर्ये व्रज[5] द्वारि व्रजौकसः।
दृष्ट्वा रथं शातकौम्भं[6] कस्यायमिति चाऽब्रुवन्॥ ४७ ॥

अक्रूर आगतः किं वा यः कंस स्यार्थसाधकः।
येन नीतो मधुपुरीं कृष्णः कमल लोचनः॥ ४८ ॥

किं साधयिष्य त्यस्माभिः[7] भर्तुः प्रेतस्य[8] निष्कृतिम्।
इति[9] स्त्रीणां वदन्तीना मुद्धवोऽगा त्कृताह्निकः॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
नन्दशोकापनयन नाम षट्चत्वारिंशोऽध्यायः॥ ४६ ॥

---

1- -1 G,J,K,T,W omit 2 T,W °व्य° 3 M Ma रज्ज्वा 4- -4 M,Ma °त्करकङ्कणाः स्त्रियः 5 G,J, नन्द० 6 M,V कु० 7 M,V °तेस्मा० 8 J,M,V प्री० 9 M,V ततः

**श्रीध० एवमिति**। दीपान् निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन्॥ ४४ ॥

**ता इति**। मणिभिः काञ्च्यादिषु स्थितैः, रज्जू विकर्षत्सु भुजेषु कङ्कणानां स्रजो यासां ताः, चलन्तो नितम्बाः स्तनाहाराश्च यासां ताः, कुण्डलैः स्त्विषन्तः स्फुरन्तःकपोलाः यासाम् ताः अरुणानि कुङ्कुमानि येषु तानि आननानि यासां ता एव ताश्च ताश्च॥ ४५-४७ ॥

तदा व्रजौकसो गोप्यः सक्रोधमाहुः- अक्रूर इति। अर्थं साधितवानित्यर्थ, साधकः। तदाऽऽहुः येन नीत इति॥ ४८ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्य स्वयमेव[1] कार्यं[2] सम्भावयन्ति। किमिति। तदा साधितेन कार्येण प्रीतस्य तुष्टस्य[3] भर्तुः। पाठान्तरे - प्रेतस्य मृतस्य कंसस्य निष्कृतिं और्ध्व दैहिक मस्माभिः कृत्वा साधयिष्यते किम्? अस्मन्मांसैः किं पिण्डान् कृत्वा दास्यतीत्यर्थः इत्येवं[4] वदन्तीनां स्त्रीणां, तत स्तस्मिन्नवसरे कृताह्निकः[5] कृतस्नानादिनियमः उद्धवः [6-]अगात् आगतः[-6]॥ ४९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां व्याख्यायां
षट्चत्वारिंशोऽध्यायः॥ ४६ ॥

---

1. Ml,V omit स्वयमेव 2. J,Va कारणं 3. Ml,V omit तुष्टस्य 4. Ml,V omit इति 5. Ml,V omit कृताह्निकः 6- -6 J,Va आगत इति

**वीर० एवमिति**। हे राजन्नित्थं कृष्णानुचरस्योद्धवस्य नन्दस्य च मिथो ब्रुवतस्सतः सा निशा व्यतिक्रान्ता बभूव। तदा निशायाः पश्चिमे यामे गोप्यस्समुत्थाय दीपान् निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् समभ्यर्च्य गन्धादिभिरिति शेषः । दधीन्यमन्थन् ममन्थुः॥ ४४ ॥

मथ्नती स्तावर्णयति - **ता** इति। ताः मथ्नत्यो गोप्यः दीपैः दीप्ताः या काञ्च्यादि स्थिता मणयः, तै र्विरेजुः। कथम्भूताः? मन्थन दण्डरज्जूः विकर्षत्सु भुजेषु कङ्कणानां स्रजः यासां ताः चलन्तो नितम्बाः स्तना[1]हाराश्च यासां कुण्डलैः त्विषन्तः स्फुरन्तः कपोलाः यासां, अरुणानि कुङ्कुमानि येषु तानि आननानि यासां ताश्च॥ ४५ ॥

तादात्विकध्वनिं लक्षयति- **उद्गायतीनामिति**। अरविन्दलोचनं कृष्णं उच्चैर्गायन्तीनां गोपीनां ध्वनिः दध्नः निर्मथन[2]-जशब्देन मिश्रितो दिवमस्पृशत् व्याप्तवान्। येन ध्वनिना दिशाममङ्गलं निरस्यते अपनुद्यते॥ ४६ ॥

तदा भगवत्यादित्ये उदिते सति व्रजौकसो गोप्यः द्वारि शातकौम्भं सुवर्णालङ्कृतं रथं दृष्ट्वा कस्याऽयमित्यूचुः। सक्रोधमिति शेषः॥ ४७ ॥

**अक्रूर** इति[4]। किं वा सोऽक्रूर आगतः कोऽसौ। यः कंसस्य अर्थं[3] प्रयोजनं साधितवान्। तदाहुः येन च कृष्णो मधुपुरीं नीतःप्रापितः॥ ४८ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्यकार्यं सम्भावयन्ति -**किमिति**। तथा साधितेन कार्येण प्रेतस्य मृतस्य भर्तुः[5-] कंसस्य निष्कृतिं[-5] और्ध्वदैहिकं अस्माभिः कृत्वा साधयिष्यति किम् अस्मन्मांसैः पिण्डान्[6] कृत्वा दास्यति किमित्यर्थः। इतीति शुकोक्तिः । इत्थं स्त्रीणां वदन्तीनां सतीनां तस्मिन्नेवाऽवसरे कृतस्नानादिनियम उद्धव अगात् आजगाम॥ ४९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां षट् चत्वारिंशोऽध्यायः॥ ४६ ॥

---

1 TW °न 2 K °न्य 3 T,W अर्थः 4 TW omit नीतः 5- -5 T,W omit 6 T,W omit अगात्

**विज०** निरूप्य प्रज्वाल्य वास्तून् गृहद्वारि देहल्यादिषु वास्तुदेवताः मार्जनालेपनाक्षतादिभिः सम्यगभ्यर्च्य अमन्थन् ममन्थुः॥ ४४ ॥

मथनरज्ज्वा विकर्षन्तः उल्लिखन्तः करकङ्कणा यासां ताः। यद्वा मथन रज्ज्वाऽविकर्षन्तः । चलद्भिः नितम्बादिभिः त्विषन्ति कपोलादीनि अरुण कुङ्कुमानि आननानि यासां तथा। अरुणानि कुङ्कुमानि येषु तानि तथा वा॥ ४५ ॥

येन ध्वनिना, दिशाममङ्गल मित्यनेन दिगन्तर्वासिनां जनानामशुभं नश्यतीत्युच्यते॥ ४६ ॥

शातकौम्भ शातकुम्भेन सुवर्णेन विरचितम्॥ ४७, ४८ ॥

प्रेतस्य मृतस्य भर्तुः कसस्य निष्कृतिमानृण्यमस्माभिः करिष्यति, अस्मद्दण्डेन कर्तुमिच्छति किमित्यर्थः। इति वदन्तीनां कृताह्निकः अनुष्ठित प्रातः काल क्रियः॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
षट्चत्वारिंशोऽध्यायः॥ ४६ ॥
(श्रीविजयध्वजरीत्या चतुश्चत्वारिंशोऽध्यायः)

---

# सप्तचत्वारिंशोऽध्यायः

(विजयध्वजरीत्या पञ्चचत्वारिंशोऽध्यायः, षट्चत्वारिंशोऽध्यायश्च)

## श्रीशुक उवाच

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम्।
पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं परि[1]मृष्टकुण्डलम् ॥ १ ॥

[2]शुचिस्मिताः[3] कोऽयम[4]पीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः।
[5]इति स्म सर्वाः परिवव्रु रुत्सुका स्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥

तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः।
रहस्यपृच्छन्[6]नुपविष्टमासने विज्ञाय सन्देशहरं रमापतेः ॥ ३ ॥

जानीमस्त्वां यदुपतेः [7-]पार्षदं समुपस्थितम्[-7]।
भर्त्रेह प्रेषितः पित्रोः भवान्प्रियचिकीर्षया ॥ ४ ॥

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ।
स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥

---

1. G.J. मणि° 2. M.Ma सुवि° 3. MI.V. °तः 4. M.Ma मतीवद° 5. MI.v. इतीव 6. M,Ma °न्परि° 7- -7 G.J. MI.V पार्षदं समुपागतम्; M-Ma पार्षदार्यमनुव्रतम्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तचत्त्वारिंशकेऽथ कृष्णादेशेन गोपिकाः।
बोधयित्वोद्धव स्तत्त्व मनुज्ञाप्याऽगमत्पुरीम् ॥

**शुचिस्मिता** इति। अपीच्यं सुन्दरं दर्शनं यस्य सः। अच्युतस्येव वेषो भूषणानि च यस्य सः। कोऽयं, कुतो वा कस्य वा[1] इति वदन्त्यः तं परिवव्रुः ॥ १-३ ॥

**जानीम** इति। पार्षदं सेवकम् ॥ ४ ॥

**अन्यथेति**। पित्रोः प्रियचिकीर्षयेत्यत्र हेतुः स्नेहानुबन्ध इति ॥ ५ ॥

---

1. J.Va च

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ तासां तेन सह संवादप्रकारं भगवति प्रेमातिशयञ्चाऽनुवर्णयति सप्तचत्वारिंशेन तमिति। कृष्णस्य अनुचरं भृत्यं प्रलम्बौ आजानुलम्बिनौ बाहू यस्य, नवकञ्जे सद्योविकसितपद्मदले इव लोचने यस्य, पीते पिशङ्गे अम्बरे यस्य, पुष्करमाला पद्ममाला अस्यास्तीति तथा व्रीह्यादित्वान्मत्वर्थीय इनिः। मुख मरविन्द मिव मुखारविन्दम्। "उपमितं व्याघ्रादिभिः" (अष्टा 2-1-56) इति समासः। लसत् मुखारविन्दं यस्य परिमृष्टे निर्मलीकृते कुण्डले यस्य तमुद्धवं वीक्ष्य व्रजस्त्रियः सर्वाः उत्सुकाः सत्यः, उत्तमश्लोकस्य पदाम्बुज मेवाऽऽश्रयो यस्य, तमुद्धवं परिवव्रुः परिवेष्टितवत्य इत्यन्वयः। किं कुर्वत्यः? अपीच्यं सुन्दरं दर्शनं यस्य। अच्युतस्येव वेषो भूषणानि च यस्य सः। कोऽयं, कुतो वा, कस्य वेति वदन्त्य इति शेषः। स्मेति विस्मये ॥ १, २ ॥

तमिति। सव्रीडेन हासेन ईक्षणेन सूनृतेन मधुरभाषणेन, आदिशब्देन अर्घ्यादिभिश्च। सत्कृतं रहसि एकान्ते आसने उपविष्टं तं रमापतेः कृष्णस्य सन्देशहरं वार्ताऽऽहर्तारं विज्ञाय ज्ञात्वा अवनताः नम्राः प्रणता इति यावत्। प्रश्रयेण विनयेन अपृच्छन् पप्रच्छुः ॥ ३ ॥

प्रश्नमेवाह जानीम इति। त्वां यदुपतेर्भगवतः पार्षदं भृत्य मत्र समुपस्थितं समागतं जानीमः। किमर्थं समुपस्थितोऽहमित्यत्राऽऽहुः- भर्त्रेति। भर्त्रा यदुपतिना पित्रो र्नन्दयशोदयोः प्रियं कर्तुमिच्छया अत्र भवान्प्रेषितः ॥ ४ ॥

कुतोऽयं निश्चय इत्यत्राऽऽह - अन्यथेति। अन्यथा पित्रोः प्रियचिकीर्षामन्तरेणेत्यर्थः । तस्याऽवाप्तसमस्त कामस्येति भावः। गोव्रजे निहीने इति भावः । स्मरणीयं स्मर्तुं योग्यं वस्तु न चक्ष्महे न पश्यामः । प्रियचिकीर्षयेत्यत्र हेतुः स्नेहानुबन्ध इति। बन्धूनां पित्रादीनां सम्बन्धी स्नेहरूपोऽनुबन्धः पाशः मुनेरपि त्यक्तुमशक्यः ॥ ५॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

गोपस्त्रीणां व्यामोहोक्तिभङ्ग्यापि श्रीकृष्णैकभक्तिं निरूपयत्यस्मिन्नध्याये। तत्र गोपीनामुद्धवसन्दर्शनात् हृष्टमनसां तत्त्वप्रश्नप्रकारं वक्तुमाह तं वीक्ष्येति। परिमृष्टकुण्डलं शाणोल्लीढवत् द्योतमानकर्णाभरणम् ॥ १ ॥

अतीव प्रशस्ततमं दर्शनमवलोकनं यस्य स तथा, अयं क इति सामान्यप्रश्नः । कुतो देशादागत इति च विशेषप्रश्नः। अच्युतस्येव वेषभूषणानि यस्य स तथा। वैष्णवलक्षणेन इतरव्यावृत्तोऽसौ कः, वैष्णवेषु किं नामधेय इति ततोऽपि विशेषप्रश्न इति। मिथोऽनुव्रज्य सामान्यतोऽस्मत्प्रेष्ठ इति स्मृत्वा तं परिवव्रुः आवेष्टितवत्य इत्यन्वयः ॥ २ ॥

पुनस्ताभिः किं कृतमत्राऽऽह- तमिति। अनेन सामान्यज्ञानं विशिष्टज्ञानपर्यवसायीति निरणायि। प्रश्रयेणोपचारेण "प्रियं सत्यञ्च सूनृतम्" (हला. को. 1-141) इति च ॥ ३ ॥

पार्षदार्यं पार्षदानां समीपवर्तिनां भृत्यानां श्रेष्ठं तैः पूज्यं वा, अनुव्रतं भगवन्मनोनुकूलव्रतम् ॥ ४ ॥

अन्यथा यशोदानन्दगोपयोः प्रियकरणेच्छामन्तरेण स्मरणीयं स्मरणकारणयोग्यं न चक्ष्महे न पश्यामः । गोव्रजे भुवि गोष्ठे। सुरभिलोकव्यावृत्त्यर्थो गोशब्दः, गवां व्रज स्समूहो यस्मिन् स्थाने तत्तथा। तस्मिन्वा पशुजातियुक्तगोष्ठे वा ॥ ५ ॥

अन्येष्वर्थकृता मैत्री यावदर्थविडम्बना[1]।
पुम्भिः स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः ॥ ६ ॥

निःस्वं त्यजति गणिका अकल्यं[2] नृपतिं प्रजाः
अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥

खगा वीतफलं वृक्षं भुक्त्वा चाऽतिथयो गृहम्[3]।
दग्धं मृगा स्तथाऽरण्यं जारो भुक्त्वा रतां[4] स्त्रियम् ॥ ८ ॥

[5-]श्रीबादरायणिरुवाच[-5]

[6-]इति गोप्यो हि[-6] गोविन्दे[7] [8-]गतवाक्कायमानसाः[-8]।
कृष्णदूते[9] व्रजं याते[10] उद्धवे त्यक्तलौकिकाः[11] ॥ ९ ॥

गायन्त्यः प्रियकर्माणि रुदत्यश्च[12] गतह्रियः।
तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥

भ्रमरगीतादिकथा प्रारम्भघट्टः

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम्।
प्रिय प्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

---

1. G.J. °नम् 2. G.J. M.Ma °ल्पं 3. K.T.W. °हान् 4. M.Ma पर 5- -5 G.J. M.Ma omit; Ml.V श्रीशुक उवाच 6- -6 M.Ma ददर्श गोपीः 7. Ml.V °न्द 8- -8 M.Ma मनोवाग्देहचेष्टितैः 9. M.Ma °तो 10. M.Ma ° प्राप्तः 11. M.Ma ° स्त्यक्त° 12. K.M.Ma.Ml.T.V.W न्त्य°

**श्रीध०** अन्यथा गोव्रजे तस्येत्यत्र हेतुः - **अन्येष्विति**। अर्थकृता कार्यनिमित्ता विडम्बनमनुकरणमात्रं न तु तात्त्विकी मैत्री। पुम्भिरिति। पुम्भिरिति दृष्टान्तः[1] ॥ ६ ॥

अस्यैवा[2]ऽन्यार्थनिदर्शनः[-2] [3]दृष्टान्तप्रपञ्चः निस्स्वमित्यादिना अधीतेति। दत्ता दक्षिणा येन तम्[4] ॥ ७ ॥

पक्षिणो [5]वीतफलं[-5] [6]विगतफलं[-6] वृक्षं, रतां अनुरतां अतृप्तामित्यर्थः ॥ ८ ॥

**इतीति**। त्यक्तलौकिकाः त्यक्तलोकव्यवहाराः ॥ ९ ॥

**गायन्त्य** इति। प्रियस्य कर्माणि गायन्त्यः । तथा तस्य बाल्यकैशोरयोः यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियस्सत्यो रुदन्त्यश्च तमपृच्छन्निति पूर्वक्रिययैव सम्बन्धः ॥ १० ॥

**काचिदिति**। प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत्। यद्वा तस्मिन् [7]अत्युद्धवे प्रियप्रस्थापितदूतमिति[-7] दूतदृष्टिं कृत्वा मधुकरापदेशेन उद्धवमेवाऽ ब्रवीत् इत्यर्थः ॥ ११ ॥

---

1. J.Va °न्तौ 2- -2 MI,V °वान्यार्थदर्शने 3. J.Va omit दृष्टान्त 4. J.Va add याज्यम्। 5- -5 J.Va omit 6- -6 V omits 7- -7 MI V प्रियप्रस्थापिते उद्धवे।

**वीर०** अन्येषु अबन्धुषु[1] तु मैत्री अर्थकृता स्वप्रयोजनप्रयुक्ता, अतस्सा यावदर्थनिबन्धना यावत्प्रयोजनं निबन्धनं कारणं यस्या स्तथाभूतेत्यर्थः। 'यावदर्थं विडम्बना' इति पाठे यावत्प्रयोजनं विडम्ब्यतेऽनुक्रियते तथाभूतेत्यर्थः, न तु सा तात्त्विकमैत्रीति भावः । किं क्वचिदेवं दृष्टमित्यत्राऽऽहुः - पुम्भिरिति। यद्वद्यथा स्त्रीषु पुंश्चलीषु पुम्भिः कृता मैत्री। यथा च सुमनस्सु मधुभरितेषु कुसुमेषु षट्पदैः भृङ्गैः कृता एते उदाहरणे, न तु दृष्टान्तौ ॥ ६ ॥

उदाहरणान्तरमुखेन यावदर्थनिबन्धनत्वमेव स्पष्टयन्त्यः प्राहुः - **निस्स्वमिति** द्वाभ्याम्। निस्स्वं निर्धनं गणिका वेश्याः त्यजन्ति। यावत्स्वमनुवृत्य ततस्तं त्यजन्तीत्यर्थः । एव मुत्तरत्राऽपि। अकल्यं प्रजापालनासमर्थं नृपं, अधीता विद्या यै स्ते, शिष्या इत्यध्याहारः । दत्ता दक्षिणा येन तं, यजमानमृत्विजः त्यजन्ति। वीतानि विगतानि फलानि यस्मात्तं वृक्षं खगाः पक्षिणः तथा दग्धमरण्यं मृगास्त्यजन्ति, तथा जाराः स्त्रियं भुक्त्वा रता मतृप्तामेव त्यजन्ति ॥ ७, ८ ॥

**इतीति**। इत्थं कृष्णस्य दूते उद्धवे व्रजं गते सति गोप्यो गोविन्दं गतानि निविष्टानि वागादीनि तद्व्यापाराश्च यासां ताः, तस्य कृष्णस्य भगवतो यानि कैशोरबाल्ययोः कर्माणि तानि पुनः पुनस्संस्मृत्य गायन्त्यः[2] [3]त्यक्तलज्जाः[-3] रुदन्त्यश्च त्यक्तलौकिकव्यवहारा अपृच्छन्निति पूर्वेण सम्बन्धः ॥ ९, १० ॥

तत्र काचित् गोपी कृष्णस्य सङ्गमं ध्यायन्ती मधुकरं भ्रमरं दृष्ट्वा, तं प्रियेण प्रस्थापितं प्रेषितं दूतं कल्पयित्वा कृष्णेन मां प्रसादयितुं प्रेषितोऽयं दूत इत्यभिमत्येत्यर्थः। इदं वक्ष्यमाण मन्त्रबीजगौ। यद्वा, तस्मिन्भ्रमरे प्रियप्रस्थापितोद्धव दृष्टिं कृत्वा मधुकरापदेशेन उद्धवमेवाऽब्रवीत् इत्यर्थः॥ ११ ॥

---

1. T.W °न्धि° 2. T.W. omit गायन्त्यः 3- -3 T.omits

विज० इतोऽपि स्नेहलक्षणानुग्रहं विनाऽन्यन्नास्तीति भावेनाऽऽह - अन्येष्विति। अन्येषु पितृव्यतिरिक्तेषु बन्धुषु मैत्री स्नेहानुवृत्तिलक्षणा मित्रभावोक्तिः अर्थकृता प्रयोजननिबद्धा इत्यन्वयः। कथमिवेति तत्राऽऽहुः— यावदर्थेति। यद्वत् यथा पुम्भिः स्त्रीषु कृता मैत्री यावदर्थं यावत्प्रयोजनसमाप्तिपर्यन्तं विडम्बनमनुकरणमात्रं यस्यास्सा तथा। यावदर्थं विडम्बयति अनुकरोतीति यावदर्थविडम्बना वा। इममर्थं दृष्टान्तान्तरेण द्रढयति सुमनस्स्विति। षट्पदैः भृङ्गैः ॥ ६ ॥

निस्स्वं वित्तहीनम् । अकल्पं रक्षणादावसमर्थम्। दत्तदक्षिणं यजमानं वा ॥ ७ ॥

वीतफलं फलरहितम् प्रणयकोपातिरेकदर्शनार्थं बहुदृष्टान्तकथनम्। जार उपपतिः ॥ ८ ॥

उत्तरकथाप्रसङ्गः क इति तत्राह ददर्शेति। गोविन्दगतमनआदिभिः त्यक्तलौकिकाः त्यक्ताः लोकाचाराः पुरुषाग्रतः श्लथितवसनादिदृढीकरणादिलक्षणा क्रिया याभि स्ता स्तथा ॥ ९ ॥

गायन्त्यः गायन्तीः , रुदन्त्यः रुदतीः[1] । कैशोरशैशवावस्थायां गतह्रिय इति लोकाचारविरुद्धाचरणं गानादिकम् ॥ १० ॥

तथा च कृष्णसङ्गमध्यानेन मुग्धा काचिन्मधुकरं दृष्ट्वा प्रियेण कृष्णेन प्रस्थापितं प्रेषितं दूतं कल्पयित्वा इदं वक्ष्यमाणमब्रवीदित्यन्वयः ॥ ११ ॥

---

1. Mb रुदन्तीः

गोप्युवाच

मधुप कितवबन्धो मा स्पृशाङ्घ्रिं[1] सपत्न्याः
कुचविलुलितमालाकुङ्कुमश्मश्रुभि[2] र्नः ।
वहतु[3] मधुपति स्तन्मानिनीनां प्रसादं
यदुसदसि विडम्ब्यं[4] यस्य दूतस्त्वमीदृक् ॥ १२ ॥

सकृदधरसुधां स्वां मोहिनीं पाययित्वा
सुमनस इव [5-]सद्यस्तत्यजेऽस्मान्[-5]भवादृक्।
परिचरति कथं [6-]तत्पादपद्मं[-6] नु पद्मा
ह्यपिबत[7] हृतचेता[8] उत्तमश्लोकजल्पैः ॥ १३ ॥

किमिह बहु षडङ्घ्रे गायसि त्वं यदूना-
मधिपति मगृहाणामग्रतो नः पुराणम्।
विजयसखसखीनां गीयतां[9] तत्प्रसङ्गः
क्षपित कुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥

दिवि भुवि च रसायां काः स्त्रिय स्तद्दुरापाः
कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूति र्वयं का
अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥

विसृज शिरसि पादं वेद्म्यहं चाटुकारैः
अनुनय विदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृज दकृतचेता किन्नु सन्धेयमस्मिन् ॥ १६ ॥

1 MMa °शास्मान् 2 MMa ° भिस्त्वम् 3 KTW यदु° 4 MIV °भ्व 5- -5 M-Ma °धः कस्त्यजेन्मा भ° 6- -6 GJ °त्पादपद्म तु पद्मा, MMa तत्पद्म किञ्जल्कपाद 7 MMa मपि, MIV अपि 8 MMa °चित्ता उ°; MIV °चेता ह्यु° 9 MMa गा° 10 G.J MMa अपि 11. M.Ma उ० 12- -12 MMa अलमनुनयसारै र्या हि दौत्ये मुकुन्दम् 13 MMa °पत्यास 14 M.Ma °मस्य

**श्रीध० मधुपेति।** हे मधुप! कितवस्य धूर्तस्य बन्धो नोऽस्माकमङ्घ्रिं मा स्पृश मा मां नमस्कारेण प्रार्थयेत्यर्थः। तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाऽऽह — सपत्न्याः कुचाभ्यां विलुलितासम्मर्दिता या श्रीकृष्णस्य वनमाला अत एतस्याः कुङ्कुमं येषु तैः श्मश्रुभिः उपलक्षितः, किन्तु तासामेव मानिनीनां प्रसादं मधुपति र्वहतु किमस्मत्प्रसादेन तस्य? यदुसदसि विडम्बं उपहासास्पदम्। कुतः यस्य दूतस्त्वमीदृक् ईदृशः ॥ १२ ॥

ननु किमित्येवं तमवजानीथ? किं वस्तेनाऽपकृतम्? अत आह - **सकृदिति।** भवान्दृक् त्वादृशो दुर्मनाः सुमनसः कुसुमानि यथा त्यजति तद्वत् तत्यजे त्यक्तवान् अहो बत! अकृतज्ञस्य तस्य पादपद्मं श्रीः कथं सेवते? विदितं मयेत्याह — अपीति। बतेति खेदे। उत्तमश्लोकस्य जल्पैः मिथ्याकथाभिः प्रायो हृतचेताः । वयन्तु न लक्ष्मीवदविचक्षणा इति भावः ॥ १३ ॥

झङ्कारान् बहुधा कुर्वन्तं अस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाऽऽह - **किमिति।** पुराणं पुरातनं बहुशोऽनुभूतं विजयसखस्य कृष्णस्य साम्प्रतं या स्सख्यः तासा मग्रतः तत्प्रसङ्गो गीयताम् इष्टाः कृष्णस्य प्रियाः तेन पूजिता इति वा। तेनालङ्गीतेन, अनेन क्षपिता कुचरुक् यासां ताः तवेष्टमपेक्षितं दास्यन्तीति ॥ १४ ॥

भो मातः, मैवं वोचः त्वामनुस्मृत्याऽनुस्मृत्य अनङ्गविक्लवस्त्वां प्रसादयितुं मा मादिष्टवा नित्यत आह - **दिवीति।** दिवि भुवि रसातले च याः स्त्रियः स्युः ताः का नाम दुरापाः, न काश्चन। तदिदमव्ययं तस्येत्यर्थः । कपटेन रुचिरेण हासेन भ्रूविजृम्भो यस्य तस्य, हे कपटेति वा। किञ्च यस्य चरणरजः श्रीः सेवते, तत्र वयं काः ? अपि च यद्यप्येवं तथाऽपि कृपणपक्षे कृपणानुकम्पिनि पुरुषे उत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥ १५ ॥

पादमूले प्रविशन्तं क्षमापयिष्यन्तमिव मत्वाऽऽह - **विसृजेति**। शिरसि न्यस्तं पादं विसृज। तथाप्यमुञ्चन्तमाह - **वेद्मीति**। मुकुन्दादभ्येत्य ततश्शिक्षित्वेत्यर्थः। दौत्यै दूतकर्मभिः चाटुकारैः प्रियोक्तिरचनाभिः अनुनयविदुषः प्रार्थनाचतुरस्य ते तव[5] सर्वमहं वेद्मि। मुकुन्दवत् त्वमप्यविश्वसनीय इति भावः । ननु तेन ते किमपराद्धं तत्राऽऽह- स्वकृत इति। स्वकृते तदर्थमेव विसृष्टाः अपत्यपत्यन्यलोकाः अपत्यानि पतयश्चेतीहलोकः अन्यलोको धर्मसाध्यश्च याभिस्ताः, नः अकृतचेताः असंयतचित्तः यो व्यसृजत् अतः अस्मिन् किन्नु सन्धातव्यमिति ॥ १६ ॥

---

1- -1 J.Va omit 2. J.Va अविश्वस्य 3. V omits तस्य 4. V. omits भावः 5 MI.V. omit तव

**वीर०** [1-]तदेवाऽऽह दशभिः[-1] **मधुपेति**। हे मधुप, भ्रमर! कितवस्य धूर्तस्य बन्धो! नोऽस्माकमङ्घ्रिं चरणं मा स्पृश। मा मां नमस्कुरु मा प्रार्थयस्वेत्यर्थः । तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणा सासूयं प्राह। सपत्न्याः कुचाभ्यां विलुलिता सम्मर्दिता या माला अत एव च तस्याः कुङ्कुमं येषु तैश्श्मश्रुभिः उपलक्षितः त्वं मा स्पृशेति सम्बन्धः। किन्तु, यदुपतिः। मधुपतिरिति पाठे मधूनां यादवविशेषाणां पतिः। तासामस्मत्सपत्नीनां मानिनीनां प्रसादं वहतु प्रसादपात्रं भवतु। न वयं प्रसादनीया इत्यर्थः। कुत इत्यत आह- यद्यस्मात्, 'उ' इत्यवधारणे। विडम्ब्यं प्रणयित्वमिति शेषः। यस्माद्यत्प्रणयित्वं सदसि विडम्ब्यम् अपहास्यं, कृष्णस्य प्रणयित्वं सभायामधिक्षेप्यमित्यर्थः। यस्माच्च यस्य भगवतो भुक्तपूर्वयोषित्त्यागिनः ईदृग्भुक्तपूर्वपुष्पत्यागशीलो दूतस्त्वमागत इत्यर्थः ॥ १२ ॥

ननु किमित्येवमवजानीथ, किं वस्तेनाऽपकृतमित्यत्राऽऽह - **सकृदिति**। मोहिनीं तापत्रयविस्मारिणीं स्वां स्वासाधारणीं अधरस्य सुधां सकृत्पाययित्वा अस्मान् तत्यजे त्यक्तवान्। यथा त्वं सुमनसः पुष्पाणि पीतमधूनि त्यजसि, तद्वत्। अतस्स भवादृक्। त्वमीदृगित्युक्तम्। अत्र तु स भवादृक् इति। अयं भावः- त्वं तादृशः स तु भवादृशः, अहो युवयोरेव स्वामिभृत्यभावो विधात्रा निर्मित इति। अहो बताऽकृतज्ञस्य पादपद्मं कथं श्री स्सेवते, विदितम्मयेत्याह **अपीति**। उत्तमश्लोकस्य जल्पैः मिथ्याकथाभिः हृतं चेतो यस्याः तथाभूता तत्पादपद्मं परिचरति। बतेति खेदे। वयं तु न लक्ष्मीवदविचक्षणा इति भावः ॥ १३ ॥

झङ्कारान्बहुधा कुर्वाणं तमस्मत्प्रसादलाभाय श्रीकृष्णं गायतीति मत्वाऽऽह - **किमिहेति**। हे षडङ्घ्रे! इह अगृहाणां वनचारिणीनां नोऽस्माकमग्रतः पुरतः पुराणं बहुशोऽनुभूतं यदुपतिं किं किमर्थं गायसि न तेन[2] तव काचिदिष्टसिद्धिरिति भावः, किन्तु विजयसखस्य श्रीकृष्णस्य सखीनां पौरस्त्रीणाम् अग्रतः तस्य विजयसखस्य प्रसङ्गो गीयताम्, एवञ्चेत्तस्ये- ष्टास्ताः तवेष्टं कल्पयन्ति, अपेक्षितं दास्यन्ति। तत्र हेतुं वदन्ती ता विशिनष्टि। क्षपिता विजयसखालिङ्गनेन निरस्ता कुचरुग्यासां ताः॥ १४ ॥

ननु यदि पौरस्त्रियः तद्वशङ्गताः तदालिङ्गनक्षपितकुचरुजो भवेयुस्तदा मदिष्टं कल्पयेयुः, तस्य ता एव दुष्प्रापा इत्यत आह - **दिवीति**। दिवि भुवि रसायां पाताले च याः स्त्रियः स्युः, तासां मध्ये काः स्त्रियः। तदिति पृथक्पदमव्ययम्। तस्य कृष्णस्य दुरापाः दुष्प्रापाः। सर्वा अपि स्त्रियः सुलभा एवेत्यर्थः। तत्र हेतुं ब्रुवती विशिनष्टि। कपटो रुचिरस्सुन्दरश्च हासो भ्रूविक्षेपश्च यस्य तस्य अत एव यस्य भगवतश्चरणरेणुं भुतिलक्ष्मीरप्युपास्ते। कपटरुचिरहासभ्रूविजृम्भाभ्यां तद्वशगा तच्चरणरजस्सेवत इत्यर्थः, वयन्तु विचक्षणाः ताभ्यां न तद्वशगा इति भावः, तदाह वयं का हीति। वयं तद्वशगानां न काश्चिद्धीत्यर्थः। किञ्च कृपणपक्षे कृपणानां दीनानां जनानां पक्षे कोट्यामेव ह्युत्तमश्लोकशब्दः उत्तमश्लोकप्रसङ्ग गोचरशब्दो गेय इति शेषः। नत्वदीनपक्षेऽस्मत्समुदाये इति भावः ॥ १५ ॥

एवं भ्रमणशीलं भ्रमरं स्वपादमूले चरन्तमात्मानं प्रसादयितुमिवाऽऽलक्ष्य तं प्रत्युक्तम्। अथ स्वशिरसि भ्राम्यन्तं तं श्रोत्रान्ति[3] उपांशु प्रियोक्तीरभिधातुं चरन्तमिवाऽऽलक्ष्याऽऽह - **विसृजेति**। शिरसि पादं न्यस्तमिति शेषः। विसृज पादेन मच्छिरो मा स्पृशेत्यर्थः। तथाप्यमुञ्चन्तमाह — वेद्मीति। मुकुन्दादभ्येत्य ततश्शिक्षित्वेत्यर्थः। दौत्यैः दूतकर्मभिः चाटुकारैः प्रियवचनैश्च अलम्, अनुनयविदुषः प्रार्थनाचतुरस्य ते वेद्मि सर्वं विवक्षितं वेद्मीत्यर्थः। मुकुन्दवत्त्वमपि न विश्वसनीय इति भावः। ननु तेन किमपराद्धं तत्राऽऽह स्वकृत इति। स्वकृते तदर्थमेव विसृष्टानि अपत्यानि पतयेऽन्ये लोका धर्मसाध्या याभिस्ताः अस्मान्व्यसृजत् कस्ततोऽन्योऽपराध इति भावः। अतोऽसावकृतचेताः अकृतज्ञः, कृतघ्न इति यावत्। अतोऽस्मिन् सन्धेयं सन्धिना साध्यं किमस्तीत्यर्थः। नहि कृतघ्नेन सन्धिरुचितः। न वा कृतोऽपीष्टसाधनमिति भावः ॥ १६ ॥

---

1- -1 T.W omit 2. K अनेन 3. K ° न्ते

**विज०** हे मधुप! सपत्न्याः मधुरायां स्थितायाः समानभार्यायाः अधरमधुपानलोलोद्भवायाः तस्याः आलिङ्गनकाले दृढपीडितकुचाभ्यां विलुलितायां इतस्ततो विक्षिप्तायां मालायामनुषक्त कुचकुङ्कुमेन रूषितश्मश्रुभिः अङ्कितस्त्वमस्मान् मा स्पृश, प्रणयकोपात् कितवबन्धो! इति सम्बोधयति। कितवस्य नवनीतादि परद्रव्यचोरस्य कृष्णस्य बन्धो न केवलं त्वमेव मा स्पृश किन्तु स कितवो न स्पृशत्विति भावेन वक्ति वहत्विति। स मधुपतिः श्रीकृष्णः तस्यां मधुरायां विद्यमानानां मानिनीनां मानधराणां स्त्रीणां प्रसादं प्रणयकोपशान्तिलक्षणमनुग्रहं वहतु। नतमूर्ध्नेति शेषः। कीदृशम्? यदुसदसि विडम्ब्य मनुकरणयोग्यं सोत्प्रासपूर्वं वक्तव्यं "सोत्प्रास स्समनाक्स्मितम्" (अम. को. 1-216) इति। स्वकैतवं परस्मिन्नपि सङ्क्रामयितुं पटुतम इति भावेनाऽऽह यस्येति। यस्य कृष्णस्य दूतस्त्वमपीदृग्धूर्त इत्यर्थः। हे भ्रमर कितवबन्धो! उन्मत्तपुष्पबन्धो! सपत्न्या भृङ्ग्या कुचस्पर्शनेन विलुलितमालायाः उद्बुद्धकाम आ समन्तात्कुङ्कुमपुष्परसमिश्रमुखरोमभिरस्मान् मा स्पृश। ईदृक्त्वं यस्य वसन्तस्य दूतस्त्वं, मधुश्चाऽयं पतिश्चेति मधुपतिः वसन्तनामा परिवृढः यत्सदसि पुष्पसमूहे विडम्ब्यं स्थिरीकर्तव्य मेतन्मानिनीनां भृङ्गीणां प्रसादं प्रसन्नभावं वहतु करोतु। कृष्णवद्वैलक्षण्यं न करोत्विति वा। "उन्मत्तः कितवो धूर्तः" (अम.को 2-123) इत्यमरः॥ १२ ॥

कृष्णस्य कितवत्वं कथमापाद्यते इत्यत एवमिति व्यनक्ति **सकृदिति**। भवादृक् भवानिव पूज्य इव स्थितः कः पुरुषः मां त्यजेत्, न त्यजति। मत्त्यागे हत्यादोषो भवति "ब्राह्मणं स्वयमाहूय याचमान मकिञ्चनम्। पश्चान्नास्तीति

यो ब्रूयात्तमाहुर्ब्रह्मघातकम्'' इति स्मृतिर्वदतीति भावेन कथितः। स्वामधरसुधां अधरोष्ठामृतं पाययित्वेति निषेधवचनाभावादुक्तदोषः कथं स्यादित्याशङ्क्य सकृत्पानेनाऽस्य बहुतृष्णाजननहेतुत्वात्ततोऽत्यधिक इवेति भावेनोक्तं सकृदिति। तृष्णाजनकत्वञ्च कथमित्यत उक्तं मोहनीमिति। बुद्धिमोहकरीम्। मोहिनीमिति पाठे मोहकत्वशक्तिरस्यास्तीत्यर्थः। अत्र निदर्शनमाह सुमनस इति। यथा सुमनसः पुष्पस्य गन्धमाघ्राय पुनस्तदानीमेव तत्त्यागोऽद्दष्टचर स्तथेति। तस्य त्वत्तृष्णा नास्ति चेत्तवाऽपि मा भूदिति मा शङ्कीति भावगर्भमाह-परिचरतीति। अत्र लक्ष्मीपदममरश्रीपदञ्चाध्याहृत्य व्याख्येयम्। लक्ष्मीः मधुराङ्गना वा तस्य कृष्णस्य पद्मकिञ्जल्कवत् कोमलं पदं कथं केन प्रकारेण परिचरति शुश्रूषते इति शङ्कित्वा हेतुमाह अपीति। सापि उत्तमश्लोकजल्पैः उत्तमश्लोकस्य हरेः जल्पैः मधुरवचनविशेषैः हृतचित्तामुग्धचित्तत्वात् तृष्णया परिचरतीत्येवं निश्चेयम्। बत हर्षे। चित्ता उत्तमेति सन्ध्यकरणेन प्रियत्वातिरेकदर्शनार्थमेवं कथनं, न तु दोषापादकत्वेन निर्दोषत्वात्तस्य[1] सर्ववैलक्षण्यप्रदर्शनार्थञ्चेति ज्ञाप्यते इति[2]। सुमनस इव सद्य इत्यनेन शरीरदौर्गन्ध्यं कितवपाण्डित्यं प्रतीपदर्शित्वं प्रवयस्त्वञ्चेति त्यागनिमित्तानि सन्तीति सूचयति। सुमनस इव पुष्पस्य सदृशी। यथा पुष्पं सौरभ्येण घ्राणेन्द्रियतर्पकत्वेन च सेव्यं स्यात्। तथाहि सद्यः सद्यस्का[3] यथा प्रत्यग्रवयसि वर्तमाना तरुणी तरुणैः परिहर्तुं न शक्या तथेति। किञ्च सुमनसः मालत्या लतायाः ननु त्वं यथा मम मध्ये मुष्टिग्राह्यत्वमनेनाऽऽलिङ्गने सुखोद्रेकं लक्षयति। यथा सुमनसो देवाः स्वसेवकं न त्यजन्ति तथा मामपि, यथा बुधाः कामकलाज्ञास्तरुणीं न मुञ्चन्तीति तथा वा। अतो भवादृगेव श्रीकृष्ण एव नृशंसत्वेन त्यक्तवानिति वा। ''सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्'' (वैज. को 7-5-90) इति यादवः। इतरत्समम्। परिहरतीति केचित्पठन्ति॥ १३ ॥

स्वपुरतो वर्ण्यमानया प्रियवार्तया उद्बुद्धमदनकलिका पुनरपि श्रोतुकामा असहमानेव अधिक्षिप्तं कोपनार्थमधिकं वक्तीति कृत्वा तमुद्धवमाक्षिपती वक्ति- **किमिहेति**। षट्सु दर्शनेषु सन्ध्यादिषु च अङ्घ्रिवक्रगतिर्यस्य स तथा। षट्सु विषयेषु भगवद्भक्तिपरिपन्थिषु अङ्घ्रिः पादो यस्य स तथेति वा। तस्य सम्बुद्धिः हे षडङ्घ्रे, उद्धव 'अघिरघिलघि गत्यर्थाः।' इति धातुः। त्वम् अगृहाणां गृहाश्रमरहितानां, वनचारिणामित्यर्थः। नोऽस्माकमिहाग्रतः पुराणं पुरे वर्तमानं यदूनामधिपतिं किं बहुकर्णबिलपूरं गायसि, न शब्दयेत्यन्वयः। कै गै शब्दे इति धातुः। तस्य गृहान्तर्वर्तित्वेन वनमध्यवासिपुरतो गायनमनन्वितमित्यर्थः। तर्हीदं कस्याऽग्रतो युक्तमिति तत्राऽऽह - विजयेति। विजयोऽर्जुनस्तस्य सखा कृष्णः तस्य सखीनां मधुराङ्गनानामग्रतः तस्य कृष्णस्य प्रसङ्गः गायतां गीयतां, त्वयेति शेषः। तत्र गातुस्तव फलसिद्धिरप्यस्तीत्याह क्षपितेति। तत्प्रसङ्गेन क्षपिता निरस्ता कुचानां रुक् सन्तापलक्षणा यासां तास्तथा। इष्टाः कृष्णप्रियाः मधुराङ्गनाः उद्गात्रे ते तुभ्यम् इष्टमभीष्टं धनादिकं कल्पयन्तीत्यन्वयः। ''तस्मात्तेयं धनसमयः'' इति श्रुतेः। तत्प्रसङ्गमिति पाठे भवान्गायतामित्यात्मनेपदे लोट्। तत्प्रसङ्गक्षपितेति पाठे, या यदुपतिविषया गीतिस्तां त्वं गायेति परस्मैपदे लोट्। तस्य प्रसङ्गेन प्रकृष्टालिङ्गनलक्षणेनेति विजयसखसखीनामग्रतो यदुपतिं गायतां पुंसां ते कृष्णेष्टाः स्त्रीजना अभीष्टं कल्पयन्तीति वा॥ १४ ॥

ननु प्रगल्भा चेत्त्वमेव प्रलपनं विना मत्तकाशिन्या लज्जाभावात् कृष्ण आगमिष्यतीति शङ्का मा भूदिति आह - **दिवीति**। स्वर्गादिषु विद्यमाना देवस्त्रियः तस्य कृष्णस्य दुरापाः दुष्प्रापाः स्युः, किन्तु सुप्रापा एव। कर्षणमन्यमाह - कपटेति। याः स्त्रियः कपटश्च रुचिरश्च हासयुक्तो यो भ्रूविजृम्भः भ्रूभङ्गस्तस्य विषया लक्ष्मीभूताः स्युः। अध्यात्मकमानन्दं

पटयति गमयतीति कपटां रुचिं स्पृहां राति ददातीति कपटरुचिरः, हे कपटेति वा। तत्र हेतुमाह - चरणेति। भूतिर्लक्ष्मीर्यस्य हरेश्चरणरज उपास्ते, तदनुग्रहार्थमिति शेषः। ननु भवत्योऽपि तथा कुर्वन्त्वित्यत्राह वयमिति। तत्र वयं वनचारिण्यः काः स्याम। अपि च पुनरपि शृणु कृपणस्य किम्पचानस्य अस्मद्विधस्य जनस्य पक्षे अन्तिके उत्तमश्लोकशब्द एव कर्णविषयो न तु वाच्योऽर्थश्चक्षुर्विषय इत्यर्थः। यद्वा, उत्तमश्लोकशब्दः कृपणपक्षे दीनपक्षपाती श्रुतः सोऽप्यस्मद्विषयो नाऽभूदित्यर्थः॥ १५ ॥

प्रणतकृष्णशिरःस्थितस्वपादस्मरणातिरेकविवशा स्वपादमुद्धवशिरसि स्थितं मत्वा वक्ति **विसृजेति**। तव शिरसि स्थितं मम पादं विसृज मुञ्च। अहं त्वां वेद्मि। अनुनयसारैः सान्त्वविषयैः चाटुकारैः आपातरमणीयैः प्रियवचनैः अलं पर्याप्तम्। किञ्च, दौत्ये स्थितः त्वं मुकुन्दं च याहि। किमित्येवं कोपगर्भवचनं वदसीति तत्राऽऽह -स्वकृत इति। स्वकृते स्वनिमित्तं कृष्णार्थमित्यर्थः। विसृष्टापत्याप्तलोकाः त्यक्तपुत्रभर्तृबन्धुजनाः अस्मानिह वने व्यसृजदिति यदतोऽकृतचेताः अकृतज्ञः कृतघ्न इत्यर्थः। दूतोऽहं त्वां सन्दधामीति तत्राऽऽह किन्न्विति। अस्य कृष्णस्य अनुसन्धेयं किन्नु। न किमपीत्यन्वयः। अनुनयसारैः श्रेष्ठैर्वा "उमाप्रणामसङ्क्रान्तचरणालक्तकश्शशी, सन्ध्यारुण इवाऽऽभाति यस्य पायात्स वश्शिवः " इति वचनात् ईश्वरोप्यज्ञ जनमोहनार्थमेवंविधलीलो जयतीति॥ १६ ॥

---

1 Ma,Mb °षकत्वा० 2 Ma,Mb add न (?) 3 Ma Mb add तथा

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा[1] स्त्रिय मकृत विरूपां स्त्रीजितः कामयानाम्।
बलिमपि [2-]बलिमत्त्वाऽवेष्टयद् ध्वाङ्क्षवद्यः[-2] तदलमसितसख्यै र्दुस्त्यज स्तत्कथार्थः॥ १७ ॥

यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्माविनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इव[3] विहङ्गा भिक्षुचर्यां[4] चरन्ति॥ १८ ॥

वयमृतमिव[5] जिह्मव्याहृतं[6] श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशिम[7] सकृदेतत्तन्नखस्पर्शतीव्र [8-]स्मररुज उपमन्त्रि[-8]न्भण्यतामन्यवार्ता॥ १९ ॥

प्रियसख पुनरागाः प्रेयसा [9-]प्रेषितः किं[-9] वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग! ।
नयसि कथमिहाऽस्मान्दुस्त्यजद्वन्द्वपार्श्वं[10] सततमुरसि सौम्य श्रीवधू[11]स्साकमास्ते॥ २० ॥

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान्[12] सौम्य बन्धूंश्च गोपान्।
क्वचिदपि स कथा[13] नः किङ्करीणां गृणीते[14] भुजमगरु[15]सुगन्धिं[16] मूर्ध्न्यधास्यत्कदा नु॥ २१ ॥

---

1 MMa यः किरातः 2- -2 MMa बिलवास वेदविद्धर्गवन्धः 3 G.J M Ma इह 4 M.Ma भैक्ष 5 K.T W °ति 6. MMa °ह्म 7 G.J. °शुस० 8- -8 M.Ma स्तनरुजपरमार्तिं भण्यतामस्य 9- -9 J. प्रेक्षितः किं; M.Ma प्रेषितस्त्वं 10 M.Ma °जं बन्धु 11 G.J. °र्धू० 12 M.Ma ०हं 13 K.T W कथां; M Ma कथ 14 M Ma गृहीतो 15 G J K.M °गु० 16 G.J M.Ma °न्धं

**श्रीध०** किञ्च कृष्णस्य पूर्वाणि कर्माणि अनुसन्दधाना बिभेम्यहमस्मादित्याह- **मृगयुरिति**। मृगयुर्लुब्धक इव यः कपीन्द्रं वालिनं विव्यधे अविध्यत्। लुब्धधर्मा क्रौर्यधर्मवान्। अलुब्धधर्मेति वा। लुब्धको हि तन्मांसमत्तुकामो विध्यति, अयन्तु न तथा; अतो वृथाकठिन इत्यर्थः। तथा स्त्रियञ्च शूर्पणखां स्त्रीजितः सीतापरतन्त्रः, काम एव यानं प्राप्तिसाधनं यस्या स्तां, विरूपां छिन्नकर्णनासिकामकरोद्दाशरथिरूपेण। तथा बलिमपि तद्दत्तबलिमत्त्वा भक्षयित्वा ध्वाङ्क्षवत् काकवत् अवेष्टयत् बबन्ध वामनरूपेण। 'बलिमपि बलिमत्त्वाऽधोक्षिपद्विष्टपात्'' इति पाठे बलिं पूजां गृहीत्वा विष्टपात्स्वर्गात् अधः अक्षिपदित्यर्थः। तत्तस्मात् असितस्य कृष्णस्य सख्यैरलम्। एवञ्चेत्किमिति तं नित्यं गायथ? तत्राऽऽह दुस्त्यज इति। तस्य कथारूपोऽर्थः इत्यपि च जानीम एवेति॥ १७ ॥

तत्कथापि त्रिवर्गलतामूलोन्मूलिनी, तथाऽपि न त्यक्तुं शक्नुमः; किं कुर्म इत्याह-**यदिति**। यस्यानुचरितमेव लीला। तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूताः निरस्ताः द्वन्द्वधर्माः रागादयो येषां ते, अत एव विनष्टाः असत्तुल्याः दीनं दुःखितं गृहकुटुम्बं विहाय दीनाः भोगहीनाः विहङ्गा इव भिक्षुचर्यां प्राणवृत्तिमात्रं चरन्ति। अतस्त्याज्यः। तथाऽपि त्यक्तुं न शक्नुम इति निन्दापरत्वे [1-]वाचकोऽर्थः[-1]। दुस्त्यजत्वे[2] आर्थिकोऽयमर्थः। विधूतद्वन्द्वधर्मा इत्यन्तः समासः पूर्ववत्। ततस्ते च ते अविनष्टाश्च इति समासः। इतरे पुनः द्वन्द्वधर्माणो विनष्टा एव। सपदि तत्क्षणमेव दीनं तुच्छं गृहसहितं कुटुम्बं विहाय दीना इवाऽकिञ्चनाः। धीरा इति वा पाठः। बहवः विहङ्गाः हंसा इव सारासारविवेक चतुराः भिक्षुचर्यां पारमहंस्यं चरन्ति। तस्मादेवं परमपुरुषार्थरूपत्वात् दुस्त्यज एव तत्कथार्थ इति॥ १८ ॥

ननु किमेवं ब्रूषे? पूर्वं त्वयैव साकं रहसि किमेवं नाऽवोचदित्यत आह-**वयमिति**। हे उपमन्त्रिन्! दूत! आस्तामियं वार्ता, यतः कुलिकस्य मृगयोः रुतं गीतं अज्ञा यथा ऋतं सत्यमिति श्रद्दधानाः कृष्णस्य हरिणस्य वध्वः भार्याः हरिण्यः शरैः क्षतास्सत्यो ददृशुः। एवं जिह्मस्य कुटिलस्य तस्य व्याहृतं ऋतमिव श्रद्दधानाः स्पृहयन्त्यो वयं सकृदेत द्ददृशिम। किं तत्? तस्य नखैः स्पर्शः तेन तीव्रः स्मरः तेन रुजः पीडाः। तस्मादन्या वार्ता भण्यतां कथ्यतामिति॥ १९॥

परावृत्य गत्वा पुनरागतं प्रत्याह - **प्रियसखेति**। हे प्रियस्य सखे! प्रेयसा श्रीकृष्णेन पुनः प्रेषितः किं त्वमागतोऽसि? अङ्ग! हे दूत! मे माननीयः पूज्योऽसि। अतो भवान् किमनुरुन्धे प्राप्तुमिच्छतीत्यर्थः। तद्वरय वृणीष्व। सम्मानितं प्रत्याह- नयसीति। इह सतीः अस्मान् दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य पार्श्वं समीपं कथं नयसि नेष्यसि। तथाहि - हे सौम्य! श्रीर्नाम वधूः साकं सहैव सततमास्ते तत्राप्युरसि वक्षस्येव॥ २० ॥

तेन सम्मन्त्रिता सती ब्रूते - **अपीति**। बत हर्षे। हे सौम्य, [3]गुरुकुलादागत्य आर्यपुत्रः कृष्णः अधुना किं मधुपुर्यां वर्तते? कदाचिदपि नोऽस्माकं वार्ताः किं ब्रूते? अगगरुवत्सुगन्धिं भुजं नो मूर्ध्नि कदा नु धास्यतीति॥ २१ ॥

---

1- -1 J,Va अयं तावत् श्रौतोऽर्थः। 2 J,Va add अपि 3 J, Va अगु०

**वीर०** न केवलमयमकृतज्ञ एव। अपि तु क्रौर्यकाठिन्यादियुक्तश्चेत्याह - **मृगयुरिवेति।** मृगयुरिव व्याध इव वञ्चित्वा कपीन्द्रं निरपराधं वालिनं विव्यधे जघान। अतोऽयं लुब्धधर्मा लुब्धस्य ये धर्माः क्रौर्यकाठिन्यादयः, तद्युक्त इत्यर्थः। यद्वा अलुब्धधर्मेति च्छेदः, मृगयुरिवेत्यनेनैव तत्सादृश्यलाभात्। अलुब्धधर्मा लुब्धेऽप्यसम्भाविता ये धर्मा स्तद्युक्त इत्यर्थः। लुब्धको हि मांसमत्तुं मृगान् हन्ति, अयं तु न तथेति, वृथा काठिन्यादिमानिति भावः। तथा स्त्रीजितः स्त्रिया वैदेह्या जितः तद्वशं गत इत्यर्थः। कामयानां काम एव यानं प्राप्तिसाधनं यस्या स्तां, कामेन याति स्वेच्छया चरतीति तथा, तामिति वा, नन्द्यादित्वात्कर्तरि ल्युः। स्त्रियं शूर्पणखां विरूपां अकृत च्छिन्नकर्ण[1]नासिकामकरोदित्यर्थः। एवं दाशरथिरामरूपेण कृतम्[2]। तथा वामनरूपेण यो ध्वाङ्क्षवत् वायसवत् बलिं पूजां वैरोचनिसमर्पितां, अत्त्वा भुक्त्वा परिगृह्येत्यर्थः बलिं वैरोचनिम् अवेष्टयत्, पाशैरिति शेषः। बबन्धेत्यर्थः। तत् तस्मात् असितस्य श्रीकृष्णस्य सख्यै रलम्। असितेत्यनेन नैल्यं दुष्टं हीति पामरन्यायोऽभिप्रेतः एवञ्चेन्नित्यं किं गायथ? इत्यत्राऽऽह दुस्त्यज इति। तस्यासितस्य कथारूपोऽर्थो दुस्त्यजः त्यक्तुमशक्यः॥ १७॥

न केवलमस्माकमेव तत्कथार्थो दुस्त्यजः, किन्त्वन्येषामपि। नाऽपि वय मेव तदर्थे विसृष्टापत्यादयः, अपि त्वन्येऽपीति स्तुतिगर्भं निन्दन्त्याह यदनुचरितेति। इह लोके बहवो जनाः यस्याऽसितस्यानुचरितमेव लीला, तदेव कर्णयोः पीयूषममृतं, तस्य विप्रुट् कणिका तस्यास्सकृददनं सेवनं तेन विधूता निरस्ता द्वन्द्वधर्मा रागद्वेषादयो येषां ते, अत एव विनष्टाः असत्तुल्या अचेतनप्राया इति यावत्। लब्धात्मस्वरूपसत्ताका इति स्तुतिरप्यभिप्रेता, समस्तत्वे अविनष्टा इति च्छेदात् सपदि तदैव दीनं दुःखितं गृहकुटुम्बं विहाय दीना विहङ्गा इव भिक्षुचर्यां चरन्ति सन्न्यासिवत्प्राणधारणमात्रं कुर्वन्ति॥ १८॥

तर्ह्येवं विचक्षणास्तावद्यूयं कथं तद्वशं गता इत्यत्राऽऽह - **वयमिति।** कृष्णस्य हरिणस्य वध्वः हरिण्यः अज्ञाः कुलिकरुतमिव मृगविश्वासकर्तुः व्याधस्य[3] गानरूपशब्दमिव वयं जिह्मस्य कुटिलस्य तस्य व्याहृतं भाषणं ऋतमिति सत्यमिति श्रद्दधानाः तस्य नखस्पर्शैः नखक्षतैः तीव्रा स्मररुक् यासां तथाभूताः सकृदेतत्प्रणयित्वं ददृशिम अद्राक्ष्म। अतो हे उपमन्त्रिन्! दूत! अन्यवार्ता भण्यतां[4] कथ्यतां, तद्वार्तया त्वलमिति भावः॥ १९॥

परावृत्य पुनरागतं प्रत्याह - **प्रियसखेति।** प्रियस्य सखे! पुनः प्रेयसा प्रियतमेन कृष्णेन प्रेषितस्त्वं आगाः किम्, आगतोऽसि किम्? तर्हि अङ्ग! हे भ्रमर! मम त्वं माननीयोऽसि पूज्योऽसि, अतः किं यत्किञ्चिदनुरुन्धे भवान् प्राप्तु मिच्छति, तद्वरय वृणीहि, इह स्थिता इति शेषः। अस्मान्कथं दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य भगवतः पार्श्वं समीपं नयसि नेष्यसि। तथाहि, हे सौम्य! श्रीर्लक्ष्मीर्नाम वधूः साकं सहैव तत्राऽप्युरसि वक्षस्येव सततमास्ते॥ २०॥

अपि बतेति हर्षे। हे सौम्य! आर्यपुत्रः श्रीकृष्णः अधुना मधुपुर्यां आस्ते किम्। पितृभ्यां गेहैश्च सहितान् बन्धून् गोपान् स्मरति किम्? क्वचिदपि कदाचिदपि किङ्करीणां नोऽस्माकं कथां वार्तां गृणीते किम्? कदा नु कदा वा अगरुवत्सुगन्धिं भुजं नो मूर्ध्नि अधास्यत् निधास्यति ॥ २१ ॥

---

1. T.W omit कर्ण 2. T.W. omit कृतम् 3. T.W. omit व्याधस्य 4. K.W. फ०

**विज०** प्रणयकोपातिरेकेण असन्धेयत्वे दोषानुत्पादयति - **मृगयुरिति**। यो रामनामा भूत्वा कपीन्द्रं वालिनं विव्यधे हिंसितवान्। क इव मृगयुर्लुब्धक इव यथा लुब्धकः उपाशये स्थित्वा विध्यति मृगं, तथाऽयमपीत्याक्षेपार्थः। कपेः सुग्रीवस्य ईं श्रियं द्रावितवानिति अपराधं दृष्ट्वेति स्तुत्यर्थः। किञ्च किरातः निषाद इव स्त्रियं विरूपां छिन्ननासिकाकर्णत्वेन सौन्दर्यहीनामकृत। परामृष्टायाः शूर्पणख्या मे पतिर्भवेति विरूपं विपरीतशब्दं श्रुत्वा विरूपामकरोत्, न तु शुद्धस्त्रियमिति निष्कृष्टोऽर्थः। किं नः परमानन्दिनो मुक्ताः रतं मित्रं यस्य स किरातः स्त्रीजितः स्त्रैणः स्त्रीर्जिता पराभूता येन स तथा। कामयानां पतिमिच्छन्तीं काम एव यानं यस्यास्सा तथा स्मरनामरथाधिरूढां दुष्टामित्यर्थः। किञ्च। वामनावतारे महावहपर्वे यज्ञे सबहुमानं बलेः त्रिपदपरिमितं भूम्युपहारमादाय कृतघ्न इवाऽयं बलिनामानं दैत्यं बिलवासं पातालवासिनं अकृत। पूजायां हेतुमाह वेदेति। वेदविदामृषीणां वर्गेण समूहेन वन्द्य इति यत्तस्मात् मुग्धाद्बलेः पूजामवाप्यापि तं बद्ध्वा पातालन्निवासिन मकरोदित्यर्थः। 'बल परिवर्तने' इति धातोः बलिं इन्द्रस्य विद्यमाने त्रैलोक्ये परिवर्तं परकीयं स्वीयवत् वशं कृत्वा चरणलक्षणं चौर्याख्यापराधं दृष्ट्वा दुष्टशिक्षणं कृतवानिति आध्यात्मार्थः। बकारवकारयोः अन्योन्यात्मकमनुशासनसिद्धम्। कृष्णः कीदृशः ? वेदविदां वैदिकानां वर्गो वर्जनं येषु ते वेदविद्वर्गवन्द्यादयः तैः वन्द्य इत्यनेन अविद्यमान कथननिपुणत्वेनाऽस्मन्मनोमोहनं कृत्वा हृतवानिति सूचितम्। निन्दास्तुती उपसंहरति तदिति। यतोऽयं कृष्णोऽस्मासु शोकाधानकमकरोत् तस्मादसितेन मलिनेन कृष्णेन सह सख्यैः सहासनशयनादिलक्षणैः अलं वारितम्। असितस्य मेघश्यामस्य नित्यमुक्तस्य वा षिञ्बन्धन इति धातुः। हरेः सख्यशब्देन अर्चनादिकमुपलक्ष्यते। अर्चनादिभिः अलं भूषणम्, आत्मन इति शेषः। निर्विण्णा चेत्किमिति तत्प्रसङ्गं करोषि ? इति तत्राऽऽह दुस्त्यज इति। तस्य कृष्णस्य कथार्थः चरितविषयव्यवहारो दुस्त्यजस्त्यक्तुमशक्यः, पारवश्यादिति शेषः। किञ्च। दुःखं त्यजतीति। यद्वा, तस्य कथानिवृत्तिः अशोभनं ददातीति॥ १७ ॥

गुणा[1] अप्यनेन सूचिता इति प्रकटनाय उत्तरबन्धेन गुणानेव वक्ति **यदनुचरितेति**। यस्य कृष्णस्यानुवचनम् अनुयुगं वा अन्ववतारं वा चरिता लीलैव कर्णपीयूषं कर्णामृतं तस्य विप्रुट् बिन्दुस्तस्य सकृददनेन एकवारश्रवणलक्षणेन विधूताः द्वन्द्वधर्माः रागादिलक्षणा येषां ते, ते चाऽविनष्टा अनुच्छिन्नज्ञानधर्माश्च। अनुच्छित्तिधर्मेति श्रुतेः। विनष्टा इति पृथक्पदं वा। विगतं नष्टं नाशनं येभ्यस्ते तथा। मुक्तावपि स्वरूपभेदधर्मरहिता न भवन्तीत्यर्थः। "स वा अयमात्मा ब्रह्मविज्ञान-मयो मनोमयः" (बृह.उ. 4-4-5) इत्यादिश्रुतेः। सपदि वैराग्यज्ञानानन्तरं दीनं दारिद्र्यापादकं कुटुम्बं विसृज्य दीनाः 'दीङ् क्षये' इति धातोः दीना निर्दोषा इत्यर्थः। बहवो विहङ्गा विहायसा नाम्नाऽऽकाशेन हरिणा गच्छन्तीति विहङ्गाः सन्न्यासिनः, इह जीवराशौ भैक्षचर्यां ज्ञानलक्षणामुद्दिश्य चरन्ति, देहयात्रां कुर्वन्ति। ज्ञानार्थमेव तेषां देहधारणं नोदरपूरणार्थमित्यर्थः। "प्रव्रजन्त्येतद्ध स्म वै ते पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजां करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति" (बृह.उ. 4-4-22) इति श्रुतेः॥ १८ ॥

कृष्णवध्वो वयं यस्य जिह्मं कुटिलं व्याहृतं वचनमृतं सत्यमिति श्रद्दधानाः, यथा अज्ञाः कृष्णमृगवध्वो हरिण्यः कुलिकस्य मृगविश्वासकर्तुः रुतं गीतं नानाप्रकारं श्रद्दधते आस्तिक्यबुद्धिं कुर्वन्ति। तथा तस्यैतस्य सकृत्नखस्पर्शनेन नखस्पर्शोपितापेन उत्पन्नेन तीव्रेण स्तनानां रुजेन क्षतेन जाता या तां परमां अत्युत्कटातिसुखलक्षणां पीडां दद्दशिम अनुबभूविमेति यत्तोऽस्य वार्ता भण्यताम् श्रुतया तयाप्यानन्दमाशास्महे इति, जिह्मं मन्दमल्पमपि व्याहृतमिति यदतः श्रद्दधानाः "ईश्वराणां वचस्सत्यं तथैवाऽऽचरितं क्वचित्" इति वचनात्। "जिह्मं मन्देऽघवक्रयोः" (वैज. को. 6-5-32) इति। स्वध्वनिसादृश्यात् हरिणीनां कुलिकरुतवशात्वं न त्वसत्यं तदित्यध्यात्मं योग्यम्। अन्यवार्तेति केचित्। अन्यविषयं वचनं न त्वेतद्विषयम्। सर्वस्मादन्यस्य विलक्षणस्य भिन्नस्येति वा॥ १९ ॥

आत्मनः कृष्णैकचित्तत्वं दर्शयन्ती ग्रहाविष्टेव वक्ति प्रियेति। हे प्रियसख, प्रियस्य कृष्णस्य सखे, पुनरागाः पश्चाद्व्यावृत्त्याऽगतोऽसि। "पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे" (वैज.को 8-7-24 ) इति। त्वं प्रेयसा कृष्णेन पुनः प्रेषितोऽसि। किमनुरुन्धे कमर्थमस्मत्तः स्वीकर्तुमिच्छति, तं वरय। प्रेष्ठबन्धुत्वात्त्वमस्माकं माननीयोऽसि। आत्मनो नेतुमागत इति भ्रान्तबुद्धिराह -अङ्गेति। अङ्ग! भो उद्धव! इह स्थितानस्मान् दुस्त्यजं बन्धोः कृष्णस्य पार्श्वं समीपं नयसि किम्? दौर्घट्यम् इत्यतः सपत्नीबुद्ध्या न शक्यमित्या। ह- सततमिति। श्रीर्नाम वधूः तस्योरसि सततमास्ते। सततशब्दः आपेक्षिक[1] इति तत्राऽऽह साकमिति। अर्धाङ्गित्वेनाऽऽस्त इति सपत्न्याः लक्ष्म्याः कदाऽपि वियोगाभावात् त्वन्नीतानां तद्दर्शनमपि दुर्लभं, किं पुनः सम्भाषणं, किंतरां तच्चर्वितादानं, कुतस्तमां सुरतलीलानुभव इत्यास्तामयं प्रसङ्ग इति॥ २० ॥

इदञ्चोन्मत्तप्रलपितसममित्याह - अपीति। अधुना आर्यस्य पूज्यस्य वसुदेवस्य पुत्रः श्रीकृष्णः मधुपुर्यां बत लोकस्य मनस्सन्तोषं विधाय आस्ते अपि किम्? किञ्च, स कृष्णः पितुर्नन्दस्य गेहं भार्यां यशोदां तञ्च पितरं स्मरत्यपि? किञ्च बन्धुभूतान् गोपांश्च स्मरति? अपि च स कृष्णः क्वचित्कञ्चन कालमादाय किङ्करीणां नोऽस्माकं गृहीतोऽपि अनुग्रहं करोति किम्? वद कोऽयमनुग्रह इति तत्राह भुजमिति। कदानु अगुरुवत्[2] सुगन्धं भुजमस्मन्मूर्ध्नि अधास्यत् धारयिष्यति। तदपि वक्तव्यमित्यर्थः। यद्यागमिष्यत्तर्ह्यधास्यत्, न सन्देहः। तदागमनं कदा न्विति पृच्छामीति वा॥ २१ ॥

---

1 Ma, adds वा 2 Ma अग°

श्रीशुक उवाच

अथोद्धवो निशम्यैवं[1] कृष्णदर्शनलालसाः।
सान्त्वयन्प्रियसन्देशै र्गोपीरिदमभाषत॥ २२ ॥

[2-]उद्धव उवाच[-2]

अहो यूयं स्म पूर्णार्था भवत्यो[3] लोकपूजिताः।
वासुदेवे भगवति[4] यासामित्यर्पितं[5] मनः॥ २३ ॥

[6] दानव्रततपोहोम जपस्वाध्यायसंयमैः।
श्रेयोभि [7-] र्विधिभिरन्यैश्च [-7] कृष्णे भक्तिर्हि साध्यते॥ २४ ॥

भगवत्युत्तमश्लोके भवतीभिरनुत्तमा।
भक्तिः प्रवर्तिता [8] दिष्ट्या मुनीनामपि दुर्लभा॥ २५ ॥

दिष्ट्या पुत्रान्पतीन्देहान्स्वजना [9-] न्भवनानि च [-9]।
हित्वाऽवृणीत यूयं यत् कृष्णाख्यं पुरुषं परम्॥ २६ ॥

सर्वात्मभावोऽधिकृतो [10] भवतीनामधोक्षजे।
विरहेण महाभागा [11] महान्मेऽनुग्रहः कृतः॥ २७ ॥

श्रूयतां प्रियसन्देशो भवतीनां सुखावहः।
यमादायाऽऽगतो भद्रा [12] अहं [13-] भर्तू रहस्कर [-13]ः॥ २८ ॥

---

1. KTW °शा० 2- -2 MMa omit 3 MMa °न्त्यो 4 MIV म० 5 MMa °ता मतिः 6 MIV ध्यान 7- -7 GJ र्विविधैश्चान्यैः
8 KTW साध्वी 9- -9 MIV °नं च गृहांस्तथा 10 MMa °गतो 11 MMa TW °न्वो 12 MIV ह्यहं 13 MMa भर्तुर्हि किङ्करः

श्रीध० अथेति। श्रीकृष्णदर्शनोत्सुकाः गोपीः प्रियस्य सन्देशैः सान्त्वयन् प्रथमं तावत् इदमभाषत॥ २२॥

तदाह षड्भिः अहो इति। स्म नूनं, यूयं पूर्णार्थाः कृतार्थाः॥ २३॥

ध्यानेति। श्रेयोविधिभिः श्रेयस्साधनैः॥ २४॥

भगवतीति। अनुत्तमा अतिश्रेष्ठा॥ २५॥

दिष्ट्येति। अवृणीत वृतवत्यः॥ २६ ॥

सर्वेति। सर्वात्मभावः एकान्तभक्तिः अधिकृतः प्राप्तः। भगवत्प्रेमदर्शनेन [1] मम [2] च महाननुग्रहः कृत इति॥ २७॥

श्रूयता मिति। भर्तुः कृष्णस्य रहस्करः रहस्य कार्यकर्ता॥ २८ ॥

---

1 J.Va add सुख प्र० 2 J.Va ममैव

**वीर० अथेति**। कृष्णदर्शनोत्सुकाः गोपीर्निशाम्य दृष्ट्वा प्रियप्रेषितैः सन्देशैः सान्त्वयिष्यन् तावदिदं वक्ष्यमाणं अभाषत॥ २२ ॥

तदेवाऽऽह - **अहो** इत्यादिभिष्षड्भिः। नूनं यूयं पूर्णार्थाः कृतार्थाः भवत्यो यूयं लोकेषु पूजिताः। उभयत्र हेतुं वदंस्ता विशिनष्टि। यासां युष्माकं इतीत्थं भगवति वासुदेवे मनोऽर्पितं निहितम्॥ २३ ॥

कथं तदर्पणमात्रेण पूर्णार्थता पूजितता चेत्यत्राऽऽह- **दानेति**। दानादिभिरन्यैश्च श्रेयस्साधनैः नानाविधैः या भगवति भक्तिः न साध्यते न साधयितुं शक्यते सा भक्तिः अनुत्तमा उत्कृष्टा, मुनीनामपि दुर्लभा युष्माभिः दिष्ट्या सुखेनैव भगवति प्रवर्तिता; दिष्ट्या अयमस्माकं महानानन्द इत्यर्थः। तत्र दानं सत्पात्रे वित्तत्यागः, तपोऽनशनादि, स्वाध्यायो वेदाध्ययनम्, संयम इन्द्रियनिग्रहः। अत्र "नाहं वेदै र्न तपसा" (भगी. 11-53) इत्यादिभगवद्वचनार्थोऽभिप्रेतः। "नाऽन्यः पन्था" (पु.सू. 7) इत्यादि श्रुत्यर्थश्च। पुत्रादीन् त्यक्त्वा यत् यस्मात् यूयं कृष्णाख्यं परमपुरुषं अवृणीत वृतवत्यः। अतः पूर्णार्थाः लोकपूजिताश्चेति सम्बन्धः॥ २४-२६ ॥

भवतीभिः अहमपि कृतार्थीकृत इत्याह- **सर्वात्मभाव** इति। हे महाभागाः! विरहेण हेतुना अधुना अधोक्षजे। भवतीनां कर्तरि षष्ठी। युष्माभिः यस्सर्वात्मभावोऽधिकृतः प्रस्तुतः सर्वात्मना करणत्रयेण भावो भक्तिः सर्वोऽप्यात्मनो मनसः भावोऽभिप्रायविशेषः अधिकृतः प्रस्तुतः प्रकाशित इति वा। एष मे मह्यं महाननुग्रहः कृतः तत्स्मरणेनाऽहमपि कृतार्थीकृत इत्यर्थः॥ २७ ॥

एवं ताः प्रशस्य अथ प्रियसन्देशः श्रूयतामित्याह - **श्रूयतामिति**। हे भद्राः! भवतीनां सुखकरः प्रियस्य सन्देशः श्रूयताम्, सन्देशं विशिनष्टिया भर्तु र्भगवतः रहस्करः रहस्यप्रकाशकः अहं यं सन्देशमादायाऽऽगतः॥ २८ ॥

**विज०** पूर्णार्थाः कृतकृत्याः। इतिशब्दो हेत्वर्थः॥ २२,२३, ॥

शास्त्रतो नियमकरणं व्रतम्, संयम इन्द्रियनिग्रहः, हितसाधनानुष्ठानं श्रेयोविधिः॥ २४ ॥

दुर्लभेति वचनं भक्तेः कर्तव्यत्वपरं, न तु मुनीनां तादृशी भक्तिर्नास्तीति॥ २५ ॥

यूयं कृष्णाख्यं परमपुरुषं अवृणीतेति। यत्तद्दिष्ट्या सदैवाऽनुग्रहः ॥ २६ ॥

भवतीनां सर्वात्मनाऽखण्डस्वामिना हरिणा सहभावो लीला अधिगतः प्राप्त इति यदतो विरहेण महाननुग्रहः कृत इति मन्ये ॥ २७ ॥

इदानीं कृष्णसन्देशं वक्तुमुपक्रमते **श्रूयता** मिति ॥ २८ ॥

श्रीभगवानुवाच

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्।
यथा भूतानि भूतेषु खं वाय्वग्निर्जलं[1] मही॥
तथाऽहं[2] मनःप्राणबुद्धीन्द्रियगुणाश्रयः ॥ २९ ॥

आत्मन्येवाऽऽत्मनाऽऽत्मानं सृजे हन्म्यनुपालये।
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना॥ ३० ॥

आत्मा ज्ञानमयश्शुद्धो व्यतिरिक्तोऽगुणान्वयः।
सुषुप्तिस्वप्नजाग्रद्भिः मायावृत्तिभिरीयते ॥ ३१ ॥

येनेन्द्रियार्थान् ध्यायीत[4] मृषास्वप्नवदुत्थितः।
तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥ ३२ ॥

एतदन्तः समाम्नायो योगस्साङ्ख्यो[5] मनीषिणाम्।
त्याग स्तपो दम स्सत्यं समुद्रान्ता इवाऽऽपगाः ॥ ३३ ॥

---

1. G.J.K.M.Ma MI.V र्जलं 2. K.T.W. तथाह्यहं 3 G.J भूते० ★ This verse is not found in M.Ma editions 4. G.J.MI.V ०येत 5. G.J.M. Ma ०ह्स्यं

**श्रीध०** **भवतीनामिति।** भवतीनां मे मया सह वियोगो नास्ति, कुतः? सर्वात्मना सर्वस्योपादानकारणेन अत एव सर्वेषु मनआदिकार्येषु अहमनुगतत्वेन स्थित इति सदृष्टान्तमाह - यथेति। भूतेषु चराचरेषु महाभूतानि यथा वाय्वग्निः वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः। तथाहञ्चेति मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनाऽनुगत इत्यर्थः ॥ २९ ॥

ननु कारणत्वे सर्वानुगतत्वे च कार्यकारणभेदः स्यात् अत आह - **आत्मन्येवेति।** ननु नित्यसिद्धस्य कुतः सृज्यादिरूपता? अत आह - भूतेन्द्रियगुणात्मना। बुद्धीन्द्रियेति वा पाठः। तद्रूपेणेति। ननु निर्विकारस्य कुतः तद्रूपतेति तत्राऽऽह - आत्ममायानुभावेनेति ॥ ३० ॥

नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसङ्गः, तत्राह - **आत्मेति।** आत्मा तु शुद्धः। कुतः? अगुणान्वयः न गुणेष्वन्वेतीति तथा। तत्कुतः? व्यतिरिक्तः, तदपि कुतः? ज्ञानमयः ज्ञानस्वरूपः । नन्वहं प्रत्यये स्वसंवेद्यमेवाऽऽत्मनो नानावस्थत्वमिति कुत श्शुद्धतेति तत्राऽऽह - सुषुप्तीति। मायाकार्यमनोवृत्तिभि र्विश्वतैजसप्राज्ञरूपेण प्रतीयते न स्वत इत्यर्थः ॥ ३१ ॥

कुतः, मनोनिरोधे तदभावादिति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते - **येनेति।** उत्थितः पुमान्यथा मिथ्याभूतमेव स्वप्नं ध्यायेत्। एवं बाधितानपीन्द्रियार्थान् शब्दादीन् येन मनसा ध्यायेच्चिन्तयेत्। ध्यायंश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप तन्मनः विनिद्रः अनलसस्सन् निरुन्ध्यात् नियच्छेदिति ॥ ३२ ॥

तावता च कृतार्थो भवतीत्याह - **एतदन्त** इति। एष मनोनिरोधः अन्तः समाप्तिः।? फलं यस्य सः, समाम्नायो वेदः स तत्र पर्यवस्यतीत्यर्थः। योगोऽष्टाङ्गः, साङ्ख्यः आत्मानात्मविवेकः, त्यागः सन्न्यासः, तपः स्वधर्मः, दमः इन्द्रियदमनम्। मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टान्तः - समुद्रान्ता आपगा नद्य इवेति ॥ ३३ ॥

**वीर०** स्वतन्त्रात्मभ्रमदेहात्मभ्रमरूप मोहशान्तये चिदचिदीश्वरतत्त्वोपदेशपराणि प्रियसन्देशवचनान्येव सान्त्वनरूपाण्याह- **भवतीनामिति** नवभिः। मे मम सर्वात्मना भावप्रधानो निर्देशः, सर्वेषा मन्तरात्मतया भवतीनां वियोगो मद्विश्लेषो नाऽस्ति। न ह्यात्मानं विहाय शरीरं तिष्ठतीति भावः। सर्वकारणतयाऽपि न वियोग इति दृष्टान्तमुखेनाऽऽह - यथेति। यथा भूतेषु देवमनुष्यादिषु शरीरेषु कार्येषु आकाशादीनि महाभूतानि, वर्तन्त इति शेषः। वाय्वग्निजलमिति समाहारत्वेनैकवचननिर्देशः। यथा महाभूतानां तत्कार्याणाञ्च मिथो वियोगो नाऽस्ति, कारणतया तेषां तेषु समन्वयादित्यर्थः। तथाऽहमपि मनआदीनामाश्रयः आधारः तद्विशिष्ट इति यावत्। कृत्स्नजगदन्तर्भूतचिदचिदात्मकपदार्थेषु कारणतया समन्वितः। अत्र प्राणो जीवः, इन्द्रियाणि श्रोत्रादीनि, गुणाश्शब्दादयस्साश्रयाः। गुणपदेन मुख्यप्राणोऽपि सङ्गृह्यते, वायुपरिणामविशेषरूपत्वात्। अयं भावः - महदादिपृथिव्यन्ताचेतनवर्गशरीरकः कृत्स्नजगद्रूपेण परिणतोऽहम्, अतो न वियोगः, नहि कारणं विहाय कार्यं तिष्ठति। कारणस्यैवोत्तरोत्तरावस्थाविशिष्टस्य कार्यत्वादिति ॥ २९ ॥

सत्यं, कार्यं न कारणाद्वियुज्यते। मनआदिशरीरकत्वरूपविशिष्टवेषेण त्वं कृत्स्नजगदुपादानकारणं, तथाऽपि मनआदीना - मन्यकारणकत्वे तु न तव कृत्स्नजगदुपादानत्वसिद्धिः। तथाऽऽधारोपकरणकर्महेतुस्थितिलयकारणाना मन्यत्वेऽपि चेत्यत आह **आत्मन्येवेति।** आत्मन्येवेत्यनेन आधारान्तरस्य व्यावृत्तिः। आत्मनेत्यनेन उपकरणान्तरस्य, आत्मानमिति सृज्यान्तरस्य, सृजे इत्यनेन निमित्तान्तरस्य, अनुपालये, हन्मि इति पदाभ्यां स्थितिलयकारणान्तरयोः। एवं न केवलं व्यष्टिरूपेणैव सृजामि, अपि तु समष्टिरूपेणापीत्यभिप्रयेण भूतेन्द्रियगुणात्मनेत्युक्तम्। अनेन महदादिपृथिव्यन्तानामपि स्वोपादानकत्वसिद्धिः। आत्ममाया स्वसङ्कल्पः"बहुस्यां प्रजायेय" (तैति. उ. 2-6, छान्दो. उ. 6-2-3) इत्येवंरूपः तस्यानुभावेन प्रभावेन हेतुना। अनेन हेत्वन्तरव्यावृत्तिः, कारणत्वोपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिगुणयुक्तिश्चाभिप्रेता। अत्र " ब्रह्मवनं ब्रह्म स वृक्ष आसीत्"(तैत्ति. ब्रा. 2-8-9-6) "तदाऽऽत्मानं स्वयमकुरुत"(तैत्ति. उ. 2-7) इत्यादि श्रुत्यर्थोऽभिप्रेतः। तत्राऽऽधारत्वनिमित्तत्व स्थितिकारणत्वान्यविशिष्टब्रह्मगतानि, उपादानत्वोपकरणत्वसृज्यत्वव्यष्टिसृष्टिसंहारकरणत्वानि तु चिदचिच्छरीरक ब्रह्मगतानीति विवेकः ॥ ३० ॥

तदेवमब्रह्मात्मकस्वतन्त्रवस्तुत्वभ्रमो निरस्तः। अथ देहात्मभ्रमं निरस्यति - **आत्मेति।** आत्मा जीवः व्यतिरिक्तः देहेन्द्रियमनःप्राणादिभ्य इति शेषः। अत एवाऽगुणान्वयः वस्तुतः प्राकृतसत्त्वादिगुणरहितः। यद्वा, गुणान्वय इति च्छेदः। व्यतिरिक्तोऽपि कर्मनिमित्तो गुणानामन्वयो यस्मिन्निति तथाभूतः। अत एव स्वतः स्वरूपतः शुद्धः निर्मलः। अस्तु, किन्तत्स्वरूपम्?

तत्राऽऽह - ज्ञानमयः "अन्योन्तर आत्मा विज्ञानमयः" (तैत्ति. उ. 2-3) इत्यत्रेव स्वार्थिको मयट्, ज्ञानस्वरूप इत्यर्थः। यद्वा प्राचुर्ये मयट्। न च ज्ञानप्राचुर्यं मज्ञानाल्पत्वमवगमयतीति शङ्क्यम्, तत्प्राचुर्यस्य तदल्पत्वस्यैव व्यावर्तकत्वात्। व्यतिरिक्तस्य कथं न तथा प्रतीतिः। कथं वा देवोऽहं, मनुष्योऽहं, सुप्तोऽहं किल विललाप, सुखमहमस्वाप्स मित्यादिरूपेण प्रतितिः? तत्राऽऽह सुषुप्तीति। मायावृत्तिभिः प्रकृतिपरिणामभूतमनोव्यापारविशेषात्मिकाभिः, जाग्रत्स्वप्नसुषुप्तिभिः देवादिशरीरात्म तादात्म्यादिविषयाभिः देवादिरूपेण प्रतीयते इत्यर्थः। तत्र जाग्रन्मायावृत्तिः बाह्येन्द्रियद्वारा बाह्यविषयगोचरान्तर सुखदुःखादिगोचरा च, न तु व्यतिरिक्तात्मत्वस्वरूपगोचरा।[2] अतो देवोऽहं इच्छामि द्वेष्मि सुख्यहं, दुःख्यहम् इति प्रतीतिः। स्वप्नवृत्तिस्तु तद्दशायां तत्तत्स्वप्नद्रष्टृकर्मानुगुणं तदेककारणताया तत्कालमात्रावस्थायितया च परमपुरुषसृष्टचक्षुरादीन्द्रियद्वारिका अद्वारिका वा तदेकानुभाव्यतत्कालमात्रावस्थायि परमपुरुषसृष्टविषयदेहादिगोचरा, न तु व्यतिरिक्तात्मगोचरेति तदा न तथा प्रतीतिः। सुषुप्तौ तु यद्यपि न मनसोऽपि व्यापारः। अत एव न द्वेवाद्याकारप्रतीतिः। एवञ्च व्यतिरिक्तात्मस्वरूपप्रतीतिरपि सुलभा। तथाप्याऽऽप्रबोध महमित्येव प्रकाशते। न तु देहेन्द्रियादिभ्यो व्यतिरिक्तोऽहमिति। प्रतियोगिग्राहकमनोव्यापाराभावात् प्रतियोगिन एवाऽप्रतीतेः। यद्यपि सुषुप्तावहमिति प्रतीति र्न मायावृत्तिः, तथाऽपि छत्रिन्यायेन मायावृत्तिरित्युक्तम् ॥ ३१ ॥

तदेवं संसृतिहेतुभूतदेहात्मभ्रमादि र्मनःपारवश्यकृत इत्युक्तं भवति। कथं तर्हि तत्पारवश्यनिवृत्तिरित्यपेक्षायां तन्नियमेनैवेत्याह - येनेति। उत्थितः स्वप्नादिति विभक्तिपरिणामेन सन्निहितत्वात्सम्बध्यते। प्रबुद्धः स्वप्नवत् स्वप्नार्थानिव येन मायापरिणामरूपेण मनसा इन्द्रियार्थान् शब्दादिविषयान् मृषा सम्प्रत्यविद्यमानानपि पूर्वानुभूताननुभूतानपि अनुभूत सजातीयान् दुर्लभान् ध्यायीत तन्मनो निरुन्ध्या न्नियच्छेदिति सम्बन्धः। "ध्यायतो विषयान्पुंसस्सङ्गस्तेषूपजायते, सङ्गात्सञ्जायते कामः" (भ; गी 2-62 ) इत्युक्तरीत्या विषयध्यानतत्सङ्गाद्यापादनद्वारा मनसो बन्धकत्वमिति येन्द्रियार्थानित्यनेनोक्तम्। येनेत्युपात्तं मनो विशिनष्टि। येन चेन्द्रियाणि बाह्यानीन्द्रियाणि प्रत्यपद्यत प्राप। कथम्भूतः? विनिद्रः अनलसः निरुन्ध्यात्। यद्वा, तन्मन इन्द्रियाणि चेति शेषः। विनिद्रदेहात्मभ्रमरहितः अन्तर्बाह्येन्द्रियाणि निरुन्ध्यात्। प्रत्यपद्यतेत्यस्य मा मित्यादिः। येन निरुद्धेन मनसा मां यथावज्जानीयादित्यर्थः। यद्वा। तदित्यव्ययम्। तत् ततः तेभ्यो विषयेभ्यो ध्यातेभ्यः इन्द्रियाणि यथेन्द्रियाणि तत्प्रावण्यरहितानि भवेयुः तथा निरुन्ध्यात् इत्यर्थः। अनेन मनसो बाह्येन्द्रियनियम उक्तः। कथम्भूतः? विनिद्रः, पूर्ववदर्थः। अनेन मनोनियमनोपयुक्तं देहात्मभ्रमराहित्यमुक्तम्। एव मन्तरिन्द्रियनियम उक्तः। कथमेतदुभयं लभ्यम्? तत्राऽऽह प्रत्यपद्यत, मामिति पूर्ववच्छेषः। मां प्रत्यपद्यतेत्यर्थः। मद्विषयज्ञानेन तत्सुलभमिति भावः ॥ ३२ ॥

किं मनोनियमनेनेत्यत्राऽऽह - एतदन्त इति। समाम्नायादयः सत्यान्ताः एतदन्ताः मनोनियमनान्ताः। अन्तः फलम्। मनेनियमनफला इत्यर्थः। एतदन्त इत्येकवचनम्, समाम्नायादि प्रत्येकाभिप्रायकम्। नियमिते च मनसि मत्प्राप्तिः सुलभेति भावः। तत्र दृष्टान्तमाह - समुद्रान्ता इवापगा इति। समुद्रपर्यन्तगमनमेव नदीभिः कार्यम्। तत स्तत्प्राप्तिर्यथा सुलभा, तद्विषयान्तरेभ्यो मन आकृष्य मयि नियन्तव्यम्। ततो मत्प्राप्तिरयत्नलभ्येति तात्पर्यम्। यद्वा, प्रत्यपद्यतेतीन्द्रियनियमस्य यथावत्स्वविषयकज्ञानं फलमिति सूचितं, तदेव सदृष्टान्तं विवृणोति - एतदन्त इति। समाम्नाय उपदेशः वेदार्थः ज्ञानानुष्ठाने वा। योगः विवेकादिसाधनसप्तकानुगृहीतः साङ्ख्यप्रत्यगात्मयाथात्म्यावलोकनम्। त्यागो दानं, तपोऽनशनादि, दम इन्द्रियनिग्रहः, सत्यं सत्यवदनम् ॥ ३३ ॥

---

1 T.W. omit नवभिः 2 T.W ०क०

विज० सर्वात्मना सर्वप्रकारेण निरूप्यमाणे सति। एनमर्थं दृष्टान्तेनोपपादयति यथेति। यथा पञ्चभूतानि भूतेषु चराचरशरीरेषु कारणत्वेनानुगतानि तथाऽहम्। कानि तानि भूतानीत्यत आह खमित्यादिना। वाय्वग्निरिति छान्दसः प्रयोगः ॥ २९ ॥

सामान्यत उक्तं विशिनष्टि मन इति। नन्वत्र मुख्यकारणत्वं कस्येति तत्राऽऽह - आत्मना परप्रेरणामन्तरेण आत्मानं देहादि सर्वं सृजे हन्मि संहरामि अनुपालये रक्षामीति। ननु तर्हि भूतव त्त्वं तदभिन्नः किमित्यत उक्तं आत्मनीति ॥ ३० ॥

स्वाधारत्वेनाऽऽततत्वेन आत्मनेत्युक्तं विवृणोति आत्मेति।आत्ममायानुभावेन स्वरूपेच्छानिश्चयेन। निश्चयं विशिनष्टि भूतेति। भूतादीन्व्याप्य वर्तमानेन। अनेन भूतादीना मवान्तरकारणत्वेन न तत्कारणत्वोक्तिविरोधः। भूतेन्द्रियगुणात्मनेत्यनेन जडरूपत्वं परमात्मनः प्राप्तं निवारयति आत्मेति। ज्ञानमयः पूर्णज्ञानः गुणानां सत्त्वादीनामन्वयो यस्य स तथा। न केवलं ज्ञानमेव गुणोऽस्य, किन्त्वन्येऽप्यानन्दादयस्सन्तीत्यतो वोक्तं गुणान्वय इति। आनन्दादिगुणानामन्वयो यस्मिन्स तथा ॥ ३१ ॥

उक्तार्थे किं प्रमाणमिति तत्राऽऽह सुषुमीति। मायया हरेरिच्छया वृत्तिः स्वरूपलाभो यासां तास्तथा। ताभिः स्वापादिकं सकर्तृकं कार्यत्वाद्घटवत् इत्याद्यनुमानं पक्षधर्मताबलेन ईयते ज्ञायत इत्यर्थः ॥ ३२ ॥

उपजीव्यप्रमाणाभावेनाऽनुमानस्य दुर्बलत्वं स्यादिति तत्राऽऽह - एतदन्त इति। समाम्नायः निर्दोषः आगमः एतस्यानुमानार्थस्य अन्तो निर्णयो यस्मात्स तथा। " अन्तोऽस्त्र्यवसिते मृत्यौ"(वैज० को० 6-5-5) इति च। न केवल मनुमानेनाऽयमर्थः सम्पद्यते, वेदादिनाऽपीति भावेन चाऽऽह एतदन्त इति। हरितत्त्वनिर्णायकः एतज्ज्ञानपर्यवसायीत्यर्थः। "वासुदेवपरा वेदा वासुदेवपरा मखाः। वासुदेवपरा योगाः" (भाग. 1-2-28) इत्यादेः। त्यागो दुर्दर्शनाभ्यासवर्जनं, सत्यं सत्यभूतं वाक्यं, अत्र दृष्टान्तमाह- समुद्रान्ता इति ॥ ३३ ॥

**यत्त्वहं भवतीनां वै दूरे [1-]वर्ते[-1] प्रियादृशाम्।**
**मनसस्सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥**

**यथा दूर[2]चरे प्रेष्ठे मन आविश्य वर्तते।**
**स्त्रीणाञ्च न तथा चेतः सन्निकृष्टेऽक्षि[3]गोचरे ॥ ३५ ॥**

**मय्यावेश्य मनः कृत्स्नं विमुक्ताशेष[4]वृत्तयः।**
**अनुस्मरन्त्यो मां नित्य मचिरान्मामु[5]पैष्यथ ॥ ३६॥**

[6]या मया क्रीडता रा[7]त्र्यां वनेऽस्मिन्व्रज आस्थिताः।
[8]अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वी[8]र्यचिन्तया ॥ ३७ ॥

श्रीशुक उवाच

एवं प्रियतमादे[9]शमाकर्ण्य व्रजयोषितः।
[10]ता ऊचुरुद्धवं प्रीता स्तत्सन्देशागतस्मृतीः ॥ ३८ ॥

---

1- -1 G.J.MI V वर्ते प्रियो, M Ma वर्त्यपि यो 2 M Ma ०त०3 J M Ma ०क्ष० 4 G J k M Ma वृत्ति यत् 5 M Ma ०पे० 6 M Ma यन्म० 7 M.Ma रात्रीः 8- -8 M Ma अलब्धावासकल्याणाः आपुर्मा मद्वि° 9 G.J.K.T.W ०दिष्ट० 10 K.T W °तमूचु०

**श्रीध०** ननु किमन्यानिवाऽस्मान् आत्मविद्यया प्रलोभयसि, वयं तु सर्वसुन्दरसर्वगुणगणालङ्कृतेन त्वया विरहं नैव सहाम इति चेदत आह -**यदिति**। दृशा दूरे यद्वर्ते तन्मदनुध्यानार्थं, तच्च ध्यानं मनसः सन्निकर्षार्थमिति ॥ ३४ ॥

एतदुपपादयति [1]त्रिभिः **यथेति** ॥ ३५, ३६ ॥

उपैष्यथेति, माधुर्यमात्रमिति चेदत आह **या** इति। हे कल्याण्यः, स्वभर्तृभिः प्रतिबद्धाः याः वने क्रीडता मया सह अलब्धक्रीडाः ता स्त[2]थैव मा मां आपुः प्रापुः ॥ ३७ ॥

**एवमिति**। तस्य सेन्देशेन आगता स्मृतिः यासां ताः। प्रथमार्थे द्वितीया ॥ ३८ ॥

---

1 J Va त्रयेण 2 J Va ०दै°

**वीर०** यद्यप्युक्तरीत्या त्वद्वियोगो नाऽस्ति। तथापि निरतिशयसुखावहं रूप किं न दर्शयसीत्यत्राह -**यत्त्वति**। हे प्रियाः। अहं भवतीनां दृशां दूरे वर्ते इति यत्, तत्तु मदनुध्यानकाम्यया मदनुध्यानार्थम्। तच्च मनसः सन्निकर्षार्थम् ॥ ३४ ॥

किं चक्षुर्गोचरे त्वयि अनुध्यान मनस्सन्निकर्षश्च न लभ्यते इत्यतो नेत्याह - **यथेति**। प्रेष्ठे प्रियतमे दूरचरे सति तस्मिन्यथा स्त्रीणां मन आविश्य वर्तते, स्थिरतयेति शेषः। तथा तासां चेतः सन्निकृष्टे अक्षिगोचरे च प्रियतमे न वर्तते ॥ ३५ ॥

किं त्वदनुध्यानेन मनस्सन्निकर्षेण च साध्यमित्यत आह-**मयीति**। विमुक्ता अशेषा वृत्तयः व्यापाराः यस्मा-त्तद्यन्मनः तन्मयि कृत्स्नं कार्त्स्न्येन निवेश्य मामेव नित्यमनुस्मरन्त्योऽचिरादेव मामुपैष्यथ प्राप्स्यथ ॥ ३६ ॥

व्यामोहनमात्र मेत दित्यतो निदर्शयति **या** इति। हे कल्याण्यः, याः स्त्रियो व्रजएवाऽऽस्थिताः भर्त्रादि प्रतिबन्धादिति भावः। वने क्रीडता मया न लब्धः रासः क्रीडा याभि स्तथाभूताः, मद्वीर्याणां मच्चेष्टिताना मनुचिन्तया मामेव आपुः खलु ॥ ३७ ॥

**एवमिति।** इत्थं प्रियतमेन भगवता आदिष्टं श्रुत्वा तस्य सन्देशेन आगता स्मृतिर्यासां ताः, व्यत्ययेन द्वितीया। प्रीता **हृष्टाः** उद्धवमूचुः ॥ ३८ ॥

**विज०** "कस्त्यजेन्मां भवादृक्" (भाग० 10-47-13) इति उक्तिपरिहारमिवाऽऽह **यस्त्विति।** योऽहमन्तिके वर्तमानोऽपि भवतीनां दृशां दूरे वर्तीति प्रतीयत इति यत् तन्मदनुध्यानकाम्यया निरन्तरमुपासनेच्छया मनस्सन्निकर्षार्थं कृतमित्यन्वयः ॥ ३४ ॥

निदर्शनेनैतमर्थ मुपपादयति **यथेति।** चशब्दात्पुरुषाणामिति ग्राह्यम्। प्रेष्ठे प्रियतमे पदार्थे, पूर्वानुभूते इति शेषः। अक्षगोचरे इन्द्रियविषये॥ ३५ ॥

लोके प्रियतमस्मरणे फलसन्देहो, न तथा मत्स्मरणं, फल निश्चयादिति भावेनाऽऽह - **मयीति।** यद्विमुक्ता अशेषा वृत्तयो यस्य तत्तथा। तन्मनः मय्यावेश्य नित्यं मामनुस्मरन्त्यो यूयं शीघ्रं मां तथा उपेष्यथेत्यन्वयः ॥ ३६ ॥

अस्मिन्नर्थे स्वानुभूतमर्थं प्रमाणयति **यन्मयेति।** यत् यथा व्रजे आस्थिता अस्मिन्वने अलब्धावासकल्याणाः अप्राप्तगृहसुखाः यूयं मया रात्रीः क्रीडिताः मद्विचिन्तया मामापुः। एवमिति शेषः ॥ ३७ ॥

तत्सन्देशेनाऽऽगतभगवद्विशेषस्मरणाः ॥ ३८ ॥

**गोप्य ऊचुः**

**दिष्ट्याऽ[1]हितो हतः कंसो यदूनां[2] सानुगोऽघकृत्।**
**दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्याऽऽस्तेऽच्युतोऽधुना ॥ ३९ ॥**

**कच्चिद्गदा[3]ग्रजः सौम्य! करोति पुरयोषिताम्।**
**प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥**

**कथं रतिविशेषज्ञः प्रियश्च [4]पुरयोषिताम्।**
**नाऽनुबध्येत तद्वाक्यैर्वि[5]भ्रमैश्चानुभाजितः ॥ ४१ ॥**

**अपि स्मरति नस्साधो गोविन्दः प्रस्तुते क्वचित्।**
**गोष्ठीमध्ये पुरस्त्रीणां ग्राम्य[6]स्वैरकथान्तरे ॥ ४२ ॥**

**ताः किं निशाः स्मरति यासु [7]तदा प्रियाभि र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये।**
**रेमे क्वणच्चरणनूपुररासगोष्ठ्या मस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४३ ॥**

---

1 KTW किल 2 KTW ०नामहितोऽ० 3 MMa. सुस्नि० 4 GJ वर 5 KTW ०वि० 6 GJMIV ०म्याः 7 MIV तथा

**श्रीध० दिष्ट्येति।** यदूना महितश्शत्रुः अघकृत् दुःखदः। दिष्ट्येत्यानन्दे। आप्तैः प्राप्तैः हितैर्वा सह॥ ३९॥

अन्या ऊचुः **कच्चिदिति।** नोऽस्माकं करणीयां प्रीतिं कच्चित्पुरयोषितां करोति। स्निग्धश्च तत्सव्रीडहासेनोदार-मीक्षणञ्च तेनाऽर्चितः, ताभिरस्माभि र्वा ॥ ४० ॥

पुनरन्या ऊचुः-**कथमिति।** तासां वाक्यैर्विभ्रमैश्चानुभाजितः [1] पूजितः॥ ४१ ॥

पुनरन्या ऊचुः- **अपीति।** किमनया चिन्तया ? [2] नः अस्मान् क्वचित् प्रस्तुते स्मरति किम् ? ग्राम्या अविदग्धाः॥ ४२॥

अन्या ऊचुः- **ता इति।** कुमुदैः कुन्दैः शशाङ्केन च रम्ये बृन्दावने क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यां अस्माभिः प्रियाभिः ईडिता मनोज्ञाः कथा यस्य सः। तथा यासु निशासु रेमे, ताः कदाचित् किं नु स्मरति वा न वेति॥ ४३॥

---

1 MIV omit पूजितः 2 JVa omit नः

**वीर० दिष्टयेति।** यदूना महितश्शत्रुः अघकृद्दुःखकृत् कंसः हतः किल। एतद्दिष्ट्या। अय मस्माकं महानानन्द इत्यर्थः। लब्धास्सर्वे अर्थाः पुरुषार्था यै स्तैराप्तै र्मित्रैस्सह अच्युतोऽधुना कुशल्यास्ते किल ॥ ३९ ॥

**कच्चिदिति।** हे सौम्य, गदाग्रजः कृष्णः, पुरयोषितां स्निग्धश्च तत्सव्रीडहासेनोदारं ईक्षणं, तेनार्चितो बहुमतो वशीकृत इति भावः। तासां प्रीति मस्मासु कर्तव्यां करोति, कच्चित् इतीष्टप्रश्ने ॥ ४० ॥

ननु स्वतन्त्रस्सः कथं तद्वशः स्यात्, अत आहुः- **कथमिति।** तद्वाक्यैः [1-] पुरयोषिन्मधुरवाक्यैः [-1] तद्विभ्रमैश्च अनुभावितः वशीकृतः कथं नाऽनुबध्येत ? अनुबध्येतैवेत्यर्थः ॥ ४१ ॥

**अपीति।** हे साधो, पुरस्त्रीणां गोष्ठीमध्ये तत्राऽपि ग्राम्यस्वैरकथान्तरे ग्रामेषु भवा ग्राम्यजना स्तेषां सम्बन्धि यत् यादृच्छिककथान्तरं, तस्मिन्प्रस्तुते अधिकृते सति। तदा नोऽस्मान् स्मरति किम् ? प्राधान्येन नास्मान् स्मरत्येव यदृच्छयापि स्मरति किमित्यर्थः ॥ ४२ ॥

पुनरन्या ऊचुः- **ताः किमिति।** कुमुदैः कुन्दैः शशाङ्केन च रम्ये बृन्दावने क्वणन्ति चरणनूपुराणि यस्यां रासगोष्ठ्यां अस्माभिः प्रियाभिरीडिताः मनोज्ञाः कथाः यस्य तथा यासु निशासु रेमे ताः कदाचित् किन्नु स्मरति ?॥ ४३॥

---

1- -1 TW omit

विज० यदूनामहितः। आप्तजनैः ॥ ३९,४० ॥

तासां वाक्यैः कथं नाऽनुबध्येत विभ्रमैः शृङ्गारचेष्टाभिः अनुमाजितः सभाजितः ॥ ४१ ॥

ग्राम्याणा शब्दादिविषयलालसाना स्वैरकथान्तरे स्वच्छन्दविषयस्य व्यवहारविशेषे प्रस्तुते प्रसक्ते ॥ ४२ ॥

यासु निशासु ॥ ४३ ॥

अप्येष्यतीह दाशार्ह स्त[1]प्ता स्स्वकृतया शुचा।
स[2]ञ्जीवयिष्यन्नो गात्रैः [3-]यथेन्द्रो वन मम्बुदैः[-3] ॥ ४४ ॥

कस्मात्कृष्ण इहाऽऽयाति प्राप्तराज्यो हताहितः।
[4-]नरेन्द्रकन्या उद्वाह्य[-4] प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥

किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः।
श्रीपते रामकामस्य [5-]क्रियतेऽर्थो महात्मनः[-5] ॥ ४६ ॥

परं सौ[6]ख्यं हि नैराश्यं स्वैरि[7]णी प्राह पिङ्गला।
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥

क उत्सहेत सन्त्यक्तुमुत्तमश्लेकसंविदम्।
अनिच्छतोऽपि यस्य श्री रङ्गान्न च्यवते क्वचित् ॥ ४८ ॥

---

1 M.Ma. °स्तप्त स्व० 2 G.J ०वयन् नु नो, M Ma. °वयन्व्रज, MI V °वयस्तु नो 3- -3 T W इन्द्रो वनमिवाम्बुदैः 4- -4 M.Ma विहृत्य नगरस्त्रीभिः
5- -5 G J M Ma. क्रियेतार्थः कृतात्मनः, MI V क्रियतेऽर्थः कृतात्मनः 6 M Ma सुख 7 G.J.K.M.Ma. T W °ण्यप्याह

श्रीध० अपीति। स्वनिमित्तेन शोकेन तप्ताः नः अस्मान् गात्रैः करस्पर्शादिभिस्सञ्जीवयन्। किन्नु इहैष्यतीति ॥ ४४ ॥

अन्या ऊचुः- कस्मादिति। अनन्यगतित्वेन पूर्वमत्राऽवसत्, सम्प्रति महदैश्वर्यं प्राप्तः कस्मादिहाऽऽगमिष्यतीति ॥ ४५ ॥

अन्यास्तु परमार्थमूचुः- किमिति। वनचरीभि रस्माभिरन्याभि र्वा राजकन्याभिः, महात्मनो धीरस्य। किञ्च। श्रीपतेः, तदप्यास्तां, स्वत एवाऽऽप्तकामस्य, अत एव कृतात्मनः पूर्णस्य, किं को[1]ऽर्थः क्रियते? न कश्चिदिति ॥ ४६ ॥

यतः अघटमाना या कृष्णसङ्गतिः, सैवाऽस्मानाकुलयति। अतो नैराश्यमेव परमं सुखं, तच्चाऽति दुष्करमित्याहुः- परमिति। स्वैरिणी [2-]कामचारिणी[-2] ॥ ४७ ॥

क इति। संविद मेकान्तवार्ताम् ॥ ४८ ॥

---

1 J.Va. कोऽप्यर्थः 2- -2 V. omits कामचारिणी

**वीर० अप्येष्यतीति।** आगमिष्यति किम्? स्वनिमित्तेन शोकेन सन्तप्ताः नोऽस्मान् दाशार्हः कृष्णः, दाशार्हेति पाठे हे उद्धव ! स्वकरस्पर्शादिभिः सञ्जीवयिष्यति किम्? यथा वनमिन्द्रोऽम्बुदैः सञ्जीवयति तद्वत् ॥ ४४ ॥

अन्या ऊचुः **कस्मादिति।** अनन्यगतित्वेन पूर्वमत्रोषितवानधुना तु प्राप्तं राज्यं येन, हता अहिता श्शत्रवो येन, तथाभूतः नरेन्द्रकन्या उद्वाह्य प्रीतः सुहृद्भिश्च वृतः कस्माद्धेतोः इहाऽऽगमिष्यति ॥ ४५ ॥

अन्यास्तु परमार्थमूचुः - **किमस्माभिरिति।** वनवासिनीभिः [1-]अस्माभिः अन्याभिः[-1] पुरयोषिद्भिर्वा महात्मनः कृष्णस्य किं को वाऽर्थः प्रयोजनं क्रियते, न किञ्चित्प्रयोजनमित्यर्थः। तत्र हेतुं ब्रुवत्यो विशिंषन्ति। महात्मनः श्रियःपतेः, तदप्यास्ताम्, स्वत एव अवाप्तसमस्तकामस्य ॥ ४६ ॥

अन्याः पुनराहुः- परं **सौख्यमिति।** यत्पिङ्गलाख्या वेश्या प्राह - नैराश्यं परमं सौख्यं हीति। तज्जानतीनामपि नोऽस्माकं तथाऽपि नैराश्यस्य सुखहेतुत्वदर्शनेऽपि कृष्णे विषये आशा दुरत्यया अपरिहार्या ॥ ४७ ॥

युक्तञ्चैतदिति काश्चिदाहुः - क इति। उत्तमश्लोकस्य संविदमेकान्तवार्तां त्यक्तुं को जन उत्सहेत? न कोऽप्युत्सहेतेत्यर्थः। तत्संवित्त्यागानुत्साहमेव दृष्टान्तमुखेन दर्शयन्त्य स्तं विशिंषन्ति- अनिच्छतोऽपीति। श्री र्लक्ष्मीः अनिच्छतोऽकामयमानस्याऽपि यस्योत्तमश्लोकस्य अङ्गादुरःस्थलात् क्वचित्कदाचिदपि न च्यवते ॥ ४८ ॥

---

1- -1 T.W. omit

**विज० गात्रैरवयवैः॥ ४४ ॥**

अदीर्घेण कालेनाऽऽगमिष्यामीति यदुक्तं तत् स्तोभनमात्रम्, आगमने निमित्ताभावादित्याह- **कस्मादिति** ॥ ४५ ॥

कृतात्मनः पूर्णरूपस्य अर्थो विषयः किं क्रियेत किं सुखं कुर्यात् ॥ ४६ ॥

कृष्णस्य पूर्णकामत्वात्तथाऽस्तु, युष्माकं सुखनिमित्तं किम्? तत्राऽऽह- **परमिति।** आशा अतितृष्णा ॥ ४७ ॥

न केवलमस्माकमेव कृष्णाशा दुस्त्यजा, अन्यस्यापीत्याहुः- क इति ॥ ४८ ॥

सरिच्छैलवनोद्देशा गावो[1] वेणुरवा इमे।[1]
सङ्कर्षणसहायेन कृष्णेनाऽऽचरिताः प्रभो॥ ४९ ॥

पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत।
श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

गत्या ललितयोदारहासलीलावलोकनैः।
माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥ ५१ ॥

हे नाथ! हे रमानाथ! व्रजनाथार्तिनाशन।
मग्नं मुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥ ५२ ॥ ★

(विजयध्वजरीत्या पञ्चचत्वारिंशोऽध्यायः समाप्तः)

---

1 - - 1 MMa ०नाऽऽक्रीडिता विभो। 2 MMa ०ते त० 3 MMa ०के वि०4 MMa.TW तद्वि० 5 K.T W ०वे

★ अनेन श्लोकेन विजयध्वजरीत्या पञ्चचत्वारिंशोऽध्यायः समाप्तः।

**श्रीध०** किञ्च। तद्विस्मृतौ न तावद्दुःखमस्ति। साऽपि नाऽस्माकं सम्भवतीत्याहु स्त्रिभिः- **सरिदिति।** आचरिताः सेविताः ॥ ४९, ५० ॥

**गत्येति।** हे उद्धव, कथं तं विस्मरामहे ? ॥ ५१, ५२ ॥

**वीर०** किञ्च। तद्विस्मृतौ तु नाऽस्माकं दुःखमस्ति। साऽपि न सम्भवतीत्याहुः- त्रिभिः **सरिच्छैलेति।** प्रभो! हे उद्धव, सङ्कर्षणसहितेन कृष्णेन सरिदादय आचरिता स्सेविताः ॥ ४९ ॥

ततः किमित्यत आहुः- पुनः पुनर्नन्दगोपसुतं स्मारयन्ति। बत! कैर्लिङ्गैरित्यत आहुः- श्रीनिकेतैः श्रियस्सौन्दर्यसम्पदो निकेतैराश्रयैः, तस्य भगवतः पदकैः पदानीव पदकानि "इवे प्रतिकृतौ" (अष्टा० 5-3-96 ) इति क प्रत्ययः। तैः स्मारयन्ति इति पूर्वेण सम्बन्धः। अत स्तं विस्मर्तुं नैव शक्नुमः॥ ५० ॥

किञ्च गत्यादिभिः हृता धी र्यासां ताः। वयं कथं तं कृष्णं विस्मरामहे। ततश्च स्मारकै र्लिङ्गै स्तत्स्मृति रवर्जनीया। ततश्च दुःखमपीति भावः ॥ ५१ ॥

ततश्चेदं दुःखं स एव भगवानपनुदत्विति प्रार्थयन्ते -**हे नाथेति।** बुद्ध्या सन्निधापितस्य भगवतस्सम्बोधनानि हे नाथेत्यादीनि। वृजिनार्णवे दुःखाब्धौ मग्नं गोकुलमुद्धर। नाऽहं शक्त इत्यत्र सम्बोधयन्ति हे नाथेति। ईश्वरस्य तव किमशक्य मिति भावः। नन्वीश्वरो निगृह्णात्यपीत्यत आहुः- हे रमानाथेति। "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया, रक्षकस्सर्वसिद्धान्ते" (पाञ्चरात्रे) इत्युक्तरीत्या केवलकारुण्यमूर्त्या पुरुषकारभूतया लक्ष्म्या नित्ययुक्तस्य तवानुग्रह एवोचित इति भावः। नन्वेवमपि कांश्चिन्निगृह्णन्नेव दृश्ये इत्यत्राऽऽहुः व्रजनाथेति। व्रजन्त्वनुगृह्णन्नेव दृश्यसे इत्यभिप्रायः। तमेवाऽऽविष्कुर्वन्ति हे आर्तिनाशनेति। विषजलाशय व्यालराक्षस वर्षमारुत प्रयुक्तपीडाहारित्वं बहुशो दृष्टमिति भावः ॥ ५२ ॥

विज० आक्रीडिताः क्रीडारङ्गीकृताः इमे सरिदादयः ॥ ४९ ॥

नन्दगोपसुतं पुनः पुनः स्मारयन्ति। बत आश्चर्यम्। ननु सरिदादिदर्शने एव श्रीकृष्णस्मरणम् अन्यदा नास्ति इत्यायातमिति तत्राऽऽह -श्रीनिकेते इति। तस्य श्रीकृष्णस्य पदके प्रशस्तपदे प्रशस्तत्वं कुत इत्यत उक्तं श्रीनिकेते इति ॥ ५० ॥

उक्तमेव द्रढयति गत्येति ॥ ५१ ॥

नित्यं स्वजाप्यं विज्ञापयन्ति- हे नाथेति। ऐश्वर्यमूर्ते! रमाया अपि आशीःप्रद! व्रजनाथानां गोपाना आर्तिनाशन! मग्नं, दुःखार्णवे इति शेषः । गवां विन्द[1] लाभो यस्मात्स तथा गोविन्द इति ॥ ५२ ॥

॥ विजयध्वजरीत्या पञ्चचत्वारिंशोऽध्यायः समाप्तः ॥ ४५ ॥

---

1 Ma adds लीला

(विजयध्वजरीत्या षट् चत्वारिंशोऽध्यायः आरभ्यते)

★ श्रीशुक उवाच

ततस्ताः कृष्णसन्देशै र्व्यपेत[1]विरहज्वराः।
उद्धवं पूजयाञ्चक्रु[2] र्ज्ञात्वाऽऽत्मान[3] मधोक्षजम्[4]॥ ५३ ॥

उवास कतिचिन्मासान्गोपीनां विनुदन् शुचः।
कृष्णलीलाकथा[5] गायन्रमयामास गोकुलम् ॥ ५४ ॥

यावन्त्यहानि नन्दस्य व्रजेऽवात्सी त्स उद्धवः।
व्रजौकसां क्षणप्रायाण्यासन्[6]कृष्णस्य वार्तया ॥ ५५ ॥

सरिद्वनगिरिद्रोणी वीक्षन्कुसुमित[7]द्रुमान्।
[8-]कृष्णं संस्मारयन् रेमे[-8] हरिदासो व्रजौकसाम् ॥ ५६ ॥

दृष्ट्वैवमादिगोपीनां कृष्णावेशात्म[9] विक्लवम्।
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥

[10-]उद्धव उवाच[-10]

एताः परं तनुभृतो[11] भुवि[12] गोपवध्वो गोविन्द एव[13] मखिलात्मनि रूढभावाः।
वाञ्छन्ति यद्भवभियो[14] मुनयो वयञ्च[15] किं ब्रह्मजन्मभि रनन्तकथारसस्य ॥ ५८ ॥

---

★ विजयध्वजरीत्या षट्चत्वारिंशोऽध्यायः अत्र प्रारभ्यते। 1 M Ma ०हाऽऽमयाः। 2 K.T W ०मासुः 3 M.Ma. ०त्वा स्निग्धम० 4 M.Ma. ०जे 5 G.J.K.T W ०थां 6 T W ह्ना० 7 G.J.M.Ma. ०तान्दु० 8- -8 M.Ma कृष्णक्रीडा० समं रेमे 9 T W वेशितकिल्बिषम् 10- -10 G.J.K.MI T V W omit 11 M Ma ०ता 12 K.T W ननु 13 G.J नि० 14 M.Ma.०धि० 15 M.Ma. न यत्र

**श्रीध० तत इति।** कृष्णमधोक्षजं ज्ञात्वा तञ्च स्वात्मानं ज्ञात्वा॥ ५३ ॥

**उवासेति।** विनुदन् अपनयन्॥ ५४, ५५ ॥

**सरिदिति।** सरिद्वनगिरिदर्यादिषु प्रत्येकं श्रीकृष्णं तल्लीलासम्प्रश्नादिभिः संस्मारयन्रेमे॥ ५६ ॥

**दृष्ट्वेति।** कृष्णावेशेनाऽऽत्मनो मनसः विक्लवं वैक्लव्यं ताः गोपीर्नमस्यन् नमस्करीष्यन् उत्तमस्यात्मनो गोपस्त्रीनमस्कृतिरपि[1] न्याय्या भवतीति दर्शयितुं तासां महत्त्वं पञ्चभि र्जगौ उवाच॥ ५७ ॥

**एता इति।** एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः। यदिति यं रुढं[2] भावं भवभियो मुमुक्षवः मुनयो मुक्ता अपि वाञ्छन्ति, वयञ्च भक्ता अपि। अतः अनन्तस्य कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिः विप्रसम्बन्धिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभि र्जन्मभिः किं कोऽतिशयः। यत्र[3-] तत्र जातः स एव सर्वोत्तम इत्यर्थः। यद्वा, अनन्तकथासु रसो यस्य तस्य ब्रह्मजन्मभिः चतुर्मुखजन्मभिरपि किं कोऽर्थः। यद्वा अनन्तकथासु अरसस्य ब्रह्मजन्मभिः किम्[-3] ॥ ५८ ॥

---

1 J Va ०रन्याय्या न भ० 2 MI V रूढ० 3- -3 J Va इत्यर्थः।

**वीर० तत इति।** ता गोप्यः श्रीकृष्णस्य सन्देशै र्वाचिकैः व्यपेतो विरहज्वरो यासां ताः अधोक्षजं कृष्णमात्मानं सर्वान्तरात्मानं ज्ञात्वा, कृष्णसन्देशै रधोक्षज मात्मानं ज्ञात्वा। ०व्यपेतो विरहज्वरो याभिस्ता इति वा। उद्धवं पूजयामासुः॥ ५३॥

**उवासेति।** शुचः दुःखानि विनुदन्नपनयन् रमयामास सुखयामास ॥ ५४ ॥

**यावन्तीति।** उद्धवो नन्दस्वामिके व्रजे यावन्त्यहानि दिनान्यवात्सीत् उवास तावन्त्यहानि श्रीकृष्णस्य वार्तया क्षणतुल्यानि बभूवुः ॥ ५५ ॥

**सरिदिति।** सरिदादीन्पश्यन् तेषु प्रत्येकं कृष्णलीलाप्रश्नादिभिः तं व्रजौकसां स्मारयन्रेमे ॥ ५६ ॥

**दृष्ट्वेति।** एवं प्रदर्शितमादि र्यस्य तद्गोपीनां कृष्णावेशेन आत्मनो मनसो विक्लवं वैक्लव्यमधार्ष्ट्यं दृष्ट्वा नितरां प्रीतः उद्धव स्ता गोपीः नमस्यन् नमस्करिष्यन् इदं वक्ष्यमाणं जगौ। उत्तमस्यात्मनो गोपस्त्रीनमस्कृतिरन्याय्या न भवतीति दर्शयितुं तासां महत्त्वं पञ्चभिर्जगावित्यर्थः ॥ ५७ ॥

एता इति। एता गोपवध्वः परं केवलं तनुभृतः सफलजन्मानः। तत्र हेतुं वदन् गोपवधूर्विशिनष्टि। एव मित्थमात्मनि सर्वान्तरात्मनि गोविन्द एव रूढः भावः प्रेमात्मको यासां ताः। कुत स्तावतैव तनुभृत्त्वमित्यत आह। यत् यस्मात् भवभियो मुमुक्षवः मुनयः शुभाशयमननशीलाः वय मभक्ताश्च अस्मदादयः वाञ्छन्ति। रूढभाव मिति विभक्तिविपरिणामेन सम्बन्धः। यद्रूढभावत्वमिति वा। यत एव मतः अनन्तस्य गोविन्दस्य कथासु रसोऽनुरागो यस्य तस्य ब्रह्मजन्मभिः शौक्रसावित्रयाज्ञिकैः त्रिभिः किं कोऽतिशयः? अनन्तकथासु रसोऽनुरागो यस्य, रसवत्त्वमेवाऽतिशयावहं न तु ब्रह्मजन्मनेति भावः। यद्वा अनन्तकथारसस्य ब्रह्मजन्मभिः चतुर्मुखजन्मभिरपीत्यर्थः ॥ ५८ ॥

विज० ★ भक्तिमेव निरूपयत्यस्मिन्नध्याये। तत्राऽऽदौ गोप्यः उद्धवं कृष्णबुद्ध्या पूजयन्ति स्मेत्याह शुक इति ॥ ५३ ॥

विनुदन् परिहरन्, कृष्णस्य लीलाः यासु ता स्तथा ॥ ५४ ॥

अवात्सीत् उवास। क्षणप्रायाणि क्षणकल्पानि ॥ ५५ ॥

पार्श्वद्वयोन्नतनिम्नानिम्नकुसुमितवृक्षनिविष्टा स्थली द्रोणी सानुविशेषः। व्रजौकसां कृष्णक्रीडास्मरणं यथा भवति तथेति क्रियाविशेषणम्। सुखं कृत्वा रेमे हरिदास उद्धवः ॥ ५६ ॥

गोपीनामेवमादि कृष्णावेशात्मविक्लवं दृष्ट्वा नमस्यन् प्रावण्यं कुर्वन् ॥ ५७ ॥

अखिलात्मनि पुर्णात्मनि गोविन्दे दृढभावाः। एवं नित्यमतिवर्धमानभक्त्या एता गोपवध्व स्तनुभृतां मध्ये परमुत्तमं शरीरभरणफलभाज इत्यन्वयः। मुन्यादिषु सत्सु किं विशिष्योच्यते इति तत्राऽऽह - वाञ्छन्तीति। भवधियः भ्रद्रबुद्धयोऽपि मुनयः यद्भक्तिलक्षणं मुक्तिसाधनं वाञ्छन्ति, वयञ्च वाञ्छामः, नत्वित्थं प्रभवाम। तत्र को हेतु रित्यतो वोक्तं भवधिय इति। संसारोद्विग्नबुद्धित्वादित्यर्थः। भवभयादिति पाठे संसारभयं सन्दृश्येति ल्यब्लोपे पञ्चमी। मुनीनां ब्रह्मकुलोत्पन्नोत्तमत्वात्किं निनिन्दिषुरिव ब्रवीषीति तत्राऽऽह किं ब्रह्मेति। यत्र येषु ब्राह्मणजननेषु अनन्तस्य हरेः कथा नास्ति। तैः किं, न किमपि प्रयोजनम् जीवन्मृतत्वादित्यर्थः ॥ ५८ ॥

★ विजयध्वजरीत्या षट्चत्वारिंशोऽध्यायः प्रारभ्यते।

**क्वेमाः स्त्रियो वनचरा[1] र्व्यभिचारदुष्टाः[2] कृष्णे क्व चैष[3] परमात्मनि रूढभावः।**
**नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥**

**नाऽयं श्रियोऽङ्ग[4] उ नितान्तरतेः प्रसादः स्वर्योषितां न[5-]लिनगन्ध[-5]रुचां कुतोऽन्याः[6] ।**
**रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम्॥ ६० ॥**

**आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्।**
**या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा भेजु र्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥**

**या वै श्रियार्चितमजादिभिराप्तकामैर्योगीश्वरैरपि यदात्मनि रासगोष्ठ्याम्।[7]**
**कृष्णस्य तद्भगवतश्चरणारविन्दं न्यस्तं[8] स्तनेषु विजहुः परिरभ्य तापम् ॥ ६२ ॥**

**वन्दे नन्दव्रजस्त्रीणां पादरेणु मभीक्ष्णशः।**
**यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥**

---

1 GJ ०री व्यमि 2 GJ दुष्टः 3 MMa ०व 4 MMa ननु 5- -5 MMa च ललिताङ्ग 6 MMa ०न्यः 7 GJMMa ०गो० 8 MMa न्यस्य

**श्रीध०** किञ्च। ईश्वरप्रसादो महत्त्वे कारणं, तस्य च न जातिराचारो ज्ञानं वा कारणं, किन्तु केवलं भजन मेवेत्याह- **केति**। साक्षाद्भजतः पुसः ननु[1] अहो उपयुक्तः सेवितः अगदराजः अमृतं यथेति ॥ ५९ ॥

अत्यन्तापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह - **नेति**। अङ्गे वक्षसि उ अहो नितान्तरतेः एकान्तरतिमत्याः श्रियोऽपि नाऽय प्रसादः, अनुग्रहो नास्ति। नलिनस्येव गन्धो रुक् कान्तिश्च यासां तासां स्वर्गाङ्गनानामप्सरसामपि नास्ति। अन्याः पुनर्दूरतो निरस्ताः। रासोत्सवे श्रीकृष्णभुजदण्डाभ्यां गृहीतः आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीना य उदगात् आविर्बभूव ॥ ६० ॥

किञ्च । आस्तां तावद्गोपीनां भाग्यं, मम त्वेतावत्प्रार्थ्यमित्याह- **आसामिति**। गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्किमपि अंह स्या मित्याशासा। कथम्भूतानाम्? या इत्यादि। आर्याणां मार्गं धर्मं च हित्वा ॥ ६१ ॥

पुन स्ता एव विशिनष्टि - **या** इति। योमीश्वरैरप्यात्मन्येवार्चितं स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ॥ ६२ ॥

एवं महत्त्वं प्रतिपाद्य नमस्करोति **वन्द** इति ॥ ६३ ॥

---

1 MIV omit ननु

**वीर०** ननु वर्णाश्रमधर्मानुग्राह्यो निरूढभावः तदभावेऽपि कथमाभिर्लब्ध इत्यघटितघटनदर्शनेन ईश्वर स्स्वय मेव स्वप्राप्तौ केनाऽपि व्याजेन हेतुरिति सम्भावयन्नाऽऽह - **केमा** इति। **इमाः स्त्रियः जात्याऽपि निहीना** इति भावः। वनचरा इत्यनेन सत्सङ्गादिसाधनाद्यभावोऽभिप्रेतः। व्यभिचारशीला इत्यनेन बाधकसद्भावः। एवंविधानां सर्वथाऽधिकाररहितानां परमात्मनि कृष्णे निरूढभावः क? दुर्घटमेतदिति भावः। यद्यप्येवं तथाऽपीश्वरः स्वात्मयाथात्म्यमजानतोऽप्यनुभजतः केनाऽपि भावेन अनुवर्तमानस्य साक्षात्स्वयमेव श्रेयस्तनोति। ननु खलु अविदुषामपि श्रेयःकार्यकरत्वे दृष्टान्त माह - अगदेति। यथा अगदराज औषधश्रेष्ठः उपयुक्तः भुक्तः आरोग्यं तनोति, तद्वत् ॥ ५९ ॥

अत्यन्तापूर्वश्चाऽयं गोपीषु भगवतः प्रसाद इत्याह- नाऽयमिति। अङ्गे वक्षसि उ[1] अहो नितान्तरतेः नितान्ता एकान्ता रतिर्यस्या स्तस्याः श्रियो लक्ष्म्याः नाऽयं प्रसादोऽनुग्रहोऽस्ति। नलिनस्येव गन्धो रुक् कान्तिश्च यासां तासां स्वर्योषितां स्वर्गाङ्गनानां अप्सरसामपि नास्ति। अन्या इतरस्त्रियस्तु कुतः, प्रसादविषया इति शेषः, दूरतो निरस्ता इति भावः। कोऽसौ प्रसादः, यः श्रिया स्वर्योषिद्भिश्च न लब्ध इत्यत्राऽऽह रासोत्सव इति। रासक्रीडायां कृष्णस्य भुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभि स्तासां गोपीनां उदगादाविर्बभूव, वल्लवीनां मध्ये उदगाज्जगौ इति वा ॥ ६० ॥

किञ्च, आसां भाग्यं सर्वेषां दुर्लभमेव। मम त्वेतावत्प्रार्थ्यमित्याह -आसामिति। आसां गोपीनां चरणरेणुजुषां गुल्मलतौषधीनां मध्ये अहं किमपि स्याम्, केनाऽपि तृणकीटादिरूपेण तच्चरणरेणुसंस्पर्शयोग्येन उद्धवेयमिति। तत्र हेतुं वदन् ता विशिनष्टि- या इति। याः गोप्यः स्वजनमार्याणां पन्थानं धर्मं च हित्वा श्रुतिभिः वेदैरपि[2] विमृग्यां मुकुन्दस्य पदवीं भेजुः मुकुन्दस्वरूपरूपगुणानुचिन्तनपरा बभूवुरित्यर्थः॥ ६१ ॥

पुन स्ता विशिनष्टि- या वा इति। यद्भगवतः कृष्णस्य चरणारविन्दं रासगोष्ठ्यां स्तनेषु न्यस्तं निहितं त द्या गोप्यः परिरभ्य ताप मान्तरं बाह्यञ्च जहुरिति सम्बन्धः। चरणारविन्दं विशिनष्टि। श्रिया लक्ष्म्या अर्चितं तथा आप्तकामैरजादिभि श्चतुर्मुखादिभिश्च तथा योगीश्वैरात्मनि चित्ते चाऽर्चितम् ॥ ६२ ॥

इत्थं व्रजौकसां नमस्कारार्हतां प्रतिपाद्य नमस्करोति-वन्दे इति। अभीक्ष्णशः पुनःपुनः नन्दव्रजस्थानां स्त्रीणां पादरजो वन्दे सेवे। कथम्भूतानाम्? यासां नन्दव्रजस्त्रीणां हरिकथोद्गीतम्, उद्गीतमिति भावे क्तः। हरिकथोद्गानं लोकत्रयं पुनाति, तथाभूतानाम् ॥ ६३ ॥

---

1. T.W. omit उ 2. T.W. omit वेदैरपि

विज० इमाः स्त्रियः क्व? कृष्णे एव रूढभावः क्व? अन्वयानुपपत्तेः कथमिति तत्राऽऽह वनचरा इति। तेऽपार्थं वनचरत्वं किं न स्यादित्यत उक्तं व्यभिचारेति। व्यभिचारशीलाः अनैकान्तिकस्वभावाः, अनियतभर्तृभिः रतितृप्ता इत्यर्थः।"शीलं वृत्तस्वभावयोः" (वैज. को. 6-3-33) इति। कृष्णोऽपि कश्चिद्गोपः किं न स्यादित्यत उक्तं परमात्मनीति। अनन्वये किमर्थं श्रेयः प्रयच्छतीत्यतो भक्तिरेव प्रयोजिकेत्याशयेनाऽऽह- नन्विति। अविदुषोऽपि शास्त्रोक्तिमजानतोऽपि अनुभजतः स्वयोग्यतानुरोधेन भक्तिं कुर्वतः पुंसः ईश्वरः साक्षाच्छ्रेयस्तनोति। नन्वित्यमेन "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन"(भ.गी. 11-.54) इत्यैतिह्यं दर्शयति "प्रश्नावधारणैतिह्यसमीहानुमते ननु"(वैज. को. 8-7-22) इति। उपयुक्तस्सेवितोऽगदराजः औषधश्रेष्ठ रोगिकर्मानुकूलं फलं दद्याति यथा, तथाऽत्रापीति ॥ ५९ ॥

यः प्रसादः व्रजवल्लवीनां गोष्ठस्थानां गोपीनां उदगात् उदितः अयं भक्त्या नितान्तरतेः श्रियः स्वर्योषिताञ्च नास्ति। नन्वस्माभिरनुज्ञातं न तु शास्त्रेणेत्यर्थः। कीदृशीनां, स्वर्गाङ्गनानां ललिताङ्गरुचां अखिलविलासोपेतशरीरकान्तीनां, कथम्भूतानां गोपीनाम्? रासक्रिडोत्सवे अस्य कृष्णस्य भुजदण्डेन गृहीतकण्ठाश्च लब्धाशिषश्च सुरतसुखोद्बोधकशुभवाक्यप्रबन्धाश्च

यास्तासां अम्याः अन्यासां स्त्रीणाम्। "बहुलं छन्दसि" इति विभक्तिव्यत्ययविधानात्, अन्यस्त्रियः ईदृशप्रसादं नाऽऽपुरिति कुत इति वा ॥ ६० ॥

अह मासां गोपीनां चरणरेणुजुषां बृन्दावने प्ररूढानां गुल्मलतौषधीनां मध्ये गुल्मादिकं किमपि स्याम्, उद्भवेयम्। अहो अमीषां पूर्वजन्मार्जितपुण्यराशिः। या गोप्यः त्यक्तुमशक्यं स्वजनं भर्त्रादिकं, आर्यपथं स्मार्तमार्गं, नियतस्वभर्तृसङ्गविषयं हित्वा। वेदशिरोभिरपि मार्गणीयां मुकुन्दपदवीं भेजुरित्यन्वयः ॥ ६१ ॥

श्रिया अजादिभिः ब्रह्मादिभिः आप्तकामैः सत्यसङ्कल्पैः योगेश्वरैः सनकादिभिरपि आत्मनि हृदये निधाय यदर्चितं या गोप्यः कृष्णस्य भगवतश्चरणारविन्द स्तनेषु न्यस्य परिरभ्य कामनिमित्तसन्तापं विजहुः, आसामिति पूर्वेणान्वयः ॥ ६२ ॥

वन्दे स्तौमि ॥ ६३ ॥

## श्रीशुक उवाच

**अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च।**
**गोपानामन्त्र्य दाशार्हो यास्यन्नाऽऽरुरुहे रथम् ॥ ६४ ॥**

**तं निर्गतं समासाद्य नानोपायनपाणयः।**
**नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः॥ ६५ ॥**

**मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः[1]।**
**वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥**

**कर्मभि र्भ्राम्यमाणानां[2] यत्र क्वापीश्वरेच्छया।**
**मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥**

**एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप !**
**उद्धवः पुन रागच्छन्मधुरां कृष्णपालिताम्॥ ६८ ॥**

**कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम्।**
**वासुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
सप्तचत्वारिंशोऽध्यायः॥ ४७ ॥

(विजयध्वजरीत्या षट्चत्वारिंशोऽध्यायः) ॥ ४६ ॥

1 M.Ma. ०वं० 2 K.T.W. ०र्म

**श्रीध० अथेति।** अनुज्ञाप्य अनुज्ञां याचित्वा आमन्त्र्य पृष्ट्वा ॥ ६४, ६५ ॥

**मनस** इति। नोऽस्माकं मनसो वृत्तयः कृष्णपादाम्बुजाश्रयाः स्युः। अभिधायिनीः अभिधायिन्यः स्युः[1]॥ ६६॥

**कर्मभिरिति।** नः[2] कृष्णे रतिः स्यादिति ॥ ६७, ६८ ॥

**कृष्णायेति।** कृष्णादिभ्यो भक्त्युद्रेकमाह उपायनानि चाऽददादिति॥ ६९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्यारव्यायां
सप्तचत्वारिंशोऽध्यायः॥ ४७ ॥

1. J.Va. omit स्युः 2. J.Va. omit नः

**वीर० अथेति।** अनुज्ञाप्य अनुज्ञां याचित्वा आमन्त्र्य पृष्ट्वा, दाशार्ह उद्धवः, यास्यन्। "लक्षणहेत्वोः"(अष्टा० 3-2-126) इति शत्रादेशः। यातुं रथमारुरोह ॥ ६४ ॥

**तमिति।** निर्गतं व्रजान्निष्क्रान्तं उद्धवं समासाद्य अनुरागेण प्रोचुः। कथम्भूताः? नानाविधान्युपायनानि अर्हणवस्तूनि पाणिषु येषां, अश्रूणि लोचनयोर्येषां तथाभूताः॥ ६५ ॥

उक्तिमेवाऽऽह **मनस** इति। नोऽस्माकं मनसो वृत्तयः कृष्णपादाम्बुजविषयाः स्युः। वाचस्तु तन्नाम्नामभिधायिन्यः स्युः। का★ या देहास्तु तन्नमस्कारादिषु प्रवणाः स्युः॥ ६६ ॥

**कर्मभिरिति।** यत्र क्वचिदीश्वरेच्छया कर्मानुगुणया कर्मभिः पुण्यापुण्यात्मकैः, भ्राम्यमाणानां संसरतामस्माकं यदि मङ्गलाचरितानि शुभकर्माणि दानानि च सन्ति, तर्हि तैर्हेतुभिः कृष्णे भगवति रतिरनुरागः स्यादिति। मङ्गलाचरितप्रदर्शनार्थं दानैरित्युक्तम् ॥ ६७ ॥

**एवमिति।** हे नराधिप, राजन् इत्थं गोपैः कर्तृभिः कृष्णभक्त्या करणभूतया सभाजितः सम्मानितः। स इति पृथक्पदं वा। उद्धवः कृष्णेन पालिताम्। लालितामिति पाठे अनुरञ्जितां मधुरां पुनराजगाम ॥ ६८ ॥

ततः कृष्णाय नमस्कृत्य प्रीत्या हर्षेण व्रजौकसां भक्त्युत्कर्षं प्राह। वासुदेवाय कृष्णाय[1], रामाय, राज्ञे उग्रसेनाय च उपायनानि नन्दादिभि स्समर्पितान्यर्हवस्तून्यदात्समर्पितवान् ॥ ६९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

1 K. omits कृष्णाय ★ काया इति वीरराघवादृतः पाठः।

विज० नोऽस्माकं मनसो वृत्तयो व्यापाराः कृष्णपादपद्माश्रयाः स्युः। अस्माक वाचो नाम्नामभिधायिनीर्वदन्त्यः स्युः। अस्माकं कायः तस्य प्रवणादिषु नमस्कारादिषु स्यादित्यन्वयः ॥ ६४ - ६६ ॥

यत्र क्वापि देवयोनिषु अचेतनस्य कर्मणः प्रवर्तकत्वं कथ घटते इत्यत उक्तं ईश्वरेच्छयेति। रतिर्भक्तिलक्षणा ॥ ६७ - ६९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
(विजयध्वजरीत्या षट्चत्वारिंशोऽध्यायः)

# अष्टचत्वारिंशोऽध्यायः

## (विजयध्वजरीत्या सप्तचत्वारिंशोऽध्यायः)

### [1-]श्रीशुक उवाच[-1]

अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः।
सैरन्ध्र्याः कामतप्तायाः [2-]प्रियमिच्छन्[-2] गृहं ययौ ॥ १ ॥

महार्हो[3]पस्करोपेतं कामोपायोपबृंहितम् ।
मुक्तादामपताकाभि र्वितानशयनासनैः ॥ २ ॥

धूपैस्सुरभिभि र्दीपै स्स्रग्गन्धैरपि मण्डितम्।
★ कामशास्त्रश्रुतालेख्यै र्नानावर्णै स्सुशोभनैः ॥ ३ ॥

गृहं तमायान्तमवेक्ष्य सा[4]ऽऽसनात्सद्यस्समुत्थाय हि[5] जातसम्भ्रमा।
[6]यथोपसङ्गम्य सखीभिरच्युतं सभाजयामास [7]सदासनादिभिः ॥ ४ ॥

[8]अथोद्धवस्साधु तयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चाऽऽसनम्।
कृष्णोऽपि [9]नूत्नं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ५ ॥

---

1- -1 M.Ma. बादरायणिरुवाच 2- -2 M.Ma प्रीतिं यच्छन् 3 G.J.K. ०स्करैराढ्यं; M.V स्कराढ्यं वै ★ This half verse is not found in G.J. M.Ma. M.V. edns. , 4 K.T.W. चाऽऽ° 5 K.T.W. सु° 6 M.Ma. अ° 7 M.Ma. सहा° , M.V. तदाऽऽ° 8. G.J M.Ma त० 9. G.J. तूर्णं; M.Ma दान्तं

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत्। अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत्॥

सैरन्ध्री काममापूर्य पूरयित्वा मनोरथान्। अक्रूरस्य ततः कृष्णस्तेन पार्थानसान्त्वयत्॥

महार्हेति। महार्हैरनर्घैरुपस्करैः गृहोपकरणैरन्वितम्। कामोपायैस्तदुद्दीपकैः सुरतबन्धादिलेख्यै रुपबृंहितम् ॥ १-३ ॥

गृहमिति। यथा यथोदितम् ॥ ४,५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

पूर्वं त्रिवक्रयाऽक्रूरेण च प्रार्थितो भगवान् तयोः गृहान्प्रत्येष्यामीत्युक्त्वा नित्युक्तम्। अधुना स्वं वचस्सत्यापयितुं भगवान् तद्गृहान्गत्वा तदिष्टं चकारेत्यनुवर्णयत्यष्टचत्वारिंशेन-**अथेत्यादिना**। अथ उद्धवागमनानन्तरं विज्ञाय आगमिष्यामीत्युक्तं त्रिवक्राक्रूरयोरभिप्रेतं चानुस्मृत्य। तत्र हेतुः सर्वान्तरात्मा अत एव सर्वदर्शनः युगपत् सर्वार्थसाक्षात्कर्ता तावत्कामेन तप्तायाः सैरन्ध्रयाः प्रियमिच्छन्, कर्तुमितिशेषः ॥ १ ॥

गृहमनुवर्णयति द्वाभ्याम्- महार्हैः अनर्घैः गृहोपकरणैराढ्यमन्वितं कामोपायैः क्रीडोपकरणैः उपबृंहितं समृद्धं वितानैः विपुलैः शयनासनैः शय्यादिभिः, वितानैः गृहोपरिगृहैः शयनादिभिः चेति वा। सुरभिभिर्धूपैर्दीपैः[1] स्रग्भिर्गन्धैश्च[2] मण्डितमलङ्कृतं तथा नानावर्णैः स्सुशोभनैः सुन्दरैश्च कामशास्त्रश्रुतालेख्यैः कामशास्त्रोपदिष्टैः रतिबन्धादिभिः आलेख्यैः रभिमण्डितम् ॥ २,३ ॥

**गृहमिति**। उक्तविधं गृहं प्रति आयान्तं कृष्णमवलोक्य सुजातस्सम्भ्रमो यस्यास्सा सैरन्ध्री सद्यः तदैवाऽऽसनात्समुत्थाय सखीभिस्सह यथा यथोचितम् उपसङ्गम्य अभिसमेत्य समीचीनैः आसनादिभिः आदिशब्दादर्घ्यादिभिश्च सभाजयामास पूजयामास ॥ ४ ॥

**अथेति**। अथोद्धव स्तया सैरन्ध्रया साधु यथा तथा अभिपूजितः तथा समर्पितमासनम् अभिमृश्य संस्पृश्य उर्व्यामिव न्यषीदत् उपविवेश, नत्वासने, भगवता साम्यमनुचितं मन्वानः केवलमुर्व्यामिव उपविष्टवानित्यर्थः । कृष्णस्तु लोकानां कामुकाना चरितानि चोष्टितानि अनुव्रतः अनुसरन् नूत्नं नवीनं कैश्चिदप्यनधिरूढं महाधनमनर्घं शयनं पर्यङ्कं विवेश ॥ ५ ॥

1 TW omit धूपैः 2 वीरराघवादृतः पाठः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तभक्तिरमालिङ्गगात्रः श्रीनारायणः सत्सन्नतवाञ्छितार्थसाधनार्थं अवतीर्ण इत्येतमर्थमभिप्रैति अस्मिन्नध्याये। तत्रादौ सैरन्ध्रया अभीष्टसाधनार्थं तद्गृहगमनं वक्ति -**अथेत्यादिना**। अथ कथान्तरारम्भः, सैरन्ध्रयाः गन्धकारिकायाः कृष्णागमनकामेन तृप्तायाः यच्छन् ददत् ॥ १ ॥

महार्हैः महतां योग्यैरुपस्करैः उपकरणैरुपेतं कामोपायैः कामभोगसाधनैः उपबृंहितं पूर्णं, एतानेव दर्शयति मुक्तेति। वितानम् उपरिपट्टिका ॥ २,३ ॥

येन प्रकारेणोपगमनं कार्यं यथोपसङ्गम्य, सदासनादिभिः ॥ ४ ॥

साधुतया उचिततयाऽभिमृश्य परिमृज्य स्पृष्ट्वेत्यर्थः । दान्तं गजदन्तरचितं महता धनेन विक्रीयते आपाद्यते चेति महाधनम् ॥ ५ ॥

सा मज्जनालेपदुकूलभूषण स्रग्गन्धताम्बूलसुधासवादिभिः।
प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ६ ॥

आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे।
प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ७ ॥

साऽनङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णो र्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्त मानन्दमूर्ति मजहा दतिदीर्घतापम् ॥ ८ ॥

सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम्। अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥९॥

आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया। रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥१०॥

---

1 TW ०लास्मित 2 MIV ०गैन०

**श्रीध० सेति।** प्रसाधितो योग्यतामापादित आत्मा देहो यया सा। सव्रीडं यल्लीलयोद्गतं स्मित, तद्येषु विभ्रमेषु, तद्युक्तैः ईक्षितैः उपलक्षिता ॥ ६ ॥

**आहूयेति।** अनुलेपार्पणादन्यत् तस्याः पुण्यं नास्तीति दर्शयितुं पुण्यलेशयेत्युक्तं न तु पुण्यस्याल्पत्वविवक्षया ॥ ७ ॥

**सेति।** कुचादीनां रुजो मृजन्ती जिघ्रन्ती च चरणम् ॥ ८ ॥

**सैवमिति।** एनं[1] काममेव प्राकृतदृष्ट्या अयाचत, न तु[2] गोप्य इव सा तन्निष्ठेति, दुर्भगा इत्युक्तम्। कृतार्थत्वेतु तस्या न सन्देहः ॥ ९,१० ॥

---

1 JVa. omit एन 2 JVa. च

**वीर० सेति।** सा सैरन्ध्री मज्जनादिभिः प्रसाधितो योग्यतामापादित आत्मा देहो यया [1-]तथाभूता[-1] सती सव्रीडं यत्, लीलया उद्गतं स्मितं तत् येषु विभ्रमेषु तद्युक्तैर्वीक्षितैः उपलक्षिता माधवमुपससार उपजगाम ॥ ६ ॥

**आहूयेति।** नवसङ्गमे विषये या ह्रीर्लज्जा तया विशङ्कितां सङ्गन्तुं लज्जमानामित्यर्थः। तां कान्ताम् आहूय कङ्कणेन भूषिते हस्ते गृहीत्वा शय्यामधिवेश्य विलेपार्पणमेव पुण्यलेशो यस्या स्तया रामया सह रेमे, अनुलेपार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं तद्विशेषणम् ॥ ७ ॥

सेति। जिघ्रन्ती सन्निहितत्वादनन्तचरणमिति विभक्तिपरिणामेन सम्बन्धः, अनन्तस्य भगवतश्चरणं जिघ्रन्ती तेन अनन्तचरणेन हेतुना अनङ्गेन कामेन तप्तयोः स्तनयोरुरसोऽक्ष्णोश्च रुजः पीडाः मृजन्ती अपनयन्ती कुचादिषु निधानेन[2] तद्गताः पीडाः निराकुर्वन्तीत्यर्थः। स्तनान्तरगतं कुचमध्यगतं यथा तथा कान्तं प्रियतमम् आनन्दघनं भगवन्तं दोर्भ्या मालिङ्ग्य अतिदीर्घं बहुकालानुवृत्तं तापमनङ्गताप मजहात् तत्याज ॥ ८ ॥

सैवमिति। सा सैरन्ध्री कैवल्यं प्रकृतिसम्बन्धराहित्यं तस्य नाथं मोक्षदं योगिभिरपि दुष्प्रापं तं भगवन्त मेवमित्थं केवलमङ्गरागार्पणेनैव हेतुभूतेन, अनुभूयेति शेषः । दुर्भगा भाग्यहीना इदं वक्ष्यमाणमयाचत। अहो इति खेदे। साक्षान्निरतिशय पुरुषार्थभूतमोक्षदं प्राप्यापि केवलं तुच्छमेवायाचत दुर्भगेति मुनिः खिद्यते[3] ॥ ९ ॥

याच्ञामेवाह- आहेति। हे अम्बुरुहेक्षण! तव सङ्गं त्यक्तुं नोत्सहे न प्रभवामि। हे प्रेष्ठ! मया सह कतिचिद्दिनानि रमस्व। अत इह मद्गृहे उष्यतां, त्वयेति शेषः । एवमाह ॥ १० ॥

---

1- -1 TW omit 2 TW धापने° 3 TW ०ति

विज० सुधाकल्पासवादिभिः प्रसाधितात्मा अलङ्कृतदेहा सव्रीडलीलादिभिर्युक्ता ॥ ६ ॥

रतौ निमित्तमाह - अनुलेपेति। अनुलेपार्पणेन हरेः गन्धसमर्पणेन लब्धः पुण्यलेशः पुण्यैकदेशो यया सा, तथा, तया ॥ ७ ॥

रुजः कामज्वरान् संसारज्वरान् वा, सा स्तनान्तरगतं वक्षःस्थलगतम् ॥ ८ - १० ॥

तस्यै कामवरं दत्वा मानयित्वा च मानदः।
सहोद्धवेन सर्वेश स्स्वधामा[1-]ऽगमद्[-1]र्द्धिमत् ॥ ११ ॥

दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम्।
[2-]याऽवृणीत[-2] मनोग्राह्य मसत्त्वा त्[3]कुमतिर्हसौ ॥ १२ ॥

अक्रूरभवनं कृष्ण स्सहरामोद्धवः प्रभुः।
किञ्चिच्चिकीर्षयन्[4] प्रागादक्रूरप्रियकाम्यया॥ १३ ॥

सा तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान्[5]।
प्रत्युत्थाय प्रमुदितः परिष्वज्याभ्यनन्दत ॥ १४ ॥

★ ननाम कृष्णं रामं च स तै[6]रप्यभिवादितः।
पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १५ ॥

---

1 - - 1 G.J. °गमदर्चितम्; K.T.W ° गात्समृद्धिमत् 2 - - 2 K.T.W. या वृणीते 3. G.J.K.T.W. मनीष्यसौ 4. M.Ma. कीर्षन् स°; T.W. ०कीर्षया 5. J. ०भिनन्द्य च 6 T.W. ताभ्यामभि° ★ This verse in not found in M.Ma. Edns

**श्रीध०** **तस्या** इति। काम एव वरस्तं दत्त्वा। मानयित्वा चालङ्कारादिदानैः ॥ ११ ॥

**दुराराध्यमिति।** मनोग्राह्यं विषयसुखम्। असत्त्या तुच्छत्वात् ॥ १२ ॥

**अक्रूरेति।** किञ्चिच्चिकीर्षयन्।[1] हस्तिनपुरप्रस्थानं[2] कारयितुमिच्छन्नित्यर्थः। अक्रूरप्रियकाम्यया च ॥ १३ ॥

**स** इति। आरात् दूरतएव[3] च ॥ १४, १५, ॥

---

1. J.Va ०ना 2. J.Va ०स्थापनं° 3. J.Va दूरादेव।

**वीर०** तस्यै इत्थं याचमानायै सैरन्ध्र्यै मानयित्वा मधुरभाषणादिभिस्सम्मान्य काम एव वरस्तं दत्त्वा याचितं सफलीकर्तुं पुनरेष्यामीत्युक्त्वेत्यर्थः सर्वेशः स्वोपदिष्टहितग्रहणोपयुक्ततन्मनोनियमनशक्तः मानदः सम्मानाचरणशीलः अतस्तस्या एवं सम्मानं कामवरदानं च युक्तमिति भावः। उद्धवेन सह सर्वसम्पत्समृद्धं स्वगृहमाजगाम ॥ ११ ॥

दुर्भगेत्युक्तं तस्या दौर्भाग्यमेव स्पष्टयति। **दुराराध्यमिति।** दुराराध्यं भक्तिप्रपत्तिव्यतिरिक्तोपायेन दुष्प्रसाद्यं सर्वेश्वरो ब्रह्मा तस्यापीश्वरं भगवन्तं समाराध्य केवलमङ्गरागदानेनैव प्रसाद्य या सैरन्ध्री मनोग्राह्यं शब्दादिविषयसुखम् असत्त्वा-दसाधुत्वात्तुच्छत्वात्, तद्यतोऽयाचत, ततोऽसौ सैरन्ध्री कुमनीषी कुबुद्धिर्मूर्खा दुर्भगेति भावः ॥ १२ ॥

एवं सैरन्ध्रीमनोरथं सफली चकारेत्युक्तम्। अथाऽक्रूराभिमतं सफलीकर्तुं तद्गृहं जगामेत्याह - **अक्रूरभवनमिति।** किञ्चित् हस्तिनापुरप्रस्थानं कारायितुमिच्छन्[1] तावत् रामोद्धवाभ्यां सहितो भगवान् कृष्णः अक्रूरस्य प्रियं कर्तुमिच्छया तस्य भवनं प्रति प्रागात् ॥ १२ ॥

**स** इति। सोऽक्रूरः तावन्नरवरेभ्योऽपि श्रेष्ठान् रामकृष्णोद्धवान् आराद्दूरत एव उद्वीक्ष्य प्रप्युत्थाय नितरां मुदितः परिष्वज्य अभ्यनन्दत अभिनन्दितवान् । १४ ॥

**ननामेति।** सोऽक्रूरः कृष्णं रामञ्च ननाम ववन्दे। चकारादुद्धवं च, तथा तैः रामकृष्णोद्धवैरप्यभिवादितः, कृतः आसनपरिग्रहो यैस्ता न्विधिवत् पूजयामास ॥ १५ ॥

---

1 T.W. मिच्छया

विज० मनोग्राह्यं शब्दाद्यविषयं मनसाप्यग्राह्यं असवाद्रागदुष्टत्वात्, तत्त्वनिश्चयाभावाद्वा। अत एव कुमतिः कुत्सितशब्दादौ मतिः यस्या स्सा तथा ॥ ११ १२ ॥

मद्गृहमागन्तव्यमिति प्रागुक्तं सत्यं कर्तुम् अक्रूरगृहगमनं कृष्णस्य वक्ति- अक्रूरेति। किञ्चित्[1] पाण्डववृत्तान्तज्ञानाय अक्रूरप्रेषणकार्यं कर्तुमिच्छन् ॥ १३ ॥

आरात् दूरात् तान्वीक्ष्य ॥ १४, १५ ॥

---

1 Ma किञ्च; Mb किं

पादावनेजनीरापो धारयञ्छिरसा नृप।
अर्हणेनाम्बरैर्दिव्यै र्गन्धस्रग्भूषणोत्तमैः ॥ १६ ॥

अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन्।
प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १७ ॥

दिष्ट्या पापो हतः कंस स्सानुगो[1-] वामिदं[-1] कुलम्।
भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १८ ॥

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ।
भवद्भ्यां न विना किञ्चि त्परमस्ति न चापरम् ॥ १९ ॥

आत्मसृष्टमिदं विश्व मन्वाविश्य[2] स्वशक्तिभिः।
ईयसे[3] बहुधा ब्रह्मन्[4] श्रुतिप्रत्यक्ष[5]गोचरः ॥ २० ॥

---

1 - - 1 M.Ma. ०गः पावितं 2 M.Ma वे० 3. G.J M Ma MI V °ते 4 G.J ०त० 5 G.J.MI.V. ०रम्।

श्रीध० पादेति।आ अप इति च्छेदः, उदकानि आ सर्वतो धारयन्नित्यन्वयः ॥ १६,१७ ॥

दिष्ट्येति। वां युवयो रिदं कुलमुद्धृतं समेधितं च ॥ १८ ॥

वामिदं कुलमित्यादि व्यवहारदृष्ट्योक्त्वा परमार्थमाह युवामिति। जगन्मयौ युवाम्। कुतः? जगद्धेतू। तदपि कुतः? प्रधानपुरुषौ तदात्मकौ। अतो भवद्भ्यां विना परं कारण मपरं कार्यं च नास्तीति ॥ १९ ॥

ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यतेऽत आह-आत्मसृष्टमिति। हे ब्रह्मन्। परमेश्वर! ब्रह्म इति वा[1] पाठः। अजादिभिः[2] स्वशक्तिभिः आत्मनैव सृष्टमिदं विश्वमन्वाविश्य कारणत्वा दननुप्रविष्टोऽप्यनुप्रविश्येव[3] स्थितः श्रुतिप्रत्यक्षगोचरं यथा भवति तथा, बहुधा भवानेव प्रतीयते ॥ २० ॥

1 M.I.V. omit वा 2 J.Va रजआदिस्व° 3 J Va ०त

**वीर० पादेति**। हे नृप! सोऽक्रूरः पादौ अवनिज्येते प्रक्ष्याल्येते याभिस्तथा ताः, आ अप इति च्छेदः विशेषणस्य द्वितीयान्तत्वात् । आ सर्वतः शिरसा धारयन् अर्हणेन अर्घ्यादिना अम्बरादिभिश्च अर्चित्वा दिव्यैरिति पूर्वोक्त रान्वयि, अङ्कगतौ उत्सङ्गे निधापितौ पादौ शिरसा प्रणम्य मृजन्, स्वोत्तरीयेणेति शेषः। यद्वा संवहन् प्रश्रयेण विनयेन नम्रः कृष्णरामौ प्रत्यभाषत ॥ १६,१७ ॥

भाषितमेवाह- **दिष्ट्येत्यादिना**। दिष्ट्या अयमानन्द इत्यर्थः किम्? सानुगः सानुचरः पापात्मा कंसो हतः। वां युवयोरिदं कुलं दुरन्तादपारात्कृच्छ्रात् कंसकृताद्दुः खादुद्धृतं समेधितं सम्यग्विवर्धितं चेति ॥ १८ ॥

युक्तं चैतद्युवयो रित्याह - **युवामिति**। प्रधानपुरुषौ श्रेष्ठपुरुषौ पुरुषोत्तमावित्यर्थः। जगतो हेतू कारणभूतौ अत एव जगन्मयौ स्वार्थे मयट् जगद्रूपौ। प्रधानपुरुषाविति विशेषण व्यावर्त्यं दर्शयति- भवद्भ्यां विना परमुत्कृष्टं किञ्चिदपि नास्तीति भवन्तावेव सर्वोत्कृष्टावित्यर्थः। जगन्मयावित्यस्य व्यावर्त्यमाह - न चापरमिति। अपरमन्य दतदात्मकं नास्तीत्यर्थः। यद्वा, प्रधानपुरुषावित्यनेन प्रकृतिपुरुषशरीरकत्वं विवक्षितं, " यस्याऽव्यक्तं शरीरं यस्याक्षरं शरीरम्"(सुबा. उ. 7-1) इति प्रकृतिपुरुषयोः परमात्मशरीरत्वश्रवणात्, शरीरवाचिशब्दानां अपृथक्सिद्धविशेषणवाचिनां गवादिशब्दानां व्यक्तिपर्यन्तबोधकत्वा दात्मपर्यन्तबोधकत्वात् तत्सामानाधिकरण्योपपत्तेः । जगद्धेतू इत्यनेन प्रकृतिपुरुषशरीरकत्ववेषेण जगदुपादानत्वं, विशेष्याकारेण तन्निमित्तत्वं चाऽभिप्रेतम्। यथा विशिष्टाकारेणोपादानत्व मत एव कार्यस्य कारणादभिन्नत्त्वात् त्वद्व्यातिरिक्तं नास्तीत्यभिप्रायेणोक्तं जगन्मयौ........... न चापरमिति। जगन्मयावित्यन्वयमुखेन जगत्तादात्म्योक्तिः, न चापरमिति व्यतिरेकमुखेनेति विवेकः। न चास्ति परमित्यनेन निमित्तकारणान्तरव्युदासः। युवयोः जगदुदयविभवलयैककारणत्वाद्यथात्मसङ्कल्पं कंसादिसंहार-स्स्वकुलोद्धारश्चोचित एवेति भावः ॥ १९ ॥

ननु लोके विविधकार्यवर्गाणां विविधोपादानकत्वदर्शनात् कथं जगतोऽस्मदेककारणत्वम्? कथं वा एकस्य ममाऽनेक-देवमनुष्यादिपदार्थात्मकत्वम्? अत आह - **आत्मसृष्टमिति**। स्वशक्तिभिः स्वविशेषणभूतैः प्रकृतिपुरुषकालैः आत्मसृष्टम् आत्मनः प्रकृतिपुरुषशरीरकात् स्वस्मादुपादानभूता त्सृष्टम्, आत्मना प्रकृतिपुरुषयोः नियन्त्रा स्वेन सृष्टमित्यर्थद्वयमत्र तन्त्रेण विवक्षितम्। अनेनोपादानान्तरस्य निमित्तान्तरस्य च व्यावृत्तिः। इदं नामरूपविभागविभक्तं चिदचिदात्मकविश्व मन्वाविश्य नियन्तृतयाऽन्तरात्मतया चानुप्रविश्य हे ब्रह्मन्! बहुधा ईयसे प्रतीयसे, ईयते इति पाठे भवानित्यध्याहारः। स्वात्मन्याधारभूते स्वेनैव कर्त्रा स्वात्मानं प्रकृतिपुरुषशरीरकं जगद्रूपेण परिणमय्य तत्तन्नियन्तृतयाऽऽत्मत्वेन चानुप्रविश्य स्वपर्यन्तदेवमनुष्यादि शब्दबुद्धिविषयतया नाना प्रतीयसे इत्यर्थः। अनेन कृत्स्नं विश्वं प्रति परमपुरुषस्यैकस्यैव प्रकृतिपुरुषकालशरीरकत्ववेषेणोपादानत्वं,

स्वस्वरूपेण निमित्तत्वं तदुभयकारणत्वोपयुक्त सर्वज्ञत्वसर्वशक्तित्वादि गुणयुक्तत्वं देवादिबुद्धिशब्दयोः आत्मभूततत्पर्यन्तत्वं चोक्तं भवति। ननु लौकिकानां देवादिबुद्धिशब्दयोः देवादिमात्रविषयत्वेनानुभवसिद्धत्वात् कथं तयोः मत्पर्यन्तता, विश्वस्य मदेकोभयकारणत्वे च किं प्रमाण मित्यतः तं विशिनष्टि- श्रुतिप्रत्यक्षगोचर इति। श्रुतिप्रत्यक्षयोः गोचरो विषयः। "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च कक्षीवानृषिरस्मि विप्रः" इति श्रुतिप्रसिद्धानां साक्षात्कृतब्रह्मपर्यन्त स्वात्मयाथत्म्यानां तत्पर्यन्तत्वेन गृहीत चिदचिद्वाचिशब्दशक्तीनां वामदेवादीनां प्रत्यक्षस्य "अयमात्मा ब्रह्म" (माण्डू. उ. 2. ) "तत्त्वमसि" (छान्दो. उ. 6-8-7) "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" (छान्दो. उ. 3-14-7) इत्यादिश्रुतीनां चोक्तविधत्वेन विषय इत्यर्थः । नहि देहात्मभ्रमस्वतन्त्रात्मभ्रमयुक्तलौकिकानुभवमात्रेण देवादिबुद्धिशब्दानां तत्पर्यन्तत्वहानिः इति भावः। श्रुतिप्रत्यक्षगोचरमिति पाठे क्रियाविशेषणम् ॥ २० ॥

विज० पादावनेजनीः पादप्रक्षालिनीः आ अप इति पदच्छेदः। आ इत्यास्वाद्य अपो धारयन्, अर्हणेन योग्यपूजासाधनेन ॥ १६ ॥

मृजन् परिमृजन् मृदु पीडयन् इत्यर्थः ॥ १७, १८ ॥

जगन्मयौ जगद्व्यापिनौ। एतदेव विशिनष्टि- भवद्व्यामिति ॥ १९ ॥

अन्वावेश्य पदार्थानामणुत्वमहत्त्वानुकूलतया प्रविश्य स्वशक्तिभिः इच्छादिस्वरूपशक्तिभिः श्रुतेः प्रत्यक्षस्य च विषयः " अनृतेन हि प्रत्यूढाः, वाचारम्भणं विकारः" इत्यादिश्रुतिः। अयं घटोऽयं पट इत्यादि निर्दोषार्थेन्द्रिय सन्निकर्ष लक्षणं प्रत्यक्षम् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। "ऋतस्य तन्तुं विततं विवृत्य तदपश्यत्" इत्यादिश्रुतेः। ब्रह्मादि-ज्ञानि प्रत्यक्षस्य च विषयो वा ॥ २० ॥

**यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना।**
**एवं भवान्केवल आत्मयोनिष्वात्माऽऽत्मतन्त्रो बहुधा विभाति॥ २१ ॥**

**सृजस्यथो लुम्पसि[1] पासि विश्वं रजस्तमस्सत्त्वगुणै[2] स्स्वशक्तिभिः।**
**न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २२ ॥**

**देहाद्युपाधेरनिरूपितत्वा द्भवो न[3] साक्षान्न[4] चिदात्मन स्स्यात्।**
**अतो न बन्धस्तव नैव मोक्ष स्स्यातां निकामं[5] त्वयि नोऽविवेकः ॥ २३ ॥**

**त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः।**
**बाध्येत पाषण्डपथैरसद्भि[6] स्तदा भवान्सत्त्वगुणं बिभर्ति ॥ २४ ॥**

स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्ण स्स्वांशेन भारमपनेतु मिहाऽसि भूमेः।
अक्षौहिणीशतवधेन सुरेतराणां[7] राज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २५॥

---

1 M.Ma त्वद्गुण 2. M.Ma.M.V नैव 3 M.Ma हि, M.V. ०ऽपि 4 G.J.M.V. ०न भिदा; M.Ma. ०न भिदा° T.W. ०च तदा° 5 G.J.M.V. ०मस्त्वयि 6 G.J.M.Ma ०ख° 7 G.J. ०रांश

**श्रीध०** एकस्यैव बहुधा प्रतीतौ[1] दृष्टान्तमाह[2]- **यथेति**। योनिषु स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेषु चराचरेषु भूतेषु[3] यथा महीप्रमुखानि कारणान्येव नाना भान्ति। आत्मयोनिषु स्वकारणकेषु भूतभौतिकेषु। जीवोऽपि नरमृगादिशरीरेषु बाल्युवाद्यवस्थासु तथा तथा प्रतीयते इति तद्व्यवच्छेदार्थमात्मतन्त्रग्रहणम् ॥ २१ ॥

ननु सृष्ट्यादिकर्तृत्वेन सगुणत्वेन[4] च मम किं जीववद्बन्ध उक्तः, न हि नहीत्याह - **सृजसीति**। तद्गुणकर्मभि र्वा तैर्गुणैः कर्मभिर्वेत्यर्थः। यतः क्व च कदाचिदपि बन्धहेतुरविद्या तव नैवास्ति। कुत इत्यत आह - ज्ञानात्मन इति। मायायाः आश्रयाऽनावारकत्वादिति[5] भावः ॥ २२ ॥

किञ्च आस्तां तावत् तव[6] बन्धशङ्का, यतः अविद्योपाधेर्जीवात्मनोऽपि न वस्तुतो बन्धोऽस्तीत्याह- **देहाद्युपाधेरिति**। भवो जन्म तन्मूला भिदा च साक्षात् स्वरूपतो न स्यादिति। ननु मम बन्धाभावं वदता त्वया किं मोक्षोऽङ्गीकृतः[7]? ओमिति चे त्तर्हि बन्धाभावे मोक्षासम्भवादापन्नो बन्धोऽपीत्याशङ्क्याह- अत इति। यतो नाऽविद्या अतो न बन्धो मोक्षश्च। एवमुभौ न स्यातामित्यर्थः। ननु उलूखले मां बद्धं श्रुतवान्। यमुनाह्रदे तु[8] दृष्टवानसि। अतः कथमुभयं नास्त्यत आह। निकाम इति। स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव, परमेवम्भूत इति। यद्वा नोऽविवेकत[9] एव तवोभौ स्यातामिति ॥ २३ ॥

ननु तर्हि ममावताराः तच्चरित्राणि च शुक्तिरजतवदविद्याकल्पितान्येव किम्? नहि, नहि, इयं तु तव लीलेत्याह द्वयेन - **त्वयोदित** इति ॥ २४ ॥

**स** इति। सुरेतरांशा ये राजानः तेषामक्षौहिणीशतानां वधेन भूमेः भारमपनेतुं स्वांशेन रामेण सहाऽवतीर्णोऽसीति[10] ॥ २५॥

---

1. J.Va. ०ति° 2 J.Va. सदृष्टान्त०° 3 J.Va. omit भूतेषु 4 J.Va. omit सगुणत्वेन 5 J.Va ०च० 6 Va. omit तव 7 J.Va. क्रियते 8 J.Va. omit तु 9 J.Va. ०क एव 10 J.Va. omit इति।

**वीर०** उक्तमेवोपादानकारणत्वं कारणस्य तदवस्थायामेकत्वेनावस्थितस्याऽपि कार्यावस्थायां नानात्वेन भानं च सदृष्टान्तमुपपादयति - **यथा हीति**। दृष्टान्ते योनिष्वित्यस्य स्वेत्यादिः, दार्ष्टान्तिके आत्मयोनिष्वित्यात्मशब्दप्रयोगात्। स्वे मह्यादयो योनयः उपादानकारणानि येषां तेषु चराचरात्मकेषु भूतेषु व्यष्टिभूतेषु मह्यादयः समष्टयः नाना भान्ति, कारणानि समष्टिभूतान्येवैकैकशोऽवस्थितान्यनेककार्यात्मना भान्तीति दृष्टान्तार्थः। एवं भवान् केवलः एकरूपः अविभक्तनामरूपप्रकृतिपुरुषकालशरीरकः आत्मा योनिः कारणं येषां तेषु व्यष्टिसमष्ट्यात्मकसर्वपदार्थेषु बहुधा विभाति। योनिषु आत्मयोनिषु इत्युभयत्र सप्तमीनिर्देशस्याऽयमभिप्रायः। अवस्थाभेदमात्रमेव, न तु कार्यं नाम कारणादतिरिक्तं वस्त्वस्तीति कार्यावस्थादशायां कारणमेव तत्तत्कार्याख्यावस्थाविशेषविशिष्टतया बहुधा प्रतिभातीति। न केवलं तव कारणतयैव कार्यतायां बहुधा भानम्। अपि त्वन्तरात्मतयाऽपीत्यभिप्रायेण विशिनष्टि - आत्मेति। अयं भावः -यथैकस्य जीवस्य क्रमेण देवमनुष्याद्यनेकशरीर विशिष्टत्वाकारेण बहुधा प्रतीतिः, यथा च सौभयदि र्युगपदनेकशरीरविशिष्टत्ववेषेण, तथा भवतः कृत्स्नचिदचिदन्तरात्मत्वात् तत्तच्चिदचिद्विशिष्टताकारेण बहुधा भानम् - इति। ननु जीवदृष्टान्तेन यद्येकस्यानेकधा तत्तच्छरीरविशिष्टताकारेण भानम्, तर्हि तद्वदेव कर्मवश्यतापत्ति रित्यतो विशिनष्टि -आत्मतन्त्र इति। स्वतन्त्रः अकर्मवश्य इत्यर्थः। न ह्येकस्यानेकधाऽवस्थानमेव कर्मवश्यत्वापादकम्, अपि तु[1] सुखदुःखादि भोक्तृत्वम्। तत्तु न तवास्ति। तथा च श्रूयते "अनश्नन्नन्यो अभिचाकशीति" (मुण्ड. उ. 3-1-1) इति भावः। अनेन जीववैलक्षण्यं सूचितम् ॥ २१ ॥

तदेवोपपादयति- **सृजसीति**। स्वशक्तिभिः कार्योपयुक्तस्वापृथक्सिद्धविशेषणात्मकैः रजआद्याख्यैः प्रकृतिगुणै र्विश्वं सृजसि, लुम्पसि हरसि, पासि रक्षसि, रजःप्रचुरचतुर्मुखाख्यजीवशरीरकत्ववेषेण सृजसि, तमःप्रचुररुद्राख्यजीवशरीरकत्ववेषेण लुम्पसि, सत्त्वप्रवर्तकस्वावतारेण पासीत्यर्थः। यद्यप्येव मथापि तैर्गुणैः कर्मभिः रजआदिगुणमूलकसृष्ट्यादिव्यापारैश्च न बध्यसे। गुणपारवश्याभावात्सृष्ट्यादिकर्मणां पुण्यापुण्यमूलकत्वाभावाच्च सुखदुःखादिभोक्तृत्वापादककर्मबन्धो नास्तीत्यर्थः। बन्धाभावहेतूपन्यासेन बन्धहेतुं निराकुर्वन् विशिनष्टि - ज्ञानात्मन इति। ज्ञानात्मनः स्वस्वरूपेणावस्थितस्य स्वत एव निरस्तनिखिलदोषस्य समस्तकल्याणगुणस्य गुणपारवश्यपुण्या[2]ऽपुण्यरूपकर्मान्वयरहितस्य तव बन्धहेत्वभावात्, प्रत्युत बन्धप्रतिभट धर्मयोगाच्च न बन्धसङ्गहेतुसम्भावनापीत्यर्थः। जीवस्तूक्तविधत्वाद्विपरीत इति भावः॥ २२ ॥

तदेवं स्वेन रूपेणावस्थितस्य जीववैलक्षण्यापादकगुणकर्मान्वयाभावः तत एव बन्धाभावश्चोक्तः। अथ जीवशरीरकस्यापि जीवगतबन्धमोक्षाद्यस्पर्शमाह - **देहाद्युपाधेरिति**। देवमनुष्यादि देहादिरूपोपाधेरनिरूपितत्वात् भोगार्थतया निरूपितत्वाभावात् [3]चिदात्मनः जीवान्तरात्मनः तव [4]भवः संसारः साक्षान्नास्ति शरीरभूतजीवस्येवेति भावः । यथा नृसिंहः श्वेत इत्यत्र श्वैत्यं देहगतम्, न त्वात्मगतम्, तद्वत्। भिदात्मनस्स्यादिति पाठान्तरम्। तदा भिदात्मन इत्यनेन दृष्टान्तोऽभिप्रेतः, यथा शरीरगता देवत्वमनुष्यत्वादिभिदा, न तदात्मनस्साक्षा त्स्यात् अपि तु शरीरद्वारा। तथा जीवगतो भवोऽपि न साक्षाद्भवत स्स्यात्। अपि तु जीवद्वारा, स्वरूपतस्तु भवान्वयरहित एव भवानित्यर्थः। यद्वा आत्मन इति हेतुगर्भमिदं विशेषणम्। आत्मनश्चिदचिदन्तरात्मत्वात्तव न शरीरभूतचिदचिद्गता भिदाऽस्ति। नहि शरीरगतबाल्यादिभिदा शरीरिणि प्रसजतीति भावः।

ननु शरीरगतधर्मान्वयरहितेऽपि जीवे इव भवान्वयो दुर्वार इत्यत आह - देहाद्युपाधेरनिरूपितत्वा द्भवो नेति। जीवस्य कर्ममूलक सुखदुःखादिभोगार्थतया करणकलेबराद्युपाधे र्निरूपितत्वा द्भवोऽस्ति, तव तु क्रीडार्थतयेति न भवोऽस्तीति भावः। यतो न भवोऽस्ति अतः बन्धः भवनिदानभूतः कर्मबन्धः नास्ति, तस्मान्मोक्षश्च नास्ति बन्धाभावात्तदवधिकमोक्षश्च नास्ति, अतस्तावुभौ न स्यातामिति नञावृत्त्या वाक्यभेदेनान्वयः। अतो बन्धो मोक्षश्च न स्यातामिति अन्वये तु नञन्तरवैयर्थ्यम्। प्रत्येकान्वये तु स्यातामिति द्विवचनान्वयानुपपत्तिः. यद्वा नञ्भ्यां बन्धमोक्षयोः प्रत्येकमेव निषेध्यत्वावगते र्नञोश्च प्रत्येकमेव क्रियान्वयित्वावगमस्वारस्याच्च स्यातामिति द्विवचन मतन्त्रं स्यादित्यर्थः। नन्वहमपि रामकृष्णादिमनुष्यादिरूपभाक्। अतः कर्मवश्य इत्यत आह - निकामस्त्वयीति। सः रामकृष्णादिरूपदेहाद्युपाधिः। काम्यत इति कामः केवलं स्वेच्छामूलको न तु कर्ममूलक इत्यर्थः। तर्हि तथा सर्वैः किं नावसीयते इत्यत आह - नो विवेक इति। नोऽस्माकम्[5] अविवेकः जीवेश्वरयाथात्म्यविवेकाभावप्रयुक्तं[6] त्वद्देहाद्युपाधेः कर्ममूलत्वोद्भावनमित्यर्थः ॥ २३ ॥

ननु देहाद्युपाधेः कर्ममूलत्वम् अत एव तत्फलभूत[7]सुखदुःखाद्यखिलभोगार्थत्वं च जीवेषु निश्चितम्। मद्देहाद्युपाधे र्मदिच्छैकमूलत्वे किं तत्प्रयोजन मित्यत आह त्वयोदित इति द्वाभ्याम्। जगतो हितार्थं[8] यस्त्वयोपदिष्टः पुराणो वेदमार्गः त्वन्निश्वसितभूतवेदबोधितो धर्ममार्गः। स यथा असद्भिः समीहितासाधनैः प्रत्युतानर्थावहैः पाषण्डपथैः वेदपथविरोधिभिः बाध्येत, तदा भवान् सत्त्वगुणं शुद्धसत्त्वमयं विग्रहं बिभर्ति। "यदा यदा हि धर्मस्य" (भ. गी. 4-7) "परित्राणाय साधूनाम्" (भ.गी. 4-8) इति श्लोकद्वयोक्तप्रयोजनार्थमवतरसि, न तु कर्मफलभोगार्थं जीववज्जन्ममरणादिमच्छरीरद्वारा जायस इति भावः ॥ २४ ॥

स इति। यो रामादिरूपेणावतीर्णः स त्वं हे प्रभो! अधुना इह लोके वसुदेवगृहे स्वांशेन बलरामेण सह सङ्कल्परूपेण ज्ञानेन वा अवतीर्णोऽसि, किं कर्तुम्? सुरेतराणामसुरप्रकृतीनां राज्ञां कंसादीनां अक्षौहिणीनां यानि शतानि तेषां वधेन भूमेर्भारमपनेतुं निराकर्तुं अमुष्य यादवकुलस्य[9] यशो वितन्वन् "लक्षणहेत्वोः" इति शत्रादेशः, विस्तारयितु श्चेत्यर्थः ॥ २५ ॥

---

1 K. omits भावः 2 K. पुण्यपाप 3 T.W. त॰ 4 K. भवतः 5 T.W. कमिति वि॰ 6 T.W. क्त 7 T.W मूल 8 T.W. ॰र्थत्वं 9 T.W. omit कुल

विज॰ इममेवार्थं सदृष्टान्तं दर्शयति यथेति। योनिषु भोगस्थानेषु, उत्पत्तिमत्त्वात् भूतशब्दवाच्येषु चराचरेषु पूर्वादृष्टवशात् गमागमेषु वस्तुषु पृथिव्यादयो नाना शुक्लनीलपीताद्यात्मना भान्ति। आत्मा स्वयं योनिः कारणं येषां तानि तथा तेषु, आत्मा परमात्मा केवल आत्मतन्त्र इति विशेषणद्वयेन महान्विशेषोऽस्ति महदादिभ्य इति सूचयति ॥ २१ ॥

विश्वस्यात्मयोनित्वं स्पष्टयति - [1-]सृजसीति। केवलत्वं स्पष्टयति[-1] नेति। गुणैः सत्त्वादिभिः उत्पत्तिहेत्वभावादिति युक्तमिति भावेनाह - त इति। शून्यस्त्वमिति, नेत्याह ज्ञानात्मन इति। क्व च कस्मिंश्चिद्देशे काले च ॥२२॥

"जनितोऽत विष्णुः" इति जन्मप्रतीतेः, "जातस्य हि ध्रुवो मृत्युः" (भ. गी. 2-27) इति मरणस्य अवश्यम्भवात् कथं नैव हेतुरित्युच्यते इति तत्राह देहेति। देहादिरेवोपाधिः देहाद्युपाधिः तस्योत्पत्तौ कारणभूतगुणकर्मणामनिरूपितत्वा दसम्भावितत्वात् साक्षाद्भवः शुक्रशोणितसम्पर्कलक्षणं जन्म न स्यात्। हि यस्मात् अतस्तव देहबन्धो न स्यात्, देहवियोगलक्षणो मोक्षश्च नैव स्यात्, यावदन्यत्र स्याताम्, अतो नो निकामं यावद्योग्यं त्वयि विवेकः तत्त्वनिश्चायकं ज्ञानं स्यादित्यन्वयः ॥२३॥

साक्षाद्भवो नास्ति चेत् तर्हि कीदृशोऽस्तीति तत्राह त्वयेति। त्वयोदितः प्रकाशितः। अयं भवो देहयोगलक्षणो जगतो हिताय ज्ञानलक्षणाय भवति, कथमिति तत्राह - यदेति ॥ २४ ॥

एतदेव विशिनष्टि - स त्वमिति। अमुष्य कुलस्य, यदूपपदस्य ॥ २५ ॥

---

1 - - 1 Ma omit

अद्येश! नो वसतयः खलु भूरिभागा[1] यस्सर्वदेव पितृभूतनृदेवमूर्तिः।
यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २६ ॥

कः पण्डितस्त्वदपरं शरणं समीया द्भक्तप्रियादृत गिरस्सुहृदः कृतज्ञात्।
सर्वान्ददाति [2-]सुहृदो[-2] भजतोऽभिकामा नात्मानम प्युपचयापचयौ न यस्य ॥ २७ ॥

दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरै[3]रपि दुरापगति स्सुरेशैः।
छिन्ध्याशु नस्सुतकलत्रधनाप्तगेहदेहादि[4]मोहरशनां भवदीयमायाम् ॥ २८ ॥

[5-]श्रीशुक उवाच[-5]

इत्यर्चितस्संस्तुतश्च भक्तेन भगवान्हरिः।
अक्रूरं सस्मितं प्राह गीर्भिस्सम्मोहयन्निव ॥ २९ ॥

[6-]श्रीभगवानुवाच[-6]

त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा।
वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥ ३० ॥

---

1 KTW भाग्या 2- -2 KTW हि भवान्म° 3 MIV ०गी° 4 M.Ma ०भि 5- -5 JM Ma. omit 6- -6 TW omit

श्रीध० अत एवम्भूतस्य तवागमनेन कृतार्थोऽस्मीत्याह श्लोकत्रयेण[1] - अद्येति। हे ईश! अद्य नो वसतयो गृहास्तपोवनादपि बहुपुण्याः । कुतः? या वसतीस्त्वं साक्षात्प्रविष्टः। कथम्भूतः? यस्य तव पादशौ[2]चसलिलमेव गङ्गा त्रिजगत्पुनाति। यश्च त्वं पञ्चयज्ञदेवतामूर्तिः, स त्वं जगद्गुरुरिति ॥ २६ ॥

स्वमश्लोकस्य परिपूर्ति इति तुष्यन्नाह- क इति। ऋतगिरः सत्यवाचः। त्वत्तोऽपरं शरणं कः पण्डितः[3] समीया इच्छेत्। यतो भवान् भजतः सर्वानभितः कामांश्च ददात्यात्मानमपीति ॥ २७ ॥

दिष्ट्येति। नोऽविवेकिनाम्। तत्रापीहं गृह एव॥ २८,२९ ॥

त्वमिति। वो युष्माकं प्रजाः पुत्रा हि वयमिति ॥ ३० ॥

---

1 J Va omit श्लोक° 2 J Va omit शौच 3 J Va omit पण्डितः

वीर० इत्थं भगवन्तं स्तुत्वा सम्प्रति तदागमनेनात्मतदनुबन्धिनां कृतार्थतामाविष्करोति - अद्येति। हे ईश! अधुना नोऽस्माकं वसतयः गुहाः भूरिभाग्याः[1] बहुभाग्यवत्यः, तत्र हेतुं वदन् भगवन्तं वसतीश्च विशिनष्टि - हे अधोक्षज! जगद्गुरुस्त्वं याः वसतीः प्रविष्टः। कथम्भूतः? यो भवान् सर्वे देवा ब्रह्मरुद्रेन्द्राश्च पितरश्च भूतानि च नृदेवाश्च मूर्तिश्शरीरं यस्य तथाभूतः। "स आत्मा अङ्गान्यन्या देवताः" (तैति:उ 1-5-1) इत्यादि श्रुत्यर्थोऽत्रानुसंहितः। यस्य च तव पादयोः शौचेन[2] क्षालनेन पवित्रं सलिलं गङ्गात्मकं कर्तृ, त्रिजगत् त्रिलोकीं पुनाति। सर्वदेवपितृभूतनृदेवमूर्तिरिति देवादीनां शरीरत्वकथनेन पारतन्त्र्यमुक्तम् ॥ २६ ॥

अत एव "को ह्येवान्या त्कः प्राण्या यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति" इति श्रुत्युक्तरीत्या काममोक्षप्रदः तदुपायभूतश्च त्वमेवेति वक्तुमुपायत्वोपयुक्तगुणैस्त्वामेव विशिंषन् तदन्यं शरणमिच्छुर्मूर्ख इत्याह - क इति। पण्डित इत्यस्य चेदिति शेषः। पण्डितश्चेत्को वा त्वत् त्वत्तोऽन्यं शरणं समीयात् व्रजेत् समीहितसाधनत्वेन अध्यवस्येदित्यर्थः। योऽन्यः शरणं समीयात् स मूर्ख इति भावः । कथम्भूतात्? भक्तप्रियात् भक्ताः प्रिया यस्य, भक्तानां प्रियश्च तस्मात् "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" (भ.गी. 7-17) इति त्वदुक्तेरिति भावः । तत्र बहुव्रीहिपक्षे भक्तानां प्रीतिविषयत्वोक्त्या तत्प्रतिपक्षिक्षपणपूर्वकं तत्सुखापादकत्वलाभा च्छरण्यत्वोपयुक्तगुणवत्त्वमभिप्रेतम्। तत्पुरुषपक्षे तु भक्तप्रीतिविषयतोक्त्या प्राप्यत्वोपयुक्तगुणवत्त्वम्। ऋता सत्या गीर्वाक् यस्य तस्मात् "पार्थ नैवेह नाऽमुत्र विनाशस्तस्य विद्यते" (भ:गी: 6-40) "अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन" इति सप्रतिज्ञं सत्यमेव ब्रुवत इत्यर्थः । अयमपि शरण्यत्वोपयुक्तगुणः, कृतज्ञात् कृतं यादृच्छिकप्रासङ्गिकानुषङ्गिकाद्यन्यतमं तत्कर्त्रीविज्ञातं, स्वतस्तु असुकृतमपि सुकृतत्वेन जानातीति तथा। तस्मात् रक्षणे व्याजमात्रापेक्षिणो न तु पुष्कलकारणापेक्षिण इति भावः। अनेन दयालुत्वं फलितम्। सुहृदः हितैकाचरणशीलात्, अनेन कंसादिशिक्षाप्यन्तत स्तद्धितार्थैवेति भावः। कुतः? यतो भवान् सुहृदः भवत्तोषैककरणवर्णाश्रमोचितधर्मानुष्ठाननिष्ठस्य भजतो भक्तिं कुर्वतः पुरुषस्य अभिकामान् सर्वान् समीहितान् ददाति, कियदेतदभिकामान् ददातीति। यतो निरतिशयानन्दरूपम् अत एव निरतिशयपुरुषार्थरूपं चात्मानमपि ददाति। अनेन मोक्षप्रदत्वमुक्तं भवति। कथम्भूतमात्मानम्? यस्याऽऽत्मनस्स्वस्य उपचयापचयौ वृद्धिह्रासौ न भवतः, तम्। अनेन निर्विकारत्वं तत एव चिदचिद्वैलक्षण्यं च फलितम् ॥ २७ ॥

**अथैवम्भूतस्य** दुर्दर्शस्य तस्य केवलं स्वमांसचक्षुर्विषयतापत्त्या तस्मिन् सौलभ्यं तथा स्वस्यालभ्यलाभरूपमहानन्दप्राप्तिं च वदन् तन्मायानिवृत्तये तमेवोपायत्वेन प्रार्थयते - **दिष्ट्येति**। हे जनार्दन ! सर्वान्तरात्मन्! सुरेशैः ब्रह्मादिभिर्योगीश्वरैस्सनकादिभिश्च दुरापा दुष्प्रापा गन्तुमशक्या गतिः प्रकारो याथात्म्यमिति यावत्। सा यस्य स भवानिह मनुष्यलोके नोऽस्माकं केवलमज्ञानां प्रतीतः चाक्षुषसाक्षात्कारात्मकप्रतीतिविषयो जातः। दिष्ट्या अयं महानानन्दोऽस्माकमित्यर्थः। [3]इहेत्यस्याऽस्मिन् गृह एवेति [4]वेत्यर्थः । ननु मद्दर्शनमेव किं बहुमन्यसे, न तु समीहितं याचसे इति चेदिदं याचे इत्यभिप्रायेणाह - छिन्धीति। नोऽस्माकं भवदीयमायाकार्यभूतां सुतादिषु मोह एव रशना पाशस्तामाशु छिन्धि। इदमेव मम प्रार्थनीयमित्यर्थः ॥ २८॥

**इतीति**।भक्तेनाक्रूरेणार्चितः स्तुतश्च हरिः सस्मितं स्मितेन सहितं यथा तथा, अक्रूरं प्राह । कथम्भूतः? वाग्भिरेव सम्मोहयन्निव। स्वयाथात्म्यविषयकमोहं जनयन्निव, इवशब्देनैवमपि न तस्य नित्ययुक्तस्य मोह इति सूच्यते ॥ २९ ॥

उक्तिमेवाह **-त्वमिति** सप्तभिः। त्वं नोऽस्माकं गुरुः हितकृत् पितृव्यः पितृभ्राता च। अनेन पूज्यत्वमुक्तम्। श्लाघ्यो बन्धुश्च न तु कंसादिवन्निन्द्यबन्धुः, नाप्युपेक्ष्यः। अपि तु प्रशस्यबन्धुः। अनेनान्योन्यप्रीतिविषयत्वमुक्तम्। त्वमेवंविधः, वयं तु रक्ष्यास्त्वयेति शेषः। गुरुत्वाद्धितोपदेशेनाहिताद्रक्ष्याः, पोष्याः पितृव्यत्वाद्वर्धितव्याः, अनुकम्प्याः मद्विषयकप्रीत्याश्रयत्वाद्दयनीयाः वो युष्माकं प्रजाः पुत्रा वयमित्यर्थः अतो न वयं पूज्याः,किन्तु त्वमेव इति भावः ॥ ३०॥

---

1 TW भागाः 2 TW omit त्रिजगत् 3 K ०त्यस्याऽस्मि० 4 K वाऽर्थः

**विज०** हे अधोक्षज ! सर्वे देवादयो मूर्तयः प्रतिमा यस्य स तथा, जगद्गुरुः स त्वं या वसतीः प्रविष्टः, हे ईश। अद्य ता वसतयो नोऽस्माकं गृहाः भूरिभागाः पूर्णभाग्याः अभवन् खलु। नैतच्चित्रमित्याह - यत्पादेति ॥ २६॥

"एकमेवाऽद्वितीयम्"(छान्दो. उ. 6-2-1) इति श्रुत्यर्थं गुरुमुखात् सम्यक् ज्ञातवानहं, त्वा मतः स्तौमीत्याशयेनाह क इति। भक्तप्रियात् ऋतगिर इति पदच्छेदः। भक्तप्रियाऽऽदृतगीश्चेति वा, तस्मात् भजतः सेवमानस्य सुहृदः फलापेक्षारहितस्य आत्मानमपि स्वात्मानमपि सायुज्यलक्षणं मोक्षमपि सारूप्यं वा। यस्योपचयापचयौ वृद्धिक्षयौ च न स्त इत्यनेन कृष्णस्य बाल्यवार्धकादिकं न स्वाभाविकमिति दर्शितम् ॥ २७ ॥

योगेश्वरादिभिरपि दुरापगतिः दुष्प्रापस्वरूपो भवान् नः प्रतीतः प्रतीतिविषयं गत इत्यतः इदं कर्तव्यमिति प्रार्थयते किं तदिति, तत्राह - छिन्धीति। भवदीयमायां भवदाज्ञाकारीं बन्धकशक्तिं छिन्धीत्यन्वयः । किंविधां? अत्राह सुतेति। मोहलक्षणां रशनां रज्जुम् ॥ २८ ॥

लोकविषयाभिर्गीर्भिः सम्मोहयन् तत्त्वज्ञानम् अन्यथाकुर्वन्निव, न त्वक्रूरस्येत्यन्वयः ॥ २९, ३० ॥

भवद्विधा भागवता[1] निषेव्या अर्हसत्तमाः।
श्रेयस्कामैर्नृभिर्नित्यं, देवास्स्वार्था न साधवः ॥ ३१ ॥

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ३२ ॥

स भवान् सुहृदां वै नः श्रेयान्[2] श्रेयश्चिकीर्षया।
जिज्ञासार्थं पाण्डवानां गच्छस्व[3-] गजसाह्वयम्[-3] ॥ ३३ ॥

पितर्युपरते बाला स्सह मात्रा[4] सुदुःखिताः।
आनीतास्स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३४ ॥

तेषु राजाऽम्बिकापुत्त्रो भ्रातृपुत्त्रेषु दीनधीः।
समो न वर्तते नूनं दुष्पुत्त्रवशगोऽन्धदृक्॥ ३५ ॥

गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा।
विज्ञाय[5] तद्विधास्यामो यथा शं सुहृदां भवेत् ॥ ३६ ॥

इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः।
सङ्कर्षणोद्धवाभ्यां वै तत स्स्वभवनं ययौ ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

1 G.J.M.Ma. महाभागा 2 M.Ma. किञ्चित् 3 - - 3 G.J. त्वं गजाह्व 4 K.T.W. ०त्राऽतिदुः 5. M.Ma. विचार्य

**श्रीध०** ननु नृभि र्देवाः सेव्या इति प्रसिद्धं, तत्राह - **भवदिति**। देवाः स्वार्थाः स्वकार्यसाधनपराः, साधवस्तु केवलं परानुग्रहपराः, परमार्थतस्तु साधव एव देवा इति त एव सेव्या इत्यर्थः ॥ ३१ ॥

तर्हि मृच्छिलादिमयाः[1] किं देवादयः सेव्याः[2], नैवेत्यत आह- **नहीति**। अम्मयानि तीर्थानि, मृन्मयाः शिलामयाश्च देवा न पुनन्तीति[3] न, अपि तु पुनन्त्येव[4]। तथापि साधूनां तेषां च महदन्तरमित्याह - दर्शनादेव ते पुनन्तीति ॥ ३२ ॥

"किञ्चिच्चिकीर्षयन्प्रागात्" (भाग 10-48-13)[5] इति यदुक्तं तत्कार्यमादिशति - स इति। नः सुहृदां मध्ये भवान् श्रेष्ठोऽतः[6] पाण्डवानां श्रेयश्चिकीर्षया गजसाह्वयं[7-] हस्तिनापुरं[-7] गच्छस्व गच्छेति। यद्वा स्वेति पृथक् पदम्। हे स्व! आत्मीयेत्यर्थः ॥ ३३ ॥

**पितरीति**। राज्ञा धृतराष्ट्रेण। वसन्ते निवसन्ति। शुश्रुम श्रुतवन्तो वयम्॥ ३४ ॥

**तेष्विति**। दृष्ट्वा ये[8] पुत्राः दुर्योधनादयः तद्वशेन गच्छतीति तथा। यतोऽन्धदृक् अन्धनेत्रः ॥३५- ३७॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

1 MIV omit किं 2 JVa omit सेव्याः 3 JVa भवन्तीति 4 JVa. भव° 5 JVa. omit दर्शनादेव 6 JVa. गजाह्वय 7- -7 JVa. omit
8 JVa add स्व०

**वीर०** न केवलमस्माकमेव यूयं पूज्याः, अपि तु सर्वेषामपीति[1] सहेतुकमाह - **भवद्विधा** इति। भवादृशा भागवताः अत एव अर्हसत्तमाः, उत्कृष्टतमाः, अत एव आत्मविशुद्धिरूपश्रेयस्कामैस्सर्वैर्मानवैः नित्यं सन्निषेव्याः। ननु आत्मविशुद्धये नृभिः देवाः सन्निषेव्या इति प्रसिद्धं तत्राह -देवा इति। देवा इन्द्रादयः स्वार्थाः, स्वप्रयोजनपराः, न साधवः न ते परोपकारिणः । यूयं तु न स्वार्थाः किन्तु परोपकारिण एवेत्यर्थः । तस्माद्यूयमेव सन्निषेव्याः ॥ ३१ ॥

नन्वेवमपि श्रेयस्कामै र्गङ्गादिपुण्यसरितां मृच्छिलामयभगवत्प्रतिमानामेव निषेव्यता पावित्र्यावहत्वा दित्यत आह- **न हीति**। अम्मयानि जलमयानि गङ्गादीनि न तीर्थानि न भवद्विधा इव पावनकराणि, पुनन्तीत्यस्यापकर्षो वा। न तथा पुनन्तीत्यर्थः। तथा मृच्छिलामयाः देवाः भगवत्प्रतिमाश्च न, यथा भवद्विधाः पुनन्ति न तथा पुनन्ति। किन्तु प्रकारान्तरेण पुनन्तीत्यर्थः। अभिप्रेतं वैषम्यं विशदयति - ते इति। तानि च ते च ते, पुंशेष आर्षः। अम्मयानि देवाश्च, उरुकालेन स्नानपानपरिचर्यादिसहचरितेन दीर्घेण कालेन पुनन्तिः साधवो भवद्विधास्तु दर्शनादेव पुनन्ति। अत्र केचिदेवं व्याचक्षते - किं देवादयो न सेव्या इत्यत आह - न हीति। अम्मयानि तीर्थानि मृच्छिलामयाश्च देवा न भवन्तीति न, अपि तु भवन्त्येव, तथाऽपि साधूनां च तेषां च महदन्तरमित्याह - ते पुनन्तीति, तच्चिन्त्यम्। "देवा स्स्वार्था न साधवः" इत्यनेनैवासेव्यत्वस्योक्तत्वात् पुनरसेव्यत्वाशङ्कापरिहारयोरयुक्तत्वात्, सेव्यत्वापादकपवित्रत्वापादकत्वतदभावयोरेव[2] संशयोदयात्। अत एव "ते पुनन्त्युरुकालेन" इति पवित्रतापादकत्वतारतम्योक्तिस्सङ्गच्छते। किञ्च अम्मयानां मृच्छिलामयानां चाऽतीर्थत्वाऽदेवत्वादिशङ्कायां हि "नञ्द्वयं प्रकृतमर्थं सूचयति" इति न्यायेन तीर्थत्वदेवत्वस्थिरीकरणोपपत्तिः। तदा ह्येवमाशङ्कनीयां- तर्हि किम् अम्मयानि न तीर्थान्येव, मृच्छिलामयाः किं न देवा एवेति। न च पूर्वग्रन्थादियं शङ्कोदेति, अतो यथोक्त एवार्थः ॥ ३२ ॥

"किञ्चिच्चिकीर्षया[3] प्रागात्" (भ. गी. 10-48-13) इति यदुक्तं, तत्कार्यमादिशति - **स** इति। उक्तविधो भवा[4]न्नोऽस्माकं ये सुहृदस्तेषां मध्ये श्रेयान्, अतो नः श्रेयः कर्तुमिच्छया पाण्डवानां जिज्ञासार्थं सुखदुःखविचारार्थं हास्तिनपुरं गच्छ ॥ ३३ ॥

पितरि पाण्डौ उपरते स्वर्गति सति बालाः, अत एव अतिदुःखिताः राज्ञा धृतराष्ट्रेण स्वपुरं प्रत्यानीताः तत्राऽधुना वसन्तीति शुश्रुम ॥ ३४ ॥

अम्बिकापुत्रो धृतराष्ट्रः राजा भ्रातृपुत्रेषु [5-] युधिष्ठिरादिषु [-5] विषयभूतेषु[6] दीना कृपणा धीर्यस्य, तथाभूतः समो न वर्तते, नूनं निश्चितम्। तत्र हेतुः, दुष्पुत्रो दुर्योधनः तद्वशगः, तत्राऽपि हेतुः अन्धदृक् अज्ञः ॥ ३५ ॥

अतस्त्वं गच्छ, साध्वसाधु वा तेषां पाण्डवानां वृत्तं वर्तनमवस्थानमिति यावत्। तज्जानीहि। तद्वृत्तं विज्ञाय ततस्सुहृदां पाण्डवानां शं सुखं यथा भवेत्तथा विधास्यामः करिष्यामः ॥ ३६ ॥

**इतीति**। समादिश्य आज्ञाप्य ततस्सङ्कर्षणोद्धवाभ्यां सह स्वगृहं गतवान् ॥ ३७ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

1 T.W. ०द्ध 2 T.W. ताकरत्व 3 K. ०यन् 4 T. हस्तिना० 5- -5 T.W. omit 6 T.W. omit अपि

**विज०** अर्हाणां पूज्यानां मध्ये श्रेष्ठाः, देवाः स्वार्थाः स्वप्रयोजननिरताः, आत्मार्चकेभ्योऽर्चनादितृप्तिलक्षणं प्रायोजनं प्राप्य फलानां दातारः, न तु सर्वसमा इत्यर्थः । साधवः सर्वतुल्याः न स्वार्थपरायणाः परार्थैकनिष्ठा इत्यर्थः । "समा स्त्री वत्सरे धातु सर्वतुल्येषु वाच्यवत्" (वैज० को०) इति यादवः ॥ ३१ ॥

देवा अपि हिं अम्मयादिशब्दवाच्या न भवन्ति, तत्र सन्निहितत्वात् तासां देवशब्दवाच्यत्व मिति भावेनाह - **न हीति**। अम्मयानि जलमयानि तीर्थशब्दवाच्यानि न भवन्ति। किन्तु तत्संहितानि दैवतानि। किमत इति तत्राह - त इति। ते उरुकालेन कृतया सेवया ॥ ३२ ॥

पाण्डवानां वृत्तिजिज्ञासार्थं 'किञ्चिच्छ्रेयश्चिकीर्षये' त्यस्य विवरणमेतत् । गजेन सम आह्वयो यस्य स तथा, हस्तिनापुरमित्यर्थः ॥ ३३ ॥

शतशृङ्गगिरिनिवासिभिः ऋषिभिः आनीता राज्ञा सह वसन्ते वसन्ति, स्वमहिमानमाच्छादयेति शेषः। इत्यत आत्मनेपदम्॥ ३४॥

तत्र हेतुर्हि अन्धदृगिति, तत्त्वज्ञानशून्यत्वात् ॥ ३५ ॥
तद्विधास्यामः तथा करिष्यामः, शं सुखम् ॥ ३६, ३७ ॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां**
**श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे**
**अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥**
**(विजयध्वजरीत्या सप्तचत्वारिंशोऽध्यायः)**

# एकोनपञ्चाशोऽध्यायः

## (विजयध्वजरीत्या अष्टचत्वारिंशोऽध्यायः)

### श्रीशुक उवाच

स गत्वा [1]हास्तिनपुरं [2]कौरवेन्द्रयशोङ्कितम्।
ददर्श तत्राऽऽम्बिकेयं सभीष्मं विदुरं पृथाम्॥ १ ॥

[3-]सहपुत्रं च बाह्लीकं[-3] भारद्वाजं सगौतमम्।
कर्णं [4]सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान्॥ २ ॥

यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुतः।
[5]संपृष्टस्तैस्सुहृद्वार्तां स्वयं चाऽपृच्छदव्ययम्॥ ३ ॥

उवास कति चिन्मासान् राज्ञो वृत्त[6]विवित्सया।
[7]दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः॥ ४ ॥

तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान्।
प्रजानुरागं पार्थेषु नसहद्भिश्चिकीर्षितम्॥ ५ ॥

---

1 MIV हˊ० 2 GJMMa पौ० 3- -3 MIV सपुत्र चैव बाह्लीक, TW सहपुत्र बाह्लिक च 4 TW दुर्यो० 5 MIV स 6 MIV दिदृक्षया 7 MMa. °ज्ञ०

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

ऊनपञ्चाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम्। राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत्॥

स इति। [1]कौरवेन्द्राणा [2]यशोभिरङ्कितम्। तत्कृतदेवब्राह्मणायतनादिभिरङ्कितम् [3]इत्यर्थः॥ १ ॥

**सहपुत्रमिति।** बाह्लीकपुत्रः सोमदत्तः। भारद्वाजो द्रोणः। गौतमः कृपः॥ २ ॥

**यथावदिति।** अव्ययं कुशलम्॥ ३ ॥

**उवासेति।** दुष्प्रजस्याऽसत्पुत्रस्य अल्पसारस्य मन्दधृतेः खलानां कर्णादीनां छन्दमिच्छा मनुवर्तितुं शील [4]यस्येति तथा तस्य॥ ४ ॥

तेज इति। तेजः प्रभावः[5]। ओजः शस्त्रादि नैपुण्यम्[6]। वीर्यं शौर्यम्। नसहद्भिःअसहमानैः। चिकीर्षितं इत[7] उपरि कर्तुमिष्टम्॥ ५ ॥

---

1 J.Va. पौ० 2 J.Va. omit अङ्कितम् 3 J.Va. omit इत्यर्थः 4 M.I.V.omit इति 5 M.I.V. प्रतापः 6 J.Va. °ण्म् 7 M.I.V. तदुपरि

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथैवं प्रेरितोऽक्रूरः संविज्ञातसुहृद्वृत्तान्तः पुनरागतः[1] भगवतो न्यवेदयदित्याह- एकोनपञ्चाशत्तमेन सगत्वेत्यादिना। सोऽक्रूरः कौरवेन्द्राणां यशोभिः यशस्सूचकदेवब्राह्मणाद्यायतनादिभिः अङ्कितं हास्तिनपुरं गत्वा तत्र भीष्मेण सहितमाम्बिकेयं धृतराष्ट्रं विदुरादींश्च ददर्शेति सम्बन्धः। तत्र पृथा कुन्ती, बाह्लीकपुत्रः[2] सोमदत्तः, गौतमः कृपाचार्यः, भारद्वाजो द्रोणः द्रौणिरश्वत्थामा [3-]अपरान् सुहृदः ज्ञातीनित्यर्थः[-3]॥ १,२ ॥

यथावदिति। गान्दिनीसुतोऽक्रूरः यथावत् यथायोग्यं बन्धुभिस्सह समुपेत्य तैः बन्धुभिः सम्पृष्टस्वकुशलः स्वयमपि सुहृदाम् अव्ययं कुशलं पप्रच्छ॥ ३ ॥

उवासेति। ततो राज्ञो धृतराष्ट्रस्य वृत्तपरिशीलनार्थं कतिचिन्मासानुषितवान्। कथम्भूतस्य? दुष्टाः प्रजाः पुत्रा यस्य। असिजभावः आर्षः। अल्पः मन्दः सारो धृतिर्यस्य, खलान् कर्णादीन् अनुवर्तितुं शीलमस्येति तथा॥ ४ ॥

तेज इत्यादि। पार्थेषु प्रजानाम् अनुरागं, तेषां तेजआदिगुणांश्चासहमानैः धार्तराष्ट्रैः दुर्योधनादिभिः यत्कृतं विषप्रदानादिक अपेशलं कठिनं दुष्टं कर्म, यच्च चिकीर्षितं तत्सर्वम् अस्मै अक्रूराय पृथा विदुरश्चाचख्यौ। तत्र तेजः पराभि[4]भवनसामर्थ्यम्, ओजः पैररनभिभूतत्वम्, बलं शारीरं धानुषञ्च, वीर्यं शौर्यम्, तच्च युद्धे स्वगृह इव प्रवेशसामर्थ्यम्॥ ५॥

---

1 T.W °त्य तत्र० 2 T.W °ह्लिक० 3- -3 T.W. omit 4 T.W. °भव

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

योग्यानां भगवति हरौ स्वतएव भक्तिः प्रकाश्यत इति व्यनक्त्यस्मिन्नध्याये। तत्रादौ अक्रूरस्य धृतराष्ट्रादिदर्शनं वक्ति-स गत्वेति॥ १ ॥

बाह्लीकं कुरुवंशे कञ्चन वृद्धं राजानं शन्तनो र्भ्रातरं, भारद्वाजं भरद्वाजस्यापत्यं द्रोणं, सगौतमं सकृपम्॥ २ ॥

तैर्भीष्मादिभिः सुहृद्वार्तां प्रति सम्पृष्टः अभूदिति शेषः। अक्रूरः स्वयं च तेषामव्ययं अनामयं पृष्टवान्॥ ३ ॥

वृत्तविवित्सया स्वपुत्रेषु वृत्तं वर्तनं समं विषमञ्चेति ज्ञातुमिच्छया अल्पमन्याय्यं सारं यस्य स तथा तस्य। तत्र हेतुः खलच्छन्दानुवर्तिन इति। खलानां पुत्राणां छन्दमिच्छा मनुवर्तितुं शीलमस्यास्तीति तस्य॥ ४॥

तेजो ज्योतिर्लक्षणा दीप्तिः, ओजः पराभिभवलक्षणं सामर्थ्यं, बलं शारीरं रूपं वा, वीर्यं पराक्रमः॥ ५॥

कृतञ्च धार्तराष्ट्रैर्यत् गरदानाद्य[1]पेशलम्।
आचख्यौ सर्वमेत[2]स्मै पृथा विदुर एव च॥ ६॥

पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम्।
उवाच जन्मनिलयं स्मरन्त्यश्रुकले[3]क्षणा॥ ७॥

अपि स्मरन्ति नस्सौम्य पितरौ भ्रातरश्च मे[4]।
भगिन्यो[5] भ्रातृपुत्राश्च जामयस्सख्य एव च॥ ८॥

भ्रात्रे[6]यो भगवान् कृष्णः शरण्यो भक्तवत्सलः॥
पैतृष्वसे[7]यान् स्मरति रामश्चाम्बुरुहेक्षणः॥ ९॥

सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव।
सन्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान्॥ १०॥

---

1 MMa ॰कौ॰ 2 GJKMIV ॰वा॰ 3 MMa ॰णम् 4 KMIV ये 5 MMa. ॰न्यौ 6 MMa ॰त्री॰ 7 J ॰स्रे॰

श्रीध॰ कृतिमिति। गरस्य विषस्य दानादि। अपेशलमन्याय्यम्। तेज ओज इत्यादि सर्वं कथयामास॥ ६॥

तत्कथनात्पू[1]र्वतरं पृथाया वृ[2]त्तान्तमाह- पृथेति। अश्रूणां कला लेशा ययोस्ते ईक्षणे नेत्रे[3] यस्यास्सा॥ ७॥

अपीति। अपि किम्। जामयः कुलस्त्रियः॥ ८॥

भ्रात्रेय इति। पैतृष्वसे[4]यान् [5-]मत्पुत्रान् इत्याशयः[-5]॥ ९॥

सपत्नेति। [6-]शोचन्तीं मां वाक्यैः[-6] सान्त्वयिष्यति किम्॥ १०॥

---

1 J ॰तम 2 JVa. ॰त्तमा॰ 3 JVa. omit नेत्रे 4 JVa. ॰स्रे॰ 5--5 JVa. omit 6--6 MIV omit

वीर॰ [1-]तत्र पृथाया विशेषमाह-[-1] पृथात्विति। तत्र पृथा तु तदाख्यानात्पूर्वमेव समागतं भ्रातरम् अक्रूरमुपसृत्य समुपेत्य जन्मनिलयं जननभवनं स्मरन्ती अश्रूणां कलाः लेशाः ययोस्ते ईक्षणे यस्यास्सा तमक्रूरमुवाच॥ ६,७॥

उक्तिमेवाह-अपीति षड्भिः। हे सौम्य! मे पित्रादयो नोऽस्मान् स्मरन्त्यपि स्मरन्ति किम्? तत्र जामयः कुलस्त्रियः॥ ८ ॥

भ्रात्रेय इति। देहसम्बन्धेनाप्यात्मनां रक्षकत्वस्थापनाय भ्रात्रेय इत्युक्तिः। भ्रातुः पुत्रो भ्रात्रेयः, शरणमुपायतामर्हतीति शरण्यः। अनेन देहसम्बन्धादिक मनादृत्य शरणागतरक्षाशीलत्वमुक्तम्। तदुपयुक्तगुणपूर्तिरुच्यते- भगवानिति। शरणगतानपि कदाचिद्दोषान्वेषणेन न रक्षेदित्याशङ्कां निराकुर्वन्न्याचष्टे भक्तवत्सल इति। भक्तेषु दोषादर्शीपितृष्वसुः पितृभगिन्या ममाऽपत्यरूपान् युधिष्ठिरादीन् स्मरति, अपीति शेषः अनुषङ्गो वा, स्मरति किमित्यर्थः। तथा अम्बुरुहे इव ईक्षणे यस्य स रामोऽपि स्मरति किम्? तदीक्षणप्रसारमात्रेणैव निस्तापा वयं भविष्याम इत्यभिप्रायेण तदीक्षणयोः अम्बुरुहोपमा॥ ९ ॥

सपत्नमध्य इति। वृकाणां मध्ये हरिणीमिव शत्रूणां मध्ये शोचन्तीं मां, पितृहीनान् बालकान् पुत्रांश्च वाक्यैः सान्त्वयिष्यति किम्॥ १० ॥

---

1- -1 TW omit

**विज०** जन्मनिलयं जन्मगृहम्॥ ६,७ ॥

जामयः भ्रातृवर्गभार्याः॥ ८ ॥

प्रितृष्वसुः पुत्रान् पाण्डवान्॥ ९ ॥

सपत्नमध्ये शत्रुमध्ये, वृकाणां मध्ये स्थिताम्॥ १० ॥

**कृष्ण कृष्ण महायोगिन् सर्वात्मन्[1] विश्वभावन[2]।**
**प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम्॥ ११ ॥**

**नान्यत्तव पदाम्भोजात्पश्यामि[3] शरणं नृणाम्।**
**बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात्॥ १२ ॥**

**नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने।**
**योगेश्वराय योगाय, त्वामहं शरणं[4] गता॥ १३ ॥**

**[5-]श्रीशुक उवाच[-5]**

**इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम्।**
**प्रारुदद्दुःखिता राजन् भवतां[6] प्रपितामही॥ १४ ॥**

**समदुःखसुखोऽक्रूरो विदुरश्च महायशाः।**
**सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः॥ १५ ॥**

---

1 G.J.K.MI.V विश्वात्मन् 2 M.Ma पालक 3 M.Ma °मः 4 M.Ma °णाग° 5- -5 M.Ma.MI.V omit 6 T.W °तः

**श्रीध०** [1-]कुन्त्यपि अधिगतपरमार्था श्रीकृष्णं स्तौति[-1] **कृष्णेति**। हे महायोगिन्! महान् योग उपायो [2-]मायाख्योऽस्यास्तीति।[-2] हे विश्वात्मन्! सर्वान्तर्यामिन्! हे विश्वभावन! विश्वपालक! प्रपन्नां शरणागताम्। अवसीदतीं दुर्योधनादिकृतैरपकारैः क्लिश्यन्तीम्॥ ११ ॥

**नेति**। आपवर्गिकात् मोक्षप्रदात्॥ १२ ॥

**नम** इति। शुद्धाय धर्मात्मने। ब्रह्मणेऽपरिच्छिन्नाय परमात्मने जीवसखाय। योगेश्वराय अणिमादियुक्ताय। योगाय ज्ञानात्मने॥ १३ ॥

**इतीति**। प्रपितामही, प्रपितामहः पाण्डुः तस्य भार्या [3]प्रारुदत् [4]प्ररुरोद॥ १४ ॥

**समेति**। पृथया सह समं दुःखं सुखं च यस्य सः। तस्याः पुत्राणामुत्पत्तिहेतुभिः जनकैः धर्मानिलेन्द्रादिभिः, तत्कथनैरित्यर्थः॥ १५ ॥

---

1--1 J.Va omit 2--2 J.Va omit 3 J.Va omit प्रारुदत् 4 J.Va omit प्र

**वीर०** एवमक्रूरं प्रति परोक्षमुक्त्वा अथ सर्वान्तरात्मानं भगवन्तं बुद्ध्या सन्निधाप्य [1-]कार्पण्यावेदन[-1]पूर्वक मात्मात्मीयरक्षां प्रार्थयते- **कृष्ण कृष्णेति**। हे महायोगिन्! सर्वज्ञ! हे सर्वान्तरात्मन्! विश्वं भावयति स्वभक्तजनं सुखयुक्तं करोतीति तथा। शिशुभिः पुत्रैस्सह अवसीदतीं क्लिश्यन्तीम्, अधुना प्रपन्नां शरणागतां च मां पाहि॥ ११ ॥

ननु ब्रह्मरुद्रादिषु सत्सु किं मामेव शरणं गच्छसीत्यत्राह- **नान्यदिति**। मृत्युरूपात्संसाराद्[2]बिभ्यतां ब्रह्मादीनामपि अपवर्गप्रदात् ईश्वरस्य तव पदाम्भोजात् अन्यत् नृणां शरणम् इष्टसाधनं न पश्यामः। ब्रह्मादीनामपि प्रपन्नतुल्ययोगक्षेमत्वात् न प्रपत्तव्यतेति भावः॥ १२ ॥

प्रपत्तिमपि यथावत् कर्तुमशक्नुवत्याः मम भगवत्प्रसादी अञ्जलिरेवेत्यभिप्रायेण प्रणमति-**नम** इति। शुद्धाय रागद्वेषादिरहिताय किञ्चित् स्वानुकूल्यमात्रापेक्षायेति यावत्, अञ्जलिरेव तं प्रसादयितुमलमिति भावः। ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते। अनेन परिपूर्णस्य नास्माभिः विधेयमन्यदपेक्षितमित्यभिप्रेतम्। परमात्मने अन्तः [3-]प्रविश्य प्रशासनेन[-3] भर्त्रे, त्वत्प्रशासनानुरूपमेव अस्मत्प्रवृत्तिरित्यभिप्रेतम्। योगेश्वराय तत्तदधिकार्यनुरूपमनेकधावस्थितन्यासात्मकयोगनिर्वाहकाय योगाय युज्यते सर्वात्मभिरिति योगः तस्मै, निरुपाधिकसर्वविधबन्धवे एवम्भूताय कृष्णाय स्वर्गापवर्गसाधनाय नमः. त्वाम् उक्तविधम् अहं कृपणा शरणं गता शरणागतशब्दभागस्मीति भावः॥ १३ ॥

**इतीति**। इदं श्रीमच्छुकवचनम्। हे राजन्। भवतां प्रपितामहः पाण्डुः तस्य स्त्री कुन्ती इति इत्थं कृष्णं स्वजनं चानुस्मृत्य दुःखिता सती प्रारुदत्[4] रुरोद॥ १४ ॥

तदा समं सुखं दुःखं च यस्य सः, कृन्त्या सहेति शेषः। यद्वा बन्धुजनसुखदुःखदर्शनजमनोविकाररहितः ज्ञाननिष्ठत्वात्। अक्रूरो विदुरश्च तस्याः पुत्राणामुत्पत्तिहेतुभिः जनकैः धर्मानिलेन्द्रादिभिः, तत्कथनैरित्यर्थः। सत्पुत्रेति पाठान्तरम्। तत्र सद्भिः धर्मानुवर्तिभिः पुत्रैः तदुत्पत्तिहेतुभिश्च पूर्वोक्तैः कुन्तीं सान्त्वयामासतुः, धर्मानुवर्तित्वात्, भगवदभिमानविषयत्वाच्च न तेषा मशुभमस्ती त्येवंविधैः उपदेशैरित्यर्थः॥ १५ ॥

---

1- -1 K. omits 2 T.W. प्रपत्तृ 3- -3 T.W. त्मकाय 4 T.W. उपारुदत्

**विज०** द्युमणेरुदयादुत्फुल्लया नलिन्या यथा तथा अक्रूरस्य दर्शनादुद्रेचितया भक्त्या विवशा विशेषप्रबुद्धभगवद्गुणानित्थं तत्परा कुन्ती मनस्याऽऽविर्भूतं कृष्णं स्तौति- **कृष्णेति**। महानपरिच्छिन्नो योगो ज्ञानमुपायो वाऽस्तीति तत्सम्बुद्धिः। "महत्पूज्यविशालयोः"। (वैज.को 6-5-63) इति यादवः। सर्वमाप्नोति धारयतीति सर्वात्मा हे सर्वात्मन्! गोबिन्द गवामिन्द्र!॥ ११ ॥

मृत्युवत् भयहेतोः संसारात् आपवर्गिकात्अपवर्गाख्यक्रियासाध्यफलप्राप्तेः साधकात् तदापादकाद्वा। "अपवर्गः क्रियासाध्यफलाप्तौ त्यागमोक्षयोः" इति वैजयन्ती॥ १२ ॥

'कृष्णं सीसाद्यलोहेषु' इत्यतः कृष्णशब्दस्य सीसाद्येऽपि वृत्ते स्तन्निरासार्थं शुद्धायेति। किं तत् शुद्ध मत्राह- ब्रह्मण इति। अस्याप्यनेकार्थवृत्तेः न निर्णय इत्यतः परमात्मन इति। दुर्भगाशरीरे वसतो हरेः कर्दम इव शुद्धत्वं कथं युज्यत इति तत्राह - योगेश्वरायेति। योगैश्वर्याद्घटत इत्यर्थः। ननु तर्हि योगैश्वर्यनिमित्तं शुद्धत्वं चेत् स्वतो नास्तीत्यायात मित्यत उक्तं योगायेति ज्ञानसंहताय ज्ञानात्मत्वेनाप्राकृतत्वा त्स्वाभाविकमित्यर्थः। ततः किमत्राह-त्वामिति॥ १३ ॥

इति, एवमादिगुणपूर्णम्॥ १४ ॥

तस्याः पुत्राणां युधिष्ठिरादीनां उत्पत्तेः हेतुभिः दुर्वाससोऽनु[1-]ग्रहेण धर्मा[-1]निलेन्द्रसंयोगादिलक्षणैः॥ १५ ॥

---

1- -1 Ma. ग्रह धर्मभमवत्

यास्यन् राजानमभ्येत्य विषमं पुत्रलालसम्।
अवद[1] त्सुहृदां मध्ये बन्धुभि स्सौहृदोदितम्॥ १६ ॥

[2-]अक्रूर उवाच[-2]

भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन।
भ्रातर्युपरते पाण्डौ [3-]अधुनाऽऽसनमास्थितः[-3]॥ १७ ॥

धर्मेण पालयन्नुर्वीं प्रजाश्शीलेन रञ्जयन्।
वर्तमानः [4]समः स्वेषु श्रेयः कीर्तिं मवाप्स्यसि॥ १८ ॥

अन्यथा त्वाऽऽचरन् लोके गर्हितो यास्यसे तमः।
तस्मात्समत्वे[5] वर्तस्व पाण्डवेष्वात्मजेषु च॥ १९ ॥

नेह चात्यन्तसंवासः [6]कस्यचि त्केनचित्सह।
[7-]राजन् स्वेनापि[-7] देहेन, किमु जायात्मजादिभिः[8]॥ २० ॥

---

1 MMa प्रा० 2- -2 MMa omit 3--3 MMa बन्धुना सम० 4 MIV सम 5 MMa °त्स्व 6 G.J कर्हि० 7- -7 MI.V राजन्नपि स्व 8 K.T.W °षु

**श्रीध० यास्यन्निति।** बन्धुभिः रामकृष्णादिभिः सौहृदेनोदितमुक्तं यत् तदवदत्[1]॥ १६ ॥

**भो भो। इति।** भ्रातर्युपरत इति। पाण्डोः पुत्रेषु सत्सु राजासनं त्वमास्थित इति कटाक्षः॥ १७ ॥

भवतु, तथाप्येवं वर्तमानः श्रेयोऽवाप्स्यसीत्याह **धर्मेणेति**॥ १८ ॥

**अन्यथेति।** तमो नरक [2]मिह च महद्दुःखमिति भावः॥ १९ ॥

नन्वात्मजानात्मजादिषु कथं समत्वं स्यात्तत्राह-**नेति**। अत्यन्तं नित्यं संवासः सम्यक् [3]अवस्थितिः॥ २० ॥

---

1 J Va add इति 2 J Va मिहैव 3 J Va omit अव

**वीर० यास्यन्निति।** यास्यन् गमिष्यन्, मधुरां प्रतीति शेषः। पुत्रलालसं पुत्रेष्वासक्तबुद्धिम् अत एव विषमं भ्रातृपुत्रेष्विति शेषः। विषमबुद्धिं राजानं धृतराष्ट्रं अभ्येत्य बन्धुभिः कृष्णादिभिः यत् सौहृदेन सौहार्देन कथितम्, तत् सुहृदां मध्ये अवोचत्॥ १६॥

उक्तिमेवाह- **भो भो इति नवभिः।** हे वैचित्रवीर्य! हे कुरूणां कीर्तिवर्धन। एवंविधस्य तव इयं विषमा बुद्धिः अनुचितेति सम्बोधनद्वयाभिप्रायः। भ्रातरि पाण्डौ उपरते स्वर्गते सति अधुना त्वं नृपासनम् अधिष्ठितवान्। इतोऽप्यनुचितं नेति भावः॥ १७ ॥

तदाह - **धर्मेणेति**। शीलेन अवैषम्यादिस्वभावेन रञ्जयन् स्वस्मिन् तासामनुरागं जनयन् स्वेष्वात्मीयेषु समो वर्तमानः अविषमस्सन् श्रेयः कीर्तिं च प्राप्स्यसि॥ १८ ॥

अन्यथा वैषम्यमाचरन् जनैर्निन्दितः, ततः तमो नरकं यास्यसि प्राप्स्यसि, तस्मात् पाण्डवेषु [1-]युधिष्ठिरादिषु[-1] आत्मजेषु च विषये समत्वेन वर्तस्व॥ १९ ॥

ननु अनपायिष्वात्मजेषु यावत्स्वार्थमनुवर्तमानेषु भ्रातृपुत्रादिषु च कथं साम्यं स्यादित्यत्राह- **नेहेति**। इह लोके कस्यचित् केनचित् साकं अत्यन्तसंवासः नित्यं सम्यक् स्थितिः नास्ति, संयोगवियोगयोः कर्ममूलत्वेन यावत्कर्मैव तावित्यर्थः। तदेव कैमुत्यन्यायेनाह- हे राजन्! धृतराष्ट्र! स्वेन स्वकीयेन देहेन सहाऽपि नात्यन्तसंवासः, भार्यापुत्रादिभिस्सह अत्यन्तसंवासो नास्तीति किमु वक्तव्यमित्यर्थः॥ २० ॥

---

1--1 TW omit

**विज०** यास्यन् गन्तुमिच्छन् पुत्रलालसं पुत्रस्नेहकातरं बन्धुभिस्सहितं सौहृदोदितं सुहृद्भावेन कथितम् ॥ १६-१८॥

तमोऽघं दुःखमित्यर्थः, पुत्रनाशेनेति शेषः। "तमो राहुस्तमोऽघं च" इति च। "दुःखैनोव्यसनेष्वघम्"इति च॥ १९ ॥

सर्वस्यानित्यत्वात् क्वचित् कस्मिंश्चिदपि विशेषस्नेहो न कार्यः, योग्यतामन्तरेणेति भावेनाह- **नेहेति**। इह लोके कस्यचित् केनचित्सह अत्यन्तसंवासो नास्त्येव जायात्मजादिभिस्सह संवासनिदर्शनात्, किं विशेष्य निषिध्यते इत्यत्र कैमुत्यमाह स्वेनापीति॥ २० ॥

**एकः प्रसूयते जन्तु रेक एव प्रलीयते[1]।**
**एकोऽनुभुङ्क्ते सुकृत मेक एव च दुष्कृतम्॥ २१ ॥**

**अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः[2]।**
**सम्भोजनीयापदेशैः जलानीव जलौकसः॥ २२ ॥**

**पुष्णाति या नधर्मेण स्वबुद्धया तमपण्डितम्।**
**[3-]तेऽकृतार्थं[-3] प्रहिण्वन्ति प्राणा राय स्सुतादयः॥ २३ ॥**

**स्वयं किल्बिषमादाय तैस्त्यक्तोऽ[4]नर्थकोविदः।**
**असिद्धार्थो विशत्यन्धं स्वधर्मविमुख स्तमः॥ २४ ॥**

**तस्माल्लोकमिमं राजन् स्वप्नमायामनोरथम्।**
**[5-]वीक्ष्यायम्याऽऽत्मनाऽऽत्मानं[-5] समश्शान्तो भव प्रभो॥ २५ ॥**

---

1 TW °मी० 2 MMa चेतसः 3--3 MMa. अन्तेऽकृतार्था ह्रिण्वन्ति 4 G.J M Ma नार्थ० 5--5 M.Ma सम्भजन्नात्म०

**श्रीध०** तत्र तावत् उत्पत्तिमरणयोः सुखदुःखयोश्च केनापि साहित्यं नास्तीत्याह- **एक** इति॥ २१ ॥

**किञ्च** यदा च सह [1]संवसन्ति तदापि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह- **अधर्मेति**। सम्भोजनीयाः पोष्याः। पुत्रादय इति व्यपदेशैरल्पमेधसो मूढस्य वित्तं हरन्ति। जलौकसो मत्स्यस्य जीवनभूतानि जलानि यथा तत्पुत्रा हरन्ति तद्वदिति [2]भावः॥ २२ ॥

**किञ्च** यानेवं पुष्णाति ते धनमादाय मृता जीवन्तोऽपि वा तं परित्यजन्तीत्याह- **पुष्णातीति**। **स्वबुद्ध्या** स्वीया इत्यभिमानेन, रायोऽर्थाः, अकृतार्थमप्राप्तभोगम्॥ २३ ॥

स पुनः पापैकपाथेयो नरकं विशतीत्याह- **स्वयमिति**। असिद्धार्थोऽपूर्णमनोरथः॥ २४ ॥

**तस्मादिति**। स्वप्नश्च माया च मनोरथश्च तत् तेन तुल्यम्। आयम्य नियम्य शान्तस्सन् समो भवेति॥ २५॥

---

1 MIV omit स 2 J Va omit भावः

**वीर०** एतदेव निदर्शयति- जन्तुः शरीरी एक एव प्रसूयते, न तु जायात्मजादिभिस्सहेति भावः। तथा एक एव प्रलीयते, नहि म्रियमाणेन सह तज्जायादयो म्रियन्त इति भावः। सुकृतदुष्कृतशब्दौ तत्फलभूतस्वदैहिकसुखदुःखपरौ, न तद्भोगेऽपि केनचित् साहित्यमिति भावः॥ २१ ॥

**किञ्च** यदा च सह संवसन्ति, तदा क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह- **अधर्मोपचितमिति**। सम्भोजनीयाः पोष्याःपुत्रादय इति व्यपदेशैः अल्पमेधसः मूढस्य अधर्मेण आर्जितं वित्तं हरन्ति, यथा [1]मत्स्यस्य जलौकसो जीवनभूतानि जलानि तत्पुत्रा हरन्ति, तद्वत्॥ २२ ॥

**किञ्च**, **पुष्णातीति**। स्वबुद्ध्या आत्मात्मीयबुद्ध्या यो यान् पुष्णाति, ते प्राणाः रायो धनानि सुतादयः आदिशब्दग्राह्या भार्यादयः, प्राणशब्दः शरीरोपलक्षकः, तं पुष्णन्तं अकृतार्थं अप्राप्तभोगं कामान् अभुक्त्वैव मृतं प्रहिण्वन्ति त्यजन्ति॥ २३॥

स्वयं तु अनर्थकोविदः स्वानर्थेष्वेव कुशलः न तु स्वहित इति भावः। तैः प्राणादिभिः त्यक्तः किल्बिषं तत्पोषणार्थं कृतं पापमादाय असिद्धार्थः अपरिपूर्णमनोरथः स्वधर्मविमुखः, हेतुगर्भमिदम्। तत्त्वात् अन्धं तमः अन्धतामिस्राख्यं नरकं प्रविशति॥ २४ ॥

उपदेशमुपसंहरति- **तस्मादिति**। हे राजन्! तस्मात् तत्त्वस्थितेरेवंविधत्वात् इमं देहतदनुबन्ध्यादिकं सर्वं लोकं स्वप्नमायामनोरथम् आश्चर्यमनोरथमिव अनित्यं वीक्ष्य ज्ञात्वा आत्मना बुद्ध्या आत्मानम् आयम्य नियम्य हे प्रभो! समः सर्वत्र समबुद्धिः सन् शान्तः रागद्वेषादिवि[2]निर्मुक्तो भव॥ २५ ॥

---

1 K omits मत्स्यस्य 2 TW omit वि

**विज०** इतोऽपि वैषम्यबुद्धिः न कार्येत्याह- एक इति॥ २१ ॥

अन्ये अल्पचेतसः दुर्बुद्धेः अधर्मेण उपचितं आर्जितं हरन्ति। सम्भोजनीयापदेशैः सम्भोजनीयाः सहभोजनयोग्याः बन्धवः अपदेशैः कपटवचनैः ममैतेऽपेक्षणीया इति मिथ्याहेतुभिरित्यर्थः। जलानि हरन्तो जलसम्बन्धितया जलौकसः प्राणिनो यथा हरन्ति। यद्वा, जलौकसो यादोगणस्य विद्यमानानि जलानि यथाऽन्ये हरन्ति॥ २२ ॥

यः स्वबुद्ध्या ममत्वभ्रान्तबुद्ध्या अधर्मेणान्यायेन यान् पुष्णाति स्वत्वेनाभिमतास्ते प्राणादयस्तु अन्ते मरणसमये तमपण्डितं अज्ञं हिन्वन्ति त्यजन्ति। "अग्निं वागप्येति वातं प्राणः" इति श्रुतेः। कीदृशाः? अकृतार्थाः अपूर्णस्वप्रयोजनाः यथा यो योऽधर्मेण यान् स्वीयबुद्ध्या पुष्णाति ते प्राणादयः तमपण्डितं हिन्वन्तीति, तं च मरणं विदुरिति॥ २३ ॥

पुनः स्वयं किं करोतीति तत्राह- स्वयमिति। नाऽर्थकोविदः स्वप्रयोजनकुशलो न भवति॥ २४ ॥

किमन्येन बहूपन्यासेन, प्रकृते किमागतमिति तत्राह- **तस्मादिति**। लोकं शरीरं स्वप्नेति लुप्तोपमा। स्वप्नवत् मायावत् इन्द्रजालवत् मनोराज्यविजृम्भितव दन्यत्र स्वनिमित्तं स्वप्नस्य स्वाधीनत्वप्रतीतेः तदर्थं मायामनोरथमित्युक्तम्। आत्मना मनसा आत्मानं परमात्मानं भजन् शान्तो भगवदेकनिष्ठः स्वपरबुद्धिं विहायाऽऽत्मजेषु पाण्डुपुत्रेषु च च समो भवेत्यन्वयः॥ २५॥

## धृतराष्ट्र उवाच

**[1]यथा वदति कल्याणीं वाचं दानपते भवान्।**
**[2]तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम्॥ २६ ॥**

**तथाऽपि सूनृता सौम्य हृदि न स्थीयते चले।**
**पुत्रानुरागविषमे विद्युत्सौदामनी यथा॥ २७ ॥**

**ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान्।**
**भूमे र्भारावताराय योऽवतीर्णो यदोः कुले॥ २८**

**यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनु[3] प्रविष्टः।**
**तस्मै नमो दुरवबोधविहारतन्त्र संसारचक्रगतये परमेश्वराय॥ २९ ॥**

**श्रीशुक उवाच**

**इत्यभिप्रेत्य नृपते रभिप्रायं स यादवः[4]।**
**सुहृद्भिस्समनुज्ञातः पुनर्यदुपुरीमगात्॥ ३० ॥**

**शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम्।**
**पाण्डवान्प्रति कौरव्य! यदर्थं प्रेषित स्स्वयम्॥ ३१ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे पूर्वार्धे
एकोनपञ्चाशोऽध्यायः॥ ४९ ॥

1 KTW यदा 2 KTW तदा 3 K तनुषु 4 MIV माधवः

**श्रीध० यथेति।** हे दानपते! अक्रूर! न तृप्याम्यलमिति न मन्ये॥ २६ ॥

**तथेति।** सूनृता प्रिया[1] वाक् चलेऽस्थिरे हृदि न स्थीयते न तिष्ठतीत्यर्थः। सुदामा नाम[2] पर्वतः तत्र भवा विद्युदिव। तस्मिन् स्फटिकशिलामये सहसैवातिस्फुरिता विद्यु द्यथा लीयते तद्वदित्यर्थः । यद्वा सुदामा माला तस्या इयं सौदामनी। मालाकारेत्यर्थः॥ २७ ॥

नन्वेवं जानतोऽपि कथमयं महामोह[3] इति चेत् तत्राऽऽह-[4] **ईश्वरस्येति।** विधिं विधानम्। माययमिति यावत्। [5-]कः पुमान् विधुनोति, न कोऽपीत्यर्थः[-5]॥ २८ ॥

अतस्तमेव नमस्यति- **य इति।** दुर्विमर्शपथया अवितर्क्यमार्गया। गुणान् कर्माणि तत्फलानि च विभजते[6] विविच्य ददाति। दुरवबोधो यो विहारः क्रीडा स एव[7] तन्त्रं प्रधानं मुख्यकारणं[8] यस्य संसारचक्रस्य, अत एव तस्य गतिः यस्मात् तस्मै नम इति॥ २९ ॥

**इतीति।** अभिप्रेत्य ज्ञात्वा॥ ३०, ३१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्याया एकोनपञ्चाशोऽध्यायः॥ ४९ ॥

1 MIV °यवा० 2 JVa omit नाम 3 JVa omit महा० 4 JVa अत आह 5- -5 JVa omit 6 JVa add इति 7 MIV omit एव 8 JVa मुख्य

**वीर०** इत्थं प्रतिबोधितः प्राह धृतराष्ट्रः- **यदेति।** **हे दानपते!** दानाधिप! अत्युदार! मूढमप्येवं ज्ञानप्रदानेन सञ्जिजीवयिषोस्तवौदार्य मनितरसाधारणमिति **सम्बोधनाभिप्रायः।** यदा भवान् **कल्याणीं** कल्याणावहां वाचं वदति, तदा अनया वाचा न तृप्यामि न तस्यामलम्बुद्धिं करोमीत्यर्थः। **इदानीं न तृप्याम्येव।** शृण्वन्नपि न तृप्यामीत्यभिप्रायेण यदातदाशब्दयोः प्रयोगः। यथा मर्त्यो मरणशीलः अमृतं प्राप्य अशित्वा न तृप्यति, तद्वत् निरतिशयहिता त्वद्वागिति भावः॥ २६॥

**तथापीति।** हे सौम्य! भवतो वाक् सूनृता मधुरा हिता च। तथापि तद्वचः हृदि न स्थीयते न प्रतिष्ठितं भवति। तत्र हेतुं वदन् हृद्विशिनष्टि- पुत्रानुरागेण विषमे यथा सौदामनी विद्युत् तद्वत्। सुदामा पर्वतः तेनैकदिक् सौदामनी तत्र भवेति यावत्। सुदाम्नि हि स्फटिकशिलामये स्फुरिता तटित् तदैव लीयते, तद्वदित्यर्थः। यद्वा सुदामा [1]अलातमाला, तन्मयी सौदामनी॥ २७ ॥

ननु एवं जानतोऽपि कथमयं मोह इत्यत आह- **ईश्वरस्येति।** को वा पुमान् ईश्वरस्य विधिं चिकीर्षां अन्यथा विदधाति अन्यथा करोति? कोऽसावीश्वर इत्यत आह- भूमेरिति। यो यदोः कुले भूमेः भारस्य मत्पुत्रतदनुबन्धिरूपस्य अवताराय अवतीर्णः, मत्पुत्रसञ्जिहीर्षात्मकभगवच्चिकीर्षानुगुणमेव तन्मायोन्मोहितदुर्मनीषा प्रवर्तते इति भावः॥ २८ ॥

युक्तं चैत दुरवबोधमायत्वा त्सर्वनियन्तृत्वाच्चे त्यभिप्रयन् केवलं तमेवेश्वरं प्रणमति-**य** इति। यः ईश्वरः दुर्विमर्शपथया इतरैः ज्ञातुमशक्यप्रकारया स्वप्रकृत्या इदं ब्रह्मादितनुजालं सृष्ट्वा तनुषु चतुर्मुखादितनुषु प्रविष्टः तत्तदधिष्ठातृजीवान्तरात्मतया प्रविष्टः "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" इतिवत्। स्थित्यर्थोऽत्र अनुप्रवेश उक्तः, गुणान् शब्दादिविषयान् विभजते, ब्रह्मादिभ्य इति शेषः। प्रतिनियतान् शब्दादीन् तेभ्यो विभज्य प्रयच्छतीत्यर्थः। अन्यैर्दुरवबोधः ईश्वरस्य [2]विहारः क्रीडा तादृशविहारतन्त्रात्मिका संसारचक्रगतिः यस्मात् तस्मै सर्वोत्कृष्टाय ईश्वराय नमः॥ २९ ॥

**इतीति।** स यादवोऽक्रूरः नृपतेः धुतराष्ट्रस्य अभिप्रायम् अभिप्रेत्य ज्ञात्वा सुहृद्भिः पाण्डवादिभिः सम्यगनुज्ञातः पुनः मधुरां आजगाम॥ ३० ॥

**शशंसेति।** [3]ततो हे कौरव्य! पाण्डवान् प्रति यत् धृतराष्ट्रस्य विचेष्टितं कृतं विषप्रदानादि, यस्य चेष्टितस्य विज्ञानार्थमेव स्वयं भगवता प्रेषितः, तत् सर्वं कृष्णरामाभ्यां शशंस कथयामास॥ ३१ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनपञ्चाशोऽध्यायः॥ ४९ ॥

1 T.W. अलातः 2 K. omits विहार 3 K. omits ततो

विज० अनया वाचा न तृप्यामि अलम्बुद्धिं न प्राप्नोमि। अमृतं देवान्नम्। "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने। अयाचिते जले ह्यग्नौ मोक्षणे हेम्नि गोरसे॥ क्लीबे तु ना त्वमरस्त्रीगुडूच्यामघभिक्षयोः इति च॥ २६ ॥

सूनृता वाक् सुदाम्नः पर्वताद्व्यज्यमाना सौदामनी विद्युत् विद्युल्लता। यद्वा विशेषेण द्यौति प्रकाशते विद्युत् तादृशी सौदामनी क्षणप्रभा यथा अस्थिरा तथेति। विधिमाज्ञां विधुनोति अन्यथा करोति, अनेकार्थत्वात् धातूनाम्। दुर्विमर्शपथया दुर्विज्ञेयमार्गया दुरवबोधः दुर्ज्ञेयः विहारः सृष्ट्यादिव्यापारलक्षणा क्रिया, तस्य तन्त्राधीनसंसारचक्रगतिः संसारवृत्तिः प्रकारो यस्य स तथा तस्मै इत्यभिप्रेत्य इति ज्ञात्वा॥ २७-३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे पूर्वार्धे
एकोनपञ्चाशोऽध्यायः॥ ४९ ॥

(श्रीविजयध्वजरीत्या अष्टचत्वारिंशोऽध्यायः)

# पञ्चाशोऽध्यायः

## उत्तरार्धम्

(विजयध्वजरीत्या एकोन पञ्चाशोऽध्यायः)

-: जरासन्धयुद्ध यवनागमनादिकथा :-

श्रीशुक उवाच

[1-]अस्तिः प्राप्तिश्च[-1] कंसस्य महिष्यौ भरतर्षभ!
[2]हते भर्तरि दुःखार्ते ईयतुः[3] स्वपितु गृहम्[4] ॥ १ ॥

पित्रे मगधराजाय जरासन्धाय दुःखिते।
वेदयाञ्चक्रतु स्सर्वमात्मवैधव्यकारणम्[5] ॥ २ ॥

स तदप्रियमाकर्ण्य शोकामर्षयुतो नृपः[6]।
अयादवां[7] महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥

अक्षौहिणीभि र्विंशत्या[8] तिसृभिश्चाऽपि संवृतः[9]।
यदुराजधानीं मधुरां[10] न्यरुणत्सर्वतो दिशम् ॥ ४ ॥

निरीक्ष्य तद्बलं कृष्ण उद्वेल मिव सागरम्।
स्वपुरं तेन संरुद्धं स्वजनञ्च भयाकुलम् ॥ ५ ॥

चिन्तयामास भगवान् [11-]ह रिः कारण[-11] मानुषः।
तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥

1- -1 B,G,J. अस्तिः प्राप्तिश्च; M,Ma. अस्तिप्राप्तीति. 2 B.G.J. मृते 3 B.G.J.K.Ml,V. स्म 4 B.G.J.K.M.Ma. ०हान् 5 M.Ma ०रूप्य 6 B.G.J.Ml.V. नृप। 7 B.G.J.M.Ma. ०र्वीं 8 M.Ma. ०भिः 9 W. युतः 10. B.G.J.M.Ma. ०थु० 11 - -11 W. स हरिः कार्य

## श्रीधरस्वामिविरचिता भावार्थदीपिका

★ दशमस्कन्धपूर्वार्धभावार्थस्य प्रदीपिका। यस्येयं मुखतो भाति नाऽस्ति तस्याऽऽन्तरं तमः॥

ततः पञ्चाशत्तमे तु जरासन्धभयादिव। कारयित्वाऽम्बुधौ दुर्गं तं निनाय निजं जनम्।
कपाटान् कपटै[1]रेव हत्वा दैत्यानयत्नतः। अजयत्तं[2] जरासन्धं धर्मेणैव तु धार्मिकम्॥

**अस्तिरिति।** अस्तिप्रास्ति[3]संज्ञिके, ईयतुः जग्मतुः ॥ १,२ ॥

**स इति।** कंसे शोकः कृष्णे च अमर्षः, ताभ्यां युतः ॥ ३ ॥

**अक्षौहिणीभिरिति।** न्यरुणत् रुरोध ॥ ४ ॥

**निरीक्ष्येति।** तस्य बलम् सैन्यम्, उद्वेलं लङ्घितमर्यादं सागरमिव। तेन तस्य बलेन संरुद्धम् ॥ ५ ॥

**चिन्तयामासेति।** किं बलमेव हन्मि न मागधम्, मागधं वा हत्वा बलं गृह्णामि, यद्वा, समागधं सर्वं हन्मि इति चिन्तयामास। न प्रथमं, कथं जेष्यामीत्येवं चिन्तयितुं युक्तम् तत्राऽऽह - कारणमानुष इति भूभारावतारकारणेन मानुषः, न [4]तुतत्त्वतः इति ॥ ६ ॥

---

★ This verse is not found in BJ edns 1 MIV °टैनैव 2 BJ °च्च 3 BJ °स्ति 4 MIV omit तु।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

व्याख्यातं दशमस्कन्धपूर्वार्धं मे यथाश्रुतम्। यथामतीतस्तुष्यन्तु क्षाम्यन्तु गुणवत्तमाः॥

अथ जरासन्धजयात्मकं भगवच्चेष्टितं वर्णयितुकामः तावज्जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति-**अस्तिः प्राप्तिश्चेति** सार्धद्वयेन। हे [1-]भरतर्षभ[-1]! भरतसत्तम! अस्तिः प्राप्तिश्चेति द्वे कंसस्य भार्ये ते भर्तरि कंसे हते सति, भगवतेति शेषः। दुःखार्ते दुःखपीडिते भूत्वा पितुर्जरासन्धस्य गृहान् ईयतुः जग्मतुः ॥ १ ॥

ततो मगधदेशाधिपतये जरासन्धाय स्वपित्रे दुःखिते अस्तिप्रास्ती सर्वमात्मनोः वैधव्यकारणं निवेदयाञ्चक्रतुः ज्ञापितवत्यौ ॥ २ ॥

स जरासन्धः तद्दुहितृभ्यामावेदितं अप्रिय माकर्ण्य शोकामर्षाभ्यां युतः महीं यादवाङ्कुररहितां कर्तुं परम मुद्यमं प्रयत्नं चक्रे ॥ ३ ॥

तदेवाऽऽह- **अक्षौहिणीति।** त्रयोविंशत्यक्षौहिणीबलपरिवेष्टित इत्यर्थः। यदुराजानामाश्रयभूतां मधुरां चतुर्दिक्षु निरुद्धवान् ॥ ४ ॥

[2]तदा श्रीकृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलम्, तेन बलेन संरुद्धं स्वपुरं, भयेन व्याकुलं स्वजनञ्च निरीक्ष्य चिन्तयामासेति सम्बन्धः ॥ ५ ॥

हरिः कारणमानुष इति हेतुगर्भम्। यद्यपि न तस्योपद्रवः, सर्वकारणत्वेन न तद्बलसंहारे प्रयासश्च। तथाऽपि आश्रितार्तिहरत्वात्, सर्वकारणत्वेऽपि मानुषत्वात् गुहीतमनुष्यरूप तत्सजातीयचेष्टितत्वात् मनुष्यवच्चिन्तयामास, चिन्तयित्वा निश्चितवानित्यर्थः। किं कथम्? इत्यत्राऽऽह तद्देशेति, तद्देशकालानुगुणं यथा भवति तथा स्वावतारप्रयोजनं विचार्य अध्यवास्यत् ॥ ६ ॥

---

1- -1 BTW omit 2 TW omit तदा

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सच्छास्त्रस्य असच्छास्त्रेणेव कतिपयेष्वध्यायेषु श्रीकृष्णस्य जरासन्धेन सह सङ्ग्रामं वर्णयति। तत्त्वनिर्णयेन सदसतां भक्तिद्वेषाभ्यामुद्बुद्धाभ्यां विहितनिर्वाणामिर्भवति। तत्र कथां प्रसञ्जयितुमाह-अस्तीति। अस्तिप्रास्तिशब्दाभ्यां अविद्याया द्वे रूपे संशयविपरीतज्ञाननामनी उच्येते। तत्र संशये ज्ञानसत्तामात्रमस्ति, विपरीते तदपि नाऽस्ती त्यस्तिप्रास्ती। अस भुवि, भूसत्ताया मिति धातोः। यद्वा निश्चायकप्रमाणाभावेन निश्चयज्ञानाभावात् संशयविपरीतज्ञानवाचकावेतौ 'असु निरसने' इति धातोः, कंसस्य महिष्यौ। कसि हिंसायाम् इति धातोः, हिंसात्मनोऽधर्मस्य महिमबन्धकत्वेन सम्बन्धिन्यौ' षिञ् बन्धने' इति धातोः कृष्णनाम्ना धर्मेण भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे हते विनाशिते स्वपितुः स्वपोषकस्य जरासन्धस्य 'जॄ वयो हानौ' इति धातोः वयोहानिहेतुभूता शैवी शास्त्रसंहिता जरेत्युच्यते। तस्यां सन्धा मरणापत्तावपि न मुञ्चामीति प्रतिज्ञा यस्य स तथा। तस्य गृहान् प्रमेयविशेषान् ईयतुः प्राप्य स्थिते। शब्दशक्तिविचक्षणैः पुरुषै रध्यात्मविषयतया अत्राऽर्थो ज्ञातव्य इति ग्रन्थबाहुल्यभीरुणा मया न प्रदर्श्यते इति ॥ १ ॥

आत्मवैरूप्यकारणं आत्मवैधव्यादिनिमित्तं, अन्यत्र प्रतिपादनासामर्थ्यम् ॥ २ ॥

'नॄ नये' इति धातोः नॄन् नयान् शैवशास्त्रोक्तान् पिबतीति नृपः शास्त्रज्ञः यः प्रतिसम्भूमेत्यभिधानात् यो विष्णुः स एव अदो दुष्टदण्डकस्तं वान्ति शरणं गच्छन्तीति यादवाः वैष्णवाः तद्रहिताम् ॥ ३ ॥

एकस्थानमारभ्य षोडशस्थाने या संख्या सा अक्षौहिणीत्युच्यते इति। अन्ये गजानां सप्त सहस्राणि द्विशती साशीतिः।एवं रथानामपि संख्या। अश्वाना मेकविंशतिसहस्री पञ्चशती विंशतिश्च। पदातीनां पञ्चत्रिंशत्सहस्रं विंशतिभिश्चेति अक्षौहिणीसंख्यां ब्रुवते। एको गज एको रथः त्रयोऽश्वाः पञ्च पदातय इति दशसंख्या पत्तिर्नाम। त्रिगुणिता पत्तिः सेना मुखमिति भिन्नं वा पदम्। सेना मुखस्त्रिगुणो गुल्मनामा, तत्त्रिगुणो गुणनामा, गुणत्रिगुणा वाहिनी नाम, वाहिनी

त्रिगुणा पृतना, तत्रिगुणा चमूः, तत्रिगुणिता चमू रनीकिनी, दशानीकिनीत्यक्षौहिणीति केचित्। "एकैकेभैकरथ त्र्यश्वा पत्तिः पञ्च पदातिका, पत्त्यङ्गैस्त्रिगुणैस्सर्वैः क्रमा दाख्या यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकि न्यक्षौहिणी (अम. को. 2-537, 538) इत्यमरः ॥ ४-६ ॥

**हनिष्यामि बलंह्येत द्भुवि भारं समाहितम्।**
**मागधेन समानीतं प[1]श्यतां सर्व[2]भूभुजाम्॥ ७ ॥**

**अक्षौहिणीभिस्संख्यातं भटाश्वरथकु[3]ञ्जरैः।**
**माग[4]धस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥**

**एतदर्थोऽवतारोऽयं भूभारहरणाय मे।**
**संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥**

**अन्योऽपि धर्मरक्षायै देहः स[5]म्भ्रियते मया।**
**[6-]विरामायाऽप्य[-6]धर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥**

---

1 BG वश्याना, JK वश्याना 2 MMa भृताम् 3 K.W सङ्कुलम्। 4 MMa ०धोऽपि 5 MMa सम्रियते 6- -6 MMa विरामाय ह्य° MI V विरमाय ह्य°

श्रीध० एवं [1]त्रेधा विचिन्त्य प्रथमं पक्षं निर्धारितवान्। तदाह चतुर्भिः - **हनिष्यामीति** ॥ ७ ॥

**अक्षौहिणीभिरिति**। ब[2]लोद्यमं कर्ता करिष्य[3]ति॥ ८ ॥

नन्वत एव हन्तव्य स्तत्राऽऽह - **एतदर्थ** इति। एतच्छब्दार्थं स्पष्टयति भूभारहरणायेति ॥ ९ ॥

अय मेतदर्थोऽवतार इत्युपलक्षणमित्याह - **अन्य** इति। प्रभवतः उद्भवतः ॥ १० ॥

---

1 BJ त्रि° 2 MI,V ०लायोद्यम 3 BJ add इति।

वीर० विचार्य निश्चितमेव दर्शयति - **हनिष्यामीति** चतुर्भिः। वंशे भवा वंश्याः तेषां सर्वेषां भूभृतां राज्ञा मेतत् भूमे र्भाररूपं समाहितं समुदितं मागधेन जरासन्धेन आनीत मत्र प्रापितम्॥ ७ ॥

★ [1-] पदातिभिरश्वैरथैश्च सङ्कुलं व्याप्तम्, अक्षौहिणीभिस्त्रयोविंशतिसंख्याकाभिरिति शेषः, संख्यातं बलं हनिष्यामि। मागधस्तु मया न हन्तव्यः हन्तु मनर्हः। तत्र कारणमाविष्करोति, भूयः पुनः बलायोद्यमं कर्ता करिष्यति। यद्यधुनैव मागधो हतः भूयो बलस्यानेता न स्यात्। यदि न हतः, तदा पुन र्बलं समानयन् अवतिष्ठेतैव एवञ्चेत्कृत्स्नं बलं हतं स्यात् अतस्सोऽधुना न हन्तव्य इति [-1] ॥ ८ ॥

ननु किं वृथा बलहननेन ममाऽर्थः, यो द्वेष्टि स एव हन्तव्य इत्याशङ्कय, तर्ह्यवतरणं नाऽर्थवत्स्यात् इत्यभिप्रयन्नाऽऽह- **एतदर्थ** इति। मे मम अवतारः एतदर्थः एषोऽर्थः प्रयोजनं यस्य तथाभूतः। कोऽसावर्थ इत्यपेक्षायां भूभारेत्यदिभिश्चतुर्थ्यन्तैः प्रयोजनविशेषान्निर्दिशति- भूभारहरणाद्यर्थ मयमवतारः कृत इत्यन्वयः। अन्येषा मसाधूनां वधाय च ॥ ९ ॥

नेदं प्रयोजनविशेषपरिगणनम्, अपि तु प्रदर्शनमात्रमित्यभिप्रेत्याह - **अन्योऽपीति**। अन्योऽप्यवतारस्याऽर्थः प्रयोजनम्। कोऽसौ ? अत स्तं दर्शयति - धर्मरक्षायै इति। अन्योऽपीत्येकवचनं सामान्याभिप्रायकम्। काले कदाचि त्कचित् प्रभवतः प्रकर्षेण भवतो वर्धमानस्याऽधर्मस्य विरामाय विध्वंसनाय च मया देहः सम्भ्रियते परिगृह्यते ॥ १० ॥

---

★ This extra matter is found in B edn अन्योऽपि वाराहादिदेहः। धर्मरक्षायै प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते॥ ८॥

1- - 1 B omits

**विज०** अन्योऽपि वाराहादिरपि स्वकाले प्रभवतः वर्धमानस्या[1]ऽधर्मस्य विरामाय विनाशाय ॥ ७ - १० ॥

---

1 B omits अधर्मस्य

### विजयध्वजरीत्या अधिकपाठः।

**एवं ध्यायति गोविन्दे मगधाधिपति र्बली।**
**मधुरां सवनोद्यानां रुरोध बहुसैनिकः॥ 1 ॥**

**कलिङ्गश्चेकितानश्च दन्तवक्त्रविदूरथौ।**
**उल्मुको वेणुदारी च शाल्वश्चैद्यश्च दुर्मतिः ॥ 2 ॥**

**पूर्वद्वारं समासाद्य रुरुधु र्मागधाज्ञया।**
**विन्दानुविन्दा वावन्त्यौ विराटो दरदस्तथा॥ 3 ॥**

एकलव्यो बाह्लिकश्च तथा पञ्चनदेश्वरः।
रुरुधु र्दक्षिणद्वारं पौण्ड्रकश्च महाबलः॥ 4 ॥

युधामन्यु र्बृहत्क्षत्रः शाल्वो भूरिश्रवास्तथा।
उत्तमौजाश्च रुक्मी च द्रुमश्चैव सुदक्षिणः ॥ 5 ॥

एते नियुक्ता राजानो जरासन्धेन भारत!
पश्चिमद्वार मासाद्य रुरुधु र्मधुरां पुरीम् ॥ 6 ॥

द्रुपदश्शिशुपालश्च त्रिगर्तोऽथ जयद्रथः।
शकुनिस्सोमदत्तश्च कुणिन्दश्च महाबलः॥ 7 ॥

जरासन्धेन सहिताः सर्वे मदबलान्विताः।
उत्तरद्वारमासाद्य रुरुधु र्भरतर्षभ !॥ 8 ॥

ते निरुध्य चतुर्द्वाराण्युद्वेलाम्भोधिसन्निभाः।
सिंहनादश्च कुर्वन्तो दध्मु श्शङ्खाननेकशः ॥ 9 ॥

क्ष्वेलन्तो युद्धसन्नद्धा जध्नु र्भेरी स्सहस्रशः ॥ 10 ॥

तद्वीर[2]भूपालकदम्बजृम्भितं युगावसानार्णवघूर्णितोपमम्।
निशम्य कृष्णो न चचाल चेतसा सृगालघोषं मृगराडिवोद्धतः ॥ 11 ॥

[1]एतस्मिन्नेव काले तु गगनात्सूर्यवर्चसौ॥ 12 ॥

---

1 B सौ° 2 ०द्धार

विज० मधुरां योग्यानां परमानन्ददात्रीं वेदान्तविद्यां, तस्याश्चतुर्द्वाराणि ऋगादीनि पाष(ख)ण्डशैवबौद्धादयः लिङ्गादिशब्दिताः बहव स्सैनिकाः सेनारक्षकाः यस्य स तथा। "सेनारक्षास्तु सैनिकाः" (अम. को. 2-518) इत्यमरः। 1 - 9 ॥

क्ष्वेलन्तः अट्टहासं कुर्वन्तश्च॥ 10 ॥

कदम्बः समूहः ॥ 11, 12 ॥

[1-] एवं ध्यायति गोविन्दे आकाशात्[-1]सूर्यवर्चसौ।
रथावुपस्थितौ सद्य स्ससूतौ सपरिच्छदौ ॥ ११ ॥

आयुधानि च दिव्यानि पुराणानि यदृच्छया।
दृष्ट्वा तानि[2] हृषीकेशस्सङ्कर्षणमथाब्रवीत् ॥ १२ ॥

[विजयध्वजरीत्या अधिकपाठः]

(K.M.Ma. प्रकाशेषु दृश्यमानः)
चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम्।
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा॥ 13 ॥

त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम्।
तीक्ष्णधारः शितमुखः खड्गो नन्दकसंज्ञितः॥ 14 ॥

लघू शरार्चितौ रम्यौ तूणौ चाक्षयसायकौ।
तुरगाश्शैब्यसुग्रीवमेघपुष्पवलाहकाः ॥ 15 ॥

हलश्च बलभद्रस्य मुसलश्च दृढं गुरु।
इत्येतान्यायुधान्याजौ गगनादागतानि सः॥ 16 ॥

[3-] श्रीकृष्ण उवाच [-3]

पश्यार्य[4]! व्यसनं प्राप्तं यदूनां सात्त्वतां[5] प्रभो!
एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥

[6] यानमास्थाय जह्येत द्व्यसनात्स्वान् समुद्धर।
एतदर्थं हि नौ जन्म साधूना[7]मीश शर्मकृत्[8] ॥ १४ ॥

त्रयोविंशत्यनीका[9]ख्यं भूमेर्भार मपाकुरु।
एवं सम्मन्त्र्य दाशार्हौ दंशितौ [10-]रथिनौ पुरात्[-10] ॥ १५ ॥

---

1- -1 M.Ma. एतस्मिन्नेव काले तु गगनात् 2 M.Ma राजन् 3 --3 B.G.J.M.Ma.Ml.V omit 4 Ml.V ॰ऽद्य 5 B.G.J.M.Ma.Ml.V त्वावतां 6 K.W. एन॰ 7 K.W. ॰नामिह 8 M.Ma. सत्कृतम्। 9 M.Ma. ॰कानां 10- -10 रथिनां वरौ॥

**श्रीध० एवमिति।** ससूतौ सारथिसहितौ परिच्छदः परिकरः, ध्वजकवचादिः तत्सहितौ ॥ ११, १२

**पश्येति।** त्वं अवन् रक्षको नाथो विद्यते येषां ते त्वावन्तः, तेषाम् ॥ १३, १४ ॥

**त्रयोविंशतीति।** दंशितौ बद्धकवचौ ॥ १५ ॥

1 BJ add एव

**वीर० एवमिति।** ध्यायति विचार्य निश्चितवति सति तदैव द्वौ रथौ आकाशा दवतीर्योपस्थितौ स्तः। कथम्भूतौ? सूर्यस्येव वर्चः ययोस्तौ। सारथिसहितौ। परिच्छदः परिकरः ध्वजकवचादिः तत्सहितौ॥ ११ ॥

अथ हृषीकेशः पुराणानि पुरातनानि, दिव्यान्यमानुषाणि आयुधानि। चकारात् तैस्सहितौ रथौ च दृष्ट्वा सङ्कर्षणं प्रत्युवाच ॥ १२ ॥

उक्तिमेवाऽऽह-सार्धद्वयेन। हे आर्य! हे प्रभो! यदूनां व्यसनं प्राप्तमेत त्पश्य। नैते मद्भव उपेक्ष्या इत्यभिप्रायेण तान्विशिनष्टि[1] सात्त्वतामिति। सात्त्वतां भक्तानां, भृत्यानामिति यावत्। न हि स्वामी। भृत्यानुपेक्षितुमर्हतीति भावः । तर्हि किं विधेयमित्यत्राऽऽह- एष इति। दयितानि प्रियाणि आयुधानि। चकारात् कवचादीनि च आयातानीति लिङ्गवचन विपरिणामः ॥ १३ ॥

एनं रथ मास्थाय अधिष्ठाय एत त्परबलं जहि नाशय। स्वान् स्वकीयान् व्यसनादापद उद्धर, एतदर्थं प्रतिपक्षनिरसनार्थं हि इह लोके नौ आवयोः जन्म अवतारः। यद्वा नौ जन्म एतत्प्रतिपक्षनिरसन मर्थः प्रयोजनं यस्य तत्तथा। साधूनां शर्मकृत् सुखकारि च ॥ १४ ॥

अतः त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यक्षौहिणीसैन्यव्यपदेशं, केवलं भूमेर्भार मपाकुर्वपनय। एवमिति। इत्थं मिथः सम्मन्त्र्य आलोच्य दाशार्हौ रामकृष्णौ दंशितौ कवचितौ रथिनौ रथारूढौ स्वासाधारणैरायुधैराढ्यौ युक्तौ चाल्पीयसा कतिपयेन बलेन चाऽऽवृतौ च भूत्वा पुरात् मधुरायाः निष्क्रान्तौ॥ १५ ॥

1 B तानेव

**विज०** सपरिच्छदौ सोपस्करणौ ॥ ११,१२ ॥

सहस्रं अराणि दलानि यस्य तत्तथा। कौ मह्यां मोदको नारायणः तस्य विद्यमाना कौमोदकी ॥ 13 ॥

त्रिषु स्थानेषु कोटिद्वये मध्ये च नतं वक्रं नतम्। " कार्मुकन्तु चतुर्हस्तम्" (वैज०. को. 3-7-173) इति यादवः। शृङ्गविकृतं गुणेन ज्यया अन्वितं सहितम् ॥ 14 - 16 ॥

त्वावतां त्वद्युक्तानाम्। यद्वा- त्वं अवः रक्षको येषां ते त्वावन्तः तेषां त्वावतामिति पाठ श्छान्दसः। साधूनां साधुभिः सत्कृतम्। कृद्योगे षष्ठी ॥ १३,१४ ॥

त्रयोविंशत्यनीकानां त्रयोविंशदक्षौहिणीनां समुत्पन्नं भूमेर्भारम् ॥ १५ ॥

## विजयध्वजरीत्या अधिकपाठः

(B.K.M.Ma. प्रकाशेषु उपलभ्यमानाः प्रथमश्लोकः एवं ध्यायति K. प्रकाशे नास्ति।)

[1]दंशितैश्च यदुश्रेष्ठैर्बहुभिश्च समन्वितौ।
निर्जग्मतुः पुरवरात् बलेनाऽल्पीयसा नृप ॥ 17 ॥

निर्गत्य सदनात्कृष्णो वृष्णीनाहूय सर्वशः।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥ 18 ॥

*[2]वसुदेवश्च निशठं कृतवर्माणमुद्धवम्।
कृष्णो निर्यातयामास पूर्वद्वारेण भारत! ॥ 19 ॥

उग्रसेनं सुदामानं पृथुं विपृथुमेव च।
हरिर्निर्यातयामास द्वारेणाऽनुत्तरेण वै॥ 20 ॥

सात्यकिश्च गदश्चैव प्रसेनं गान्दिनीसुतम्।
हरिः प्रतीचीद्वारेण प्रेषयमास [3]दुर्मदान्॥ 21 ॥

गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवन्॥ 22 ॥

उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः
शङ्खं दध्मौ [4]महाप्राणं दैत्यदानवभीषणम्॥ 23 ॥

आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥ 24 ॥

### श्रीभगवानुवाच

रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ।
तर्पयामि नृपान् सर्वान् सायकै [5]र्युद्धदुर्मदान्॥ 25 ॥

### श्री शुक उवाच

इत्युक्तो दारुक स्तेन हयांस्तूर्णमचोदयत्।
व्यनद त्सिंहनादश्च गोविन्दः परवीरहा॥ 26 ॥

शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत्।
ततोऽभूत्परसैन्यानां हृदि[6]चिन्ता सवेपथुः॥ 27 ॥

पूर्वद्वारि नृपै स्सार्धं यदूनां [7-]कदनं महत्।
आसीच्चतुर्भिरष्टानां[-7] तदद्भुत मिवाऽभवत्॥ 28 ॥

दक्षिणद्वार्यपि तथा [8]गोविन्दाध्मातचेतसाम्।
आसीद्यदूनां कथनं राजन्यकटकेन वै ॥ 29 ॥

अपरद्वार्यपि तथा यदूनां दृढधन्विनाम्।
आसीद्राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥ 30 ॥

ते हन्यमाना यदवो राजभिश्शक्रविक्रमैः।
न चेलुस्सङ्गराद्राजन् लोकद्वयजिगीषवः॥ 31 ॥

तत्र यादव शार्दूलो विष्णुस्त्रैलोक्य वल्लभः।
आससाद महाघोरौ यत्र तौ चेद्यमागधौ ॥ 32 ॥

1 This verse (दशितैश्च ) is not found in k edn 2 ब्रह्मसूत्रादयो वसुदेवादिशब्दवाच्याः3 दुःख मन्दयन्ति अल्पीकुर्वन्तीति दुर्मदास्तान्। नुमागमाभावश्छान्दसः। 4 महाप्राण महाघोषम् 5 युद्धदुर्मदान् युद्धे दुष्टमदान्। 6 वित्रासवेपथुः 7- -7 वसुदेवादिभि श्चतुर्भिः कलिङ्गाद्यष्टानाम्। 'कद क्लद हिंसार्थौ' इति धातुः। कदन युद्धम्। 8 गोविन्देनाऽऽध्मात आश्वासित चेतो येषा ते तथा, तेषा राजन्याना कटकेन सैन्येन। "सैन्येऽपि कटकोऽस्त्रि याम्" इत्यभिधानम्। समूहेन वा।

★ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसावृतौ।
शङ्खं दध्मौ विनिर्गम्य हरि र्दारुकसारथिः ॥ १६ ॥

ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः।
तानाह मागधो वीक्ष्य हे कृष्ण! पुरुषाधम॥ १७ ॥

☆न त्वया योद्धु मिच्छामि [1-]वालकेनेह[-1] लज्जया।
गुप्तेन [2]च त्वया मन्द न योत्स्ये याहि बन्धुहन् ॥ १८ ॥

[3]त्वन्तु राम यदि श्रद्धा [4]युध्यस्व धैर्य[-4] मुद्वह।
[5]हित्वा वा मच्छरै [6]श्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥

श्रीभगवानुवाच।

[7]न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम्।
न गृह्णीमो वयं राजन्नातुरस्य मुमूर्षतः ॥ २० ॥

---

★ निर्जग्मतुः इत्यारभ्य वर्तमाना एते पञ्च श्लोकाः(16-20) M.Ma. प्रकाशयोः न विद्यन्ते। ☆ K.MI.V.W. प्रकाशेषु अस्य श्लोकस्य पूर्वार्धोत्तरार्धयोः वैपरीत्येन पाठो वर्तते। 1- -1 B.G.J बालेनैकेन; K.W बालकेनेव 2 B.G.J.K.W हि 3 B.G.J तव 4 - - 4 MI.V. स्थैर्य मावह 5 W. छित्वा 6 K.W. ०र्भिन्नं 7 K.W नहि

श्रीध० निर्जग्मतुरिति। स्वायुधाढ्यौ शोभनायुधसम्पन्नौ ॥ १६ ॥

तत इति। पुरुषा अधमा यस्मात् इति वास्तवोऽर्थः। हे पुरुषोत्तमेति ॥ १७ ॥

न त्वयेति। गुप्तेन [1]दंशितत्वात्[-1] सर्वान्तरत्वात् दानानर्हेण हे मन्द! बध्नातीति बन्धुः अविद्या। तां हन्तीति [2]हन् हे अविद्या- निरसनेति। याहि प्राप्नुहि ॥ १८ ॥

त्वमिति। अच्छेद्यदेहोऽसाविति स्वयमेव मत्वा अपरितोषात् पक्षान्तरमाह - यद्वा मां जहि इति ॥१९॥

नेति। यथाश्रुतार्थग्रहणेन [3]भगवत उत्तरं 'न वै शूरा इति' विकत्थन्ते श्लाघन्ते ॥ २० ॥

---

1- -1 B.J. omit 2 B.J. तथा 3 MI.V. ०वदुत्त°

वीर० ततो हरिः दारुकाख्यस्सारथिः यस्य तथाभूतः शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास ॥ १६ ॥

ततः शङ्खध्वानात् परसैन्यानां हृदि वित्रासो भयं तेन वेपथुः गात्रकम्पो बभूव। ताविति। तौ रामकृष्णौ अवलोक्य [1]मागधो जरासन्ध [1]आह। उक्तमेवाऽऽह कृष्णेत्यादिना। गुप्तेन कर्तरि क्तः गोपयता, आत्मानमिति शेषः स्वजनेनेति वा। त्वया सह न योत्स्ये न युद्धं करोमि। याहि गच्छ। तत्र कारणं वदन् सम्बोधयति - हे मन्द! मूढ! तत्र हेतुः - हे बन्धुहन्! अत एव हे पुरुषाधम! बन्धुर्मातुलः तस्य हन्तः! न केवलं न योत्स्याम्येव। अपि तु त्वया योद्धुं नेच्छाम्यपि। यथा बालकेन सह लज्जया न युयुत्से [2]तद्व दित्यर्थः ॥ १७, १८ ॥

अथ राम माह त्वमिति। यदि श्रद्धा, युद्धार्थ मस्तीति शेषः। तर्हि हे[3] राम! युध्यस्व। स्थैर्यमावह; न तु प्रारभ्य पलायस्वेति भावः। एवञ्चेत् मच्छरैः भिन्नं देहं त्यक्त्वा स्वर स्वर्गं याहि यास्यसीत्यर्थः। यद्वा, समर्थश्चेत्त्वं मामेव जहि ॥ १९ ।

एव मुक्तः प्राह भगवान् - नहीति। विकत्थन्ते विविधमात्मानं न श्लाघन्ते शूराः, किन्तु [4-]रिपूणामपि श्लाघ्यं[-4] पौरुष मेव दर्शयन्ति। अत स्तवाऽशूरस्य मुमूर्षतः[5] मर्तुमाशंसमानस्य, अत एवाऽऽतुरस्य वचो वयं न गृह्णीमः न बहुमन्यामहे[6] ॥ २० ॥

---

1- -1 K.T.W omit 2 K.T.W omit इत्यर्थः 3 K.T.W omit हे राम। 4- -4 K,T.W omit 5 K.T.W omit मुमूर्षतः 6 B adds इत्यर्थः

[1-]श्रीशुक उवाच

जरासुत स्ता वभिसृत्य[2] माधवौ महाबलौघेन बलीयसाऽऽवृणोत्।
ससैन्ययानध्वजवाजिसारथी[3] सूर्यानलौ वायुरिवाऽभ्ररेणुभिः ॥ २१ ॥

सुपर्णतालध्वजचिह्नितौ[4] रथौ अलक्षयन्त्यो[5] हरिरामयोर्मृधे।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रितास्सम्मुमुहु श्शुचार्दिताः[6] ॥ २२ ॥

हरिः परानीकपयोमुचां मुहु श्शिलीमुखात्युल्बणवर्षपीडितम्।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम्[7] ॥ २३ ॥

गृह्णन्निषङ्गादथ सन्दधच्छरान्विकृष्य मुञ्चन् शितबाणपूगान्[8]।
निघ्नन्रथान्कुञ्जरवाजिपत्तीन्[9]निरन्तरं यद्वदलातचक्रम् ॥ २४ ॥

---

1- -1 MMa omit 2 K.W ०गम्य, M, Ma वीक्ष्य 3 MIV ०थिः 4 V ०वं° 5 M.Ma विलक्ष° W विलोक° 6 KMMaMIVW चार्पिताः 7 MMa व्यघूर्ण० 8 MMa सञ्चयम् 9 MMa यूथपान्, MIV पत्तीर्नि।

श्रीध० जरासुत इति। माधवौ मधुवंशसम्भवौ महता सैन्यसमूहेन आवृतत्वात्[1] वायुरभ्रैः सूर्यं रेणुभिश्च अग्निं यथेत्यदर्शनमात्रमेव [2]आवरणमिति सूचितम् ॥ २१ ॥

हरिरिति। परस्याऽनीकानि सैन्यानि तान्यैव पयोमुचः मेघाः तेषां शिलीमुखा बाणाः। तेषा मत्युल्बणं वर्षं, तेन पीडितं व्यस्फूर्जयत् उज्जृम्भितवान्॥ २२,२३ ॥

तदाह गृह्णन्निति। निषङ्गादिषुधेः शरान् गृह्णन्। अथ तान्गुणे सन्दधत्, गुणमाकृष्य निशितबाणसमूहान् मुञ्चन् निघ्नन् प्रहरन् पत्तिः पदातिः, निरन्तरमिति ग्रहणादिक्रियाविशेषणम्। ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भ्रमति तद्वत् व्यस्फूर्जयदिति ॥ २४ ॥

---

1 B.J omit स 2 MIV ०नाव०3 ०त्तीः 4 MIV ०तीः

वीर० जरासुत इति। तौ सैन्यादिभिस्सहितौ। मधुवंशजत्वाद्द्वयोरपि माधवाविति निर्देशः। रामस्य माधवांशत्वाद्वा माधवव्यपदेशः। अभिसृत्य अभिमुखमागत्य बलीयसा महता सैन्यसमूहेन आवृणोत् आवृतवान्। ससैन्यइत्यस्य प्रथमैकवचनान्तपाठे जरासुतविशेषणत्वम्। यथा वायु रभ्रै स्सूर्यं, रेणुभिश्चाग्निं आवृणोति तथेति दृष्टान्तार्थः। अनेनाऽदर्शनमात्र मेव नाऽऽवरण- मिति सूचितम् ॥ २१ ॥

सुपर्णेति। तदा पुरस्त्रियः पुरस्य अट्टालकादीनाञ्च समाहारः, तत्समाश्रिता अधिरूढाः। अट्टालका उपरिभूमिकाः, मृधे युद्धे सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ सञ्जातचिह्नौ हरिरामयोः रथावपश्यन्त्यः, अत एव शुचा अर्पिताः व्याप्ताः सम्मुमुहुः विचित्ता बभूवुः ॥ २२ ॥

हरिरिति। परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघाः तेषां शिलीमुखा बाणाः, तेषामत्युल्बणं दुस्सह वर्षं तेन पीडित स्वसैन्यमालोक्य सुरैरसुरैश्च बहुमतं शार्ङ्गाख्यं शरासनोत्तमं धनुश्श्रेष्ठं व्यस्फूर्जयत् उज्जृम्भितवान्। सघोषज्यायुक्तमकरोदिति वा॥ २३ ॥

गृह्णन्निति। निषङ्गा तूणात् शरान्गृह्णन्, धनुषीति शेषः। विकृष्य सन्निहितत्वाच्छरानाकृष्य निशितबाणसमूहा- न्मुञ्चन् रथादीन्निघ्नन् ध्वंसयन्, अवतस्थे इति शेषः। पत्तयः पदातयः न विद्यते अन्तरं विच्छेदो यस्यां ग्रहणादिक्रियायां तद्यथा भवति तथा, अवतस्थे इत्यर्थः। तादात्विकमगवच्छार्ङ्गस्य दृष्टान्तमाह - यद्वदलातचक्रमिति। यद्वद्यथा ज्वलत्काष्ठभ्रमणं चक्रवद्भाति तद्वद्धनुरासीदित्यर्थः । निरन्तरमित्यलातचक्रस्यैव वा विशेषणम्। विच्छेदरहितमलातचक्रं यथा तद्वत्। तद्धनु- र्व्यस्फूर्जय दिति पूर्वेण सम्बन्धो वा ॥ २४ ॥

---

1 K. गम्य° TW वृत्य 2 KTW तथा 3 B °मवलोक्य T मालोच्य 4 B adds अत्यर्थं (अन्वर्थं), TW add अन्वर्थं

विज० माधवौ मधुकुले जातौ सैन्येन यानध्वजैः रथध्वजै र्वाजिभिः अश्वैः सारथिभिश्च सहितौ। "वाजी त्वश्वे शरे खगे" (वैज.को. 6-1-55) इति। अभ्रैर्जलचरैः, रेणुभिश्च ॥ २१ ॥

सुपर्णतालध्वजाभ्यां चिह्नितौ अङ्कितौ हरिरामयोः कृष्णबलभद्रयोः रथौ विलक्षयन्त्यः पश्यन्त्यः, पुरं गृहं, अट्टालकं गृहोपरीष्टकादिविरचितचतुरस्रस्थलं, हर्म्यं धनिनां वासः,गोपुरं पुरद्वारं, अल्पवयसौ अल्पसेनौ कृष्णरामौ मागधं प्रलयार्णवोपमसेनं दृष्ट्वा समुत्पन्नया शुचा ॥ २२ ॥

व्यघूर्णयत् विस्फारयामास। परानीकपयोमुचां शत्रुसेनामेघानाम् ॥ २३ ॥

श्रीकृष्णस्य हस्तलाघवं कथयति - गृह्णन्निति। निषङ्गात्तूणीरात् भ्राम्यमाण मलातचक्रम् उल्मुकमण्डलं निरन्तरं छिद्रदर्शनं दुश्शक यद्व त्तद्वत् ॥ २४ ॥

## विजयध्वजरीत्या अधिकपाठः

ततश्शशाङ्काकृति पाञ्चजन्यं महारवं दैत्यकुलापचारम्।
मुखे निधायाऽऽशु पुपूर यादवानाश्वासयन् क्षत्रियकूटघट्टितान् ॥ 33 ॥

नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिन्नहृदो[1] बभूविरे।
यदुप्रवीराश्च समुद्यतायुधा रणे नृपाञ्चघ्नुरनीकसंयुताः॥ 34 ॥

ततश्चतुर्द्वारगतान्महीपतीन्[2] यदुप्रवीराः परिभूय सर्वशः ।
चक्रुश्शरौघैः सहसैकवाहिन आप्यायिताः शार्ङ्गरवेण शौरिणा ॥ 35 ॥

ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः।
भर्त्सयन् कृष्ण कृष्णेति तिष्ठ तिष्ठेति चाब्रवीत् ॥ 36 ॥

तमभ्यधाव द्गोविन्दो विमुञ्चन् सायकान्[3] बहून्।
मण्डलीकृतकोदण्डस्तैलधौतान् शितान् शरान् ॥ 37 ॥

ततः पञ्चशरान् घोरान् आदाय दमघोषजः ।
चतुर्भि स्तुरगा नाशु विव्याधैकेन सारथिम् ॥ 38 ॥

भूयो दशाऽऽशु सन्धाय विव्याध मधुसूदनम्।
व्यनद त्सिंहनादश्च तदद्भुतमिवाऽभवत्॥ 39 ॥

ततस्तमाह गोविन्दः साधु साध्विति पूजयन्।
भो भो चैद्य महेष्वास! वीरोऽसि बलवानसि॥ 40 ॥

अतो मे पश्य दुर्बुद्धे धानुष्मत्त्वं[4] स्वयं रणे।
इति ब्रुवति गोविन्दे राजानः सर्व एव ते॥ 41 ॥

विव्यधु र्निशितै र्बाणै र्युगपद्येन माधवम्।
तांस्तान् प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः ॥ 42 ॥

सारथिं चतुरो वाहाननयद्यमसादनम्।
त्रिभि स्त्रिभि श्शरै र्भूयोऽप्येकैकं नृपतीन्रणे ॥ 43 ॥

वक्षस्याऽऽस्ये ललाटे च विव्याध यदुनन्दनः।
ततश्च त्रिंशतां राज्ञां त्रिंशत्कार्मुकमाहवे॥ 44 ॥

स्सायकैराशु चिच्छेद यदुपुङ्गवः।
दमघोषसुतस्यापि धनुश्छित्त्वा त्रिभिश्शरैः ॥ 45 ॥

ध्वजञ्च मुकुटच्छत्रे चकर्त[6] प्रहसन्निव।
ततो दश हरिर्भल्लान् शार्ङ्गे सन्धाय माधवः ॥ 46 ॥

आकर्णान्तं[7] समाकृष्य चैद्यं विव्याध सङ्गरे।
तेन राजन्यकटकं विभ्रान्तं शरताडितम्॥ 47 ॥

कालान्तमारुतोद्भूत शैलद्रुमलतोपमम्।
त्रातारं नाऽध्यगच्छद्वै हताश्वरथसारथिः॥ 48 ॥

शरान्विमुञ्च अलजञ्च पूरयन् विस्फूर्जयन्[8] कार्मुक मुग्रपौरुषः।

विलोकयन्[9]मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम्॥ 49 ॥

1 K सङ्गताम् 2 K ०ना 3 K शिलाशितान् 4 K ०ष्क० 5- -5 K त्रिभिस्त्रिभिस्सायकैश्च 6 K चिच्छिदे 7 K ०न्तमिवाकृ० 8 K विष्फारयन् 9 K ०यलोडयत् ॥

**विज०** दैत्यकुलस्यापचार नाशकरं, क्षत्त्रियाणां कूटेन समूहेन घट्टितान् संवेष्टितान् ॥ 33 ॥

क्रमेण तत्तद्योग्यतानुसारेण ॥ 34 ॥

एकवाहिनः एकवाहनगतान् पृष्ठवाहनहीनानित्यर्थः॥ 35 - 37 ॥

दमघोषजः शिशुपालः ॥ 38 ॥
सिंहनादं व्यनदत् सिंहनादं चकार ॥ 39 ॥
वीरः शूरोऽसि,[1] बलवान् शक्तिमानसि ॥ 40 ॥
धानुष्मत्त्वं धनुष्मतां माहात्म्यम् ॥ 41 ॥

आशुगैः शरैः ॥ 42, 43 ॥

यदून्नन्दयति बलेन समर्थयतीति यदुनन्दनः॥ 44 - 47॥

कालान्तमारुतेन प्रलयकालवायुना ॥ 48, 49 ॥

1 Mb अस्ति।

निर्भिन्नकुम्भाः करिणो निपेतु रनेकशो[1]ऽश्वाः शरवृ[2]क्णकन्धराः।
रथा हताऽश्वध्वजसूतनायकाः पदातय श्छिन्नभुजोरुकन्धराः॥ २५ ॥

संछिद्यमानद्विपदेभवाजिना मङ्गप्रसूता श्शतशोऽसृगापगाः।
भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाऽऽकुलाः॥ २६ ॥

करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः।
[3]आस्थूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः॥ २७ ॥

प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षक[4]रीः परस्परम्।
विनिघ्नताऽरीन् मुसलेन दुर्मदान् सङ्कर्षणेनाऽपरिमेयतेजसा ॥ २८ ॥

बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम्।
क्षयं प्रणीतं वसुदेवपुत्त्रयो र्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥

स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः[5] स्वलीलया।
न तस्य चित्रं परपक्षनिग्रहस्तथाऽपि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥

1 MMa ०नी° 2 MMa ०रुग्ण° 3 BGJ अच्छूरिका MMa. आस्फूर्जिता० MIV अस्थूरिका० 4 MMa ०वहाः 5 J °ण स्सम°

श्रीध० निर्भिन्नेति। हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥

संछिद्यमानेति। सञ्छिद्यमाना द्विपदा इभा वाजिनश्च, तेषामङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः; परस्पर प्रवर्तिता इति तृतीयेनाऽन्वयः, प्रसिद्धनदीरूपकमाह - भुजा एवाऽहयो[1] यासु ताः। पुरुषाणा शीर्षाण्येव कच्छपा[2] यासु ताः। हता द्विपा एव द्वीपा अन्तर्वर्तितटानि, हया एव ग्रहा ग्राहा स्तैश्च आकुलाः व्याप्ताः॥ २६ ॥

करेति। करा ऊरवश्च मीना यासु ताः, नराणा केशा एव शैवलं यास ताः. धनूंष्येव तरङ्गा आयुधान्येव गुल्माः तैश्च तैश्च सङ्कुलाः। अस्थूरिकाश्चर्माणि, चक्राणि वा, ता एवाऽऽवताः तभ यानका. महामणाना प्रवका उत्तमा आभरणानि यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥

भीरूणां भयावहाः, मनस्विनां धीराणां[3] हर्षकर्यः ॥ २८ ।

किञ्च। सङ्कर्षणेनाऽपि तद्बलं क्षयं प्रणीतम्। अङ्ग! हे राजन्! अर्णववत् दुर्गं दुर्गमं भैरवं भयङ्करञ्च यतः दुरन्तपारं, अन्तोऽत्र तलं, पारमवधिः । दुश्शब्दो निषेधे। विक्रमेणाऽगाधं देशतश्च निरवधिकमित्यर्थः । किञ्च-मगधेन्द्रेण च पालितं बलं यदेवम्भूतं रामकृष्णयोः कर्मोक्तं[4] तत्परं केवलं तयो र्विक्रीडितम् न तु पराक्रमः ॥ २९ ॥

न चैत दाश्चर्य मित्याह-**स्थितीति**। तर्हि किमित्याश्चर्यमिव वर्णितम्? तत्राऽऽह-तथाऽपीति। मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥

---

1 MI.V. यासां 2 MI V यासां 3 MI V omit धीराणां 4 MI.V. ०ङ्क्तं

**वीर०** तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति-**निर्भिन्नेति**। निर्भिन्नाः[1] कुम्भाः कुम्भस्थलानि येषां ते, करिणो गजा निपेतुः । तथा अश्वाश्चानेकशः शरैर्भग्नाः कन्धरा ग्रीवा येषां तथाभूताः, निपेतु रित्यनुषज्यते। हता अश्वाः ध्वजाः सूता नायका रथिनश्च येषु ते रथाः, तथा पदातयश्च छिन्ना भुजा ऊरवः कन्धराश्च येषां तथाभूता निपेतुः ॥ २५ ॥

अथ भगवच्छरनिर्भिन्नपरसैन्यतनुप्रभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति-**सञ्छिद्यमानेति**। सञ्छिद्यमानेभ्यः पदातिगजाश्वानां अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः शतशः प्रवर्तिता इति तृतीयश्लोकेनाऽन्वयः । कथम्भूताः? भुजा एव अहयः सर्पा यासु, पूरुषाणां शीर्षाण्येव कच्छपा यासु तथाभूताः, हता द्विपा गजा एव द्वीपा अन्तरीपभूमयः, हया अश्वा एव ग्रहाः। तैश्चाऽऽकुला व्याप्ताः ॥ २६ ॥

करा ऊरवश्चैव मीना यासु, नराणां केशा एव शैवलं यासु ताः, धनूंष्येव तरङ्गा, आयुधान्येव गुल्मानि च तैश्च सङ्कुलाः आस्थूरिकाश्चक्राणि ता एवाऽऽवर्ताः तैर्भयानकाः महामणीना प्रवेकाः श्रेष्ठाः उत्तमाभरणानि च यथायथं शिलाश्शर्कराश्च यासु ताः॥ २७॥

भीरूणां भयावहाः मनस्विनां धीराणां मिथो हर्षकारिण्यः। विनिघ्नतेति। किञ्च-अङ्ग! हे राजन्! अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेनाऽरीन् शत्रून् मुसलेनाऽऽयुधेन विनिघ्नता ताडयता, सङ्कर्षणेन कर्त्रा ॥ २८॥

तन्निहतावशिष्टं मगधेन्द्रेण[2] पालितं अर्णववद्दुर्गमं भैरवञ्च बलं क्षयं प्रणीतं नाशितमित्यर्थः। अद्भुतमेतत् द्वाभ्यामेव त्रयोविंशत्यनीकात्मकं बलं हतमिति विस्मयमानं राजानं प्रत्याह -वसुदेवपुत्त्रयोरिति। यदुक्तं रामकृष्णयोः कर्म केवलं जगदीश्वरयोस्तयोः क्रीडितं क्रीडामात्र मेव न तु पराक्रमः इति भावः ॥ २९ ॥

न चाऽत्र विस्मयः कार्य इत्याह - **स्थितीति** । स्थित्यादिनां समाहारद्वन्द्वः । यो भगवानसंख्येयकल्याणगुणः स्वलीलयैव त्रिलोक्याः स्थित्यादिकमीहते करोति। तस्य शत्रुपक्षनिग्रहो न चित्रं नाऽऽश्चर्यविषयः । तर्हि किमिति वैचित्र्येणोपवर्ण्यते

आशुगैः शरैः ॥ 42, 43 ॥

यदूनन्दयति बलेन समर्थयतीति यदुनन्दनः॥ 44 - 47॥

कालान्तमारुतेन प्रलयकालवायुना ॥ 48, 49 ॥

1 Mb अस्ति।

निर्भिन्नकुम्भाः करिणो निपेतु रनेकशो[1]ऽश्वाः शरवृक्णकन्धराः[2]।
रथा हताऽश्वध्वजसूतनायकाः पदातय श्छिन्नभुजोरुकन्धराः॥ २५ ॥

संछिद्यमानद्विपदेभवाजिना मङ्गप्रसूता श्शतशोऽसृगापगाः।
भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाऽऽकुलाः॥ २६ ॥

करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः।
आस्थूरिका[3]वर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः॥ २७ ॥

प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः[4] परस्परम्।
विनिघ्नताऽरीन् मुसलेन दुर्मदान् सङ्कर्षणेनाऽपरिमेयतेजसा ॥ २८ ॥

बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम्।
क्षयं प्रणीतं वसुदेवपुत्रयो र्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥

स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः[5] स्वलीलया।
न तस्य चित्रं परपक्षनिग्रहस्तथाऽपि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥

1 MMa ०नी° 2 MMa ०रुग्ण° 3 B.G.J अच्छूरिका MMa. आस्फूर्जिता० MIV अस्थूरिका० 4 M.Ma ०वहाः 5 J °ण स्सम°

श्रीध० निर्भिन्नेति। हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥

संछिद्यमानेति। सञ्छिद्यमाना द्विपदा इभा वाजिनश्च, तेषामङ्गेभ्यः[1] प्रसूता असृगापगा रुधिरनद्यः; परस्परं[2] प्रवर्तिता इति तृतीयेनाऽन्वयः, प्रसिद्धनदीरूपकमाह - भुजा एवाऽहयो यासु ताः। पुरुषाणा शीर्षाण्येव कच्छपा यासु ताः। हता द्विपा एव द्वीपा अन्तर्वर्तितटानि, हया एव ग्रहा ग्राहा स्तैश्च आकुलाः व्याप्ताः॥ २६ ॥

करेति। करा ऊरवश्च मीना यासु ताः, नराणा केशा एव शैवलं यासु ताः, धनूंष्येव तरङ्गा आयुधान्येव गुल्माः तैश्च तैश्च सङ्कुलाः। अस्थूरिकाश्चर्माणि, चक्राणि वा, ता एवाऽऽवर्ताः तैर्भयानका, महामणीनां प्रवेका उत्तमा आभरणानि यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥

भीरूणां भयावहाः, मनस्विनां धीराणां[3] हर्षकर्यः ॥ २८ ।

किञ्च। सङ्कर्षणेनाऽपि तद्बलं क्षयं प्रणीतम्। अङ्ग! हे राजन्! अर्णववत् दुर्गं दुर्गमं भैरवं भयङ्करञ्च यतः दुरन्तपारं, अन्तोऽत्र तलं, पारमवधिः । दुश्शब्दो निषेधे। विक्रमेणाऽगाधं देशतश्च निरवधिकमित्यर्थः । किञ्च-मगधेन्द्रेण च पालितं बलं यदेवम्भूतं रामकृष्णयोः कर्मोक्तं[4] तत्परं केवलं तयो र्विक्रीडितम् न तु पराक्रमः ॥ २९ ॥

न चैत दाश्चर्य मित्याह-**स्थितीति**। तर्हि किमित्याश्चर्यमिव वर्णितम्? तत्राऽऽह-तथाऽपीति। मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥

---

1 MIV यासां 2 MIV यासां 3 MIV omit धीराणा 4 MIV ०क्तं

**वीर०** तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति-**निर्भिन्नेति**। निर्भिन्नाः[1] कुम्भाः कुम्भस्थलानि येषां ते, करिणो गजा निपेतुः । तथा अश्वाश्वानेकशः शरैर्भग्नाः कन्धरा ग्रीवा येषां तथाभूताः, निपेतु रित्यनुषज्यते। हता अश्वाः ध्वजाः सूता नायका रथिनश्च येषु ते रथाः, तथा पदातयश्च छिन्ना भुजा ऊरवः कन्धराश्च येषां तथाभूता निपेतुः ॥ २५ ॥

अथ भगवच्छरनिर्भिन्नपरसैन्यतनुप्रभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति-**सञ्छिद्यमानेति**। सञ्छिद्यमानेभ्यः पदातिगजाश्वानां अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः शतशः प्रवर्तिता इति तृतीयश्लोकेनाऽन्वयः । कथम्भूताः? भुजा एव अहयः सर्पा यासु, पूरुषाणां शीर्षाण्येव कच्छपा यासु तथाभूताः, हता द्विपा गजा एव द्वीपा अन्तरीपभूमयः, हया अश्वा एव ग्रहाः। तैश्चाऽऽकुला व्याप्ताः ॥ २६ ॥

करा ऊरवश्चैव मीना यासु, नराणां केशा एव शैवलं यासु ताः, धनूंष्येव तरङ्गा, आयुधान्येव गुल्मानि च तैश्च सङ्कुलाः आस्थूरिकाश्चक्राणि ता एवाऽऽवर्ताः तैर्भयानकाः महामणीना प्रवेकाः श्रेष्ठाः उत्तमाभरणानि च यथायथं शिलाश्शर्कराश्च यासु ताः॥ २७॥

भीरूणां भयावहाः मनस्विनां धीराणां मिथो हर्षकारिण्यः। विनिघ्नतेति। किञ्च-अङ्ग! हे राजन्! अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेनाऽरीन् शत्रून् मुसलेनाऽऽयुधेन विनिघ्नता ताडयता, सङ्कर्षणेन कर्त्रा ॥ २८॥

तन्निहतावशिष्टं मगधेन्द्रेण[2] पालितं अर्णववद्दुर्गमं भैरवञ्च बलं क्षयं प्रणीतं नाशितमित्यर्थः। अद्भुतमेतत् द्वाभ्यामेव त्रयोविंशत्यनीकात्मकं बलं हतमिति विस्मयमानं राजानं प्रत्याह -**वसुदेवपुत्त्रयोरिति**। यदुक्तं रामकृष्णयोः कर्म केवलं जगदीश्वरयोस्तयोः क्रीडितं क्रीडामात्र मेव न तु पराक्रमः इति भावः ॥ २९ ॥

न चाऽत्र विस्मयः कार्य इत्याह - **स्थितीति** । स्थित्यादिनां समाहारद्वन्द्वः । यो भगवानसंख्येयकल्याणगुणः स्वलीलयैव त्रिलोक्याः स्थित्यादिकमेवेहते करोति। तस्य शत्रुपक्षनिग्रहो न चित्रं नाऽऽश्चर्यविषयः । तर्हि किमिति वैचित्र्येणोपवर्ण्यते

इत्यत आह-तथापीति। चित्रत्वाभावेऽपि मर्त्या ननुविधत्ते अनुकरोतीति तथा, तस्य वर्ण्यते, कर्मेति शेषः। मर्त्यानुविधस्य अमानुषं कर्म चित्रमेवेत्यभिप्रायेण वर्ण्यत इति भावः ॥ ३० ॥

---

1 B.T.W ०न्नानि कुम्भानि 2 A,B,T ०न्द्र पा०

**विज०** निर्भिन्नकुम्भाः विदलीकृतमूर्धानः अनीकशः राशिशः करिप्रभृतयो निर्भिन्नकुम्भादयो बभूवुरित्यन्वयः ॥ २५॥

अङ्गप्रसूताः देहोत्पन्नाः असृगापगा रुधिरनद्यः भुजा एवाऽहयो यासु तास्तथा। एव मुत्तरत्राऽपि। कच्छपाः कूर्माः द्विपा एव द्वीपाः अन्तरद्वीपाः, हया एव ग्रहा ग्राहाः ॥ २६ ॥

धनुस्तरङ्गैः आयुधगुल्मैश्च सङ्कुलाः आस्फूर्जिताः उन्नतस्थलादधः तज्जलध्वनयः तैरावर्तैः जलभ्रमणैश्च भयानका भयप्रदा वृत्तफलकध्वनयो वा स्फूर्जितास्त एव आवर्ता, महामणिप्रवेकाः, प्रवेका उत्तमाः एवाऽश्मान आभरणान्येव शर्करा यासु तास्तथा ॥ २७ ॥

सङ्कर्षणेन एवंविधा असृगापगाः प्रवर्तिता इत्यन्वयः ॥ २८ ॥

अङ्ग! हे विष्णुरात! यन्मगधेन्द्रेण पालितम् अर्णववर्दुर्गमम्, अत एव भैरवं दुरन्तपारं चक्षुरविषयतीरान्तरम् अनवसितसमाप्ति वा तद्बलं कृष्णरामाभ्यां क्षयं प्रणीतमित्यन्वयः। जगदीश्वराभ्यामनायासेन कृतमेतद्युद्धमित्याह-वसुदेवपुत्रयोरिति। जगदीशयोः वसुदेवपुत्रयोः तद्युद्धं परं केवलं विक्रीडितं क्रीडामात्रमेव ॥ २९ ॥

योऽनन्तगुणो भुवनत्रयस्य स्वलीलया स्थित्युद्भवान्तं समीहते करोति स्थितिः उद्भवश्च अन्तश्च तत्तथा मिथो विरुद्धत्वादेकवद्भावः। यद्यपि तस्य हरेः परपक्षनिग्रहः चित्रं न भवति तथाऽपि मर्त्यानुविधस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं बुद्ध्यवतारार्थं वर्ण्यते प्रशस्यते इत्यन्वयः ॥ ३० ॥

## विजयध्वजरीत्या अधिकपाठः

**हतेषु सर्व सैन्येषु जरासन्धो महाबलः ॥ 50 ॥**

**विद्रुतेष्ववशिष्टेषु रथेनैकेन सीरिणम्।**
**तावुभौ गिरिसङ्काशौ मत्ताविव महागजौ ॥ 51 ॥**

**मागधस्तु गदां गुर्वी मादायाऽमर्षविह्वलः**
**भ्रामयित्वा शतगुणश्चिक्षेप बलवक्षसि ॥ 52 ॥**

**तमापतन्तीं तरसा गदां शृङ्गोपमां गिरेः।**
**व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥ 53 ॥**

व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः।
पोथयित्वा रथे क्षुब्धो[1] निहत्य रथसारथी ॥ 54 ॥

1 K क्षुण्णे

विज० सीरिणं बलभद्रम्, आपेति शेषः ॥ 50 ॥

व्यंसयित्वा वञ्चयित्वा ॥ 51 - 54 ॥

जग्राह विरथं रामो जरासन्धं महाबलम्।
हतानीकावशिष्टासुं सिंहः [1-]क्षुद्रमृगं[-1] यथा ॥ ३१ ॥

बध्यमानं हतारातिं[2] पाशै र्वारुणमानुषैः।
वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ३२ ॥

स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः।
[3-]वनं विविक्षु स्तपसे[-3]वारितः पथि राजभिः ॥ ३३ ॥

★ वाक्यैः पवित्रार्थ[4]पदै[5]र्नयैश्च प्राकृतैरपि।
स्व[6-]कर्मबन्धप्राप्तो[-6]ऽयं यदुभिस्ते पराभवः ॥ ३४ ॥

[7-]श्रीशुक उवाच[-7]

हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा।
उपेक्षितो भगवता मगधान्[8]दुर्मना ययौ ॥ ३५ ॥

मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः।
▲ गृहीत्वा मागधेन्द्रस्य धनं स्त्रीकोशवाहनम्।
विकीर्यमाणः कुसुमैः त्रिदशैरनुमोदितः ॥ ३६ ॥

माथुरै रुपसङ्गम्य विज्वरै र्मुदितात्मभिः।
उपगीयमानविजयस्सूतमागधवन्दिभिः ॥ ३७ ॥

1 B.G.J.M.Ma सिंहमिवौजसा 2 M.Ma ०नीकं 3 - -3 B.G.J. तपसे कृतसङ्कल्पो; MI.V विविक्षु स्तपसेऽरण्यं ★ This half verse is not found in M.Ma edns. 4 K.W विचित्रा° 5 B.G.J. नयनैः W न्यायैश्च 6- -6 W बन्धनप्राप्तो 7- -7 B.G.J.M.Ma MI.V omit 8 M.Ma मागधो दु° । ▲ This half verse is found in M.Ma edition only.

**श्रीध०** किञ्च, **जग्राहेति** हतान्यनीकानि यस्य, अवशिष्टा असव एव यस्य तञ्च तञ्च॥ ३१ ॥

**बध्यमान** इति। हता बहुशोऽरातयो येन तं तथाभूतमपि जरासन्धं बध्यमानं वारयामासेति[1] ॥ ३२,३३॥

**वाक्यै रिति।** पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः नयै[2] र्नीतिभिः, प्राकृतै र्लौकिकैः। तत्र लौकिकन्याय-माहुः- स्वकर्मेति। यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबन्धेनैव[3] प्राप्तः । अतस्त्वया न लज्जितव्य मिति ॥ ३४ ॥

**हतेष्विति।** बार्हद्रथो जरासन्धः ॥ ३५ ॥

**मुकुन्द** इति। मुकुन्दोऽपि,ययावित्यनुषङ्गः । न क्षतं बलं यस्य सः। तस्यैवामृतदृष्ट्या क्षतप्रतिसन्धाना-दितिभावः। निस्तीर्णः अनायासेनैव तीर्णः अरिबलार्णवो येन सः, साधु सध्वित्यनुमोदितश्च ॥ ३६ ॥

**माधुरैरिति।** प्रत्युद्गतै[4]र्मधुरावासिभिर्जनै रुपसङ्गम्य मिलित्वा॥ ३७ ॥

1 M I V omit इति 2 B J नयनैः 3 B J omit एव 4 J चतैः

**वीर० जग्राहेति।** हतान्यनीकानि सैन्यानि यस्य, अवशिष्टा असवः प्राणा एव यस्य स चाऽसौ सच तम्, विरथं जरासन्धं जग्राह गृहीतवान् यथा सिहः क्षुद्रमृगं गृह्णाति तद्वत् ॥ ३१ ॥

**बध्यमान**मिति। हता अरातयो येन तं, वारुणैर्मानुषैश्च पाशैस्साधनैर्बध्यमानं जरासन्धं, रामेणेति शेषः। गोविन्दः, दृष्ट्वेति शेषः । वारयामास, राममिति शेषः । तत्र हेतुः- तेन जरासन्धेन सह, यत्कार्यं पुनर्युद्धात्मकं तत्कर्तु मिच्छया हेतुभूतया न्यवारयदिति सम्बन्धः ॥ ३२ ॥

स इति। लोकनाथाभ्यां रामकृष्णाभ्यां विमुक्तस्स वीरश्रेष्ठो जरासन्धः तावत्तपसे तपश्चरितुं वनं प्रवेष्टुमिच्छुः पथि राजभिश्शिशुपालादिभिः कर्तृभिः विचित्राः अर्थाः पदानि शब्दाश्च येषु तैर्वाक्यैः प्राकृतैर्लैयैन्ययैश्च साधनैर्वारितः। अत्र लौकिकन्यायमाहुः - स्वकर्मेति। यदुभिरल्पकैः महतस्ते पराभवः केवलं स्वकर्मबन्धप्राप्तः इत्येवंविधै र्नयैरिति सम्बन्धः ॥ ३३,३४ ॥

**हतेष्विति।** सर्वेष्वनीकेषु हतेषु सत्सु बार्हद्रथो जरासन्धो राजा भगवतोपेक्षितो दुःखितचित्तो मगधान् जनपदान् ययौ ॥ ३५ ॥

मुकुन्द इति। अक्षतमविहतं बलं स्वीयं[1] यस्य, निस्तीर्णः अरीणां बलमेवार्णवो येन तथाभूतः मुकुन्दः। अपिः त्वर्थः मुकुन्दस्तु इत्यर्थः। साधुसाध्विति देवैरनुमोदितः कुसुमैर्विकीर्यमाणश्च। विगतः ज्वरः शत्रुपीडात्मको येभ्यस्तैः। अत एव मुदितचित्तै र्माधुरैर्जनै रुपसङ्गम्य मिलित्वा सूतादिभिः उपगीयमानो विजयो यस्य तथाभूतो ययाविति सम्बन्धः। तत्र सूताः पौरुषप्रकाशकाः, मागधाः गायकाः, वन्दिनः स्तुतिपाठका इति विवेकः ॥ ३६,३७ ॥

1 B adds स्वकीयं

विज० हतानीकश्च हतसेनश्च अवशिष्टासुश्च अवशिष्टप्राणश्च स तथा तम्। हतानीकावशिष्टास्विति पाठे क्रियाविशेषणम् ॥ ३१ ३२ ॥

मुक्तो विसृष्टः ॥ ३३-३७ ॥

शङ्खदुन्दुभयो नेदु र्भेरीतूर्याण्यनेकशः।
वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥

सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम्।
निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥

निचीयमानो नारीभि र्माल्य[1]दध्यक्षताङ्कुरैः।
निरीक्ष्यमाण स्सस्नेहं प्रीत्युत्क[2]ण्ठितलोचनैः ॥ ४० ॥

आयोधना[3]ऽऽगतं वित्तम[4]नन्तं वीरभूषणम्।
यदुराजाय तत्सर्व माहृतं प्रादिशत् प्र[5]भुः★ ॥ ४१ ॥

1 MI.V. °र्माला 2 B,G,J,M,Ma. °त्कलि० 3 K.W. °नम° 4 K. °माहृतं 5 MI, V. विभुः

★ अत्र श्रीविजयध्वजरीत्या एकोनपञ्चाशत्तमोऽध्यायस्समाप्तः ॥ ४९ ॥

श्रीध० शङ्खेति। तदा [1-]प्रभौ पुरं[-1] प्रविशति सति शङ्खादयो नेदुः ॥ ३८ ॥

कथम्भूतां पुरम्[2]? तदाह- सिक्तेति। ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादितां कौतुकेनोत्सवेन आ [3]समन्तात् बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥

**निचीयमान** इति। निचीयमानः विकीर्यमाणः प्रविवेशेति, विपरिणामतोऽनुषङ्गः[4]॥ ४०

**आयोधनेति**। आयोधनं रणभूमिः तत्रस्थं वित्तं वीराणां भूषणम्॥ ४१ ॥

1- -1 V omits 2 MIV पुरीम् ?3 BJ सर्वतः 4 BJ °णताऽनु°

**वीर० शङ्खेति**। प्रभौ भगवति पुरं प्रविशति सति शङ्खादयो नेदुः दध्वनुः, भेर्यश्च तूर्याणि च तानि परवल्लिङ्गता[1], तथा वीणावेणुमृदङ्गानीति च॥ ३८ ॥

पुरं विशिनष्टि **सिक्तमार्गामिति**। सिक्ताश्चन्दनाम्बुभिः मार्गाः यस्यां, हृष्टा जना यस्यां तां, [2-]ब्रह्मघोषेण वेदपाठघोषेण[-2] निनादिताम्, कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम्॥ ३९ ॥

**निचीयमान** इति। मालामर्हन्तीति माल्यानि कुसुमानि तत्प्रभृतिभिर्निचीयमानः [3]विकीर्यमाणः प्रीत्या उत्कण्ठितानि भरितानि लोचनानि येषां तैः, जनैरिति शेषः। स्नेहेन सहितं यथा तथा निरिक्ष्यमाणो मुकुन्दः प्रविवेशेति विपरिणतेनाऽन्वयः॥ ४० ॥

[4-]ततः किं कृतवान् तदाह[-4] **आयोधनेति**। आयोधनं रणभूमिः तत्र आ समन्तात् गतं [5]स्थितं यत् [6]तत् सर्वमाहृतं आनीत वीराणा भूषणं यदुराजायोग्रसेनाय प्रादिश त्समर्पितवान्॥ ४१ ॥

1 B लिङ्गवचनाः 2--2 KTW omit 3 KTW omit वि 4- -4 KTW omit 5 K omits स्थितं 6 KTW omit तत्

**विज०** पुरं प्रविशति सति दुन्दुभ्यादयो नेदुरित्यन्वयः॥ ३८ ॥

कौतुकाभिर्दण्डमालाभिराबद्धतोरणाम्॥ ३९ ॥

निचीयमानः राशीक्रियमाणः॥ ४० ॥

यदुराजाय उग्रसेनाय॥ ४१ ॥

## अधिकपाठे प्रथमोऽध्यायः

(इत आरभ्य विजयध्वजतीर्थीयपठितश्लोकाः)

### श्रीशुक उवाच

**तृतीये मासि भूयश्च राजा बार्हद्रथो बली।**
**दिवानिशं तप्यमानः स्मरन्पूर्वपराभवम्॥ 55 ॥**

**आहूय सर्वभूपालान् चकार [1]कलहोद्यमम्।**
**स मत्स्यान् मालवांश्चेदीन् कुरुपाञ्चालकेरलान्॥ 56 ॥**

कलिन्दकुन्तलावन्ति काशीगान्धारसृञ्जयान्[2]।
कलिङ्गकेकयानान्ध्रान् दशार्णान्वङ्गसैन्धवान्॥ 57 ॥

मद्रान् त्रिगर्तान् सौवीरान् पार्वतेयांश्च सर्वशः।
आहूयाक्षौहिणिगणैः त्रयोविंशतिभिर्युतः॥ 58 ॥

स मागधानतिक्रम्य पश्चिमाभिमुखो ययौ।
आकर्ष न्निव भूपालान् गजाश्वरथवल्लभान्॥ 59 ॥

आगत्य मधुरां रोद्धुं प्राविशद्यमुनातटे।
स्कन्धावारेण महता राजभिर्बहुभिर्वृतः॥ 60 ॥

उपगीयमानो न्यरमत्सूतमागधवन्दिभिः।
तदाकर्ण्य रणोद्योगं मागधस्य बलीयसः॥ 61 ॥

मन्त्रयामास शर्वर्यां कृष्ण स्सङ्कर्षणादिभिः।
वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः॥ 62 ॥

एभि रालोच्य शर्वर्यां सम्याङ्निर्धारितक्रियः।
उषस्यनुदिते सूर्ये समाहूय भटोत्तमान्॥ 63 ॥

त्रिधा विभज्य गोविन्दः स्वसेनां चतुरङ्गिणीम्।
न्ययोजयदमेयात्मा मागधेन्द्रबलं प्रति॥ 64 ॥

सङ्कर्षणश्च हार्दिक्यं गदं सारणमेव च।
वामेन प्रेषयामास मार्गेण मधुसूदनः॥ 65 ॥

सात्यकिं विपृथुश्चैव पृथु मुद्धव मेव च।
दक्षिणेनैव मार्गेण प्राहिणोत्सेनया सह॥ 66 ॥

स्वयं कतिपयैर्युक्तो रथैः कमललोचनः।
अग्रे मगधराजस्य प्रविवेश महद्बलम्॥ 67 ॥

सा सेना बहुनागाश्वरथपादातिसङ्कुला[3]।
प्रसुप्ता यमुनातीरे विस्रब्धा रमते सुखम्॥ 68 ॥

उदयाद्रिं समारोहत्यर्के तमसि नश्यति।
नीडस्थेष्वेव कूजत्सु विहङ्गेषु[4] तत स्ततः॥ 69 ॥

विकसत्सु सरोजेषु गाय त्स्वलिकुलेषु च।
प्रविवेश बलं भीमं मागधेन्द्रस्य दुर्जयम्॥ 70 ॥

1 K. कदनो० 2 B,G,J,M,Ma,Ml,V W काशि 3 K. पादात 4 K ०गेषु

विज० स्कन्धावारेण सैन्यनिवेशार्थं वस्त्रविरचितपुरान्तःपुरादि गृहनिचयेन॥ 55-70 ॥

हयाश्वा बद्धवैराणाः[1] श्रेणीबद्धा स्समन्ततः।
कुञ्जराश्च तदा राजन्नारोपितपञ्जराः॥ 71 ॥

अनादत्तप्रहरणा भटाश्चाबद्धमूर्धजाः।
अप्रविष्टासवर्माणः तदाऽनारूढवाहनाः॥ 72 ॥

रथाश्चाबद्धतुरगा सर्वतोऽनुद्धृत[2]ध्वजाः।
सेनायां मगधेन्द्रस्य प्रवेशे पीतवाससः॥ 73 ॥

त्रिदिक्ष्वापतितं सैन्यं दृष्ट्वा तद्राजमण्डलम्।
इतिकर्तव्यतामूढं विभ्रान्तं समपद्यत॥ 74 ॥

केचिद्भटा[3] स्समापेतुर्भयात्केचिच्च दुद्रुवुः।
केचिदात्तप्रहरणा स्त्वभिसस्रुरीन् रणे॥ 75 ॥

केचिद्विभिन्नवर्माण श्छिन्नपादोरुबाहवः।
रिपूनेवाभ्यवर्तन्त क्रोधोद्वृत्तारुणेक्षणाः॥ 76 ॥

केचिद्धयानपर्याणा[4] नारुह्य[5] दृढविक्रमाः।
मर्दयन्तो रिपून् युद्धे विमलं लेभिरे यशः॥ 77 ॥

---

1 K. पल्याणाः 2 B,K °द्धत 3 K °द्भीता० 4 K °ल्या० 5 K. °ह्यारूढ

विज० 'हय गतौ, इति धातुः। हयत्यनेनेति हयः, वैराणं पल्याणम् अश्वपृष्ठासनमित्यर्थः, श्रेणीबद्धाः पङ्क्तिबद्धाः। पञ्जरं गजानां पृष्ठे शत्रुमुक्तशरस्तम्भियन्त्रगृहम्॥ 71 ॥

अनादत्तप्रहरणाः अस्वीकृतायुधाः॥ 72 ॥

पीतवाससः श्रीकृष्णस्य प्रवेशे प्रवेशसमये॥ 73 ॥

विभ्रान्तमनवस्थानम्॥ 74,75 ॥

तदा जरासन्धसेनावस्थाप्रकारं कथयति- केचिदिति॥ 76 ॥

पर्याणमुभयपार्श्वावलम्बकमापदं, कविका वा॥ 77 ॥

राजान स्सहसोद्धुध्य दृष्ट्वा [6]सैनिकसंक्षयम्[6]।
विना रणोपस्करणं चक्रुः केचन स[7]ङ्गरम्॥ 78 ॥

केचि द्विसृज्य शिबिरं विविशुर्गहनं वनम्।
केचिन्मागध मासाद्य विजयस्वेति चाऽब्रुवन्॥ 79 ॥

रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम्।
जघान स बहून् वीरान् सायुधान्सरणोद्यमान्॥ 80 ॥

सङ्कर्षणोऽपि बलवान् महत्या सेनया वृतः।
बलं प्रविश्य वामेन मर्दयामास मागधम्॥ 81 ॥

शैनेयोऽ पि महाबाहु र्दक्षिणेनैव वर्त्मना।
प्रविश्य चतुरङ्गेण सैन्येन महताऽर्दयत्॥ 82 ॥

एवं सा व्यथिता सेना मागधेन्द्राभिरक्षिता।
दुद्राव [8]त्रस्यमाना वै क्षणमात्रं दिशो दश॥ 83 ॥

[9]तामनुद्रुत्य वार्ष्णेयः सात्यकिः पञ्चयोजनम्।
निहत्य मागधं सैन्यजयी व्यावर्तताऽऽहवात्॥ 84 ॥

मतङ्गजान्पर्वतसन्निभान्बहू न्निगृह्य सोपस्करतोमराङ्कुशान्।
रथांश्च शस्त्रध्वजवाजिसंयुता न्निनाय कृष्णो मधुरां मनोरमाम्॥ 85 ॥

छत्राणि हेमाम्बररत्नमिश्रिता न्यनेकवालव्यजनानि माधवः।
किरीटपट्टाङ्गदकुण्डलांशुका न्यवाप कृष्णोऽगणितानि संयुगे॥ 86 ॥

हलायुधो मागधकोशवाहन प्रजावरोधायुधभूषणादिकम्।
नियोजितः कंसभिदा रणार्जितं यदुप्रवीराय धनं न्यवेदयत्॥ 87 ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अधिकपाठे प्रथमोऽध्यायः॥

6- -6 K. सैकतसञ्चयम् 7 K. सयुगम् 8 K द्राव्य 9 K ततोऽनु०

**विज०** रणोपस्करणम् युद्धसाधनम्॥ 78-83 ॥

मगधस्य अधिपतिः मागधः तस्य मागधस्य विद्यमानमपि मागधं सैन्यम्; अन्यथा मागधं निहत्येत्यनन्वितं स्यात्॥ 84,85॥

हेमाम्बरादीनि छत्राणीत्यस्य विशेषणानि॥ 86,87 ॥

श्रीमद्भागते महापुराणे दशमस्कन्धे पूर्वार्धे अधिकपाठे प्रथमोऽध्यायः।
विजयध्वजरीत्या पञ्चाशत्तमोऽध्यायः॥ ५० ॥

## अधिकपाठे द्वितीयोऽध्यायः

### श्रीशुक उवाच

मागधस्तु रणश्लाघी माधवेन पराजितः।
जगाम शोणितपुरं बाणं द्रष्टुं बले स्सुतम्॥ 88 ॥

तं तथाऽऽयान्तमाकर्ण्य वृतराजन्यमण्डलम्।
मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः॥ 89 ॥

अलङ्कृतैर्गजैरश्वैर्विचित्रस्यन्दनैर्भटैः।
वारकान्ताकदम्बैश्च सूतमागधवन्दिभिः॥ 90 ॥

ध्वजैः पताकै श्छत्रैश्च माङ्गल्यैः पटहस्वनैः।
सुवर्णतोरणैश्चित्रै दीपैः कलशदर्पणैः॥ 91 ॥

उपतस्थे जरासन्धं बाणो बाहुसहस्रवान्।
तौ दृष्ट्वा परमस्निग्धौ परस्परमनोनुगौ॥ 92 ॥

पूजां चक्रतुरन्योन्य मन्योन्यप्रियकारिणौ।
ततोऽब्रवीज्जरासन्धो बाणमाभाष्य संसदि॥ 93 ॥

दानवेन्द्र! निबोधेदं गोपेनाऽधर्मचारिणा।
रात्रौ चौर्यप्रतापेन वञ्चितोऽस्मि दुरात्मना॥ 94 ॥

गृहीता बहवस्तुङ्गा मातङ्गा मदशालिनः।
तुरङ्गमाश्च बहवो रथाश्च सपरिच्छदाः॥ 95 ॥

द्वन्द्वेन सज्जमानं मा मिमे भूपा न सेहिरे।
निरुद्धस्तैरहं भूपै रेतैस्समसुखासुखैः॥ 96 ॥

त्वत्सन्निधिमिहाऽऽयातः साहाय्यं कुरु मे प्रभो।
इत्युक्तस्तं निजपुरं प्रवेश्य बलिनन्दनः॥ 97 ॥

स राजमण्डलायाऽऽशु कारयामास सत्क्रियाम्।
भोजनस्नानशयनगन्धताम्बूलपूर्वकैः॥ 98 ॥

अर्हणै रर्हयामास सराजन्यं जरासुतम्।
तं भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम्॥ 99 ॥

अलङ्कृतं सह नृपै रासीनं काञ्चनासने।
उवाच दानवपति र्नृपानाभाष्य सादरम्॥ 100 ॥

बाण उवाच

जरासन्ध! निबोधेदं न मृषा कथ्यते मया।
एते गजा इमे ह्यश्वा इदं राज्यमिमाः प्रजाः।
त्वदधीन मिदं विश्वं यच्चाऽन्यद्वस्तु विद्यते॥ 101 ॥

श्रीशुक उवाच

इत्युक्त्वा प्रददौ तस्मै मागधाय बलेस्सुतः
गजानां षष्टिसाहस्रं रथानां नियुतं तथा।
प्रयुतं च तुरङ्गाणां मनोमारुतरंहसाम्॥ 102 ॥

दानवानां प्रसिद्धानां मायासङ्ग्रामवेदिनाम्।
त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेस्सुतः॥ 103 ॥

विचित्रशिबिकाच्छत्रव्यजनाऽऽकल्पवाससाम्।
असङ्ख्यातं ददौ राजन् भाण्डशय्यासनादिकम्॥ 104 ॥

कुम्भाण्डं कूपकर्णञ्च मन्त्रिणौ दैत्यसत्तमौ।
आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह!॥ 105 ॥

**विज०** रणश्लाघी अत्युत्कटरणमाकाङ्क्षमाणः॥ 88,89 ॥

वारकान्ताकदम्बैः गणिकास्त्रीनिकरैः॥ 90 ॥

माङ्गल्यै र्मङ्गलद्योतकैः॥ 91,95 ॥

द्वन्द्वेन युद्धेन॥ 96,97 ॥

सत्क्रियां सत्कारम्॥ 98॥

राजसैन्यसहितं दृष्टं दर्शनकौतुकं स्वप्नकौतुकं येन स तथा। स्वप्ने कौतुकं दृष्ट्वा कौतूहलबुद्धि र्भवति, तथा बाणसम्पदं दृष्टवानित्यर्थः "दर्शनं चक्षुषि स्वप्ने बुद्धिशास्त्रोपलब्धिषु" (वैज.को. 7-3-17) इति॥ 99-101॥

रथानां नियुतं लक्षम्॥ 102-105 ॥

क्व सुरासुरसङ्घात संहारणपटुर्हरिः।
कुम्भाण्डकूपकर्णौ क्व वराकौ बाणमन्त्रिणौ॥ 106 ॥

अजानन्तो विष्णुशक्तिं भूपाला विनशिष्णवः।
चक्रु र्भूयो रणोद्योगं मागधेन प्रचोदिताः॥ 107 ॥

बाणेन समनुज्ञातो मागधः शोणितात्पुरात्।
निर्गत्याऽनेकभूपालचतुरङ्गबलान्वितः।
दीनैः कतिपयैर्भूयो मधुरामन्वपद्यत॥ 108 ॥

सन्निरुध्य पुरद्वारं गोपुराट्टालतोरणैः।
दीर्घिकोपवनोद्यानै रुपेतं सालभूषितम्॥ 109 ॥

कुन्तैः कुठारैः कुद्दालै र्दण्डभारैश्च भूरिभिः।
कर्षणस्थैश्च पाषाणै र्बभञ्ज परितः पुरम्॥ 110 ॥

भज्यमाने पुरे तस्मिन् श्रुत्वा मागध मागतम्।
सन्नाहभेरीस्सन्नाद्य रामकृष्णावमर्षिणौ॥ 111 ॥

रथाश्वकुञ्जरानीकै स्सायुधैस्सपरिच्छदैः।
सात्यकिं कृतवर्माण मुग्रसेनं तथा गदम्॥ 112 ॥

आहुकं वसुदेवञ्च पुरस्कृत्य महाबलौ।
निर्जग्मतुरसम्भ्रान्तौ दीप्तौ केसरिणौ यथा॥ 113 ॥

मधुराया विनिर्गत्य कृष्णः कमललोचनः।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ रिपुभीषणम्॥ 114 ॥

ततः प्रववृते युद्धं यदूनां क्षत्त्रियै स्सह।
कुम्भाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ॥ 115 ॥

दैत्यसैन्येन महता वृतौ मायाविशारदौ।
युयुधाते महावीर्यौ मायया वृष्णिभिस्सह॥ 116 ॥

स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः।
विज्ञानास्त्रेण तन्मायामपास्य निमिषान्तरे॥
सात्यकिं कृतवर्माणं प्रोवाचाऽऽहवलालसौ॥ 117 ॥

[1] आभ्यां भवन्तौ रणदुर्मदाभ्यां रणं सुघोरं कुरुतं रणप्रियौ।
तावेवमुक्तौ कदनं भयानकं महाबलौ सम्प्रति चक्रतु र्नृप॥ 118 ॥

चापेनैकेन गोविन्दः क्षत्त्रियै श्शतसम्मितैः।
युयुधे नहि तच्चित्रं राजन्विश्वात्मनो हरेः॥ 119 ॥

केचिद्धतास्समापेतुः कुञ्जरा श्छिन्नपुष्कराः।
निपेतुर्बहवो राजंस्तुरङ्गाः कृत्तकन्धराः॥ 120 ॥

विशीर्णैरास्तृता पृथ्वी स्यन्दनैश्छिन्नबन्धनैः॥ 121 ॥

भटाश्च रुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः।
पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः॥ 122 ॥

शार्ङ्गमुक्ताश्शरगणाः कङ्कबर्हिणवाससः।
तैलाक्ता नतपर्वाणः स्वर्णपुङ्खा अयोमुखाः।
एकैकस्मिन् दश दश भटे चाऽश्वे शतं शतम्॥ 123 ॥

रथे रथे च साहस्रमयुतश्च गजे गजे।
अदृश्यन्त परानीके तदद्भुत मिवाऽभवत्॥ 124 ॥

**विज०** अथ जरासन्धेन सह योद्धुं श्रीकृष्णस्य अशक्यमिति मन्दाशङ्कां परिहरति- **केति**। वराकौ षण्डतिलनिस्सारौ॥106 - 108 ॥

सालैः प्राकारैः भूषितम्॥ 109 ॥

दण्डभारै दीर्घीकृतनिशितप्राग्रखर्वमयदण्डैः, कर्षणस्थैः पाषाणयन्त्रनिहितैः॥ 110 - 112 ॥

दीप्तौ क्रोधेन ज्वलितौ॥ 113 - 116 ॥

आहवलालसौ युद्धोत्सुकौ॥ 117 - 118 ॥

शतसम्मितैः शतसंख्यापरिमितैः॥ 119 ॥

छिन्नपुष्कराः द्विधाकृत्तहस्ताः॥ 120 - 122 ॥

कङ्कानां लोहपृष्ठानां बर्हिणां मयूराणां पक्षा एव वासांसि येषां ते॥ 123 - 124 ॥

---

1 B ताभ्यां

तथा तै रर्द्यमानेषु चतुरङ्गेषु मागधः।
रथेन क्रोडचिह्नेन बलभद्र मुपाद्रवत्॥ 125 ॥

स पूर्ववैरं नृपतिः स्मरन् रुषा रथं महाकाञ्चनतालकूबरम्।
आलक्ष्य दूरादधिगम्य रंहसा जरासुतः प्राह हलायुधं गदी॥ 126 ॥

आदत्स्व ते मुसलं राम तूर्णं येनाऽहिता निच्छसि जेतुमाहवे।
बलञ्च बाह्वोस्तव दर्शयाऽऽशु मे यावद्गदां न प्रहराम्यहं त्वयि॥ 127 ॥

इत्येव मुक्तो मगधेश्वरेण सङ्कर्षणोऽमर्षणविह्वलेक्षणः।
आदाय घोरं मुसलं तटित्प्रभं दण्डं यथा सूर्यसुतो युगक्षये॥ 128 ॥

आवर्तयित्वा मुसलं हलायुध स्सहस्रकृत्वो रिपुदर्पहारिणम्।
धूमाङ्कुरोद्गारिणमाशु तस्मै चिक्षेप राजन् व्यनदद्धरिर्यथा॥ 129 ॥

रामबाहुविमुक्तेन मुसलेन जरासुतः।
साश्वसूते रथे क्षुब्धे क्षणेन व्यंसितस्स्वयम्॥ 130 ॥

ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम्।
बिभ्रदुर्वीं पदा पृथ्वीं चालयन्नभ्यगाद्बलम्॥ 131 ॥

तमापतन्तमालोक्य विरथं रोहिणीसुतः।
तमेवाऽभ्यद्रवत्पद्भ्यां विसृज्य स्यन्दनं रणे॥ 132 ॥

पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः।
आवर्तयन्गदां गुर्वीं मयस्सारमयीं दृढाम्।
अभ्येत्य गदया रामं प्रजहार ननाद च॥ 133 ॥

---

विज० क्रोडचिह्नेन वराहलक्षणेन ध्वजेन॥ 125 ॥

काञ्चनतालश्च कूबरः युगन्धरश्च यस्मिन् स तथा॥ 126 - 127 ॥

सूर्यसुतो यमः॥ 128 ॥

हरिः सिंहः॥ 129 ॥

स्वयं मागधो व्यंसितो वञ्चितः॥ 130 ॥

कालायसीं कृष्णायोमयीम्॥ 131 - 133 ॥

तां गदां पतितां वक्ष स्यश्मकुट्टनिभां दृढाम्।
वामेन जगृहे रामः स्वहस्तेन कुरूद्वह॥ 134 ॥

विसृज्य स गदां तूर्णं मुरस्याऽऽहत्य मागधम्।
जग्राहाऽऽश्लिष्य बलिनं बलवान् रोहिणीसुतः॥ 135 ॥

बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः।
चकार कुक्षौ तत्कण्ठं ततस्तौ पेततु र्भुवि॥ 136 ॥

तयो र्निपततो राजन्नुपर्यासीद्धलायुधः।
तं मागधं क्षणेनाऽधश्चकाराऽमितविक्रमः॥ 137 ॥

तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ।
भूयो जग्राहतु र्घोरौ मत्तौ द्वाविव कुञ्जरौ॥ 138 ॥

तावुभौ परमक्रुद्धौ परस्परवधैषिणौ।
उरसोरः समाहत्य भीमौ चकृषतू रणे॥ 139 ॥

एवं धनुश्शतशतं तावाकृष्य परस्परम्।
निकटस्था न्द्रुमान् शैलां श्चूर्णयामासतु र्नृप॥ 140 ॥

तं विसृज्य जरासन्धो गदामादाय दुर्मदः।
उदतिष्ठदमेयात्मा रामोऽपि स महाबलः।
क्षणादादत्त मुसलं प्रहर्तुमुपचक्रमे॥ 141 ॥

तं कामपालो मुसलेन मूर्ध्नि जत्रुण्यंसे भुजयोर्नाभिदेशे।
ऊरौ च जानौ जठरे च वक्षस्यनेकशो वै प्रजहार युद्धे॥ 142 ॥

तं मागधो वक्षसि कन्धरे च मुखे ललाटे चुबुके तथांसे।
नाभौ नितम्बे च तथैव पार्श्वे समं स मानी प्रजहार रामम्॥ 143 ॥

एवं प्रहरतोस्तत्र राममागधयो र्मृधे।
राजानो रणसंविग्ना बभूवु र्भृशपीडिताः॥ 144 ॥

क्रमेण ते विमनसो निवृत्तकदनोद्यमाः।
आस न्नासन्ननिधनं मन्वाना मागधेश्वरम्॥ 145 ॥

सात्यकिस्तु महातेजास्सङ्गरे बाणमन्त्रिणा।
युध्यमान स्त्रिभिर्बाणैः कुम्भाण्डेन समर्दितः॥ 146 ॥

सोऽतिविद्धो महाबाहुः क्रुद्ध स्सर्प इव श्वसन्।
आददे पञ्च नाराचान् कुम्भाण्डं हन्तुमाहवे॥ 147 ॥

ततो हाहारवो जज्ञे सेनायां दैत्यमन्त्रिणः।
सात्यकि स्तं महाबाहुराकृष्याऽऽकर्णमाशुगैः॥ 148 ॥

विव्याध कुरुशार्दूल कुम्भाण्डं बाणमन्त्रिणम्।
नाभौ कण्ठे ललाटे च हृदि मूर्ध्न्यपि दानवम्॥ 149 ॥

अभिविद्धो रथोपस्थे निषसाद विचेतनः।
तं विचेतनमालोक्य दुर्मना स्तस्य सारथिः।
अपोवाह रणा त्तूर्णं रथेन भरतर्षभ॥ 150 ॥

कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा।
गतं कुम्भाण्डमालोक्य प्राप्तञ्च प्राणसंशयम्।
विसृज्य कृतवर्माण मपाया त्समराङ्गणात्॥ 151 ॥

तौ विसृज्य रणं दैत्या वनापृच्छ्य च भूपतिम्।
अविसृष्टौ मागधेन हतशेषबलान्वितौ।
दैत्यौ तेनैव मार्गेण जग्मतु श्शोणितं पुरम्॥ 152 ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे अधिकपाठे द्वितीयोऽध्यायः।

1- -1 M,Ma समर्पितः:

विज० अश्मकुट्टनिभाम् अश्मसारसमाम्॥ 134 - 141 ॥

कामपालो बलभद्रः जत्रुणि वक्षस्स्कन्धयोर्मध्ये, अंसे स्कन्धमूले॥ 142 - 151 ॥

अनापृन्छ्य गमिष्यामी त्यनुक्त्वा॥ 152 ॥

इति अधिकपाठे द्वितीयोऽध्यायः।
विजयध्वजरीत्या एकपञ्चाशत्तमोऽध्यायः॥ ५१ ॥

## अथ अधिकपाठे तृतीयोऽध्यायः।

### श्रीशुक उवाच

बाणसेनां गतां दृष्ट्वा शस्त्रौघेण भृशार्दिताः।
राजपुत्रा विमनसो बभूवु र्नृपसत्तम!॥ 153 ॥

गताञ्च दानवीं सेनां श्रान्तांश्च धरणीपतीन्।
दृष्ट्वा कृष्णञ्च युध्यन्तं रामस्य ववृधे बलम्॥ 154 ॥

स मागधं गृहीत्वाऽऽजौ मौलौ वामेन पाणिना।
प्रहर्तु मैच्छ च्छिरसि मुसलेन हलायुधः॥ 155 ॥

ततोऽन्तरिक्षे घनघोषघर्घरां शुश्राव वाणीं विशदाशरीरिणीम्।
न राम! वध्यो भवता जरासुतः सुखी निवर्तस्व रणादिति स्फुटम्॥ 156 ॥

वच स्तदाकर्ण्य हलायुधो बली विसृज्य चाऽऽस्थाय रथं रणाङ्गणात्।
न्यवर्तत ब्रह्मर्षिसिद्धसङ्घैरभिष्टुतो मागधसूतवन्दिभिः॥ 157 ॥

जरासुतस्सम्प्रति नम्रकन्धरो नृपैश्च युद्धाभिजितैस्समन्वितः।
हतावशिष्टाल्पबलेन संवृतो निवृत्तयुद्धः प्रययौ स्वकं पुरम्॥ 158 ॥

श्रीशुक उवाच

गोविन्दस्तु महातेजा स्सपत्नाञ्छरसञ्चयैः।
आच्छाद्य भूपान् विद्राव्य हत्वा च सुबहून्रणे॥ 159 ॥

संस्तूयमान स्सन्तुष्टै स्सूतमागधवन्दिभिः।
ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भि रुच्चकैः॥ 160 ॥

अन्वीयमानो भगवान् प्राविशन्मधुरां पुरीम्।
हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारगोपुराम्॥ 161 ॥

चलत्कदलिकोपेतां दीपाङ्कुरविराजिताम्।
प्रविशन्राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः॥ 162 ॥

पुष्पैश्च लाजाञ्जलिभिः कीर्यमाणो व्यराजत।
उपायनानि दिव्यानि पुष्पस्रगनुलेपनान्॥ 163 ॥

प्रियङ्करा माधवाभ्या मुपजहुः पुरौकसः।
एवं स राजमार्गेण गत्वा यादवसत्तमः॥ 164 ॥

सभां प्रविश्य विपुला मुपविश्य वरासने।
रामेण सहितो वीरः शैनेयेन च धीमता॥ 165 ॥

पूजितो यदुभि र्विप्रै र्दिवि शक्र इवाऽमरैः।
तत्राऽऽसीनै र्बुद्धिमद्भि र्यदुवृद्धैर्महात्मभिः॥ 166 ॥

उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः।
समाभाष्याऽभ्यनुज्ञात स्सङ्कर्षणसहायवान्॥ 167 ॥

द्रष्टुकामो महादुर्गं गोमन्तं पर्वतोत्तमम्।
निर्गत्य मधुरां प्रात र्दक्षिणाभिमुखो ययौ॥ 168 ॥

स रामानुगतः श्रीमानुत्तीर्य यमुनां हरिः।
देशान्बहू नतिक्रम्य पर्वतान् सरितो गिरौ॥ 169 ॥

गच्छन्कचिद्वनोद्देशे वृक्षमूलनिवासिनम्।
ददर्श कञ्चन मुनिं जटामण्डलमण्डितम्॥ 170 ॥

चीरकृष्णाजिनधरं कमण्डलुविराजितम्।
माधवौ समुपाविष्टं तेजसा भास्करोपमम्॥ 171 ॥

फलमूलकृताहारं वृतं शिष्यशतै र्मुनिम्।
दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती॥ 172 ॥

प्रणामं चक्रतु र्वीरौ यथान्यायमतन्द्रितौ।
इदञ्चोवाच भगवान् कृष्ण स्तं मुनिपुङ्गवम्॥ 173 ॥

नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन!।
रामकृष्णौ स्मृतावावां कच्चि त्ते श्रवणं गतौ॥ 174 ॥

इत्युक्त स्तेन धर्मात्मा वासुदेवेन भार्गवः।
निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः॥ 175 ॥

स्वागतं ते यदुश्रेष्ठ! साग्रजाय महात्मने।
जाने त्वां यदुषूत्पन्नं भगवन्तमधोक्षजम्॥ 176 ॥

कार्याणां कारणं पूर्वं जगता मादिपूरुषम्।
नमस्ते पुण्डरीकाक्ष! विश्वलोकैककारण!॥ 177 ॥

किमर्थ मिह सम्प्राप्तौ भवन्तौ विश्ववन्दितौ।
इत्युक्तौ जामदग्न्येन प्राहतू रामकेशवौ॥ 178 ॥

गोमन्तं द्रष्टुमिच्छावो दुर्गहितोरिह प्रभो।
तदाकर्ण्याऽब्रवी द्रामो जामदग्न्यो जनार्दनम्॥ 179 ॥

एव मस्तु महाबाहो! गोमन्तं गच्छ साग्रजः।
करवीरपुरं नाम तन्मूले परिपालितम्॥ 180 ॥

सृगालवासुदेवेन स युवां न सहिष्यति।
तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ॥ 181 ॥

इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ।
तमनुज्ञाप्य सर्वज्ञं जग्मतु र्दक्षिणामुखौ॥ 182 ॥

विज० विमनसः युद्धविरतमनसः॥ 153 ॥

(दानवीं) दानवस्य बाणस्य विद्यमानाम्॥ 154 ॥

मौलौ सयतकेशे। "मौलि स्सयतकेशेषु चूडाया मुकुटेऽप्ययम्।"(वैज को 6-5-64) इति॥ 155 ॥

घर्घरा गम्भीराम्। "गाम्भीर्ये नूपुरारावे घर्घरस्समुदाहृतः" इति। अशरीरिणीं शरीरहीना, दैवीमित्यर्थः॥ 156 - 159॥

(सन्तुष्टैः) सम्यक् प्रीतपुरुषैः महती विद्या शास्त्रविषया येषा ते तथा तैः॥ 160 - 167 ॥

मधुरा रक्षितु निर्गम्य निर्धार्य पञ्चम्यर्थे वा द्वितीया॥ 168 ॥

गिरौ वनोद्देशे, वने उन्नतप्रदेशे वृक्षमूले निवासिन कृताऽऽवास, कञ्चन लोकविलक्षणम्॥ 169 - 171॥

फल लाभः आनन्दः चेतनस्य मूल ज्ञान ते एव कृते पूर्णे आहारो यस्य स तथा, तम्॥ 172 ॥

प्रणाम चक्रतुरित्यादिना[1] प्रतीयमानः कृष्णभार्गवरामयोः नम्यनन्तृभावो भेदाऽविनाभाव गमयति। तत्कथ मुभयोर्विष्णुत्वे सङ्गच्छत इत्याशङ्क्य- "सर्वावताराभिन्नोऽपि सर्वशक्ति रपि स्वयम्। पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनाम्। अखण्डैक रसो विष्णु र्दर्शये त्तत्र तत्र हि" (षाड्गुण्ये) इति षाड्गुण्यवचनेन परिहरणीयेति॥ 173 - 182 ॥

---

1 Mb कृत्य।

तौ तथा यदुशार्दूलौ गच्छन्तौ दक्षिणापथम्।
ददर्शतुश्च गोमन्त मभ्रङ्कषमहाद्रुमम्॥ 183 ॥

करवीरपुरञ्चैव तन्मूले तुङ्गतोरणम्।
दृष्ट्वा विचित्रप्राकारं हर्म्यप्रासादगोपुरम्॥ 184 ॥

शङ्खमाध्मापयामास शङ्खचक्रगदाधरः।
तस्य शङ्खध्वनिं श्रुत्वा बभूव क्रोधविह्वलः॥ 185 ॥

सृगालो वासुदेवाख्यः प्रत्यगाद्यदुनन्दनौ।
सोऽभ्येत्य बहुपादातितुरङ्गरथकुञ्जरः॥ 186 ॥

अभ्यवर्षच्छरौघेण छादयन्निव माधवौ।
तदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ॥ 187 ॥

योधयामासतु र्वीरौ द्वावेवाऽऽजौ पदातिनौ।
सैन्यञ्च बाणपूगेन व्यथितं भृशविह्वलम्॥ 188 ॥

दृष्ट्वा सृगालभूपाल स्तावधावदमर्षणः।
तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकम्।
न्यवारयद्वासुदेवो वेलेव वरुणालयम्॥ 189 ॥

तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ।
युयुधाते तथाऽन्योन्य मन्योन्यवधकाङ्क्षिणौ॥ 190 ॥

स तथा विद्यमानस्य वासुदेवस्य सङ्गरे।
शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम्॥ 191 ॥

तत स्तत्सैनिकास्सर्वे हतशेषाः कुरूद्वह!
कृष्णेन स्वामिनि हते दुद्रुवु स्सर्वतोदिशम्॥ 192 ॥

ततस्तौ रामगोविन्दौ करवीरपुरं महत्।
प्रविश्य पूजितौ विप्रै र्वणिग्भिश्च यथा प्रियः॥ 193 ॥

तद्गजाश्वरथानीककोशादिधनसञ्चयम्।
मधुरां प्रेषयामास तदीयै र्भृत्यपूरुषैः॥ 194 ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे अधिकपाठे तृतीयोऽध्यायः।

**विज०** अभ्रङ्कषा महान्तो द्रुमा यस्मिन् स तथा तम्। अभ्राणि मेघान् कषन्त्युल्लिखन्तीति अभ्रङ्कषाः कषते-र्गतोरभ्रादिषूपपदेषु खशप्रत्ययो भवति॥ 183-187 ॥

पदातिनौ पादै स्सञ्चरमाणौ रथादि रहिता वित्यर्थः॥ 188,189 ॥

वासुदेवौ वसुदेवपुत्रौ। कृष्णशृगलौ॥ 190 ॥

वासुदेवस्य शृगालनाम्नः॥ 191,192 ॥

प्रियसुहृद्यथा तथा पूजितौ॥ 193 ॥

तदीयै स्तस्य विद्यमानैः॥ 194 ॥

इति अधिकपाठे तृतीयोऽध्यायः
विजयध्वजरीत्या द्विपञ्चाशत्तमोऽध्यायः॥ ५२ ॥

## अधिकपाठे चतुर्थोऽध्यायः

### श्रीशुक उवाच

गोमन्तं पर्वतश्रेष्ठं तुङ्गद्रुमलतान्वितम्।
सालतालतमालाढ्यं प्रियालाशोकशोभितम्॥ 195 ॥

कदम्बनिम्बहिन्तालपूगपुन्नागशोभितम्।
आरुह्य कदलीखण्डमण्डितं मत्तकोकिलम्॥ 196 ॥

भ्रमद्भ्रमरसङ्घातप्लवङ्गाकम्पितद्रुमम्।
फलभारनतैः स्कन्धैर्नारिकेलै र्विराजितम्॥ 197 ॥

बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम्।
रम्यं ददृशतु र्वीरौ प्रदेशं रामकेशवौ॥ 198 ॥

तत्र पवर्षणं नाम शृङ्गं पर्वतमूर्धनि।
अवापतु र्यत्र मेघा नित्यं वर्षन्त्यविह्वलाः॥199 ॥

तत्राऽऽरुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशो दश।
रममाणौ यथाकाम मूषतुः पर्वतोत्तमे॥ 200 ॥

एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे।
निवासे देवदेवस्य शङ्खचक्रगदाधृतः॥ 201 ॥

उपासीनो महाबाहुः श्रीमान्वैरोचनो बलिः।
जहार देवदेवस्य किरीटं रत्नचित्रितम्॥ 202 ॥

इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम्।
पद्मरागमहानीलमुक्ताफलविराजितम्॥ 203 ॥

पुष्परागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम्।
हृतं दानववीरेण विदित्वा पुरपालकः।
तमन्वधावत्त्वरितं वैनतेयो विहङ्गराट्॥ 204 ॥

तमन्तरे समासाद्य दानवेन्द्रं दुरासदम्।
कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम्॥ 205 ॥

गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम्।
आगच्छन्ददृशे देवं देवकीनन्दनं हरिम्॥ 206 ॥

वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे।
तस्य मूर्ध्नि निधायाऽऽशु किरीटं दिव्यभूषणम्।
प्रणम्य पादयो मूर्ध्ना स्तोतुं तमुपचक्रमे॥ 207 ॥

गरुड उवाच

नमो नमः कारणपूरुषाय नारायणायाऽखिलवल्लभाय।
सुरारिसंहारणकारणाय नारायणायाऽखिलकर्मसाक्षिणे॥ 208 ॥

हिरण्यगर्भत्व मुपेत्य मूले सृजस्यशेषं भुवनं स एव।
नारायणात्मन् परिपासि भूयो जहार चाऽन्ते भगवन् शिवात्मन्॥ 209 ॥

तं त्वा यदो वंशकरं सुरेशं जानेऽवतीर्णं भुवने वृषाकपिम्।
अहं हि भृत्य स्तव वैनतेयो ब्रूहि क्रियां किं करवाणि देव॥ 210 ॥

श्रीशुक उवाच

इत्युक्त्वा देवदेवेशं प्रणिपत्य विहङ्गराट्।
जानुनी धरणौ कृत्वा तस्थौ प्राञ्जलिरग्रतः॥ 211 ॥

तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुङ्गवम्।
प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गं तदुत्तमम्॥ 212 ॥

'गच्छ भद्र! यथाकाममेहि काले मया स्मृतः।
इत्युक्त्वा तं विसृज्योभा वीश्वरौ रामकेशवौ॥॥ 213 ॥

फलमूलकृताहारौ पीतनिर्झरवारिणौ।
अवरुह्य गिरेः शृङ्गा त्करवीरपुरं गतौ॥ 214 ॥

तत्र तौ चतुरो मासा नुषित्वा भरतर्षभ!
महत्या सेनया सार्धं जग्मतु र्मधुरां पुरीम्॥ 215 ॥

सृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः।
आजगाम कुरुश्रेष्ठ! महत्या सेनया वृतः॥ 216 ॥

तेन सार्ध मभूद्युद्धं समाहं रामकृष्णयोः।
तदा पराजितो युद्धे मागधो बहुसैनिकः॥ 217 ॥

जगाम मगधानेव बहुभिः क्षत्रियैस्सह।
रामकृष्णौ धर्मज्ञौ सूतमागधवन्दिभिः॥ 218 ॥

स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम्॥ 219 ॥

विज० सालः सर्जः, तालः तृणराजः, तमालः कालस्कन्धः, प्रियालो राजादनः, अशोको वञ्जुलः "सालं सर्ज च सूरयः" (हला.को. 2-40) तृणराजस्तालः कथ्यते। "कालस्कन्धस्तमाल स्स्यात्" (अम.को. 2-114) "राजादनः प्रियाल स्स्यात्" (अम.को 2-81) "वञ्जुलोऽशोक" (अम.को. 2-110) उच्यते॥ 195 ॥

कदम्बो हरिप्रियः, निम्बः पिचुमन्दः "पिचुमन्दस्तु निम्ब (०म्बोऽथ.) स्स्यात्" (अम.को. 2-108) हिन्तालो वनक्रमुकः, नागः नागकेसरः, पूगोऽतिसारो ग्रामक्रमुकः, पुन्नागः सुरवर्णिका॥ 196,197 ॥

बहुभिः प्रस्रवणैः निर्झरैरुपेतम्॥ 198-201 ॥

[1] "उपासीनो महाबाहुः" इत्यादिना मुक्तगम्ये क्षीरसागरे बलिना दानवेन्द्रेण हरेः किरीटहरणं, गरुडेन तं जित्वा किरीटमादाय आगच्छता मार्गे गोमन्ते वसन्तं श्रीकृष्णं दृष्ट्वा किरीटहीने तच्छिरसि तन्निधानमुच्यते। तत्र संशयः- अजमनिद्रमस्वप्नम्" ('अद्वै. उ०. 36) इति श्रुतेः नित्यनिरस्तनिद्रस्य हरेः किरीटनयनं इत्यादिकं कथं सङ्गच्छते इतीय माशङ्का। "बहूनि स्थानजातानिकृष्णस्यक्षीरसागरे" (माहात्म्ये) इत्यादिमाहात्म्यवचनेनपरिहृतेति ज्ञातव्यम्॥ 202-207 ॥

नमो नम इति पुनरुक्तिः आदरार्था। पुरुषायेत्युक्ते जीवायेति शङ्का स्यात्। अतः तन्निरसनार्थं कारणेति। "कारणं बन्धमोक्षयोः" इति श्रुतेः। जीवस्याऽपि कारणत्वप्रतीतेः निस्तुषत्वेन शङ्कानिवृत्तये नारायणायेति। अयं शब्दो देवदत्तादिशब्दवत् साङ्केतिको न भवति, किन्तु गुणनिबद्ध इति भावेनाऽऽह- अखिलेति। न तर्हि शौर्यादिगुणयोगोऽस्येत्यत्राऽऽह- सुरारीति। राक्षसवत्संहारी चे न्न कोऽप्येन माश्रयतीत्यत्राऽऽह- नारायणायेति। नारो नरसमुदायः तदाऽऽश्रयो नारायणः, तस्मै। ननु सर्वाश्रयत्वं राजवद्बहिःस्थत्वेन, उत अन्तःस्थत्वेन, आहोस्वित् वायुवदुभयरुपेण? नाऽऽद्यः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना.उ. . 9-5) इति श्रुतिव्याकोपात्। न द्वितीयः, कर्मभोगप्राप्तेः। न तृतीयः, अखण्डात्मनो द्वितीयत्वानुपपत्तेरिति तत्राऽऽह - अखिलेति॥ 208 ॥

सृष्टिसंहारयोश्चतुर्मुखपञ्चमुखहेतुत्वोक्ते रस्य अखण्डहेतुत्वं कथमिति तत्राऽऽह-हिरण्यगर्भत्वमिति। मूले आदिकाले हिरण्यगर्भं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यत्वमुपेत्य भूयः पश्चात् नारायणात्मन् नारायणनामपरमात्मन्! पुनः शिवात्मानं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यं, तदुक्तम्- "ब्रह्मस्थो ब्रह्मनामाऽसौ रुद्रस्थो रुद्रनामकः" (स्कान्दे) इत्यादि॥ 209

एवंविधो विष्णु स्त्वमित्याह- तं त्वेति। भुवने प्रसिद्धं वृषाकपिं विष्णुमवतीर्णं तत्सृष्ट्यादिहेतुश्च जाने इत्यन्वयः। "विष्णौ रुद्रे वृषाकपिः"। इत्यतो यदोर्वंशकरमित्यादि क्रियाविशेषणं कर्तव्यम्। धर्मप्रेरकत्वेन फलवर्षणाद्वृषः। [2-] अकस्य असुखस्य [-2] पातृत्वा दकपिः। यद्वा -अकाद्दुःखात् शरणागतं जग त्पातीति वृषाकपिरिति॥ 210,211 ॥

तस्य उत्तममङ्गम् उत्तमाङ्गं शिर इत्यर्थः॥ 212-219 ॥

इति अधिकपाठे चतुर्थोऽध्यायः

विजयध्वजरीत्या त्रिपञ्चाशत्तमोऽध्यायः

---

1 Ma. adds सुरैः 2- -2 Mb कस्य सुखस्यापातृ०

एवं सप्तदशकृत्व स्तावत्यक्षौहिणीबलः[1]।
युयुधे मागधो राजा यदुभिः कृष्णपालितैः॥ ४२ ॥

अक्षिण्वं[2] स्तद्बलं[-2] सर्वं वृष्णयः[3] कृष्णतेजसा।
हतेषु स्वे[4]ष्वनीकेषु त्यक्तोऽयादरिभि र्नृप[5]!॥ ४३ ॥

[6-]अष्टादशमसङ्ग्रामे[-6] आगामिनि तदन्तरा।
नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत[7]॥ ४४ ॥

रुरोध मधुरा मेत्य तिसृभि र्म्लेच्छकोटिभिः।
नृलोके चाऽप्रतिद्वन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसम्मि[8]तान्॥ ४५ ॥

तं दृष्ट्वाऽचिन्तयत्कृष्णः सङ्कर्षणसहायवान्।
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत्॥ ४६ ॥

यवनोऽयं निरुन्धेऽस्मानद्य ता[9]वन्महाबलः।
माधवो[10]ऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति[-10]॥ ४७ ॥

1 MMa ०दं० 2- -2 MMa ०ण्वत बल 3 MMa वृष्णिभिः 4 MMa ते० 5 B,G,J,K ०पः 6- -6 K अथाष्टादशमे युद्धे, M/V अष्टादशे तु सङ्ग्रामे 7 M/V ०पद्यत 8 MMa ०म्म० 9 MMa श्वो वा म० 10- -10 MMa ०प्येति दृष्टात्मा परश्वो नैव संशयः॥

**श्रीध०** तावतीति छेदः। तावति पराजये वर्तमानेऽप्यक्षौहिण्यो बल यस्य सः। सप्तदशकृत्वः सप्तदशवारान् युयुधे॥ ४२ ॥

।। अक्षिण्वन् क्षयं निन्युः॥ ४३ ॥

**अष्टादशेति**। अष्टादशमे अष्टादशे सङ्ग्रामे भाव्ये तन्मध्ये अकस्मात्कालयवनः प्राप्तः॥ ४४ ॥

**रुरोधेति**। आत्मसम्मितान् स्वतुल्यान्॥ ४५ ॥

**तमिति**। वृजिनं दुःखं उभयतो यवनाज्जरासन्धाच्च॥ ४६ ॥

तदाऽऽह द्वयेन **यवन** इति। निरुन्धे निरुणद्धि॥ ४७ ॥

**वीर० एवमिति**। इत्थं पुनः पुनः तावत्यः त्रयोविंशति संख्याकाः अक्षौहिण्यो बलं यस्य तथाभूतः सप्तदशवारं कृष्णपालितै र्यदुभिस्सह युयुधे॥ ४२ ॥

**अक्षिण्वन्निति**। कृष्णतेजसा हेतुभूतेन वृष्णयो यदवः तस्य जरासन्धस्य बलं सर्व मक्षिण्वन् नाशितवन्तः। इत्थं

सर्वेष्वनीकेषु हतेषु सत्सु नृपो जरासुतोऽरिभिः रामादिभिः त्यक्तो जगाम॥ ४३ ॥

अथाष्टादशमे युद्धे आगामिनि भाविनि सति तदन्तरा तन्मध्ये अष्टादशसङ्ग्रामात्पूर्व मित्यर्थः। नारदेन प्रेषितः काल यवनाख्यो वीरः प्रत्यदृश्यत, माधुरैर्जनै रिति शेषः॥ ४४ ॥

रुरोधेति। मनुष्यलोके न विद्यते प्रतिद्वन्द्वः तुल्यबलो यस्य तथाभूतः कालयवनः यदून् स्वात्मना [1]तुल्यबलसम्मितान्[1] श्रुत्वा, नारदमुखादिति शेषः। तिसृभिर्म्लेच्छानां कोटिभिः सहाऽऽगत्य मथुरां सर्वतो निरुद्धवान्॥ ४५ ॥

तमिति। तं कालयवनं दृष्ट्वा [2]श्रीकृष्णश्चिन्तयामास। चिन्ता मेवाऽऽह - अहो इति सार्धद्वयेन। उभयतो यवना ज्जरासन्धाच्च वृजिनं दुःखं महत् यदूनां प्राप्तम्॥ ४६ ॥

तदेवाऽऽह- यवन इति। महद्बलं यस्य स यवनोऽधुना अस्मान्निरुन्धे निरुणद्धि। अद्याऽस्मिन्नहनि वा, श्वः परस्मिन्नहनि वा, परश्वस्तदनन्तरे अहनि वा मागधोऽप्यागमिष्यति॥ ४७ ॥

---

1- -1 KTW बलान् 2 KTW omit श्रीकृष्णः।

विज० अक्षिण्वत अक्षीयत॥ ४२-४५ ॥

उभयतो मागधा द्यवनाच्च प्राप्तं वृजिनं दुःखम्॥ ४६, ४७ ॥

आवयो र्युध्यतो [1]रस्य यद्या[2]गन्ता जरासुतः।
बन्धू[3]न्हनिष्यत्यथवा नेष्य[4]ते स्वपुरं बली॥ ४८

तस्मादथो विधास्यामो दुर्गं द्विपददुर्गमम्।
तत्र ज्ञातीन्समाधाय यवनं [5]घातयामहे॥ ४९ ॥

इति सम्मन्त्र्य भगवान् दुर्गं द्वादशयोजनम्।
अन्त स्समुद्रे नगरं [6]कृत्स्नाद्भुत मचीक[7]रत्॥ ५० ॥

दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम्।
रथ्याचत्वरवीथीभि र्यथावास्तु विनिर्मितम्॥ ५१ ॥

सुरद्रुमलतोद्यान विचित्रोपवनान्वितम्।
हेमशृङ्गै र्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः॥ ५२ ॥

राजतार[8]कूटैः को[9]ष्ठै [10]र्हैमकुम्भै[10] [11]र लङ्कृतैः।
रत्नकूटै र्गृहै र्हैमै र्महामरकतस्थलैः॥ ५३ ॥

वास्तोष्पतीनाञ्च गृहै र्वलभीभिश्च निर्मितम्।
चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत्[12]। ५४ ॥

1 W ०रञ 2 MMa गच्छेत् 3 BGJMMa वधिष्य० 4 MIV ०ति 5- -5 KW मारयामहे, MIV घातयावहे 6 MMa ०ष्णा० 7 MMa कृपत् 8 MMa ०पु० 9 MIV जुष्ट 10- -10 MMa जुष्ट हैमैः 11 KMMa, MI VW ०स्वल० 12- -12 MMa यदूनाञ्च गृहै र्लसत्।

श्रीध० आवयोरिति। अस्य अनेन सः[1]॥ ४८, ४९ ॥

इतीति। समुद्रमध्ये दुर्गं, तन्मध्ये नगर कृत्स्नाद्भुतं सर्वाश्चर्यमयं अचीकरत् कारयामास॥ ५० ॥

दृश्यते इति। त्वष्टा विश्वकर्मा। तदीयं शिल्पनैपुणञ्च क्रियाकौशलम्। तदाह सार्धे स्त्रिभिः रथ्येति। रथ्या राजमार्गाः पुरतः वीथ्यः उपमार्गाः पश्चिमतः उभयतोऽपि, चत्वराणि अङ्गणानि तन्मध्ये कोष्ठाः ततोऽप्यन्तः सुवर्णभवनानि, तदुपरि स्फाटिकाट्टालिका[2]ः तदुपरि हेमकुम्भा इति बहुभूमिक यथावास्तु वास्तु[3] गृहादिनिर्माण[4]स्थानं, तदनतिक्रम्य विनिर्मितम्[5]॥ ५१ ॥

सुराणा द्रुमा[6] लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तै रन्विताः। हेममयानि शृङ्गाणि येषु[7] तैः दिविस्पृग्भिः अत्युच्चैः स्फाटिका अट्टालकाः[8] उपरितनभूमिका[9] गोपुराणि च द्वाराणि, तै र्निर्मित मित्युत्तरेणान्वयः॥ ५२ ॥

राजतारकुटैः रजतञ्च आरकुटञ्च पीत लोहं[10] ताभ्यां निर्मितैः कोष्ठैः अश्वशालाद्य शालादिभिः। कथम्भूतैः ? हेमकुम्भैः[11] अलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः हैमै स्सौवर्णैः महामरकतमयानि स्थलानि येषु तै गृहैश्च॥ ५३ ॥

किञ्च, नगरगृहादौ[12] वास्तोष्पतीना देवानाञ्च[13] गृहैर्वलभीभिः चन्द्रशालाभिश्च[14] निर्मित यदुदेवगृहैः राजगृहैः उल्लसच्छोभमानम्॥ ५४ ॥

1 BJ omit सः 2 MIV ०ल० 3 MIV omit वास्तु 4 MIV ०दीना नि० 5 B omits वि 6 MIV ०मः 7 MIV ०षा 8 BJ ०लाः 9 BJ ०रि भू० 10 V ०तल लो० 11 MIV हैमैः 12 MIV द्वारादौ 13 V omits देवाना 14 BJ शालिका०

वीर० आवयो र्यवनस्य च मम च मिथो युध्यतोस्सतोः जरासुतो यद्यागमिष्यति, स तर्ह्यस्मद्बन्धून् यदून् हनिष्यति। अथवा तान् स्वपुर प्रति नेष्यति प्रापयिष्यति, यत स्स बली॥ ४८ ॥

अथ विचार्य निश्चितमाह- तस्मादिति। द्विपदै र्मनुष्यैः दुःखेनाऽपि गन्तुमशक्यं दुर्गं जलदुर्गं विधास्यामः करिष्यामः तत्र दुर्गे ज्ञातीन् बन्धून् यदून् समाधाय निधाय यवनं मारयामहे घातयामहे॥ ४९ ॥

इत्थं सम्मन्त्र्य विचार्य निश्चित्य भगवान्समुद्रमध्ये दुर्गं, तत्र नगरञ्चाचीकरत् कारयामास, विश्वकर्मणेति शेषः। नगर विशिनष्टि - द्वादशयोजनविस्तीर्णं कृत्स्नादद्भुतं[1] सर्वाश्चर्यकरम्॥ ५० ॥

यत्र नगरे त्वाष्ट्रं विश्वकर्मणस्सम्बन्धि विज्ञानसूचकं क्रियाकौशलं दृश्यते, तदाह सार्धैस्त्रिभिः- रथ्येति। रथ्या राजमार्गाः पुरतो वीथ्यः उपमार्गाः पुरतः पश्चिमतः उभयतोऽपि चत्वराण्यङ्गणानि तन्मध्ये कोष्ठाः ततोऽप्यन्तः स्वर्णभवनानि तदुपरि स्फाटिकाट्टालकाः तदुपरि हेमकुम्भाः इति बहुभूमिकं यथावास्तु गृहादिनिर्माणस्थानं [2]तदनतिक्रम्य निर्मितम्॥ ५१ ॥

सुराणां द्रुमा लताश्च येषु तानि उद्यानानि विचित्राण्युपवनानि च तैरन्वितम्, हेममयानि शृङ्गाणि येषां तैः, दिविस्पृग्भिः अत्युच्चैः स्फाटिकाट्टालका उपरिभूमिकाः गोपुराणि चत्वराणि तैः॥ ५२ ॥

राजता कुटैः रजतञ्चाऽऽरकुटञ्च पीतलोहं पित्तलमिति यावत्। ताभ्यां निर्मितैः कोष्ठैः अश्वशालागजशालादिभिः। कथम्भूतैः? हैमैः कुम्भैः स्वलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः सौवर्णैः महान्ति मरकतस्थलानि येषु तैः गृहैश्च जुष्टं सेवितम्॥ ५३ ॥

किञ्च। नगरगृहादौ वास्तोष्पतीनां देवानाञ्च गृहै र्वलभीभिः चन्द्रशालिकाभिश्च निर्मितं यद्देवगृहै रुल्लस च्छोभमानम्॥ ५४ ॥

---

1 K ०त्स्नाद्रु० 2 K omits तत्

विज० अस्येति षष्ठी तृतीयार्थे। अनेन सह चाऽऽवयो र्युध्यतोः॥ ४८ ॥

दुःखं गच्छत्यस्मिन्निति दुर्गम् "सुदुरो रधिकरणे" (अष्टा०) इति गमेर्ड प्रत्ययः। विशिनष्टि द्विपदेति। द्वे पदे येषां ते तथा द्विपदः, पदेति निपातो विवक्षितः। मनुष्यै रगम्य मित्यर्थः॥ ४९, ५० ॥

त्वष्टु र्विश्वकर्मणो विद्यमानं त्वाष्ट्रम्। किंतद्विज्ञानमत्राह। शिल्पनैपुणमिति शिल्पविद्यापटुत्वम्। रथ्या राजमार्गः, वीथी वणिजां मार्गः, यथावास्तु वास्तुलक्षणमनतिक्रम्य॥ ५१ ॥

दिविस्पृग्भिः "हृद्युभ्या मुपसंख्यानम्" इत्यलुक्समासः॥ ५२ ॥

राजतैः रजतमयैः, आरपुटैर्लोहविशेषैः, कुम्भैः कोष्ठैरन्तर्गृहैः रत्नकूटैः रत्नशृङ्गैः॥ ५३ ॥

वास्तोष्पतीनां वास्तुदेवतानाम्॥ ५४ ॥

**सुधर्मां पारिजातञ्च महेन्द्रः प्राहिणो द्धरेः।**
**यत्र चाऽवस्थितो मर्त्यो मर्त्यधर्मै र्न युज्यते॥ ५५ ॥**

**★ यत्प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः।**
**श्यामैककर्णान्वरुणो हयान् शुक्लान् मनोजवान्॥ 220 ॥**

△ ददौ सहस्रसंख्यातान् देवदेवाय तोयराट्॥ 221 ॥

अष्टौ निधिपतिः कोशान् [2-]लोकपालो निजोदयान्[-2]॥ ५६ ॥

o तथाऽन्ये लोकपालाश्च ददुः स्वाधिकृतं धनम्॥ 222 ॥

यद्यद्भगवता दत्त माधिपत्यं स्वसिद्धये।
सर्वं प्रत्यर्पयामासु र्हरौ भूमि[3]गते नृप!॥ ५७ ॥

तत्र योगप्रभावेन नीत्वा [4]सर्वजनं हरिः।
[5]प्रत्यागत्याऽथ रा[5]मेण कृष्ण स्समनुमन्त्रितः।
निर्जगाम पुरद्वारा त्पद्ममाली निरायुधः॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
दुर्गनिवेशनं नाम पञ्चाशोऽध्यायः॥ ५० ॥

---

1 K.W वि० ★ This extra half verse is found in M,Ma,Mb editions and the same has been bracketted in B edn △ This additional half verse is found in M,Ma,Mb editions and the same has been bracketted in B edn. and in MI V edns this half verse is included in the text 2- -2 K,V,W लोकपाला निजोदयान्, M,Ma,Mb रत्नपूर्णानिविक्षयान्० o This half verse is found in M,Ma,Mb edns and the same has been bracketted in B edn, But in MI V edns it is included in the text 3 MI V ०क्व० 4 K सर्वं जन, M Ma W स्वान् भगवान् 5- -5 B,G,J प्रजापालेन, M Ma मधुरायाश्च W मधुरामेत्य।

**श्रीध० सुधर्मामिति।** पारिजातञ्च प्राहिणोत् प्रस्थापयामासेति, शुकपरीक्षित्संवादात्पूर्वभावित्वात् भूतनिर्देशः। मर्त्यधर्मैः क्षुत्पिपासादि षडूर्मिभिः॥ ५५ ॥

निधिपतिः कुबेरः अष्टौ कोशान् निधीन् - "पद्मश्चैव महापद्मो म[1-]त्स्यकूर्मौ[1] तथौदकः। नीलो मुकुन्द - श्शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" इति प्रसिद्धान् निजोदयान् निजविभूतीः॥ ५६ ॥

अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासी त्तत्सर्वं प्रत्यर्पयामासुरिति॥ ५७ ॥

**तत्रेति।** यथा कालयवनो न वेत्ति, न चाऽऽसौ जनः तथा योगप्रभावेन नीत्वा, 'त्वमत्र प्रजाः पालय, अहं पलायिष्ये' इति समनुमन्त्रितः कृतानुमन्त्र इत्यर्थः॥ ५८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
पञ्चाशोऽध्यायः॥ ५० ॥

1- -1 V मत्स्यं कूर्मः।

**वीर०** सुधर्मां नाम सभां पारिजातञ्च महेन्द्रो हरये प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्संवादात् पूर्वभावित्वात्[1] भूतनिर्देशः। सुधर्मां विशिनष्टि - यत्रेति। मर्त्योऽपि यत् सुधर्मायां स्थितो मर्त्यधर्मैः अशनायापिपासाशोकमोहजरामरणादिभिर्न युज्यते॥ ५५ ॥

वरुणस्तु श्यामः एककर्णो येषां तान् सर्वतः शुक्लान् मनोजवान् अश्वान्, प्राहिणोत् इत्यनुषङ्गः। निधिपतिः कुबेरस्तु अष्टौ कोशान् निधीन् "पद्मश्चैव महापद्मो मत्स्यः कूर्म स्तथा वरः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" इत्युक्तान् प्राहिणोत्॥ ५६ ॥

तथाऽन्ये च लोकपालाः निजोदयान् निजविभूतीः, तथाऽन्ये च सिद्धादयो यद्यत्स्वाधिकारसिद्ध्यै भगवता दत्त माधिपत्यं तत्सर्वं भगवति भूमिगते भूमाववतीर्णे सति तस्मै प्रत्यर्पयामासुः॥ ५७ ॥

**तत्रेति**। यथा कालयवनो माधुराश्च जना न जानीयुस्तथा योगप्रभावेन योगमायात्मकाश्चर्यशक्तिप्रभावेन[2] माधुरं सर्वं जनं तत्र दुर्गे नीत्वा प्रापय्य, पुन रागत्य, अथ रामेण अनुमन्त्रितः आलोचितो भगवान् पद्ममालाधरो निरायुधश्च भूत्वा पुरद्वारात् निष्क्रान्तवान्॥ ५८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चाशोऽध्यायः॥ ५० ॥

1 KTV ०र्वि 2 B ०त्मि०

**विज०** मर्त्यधर्मैः जरादिलक्षणैः॥ ५५ ॥

क्षीरोदशायिनो विष्णोर्यत्प्रियं हृद्यं तदपि ददौ। निधिपतिः कुबेरः अष्टौ कोशान्निधीन्, अविक्षयान् अव्ययान्॥ ५६ ॥

स्वाधिकृतं स्वकीयत्वेनाभिमतम् क्षीरोदधिमथने हरिणा दत्तम्॥ ५७ ॥

योगप्रभावेण मधुरास्थित पदार्थराशिर्यथा द्वारकास्थितो भवति तथा करणसामर्थ्येन, रामेण समनुमन्त्रितः सहितः॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
**श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे**
पञ्चाशोऽध्यायः॥ ५० ॥
(विजयध्वजरीत्या त्रिपञ्चाशत्तमोऽध्यायः)

# एकपञ्चाशत्तमोऽध्यायः

(विजयध्वजरीत्या चतुः पञ्चाशोऽध्यायः)

-: मुचुकुन्दस्य श्रीकृष्णसन्दर्शनादि कथा :-

श्रीशुक उवाच

तं विलोक्य विनिष्क्रान्त मुज्जिहानमिवोडुपम्।
दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥

श्रीवत्सवक्षसं भ्राजत्कौस्तुभाऽऽमुक्तकन्धरम्।
पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥

नित्य[1]प्रमुदितं श्रीम त्सुकपोलं शुचिस्मितम्।
मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

वासुदोवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः ।
चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥

लक्षणैर्नारदप्रोक्तै र्नान्यो भवितुमर्हति ।
निरायुधश्चल[2]न्पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥

इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ।
अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥

---

1 M.v ०त्यं 2 M.Ma. ०र०

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकपञ्चाशत्तमेऽहन्मुचुकुन्ददृशा हरिः । यवनं मुचुकुन्देन स्तुतस्सन्नन्वकम्पत ॥
यवनेन्द्रसुता त्कालयवना द्यदुभीषणात् । हरि र्हरगिरः स्वैरं पालनायाऽपलायत ॥

**तमिति** । यदा गार्ग्यः[1] श्यालेन षण्ढ[2] इत्युक्त स्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं[3] प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान्। ततश्च यवनेन्द्रेणाऽपुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः[4] कालयवनमजीजनदिति पुराणप्रसिद्धम्। पुरद्वारान्निष्क्रान्तम्। उज्जिहान मुद्गच्छन्तम् ॥ १,२ ॥

**नित्यमिति।** नित्यप्रमुदितमित्यादि[5] मुखारविन्दविशेषणम्॥ ३,४ ॥

**लक्षणैरिति।** नारदोक्तैरेतैः लक्षणैरयं पुमान् वासुदेव एव नाऽन्यो भवितुमर्हति। अयं च निरायुधः। अतोऽनेन पद्भ्यामेव चल न्निरायुधोऽहं योत्स्यामीति निश्चित्य[7] तं पराङ्मुखं प्राद्रवन्त मन्वधावदित्यन्वयः॥ ५,६ ॥

---

1 Ml.v. गर्गः 2 B.J षण्ढः 3 Ml.v. °दकं 4 Ml.v. गर्गः 5 B,Ml.v. omit आदि

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

दुष्कृन्निग्रहसाध्वनुग्रहा वेकेन भगवच्चेष्टितेन दर्शयन् कथाशेषमाह-**तमित्यादिना।** पुरद्वाराद्विनिष्क्रान्तं तं श्रीकृष्ण मवलोक्य नारदोक्तै रेतै र्लक्षणैः, अयं पुमान् वासुदेवो नान्यो भवितुमर्हति। अयं च निरायुधः। अनेन पद्भ्यामेव चलन् निरायुधश्चाहं योत्स्यामीति निश्चित्य पराङ्मुखं प्राद्रवन्तं अन्वधाव दित्यन्वयः। तं कथम्भूतम्? उज्जिहानमुद्गच्छन्तं उडुपं चन्द्रमिव स्थितम् अतीव दर्शनीयं पीते कौशेये वाससी यस्य॥ १ ॥

श्रीवत्सो वक्षसि यस्य, भ्राजता कौस्तुभेनाऽऽमुक्ता बद्धा अलङ्कृतेति यावत् सा ग्रीवा यस्य, पृथवः पीनाः दीर्घा श्चत्वारो बाहवो यस्य।, नवकञ्जे इवारुणे ईक्षणे यस्य तम्॥ २ ॥

नित्यप्रमुदितेत्यादि मुखारविन्दविशेषणम्। श्रीमत् सौन्दर्यसम्पद्वत् शोभनौ कपोलौ यस्मिन्। शुचि विशुद्धं स्मितं यस्मिन्। स्फुरन्ती मकराकारे कुण्डले यस्मिन्। तथाभूतं मुखारविन्दं बिभ्राणम्॥ ३ ॥

श्रीवत्सो लाञ्छनं चिह्नं यस्य। चत्वारो भुजा यस्य। अरविन्दे इवाक्षिणी यस्य, वनमाला अस्याऽस्तीति तथा, व्रीह्यादित्वान्मत्वर्थीय इनिः। एवंविधैः नारदप्रोक्तैः लिङ्गैः वासुदेव एव अय मित्यन्वयः॥ ४,५ ॥

**इतीति।** इत्थं निश्चित्य यवनः पलायमानं पराङ्मुखं च भगवन्तं ग्रहीतुमिच्छुः अन्वधावत्। तस्य दुष्प्राप्यतां वक्तुं विशिनष्टि - योगिनामपि दुरापं योगविशुद्धमनसामपि दुर्ग्रहम्[1]॥ ६ ॥

---

1 B. दुर्ग्राह्यम्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

उज्जिहानमुद्यन्तम् ॥ १-५ ॥

जिघृक्षु र्ग्रहणेच्छुः ॥ ६ ॥

**हस्तप्राप्तमिवाऽऽत्मानं हरिणा स पदे पदे ।**
**नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥**

पलायनं यदुकुले जातस्य तव नोचितम् ।
इति क्षिप न्ननुगतो नैनं प्रापाऽहताशुभः ॥ ८ ॥

एवं क्षिप्तोऽपि भगवा न्प्राविशद्गिरिकन्दरम् ।
सोऽपि प्रविष्ट स्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥

नन्वसौ दूरमानीय शेते मामिह साधुवत् ।
इति मत्वाऽच्युतं मूढ स्तं पदा समताडयत् ॥ १० ॥

स उत्थाय चिरं सुप्तः शनै रुन्मील्य लोचने ।
दिशो विलोकय न्पार्श्वे तमद्राक्षी दवस्थितम् ॥ ११ ॥

स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ।
देहजेनाग्निना दग्धो भस्मसादभव त्क्षणात् ॥ १२ ॥

**श्रीध० हस्तेति** । आत्मानं हस्तप्राप्तमिव दर्शयता दूर नीत इत्यन्वयः ॥ ७ ॥

**पलायनमिति** । अहताशुभोऽक्षीणकर्मा ॥ ८,९ ॥

**नन्विति**। तं शयानमच्युतं मत्वाऽताडयदिति ॥ १०, ११॥

**स** इति । तस्य क्रुद्धस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेन ॥ १२ ॥

**वीर० हस्तेति** । प्रतिपद आत्मान हस्तप्राप्तमिव दर्शयता भगवता दूरं नीतः स यवनाधीशोऽन्ततोऽद्रिकन्दरं प्रापितः[1] ॥ ७ ॥

यदुकुले जातस्य तव पलायन मनुचितमित्येवं क्षिपन् अभिभवन् आशु गतोऽपि यवन एनं भगवन्तं न प्राप। तत्र हेतुं[2] वदन् विशिनष्टि - अहताशुभः अक्षीणदुष्कृतः ॥ ८ ॥

भगवांस्त्वित्थं क्षिप्तोऽपि तूर्ष्णीं गिरिकन्दरं प्राविशत्, स तु यवनः तत्र गिरिकन्दरे प्रविष्टः तत्राऽन्यं शयानं कश्चित्पुरुषमद्राक्षीत्॥ ९ ॥

तं[3] शयानं पुरुष मसौ वासुदेवो मामित्थं दूरमानीय साधुव दधुना तूर्ष्णीं शेते । नूनमसौ श्रीकृष्ण एवेति मूढस्सन् अच्युतमेव मत्वा तं पदा पादेनाताडयत् ॥ १० ॥

सः[4][6] ताडितः पुरुषः उत्थाय चिरं सुप्तः, हेतुगर्भमिदम् । तत्त्वा च्छनै र्लोचने उन्मील्य दिशोऽवलोकयन् पार्श्वे[5] स्थितं तं यवनं ददर्श ॥ ११ ॥

हे भारत ! स यवनः रुष्टस्य क्रुद्धस्य तस्य पुंसः दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निः, तेन तावत्तदैव क्षणाद्भस्मीबभूव ॥ १२ ॥

---

1 B adds इत्यर्थः 2 B कारणं 3 k w omit तं 4 K.W omit सः 5 B ०र्श्व० 6 B omits त

**विज०** दूरमद्रिकन्दरं प्रति नीतः पदे पदे हस्तप्राप्तमिव आत्मानं दर्शयित्वा इति शेषः। दर्शयता आत्मानमिति शेषः ॥ ७ ॥

अहताशुभः अनष्टपापः ॥ ८-१२ ॥

## राजोवाच

**को नाम स पुमान्ब्रह्मन् कस्य किंवीर्य एव वा[1]।**
**कस्माद्गुहां गतः शिश्ये किंतेजो यवनार्दनः[2] ॥ १३ ॥**

## श्रीशुक उवाच

**स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ।**
**मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥ १४ ॥**

**स याचितः सुरगणैरिन्द्राद्यै रात्मरक्षणे ।**
**असुरेभ्यः परित्रस्तै स्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥**

**लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाऽब्रुवन् ।**
**राजन्विरमतां कृच्छ्रा द्भवान्नः परिपालनात् ॥ १६ ॥**

---

1 B,G,J,K,W च 2 M,Ma °नम्

**श्रीध०** **क** इति । यवनमर्दयति हिनस्तीति तथा, स कस्य वंश्यः किंवीर्यः कीदृक्प्रभाववान्, किंतेजः कस्य वीर्यं पुत्र इत्यर्थः। शिश्ये अशयिष्ट ॥ १३ ॥

**स** इति । सत्यः सङ्गरो युद्धं प्रतिज्ञा वा यस्य सः ॥ १४,१५ ॥

**लब्ध्वेति**। गुहं कार्तिकेयम् । स्वःपालं स्वर्गपालकं सेनान्यम् ॥ १६ ॥

**वीर०** तत्र शयानस्य पुरुषस्य कुलनामवीर्यशयनकारणादिबुभुत्सया पृच्छति राजा **को नामेति**। हे ब्रह्मन्! स यवनार्दनो यवनस्य हन्ता शयानः, को वा को नाम? किं तस्य नामधेयमित्यर्थः। कस्य सम्बन्धी? कस्य कुले जातः? किं कीदृशं वीर्यं यस्य सः। कस्मात्कारणाद्गुहां प्राप्त श्शेते स्म। किं कीदृशं तेजो यस्य तथाभूतः॥ १३॥

तत्रोत्तरमाह मुनिः- स इति नवभिः[1] । ब्रह्मणि ब्रह्मकुले साधुः ब्रह्मण्यः सत्यो धर्म्यः सङ्गरो युद्धं यस्य सः ॥ १४ ॥

स इति । स च मुचुकुन्दः असुरेभ्यः भीतैरिन्द्राद्यैः देवैरात्मनः रक्षणे निमित्ते सहायत्वेन याचित श्चिरं तेषां रक्षामकरोत् ॥ १५ ॥

तदा ते देवाः गुहं कार्तिकेयं स्वःपालं स्वर्गपालकं सेनान्यं लब्ध्वा अथ मुचुकुन्द मब्रुवन् उक्तिमेवाह-राजन्निति सार्धैश्चतुर्भिः। हे राजन्! नोऽस्माकं परिपालनात्मका त्कृच्छ्राच्छ्रमात् भवान् विरमतां विरामं प्राप्नोतु।॥ १६ ॥

1 W omits नवभिः

विज० कस्य पुत्र इति शेषः। यवनमर्दितवान् हिंसितवान् ॥ १३,१४ ॥

तेषां सुराणां रक्षाम् ॥ १५ ॥

स्वःपालं स्वर्गरक्षाकरं परिपालनाज्जातात्कृच्छ्रात् ॥ १६ ॥

नरलोकं[1] परित्यज्य राज्यं च[2] हतकण्टकम् ।
अस्मान्पालयतो वीर कामा स्ते सर्व उज्झिताः ॥ १७ ॥

सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः[3]।
प्रजाश्च तुल्यकालीयाः[4] नाऽधुना सन्ति कालिताः ॥ १८ ॥

कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः ।
प्रजाः कालयते क्रीडन्पशुपालो यथा पशून् ॥ १९ ॥

वरं वृणीष्व भद्रं ते ऋते कैवल्य मद्य[5] नः ।
एक एवेश्वर स्तस्य भगवान्विष्णुरव्ययः ॥ २० ॥

1 B,G,J °के 2 B,G,J,M,Ma. °नि 3 Ml,v °यो भृत्य 4 M,Ma °नाः 5 M,Ma °मात्मनः

श्रीध० नरलोक मिति। उज्झिताः त्यक्ता गता इत्यर्थः ॥ १७ ॥

किञ्च सुता इति । तुल्यकालीयाः त्वत्समानकालीनाः[1] कालिता विचालिताः ॥ १८ ।

मत्प्रजाः कोऽन्यः कालयेदिति चे दत आहुः काल इति । कालयते इतस्ततः चालयति ॥ १९ ॥

**वरमिति**। तस्य कैवल्यस्य ॥ २० ॥

---

1 M.v. °याः

**वीर॰** हे वीर! शत्रुरहितं राज्यं नरलोकं च कृत्वा केवलमस्मान्पालयत स्ते, कर्तरि शेषे षष्ठी। त्वया सर्वे कामाः भोगाः उज्झिताः त्यक्ताः ॥ १७ ॥

किञ्च तव सुतादयः त्वत्तुल्यकालीनाः प्रजाश्च कालिताः कालवशीकृताः । अधुना न सन्ति किन्तु कालवशं गताः, मृता इति यावत् ॥ १८ ॥

कोऽसौ मत्तो बलीयान् कालो नामेति शङ्कया मात्रह्मस्तम्बपर्यन्तकृत्स्नजगतः कालवश्यतां, कालस्य बलीयस्त्वं च वक्तुं कालो नाम नेश्वरात्पृथग्भूतः, किन्तु कालशरीरक ईश्वर एव कलयतीत्याहुः[1] काल इति । कालः कालशरीरकः, अव्ययः कालकृतनाशादिविकाररहितः, ईश्वरः सर्वनियन्ता, भगवान्स्वयं क्रीडन्प्रजाः कालयते वशीकरोति यथा पशुपालः पशून्वशीकरोति तद्वत् ॥ १९ ॥

**वरमिति**। अतस्त्वमद्य नोऽस्मान् प्रति वरमभिमतं वरय। तर्हि मुक्तिं प्रयच्छतेत्यत्राऽऽहुः - ऋते[2] कैवल्यमिति। कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिमिति यावत् । ततोऽन्यं वरं वरयेत्यर्थः । कैवल्यस्यावरणीयत्वे हेतुमाहुः-एक एवेति। तस्य कैवल्यस्य ईश्वरः अधिपतिः दातेति यावत्, भगवान्विष्णुः एक एव, अतो न वयं कैवल्यं दातुं प्रभव इति भावः ॥ २० ॥

1 K. का॰ 2 B. ि

**विज॰** उज्झिताः त्यक्ताः ॥ १७ ॥

तुल्यकालीनाः तत्समानकालजाताः, कालिताः कालेन विनाशिताः ॥ १८ ॥

कालयते उभयपदी । कालः क इति । तत्राऽऽह भगवानिति । अव्ययः स्वरूपतोऽवयवतो गुणतोऽपि नाशरहितः ॥ १९, २० ॥

**एवमुक्तः स वै देवा नभिवाद्य[1] महायशाः।**
**★ (अयाचत गुहाविष्टो निद्रां तु बहुकालिकीम् ।**
**तथेत्युक्तस्तु तैर्देवैः मुचुकुन्दो महामनाः ॥)**

☆ अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २१ ॥

\+ [2-]प्रतिबोधयति त्वां वै स्वपन्तं यस्त्वचेतनः[-2] ।
स त्वया [3-]दृष्टिमात्रेण[-3] भस्मीभवतु तत्क्षणात् ॥ २२ ॥

यवने भस्मतां[4] नीते भगवान्सात्त्वतर्षभः ।
आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २३ ॥

तमालोक्य घनश्यामं पीतकौशेयवाससम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २४ ॥

चतुर्भुजं रोचमानं वैजयन्त्या च मालया ।
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २५ ॥

---

1 B,G,J °बन्ध ★ This extra verse is found in M.Ma edns only ☆ The following three extra half verses are found in B,G,J edns, only निद्रामेव ततो वव्रे स राजा श्रमकर्षितः। यः कश्चिन्मम निद्राया भङ्गं कुर्या त्सुरोत्तमाः । स हि भस्मीभवेदाशु,तथोक्तश्च सुरैस्तदा ॥ + This verse is not found in M.Ma. M.v edns 2--2 B,G,J स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः। 3--3 B,G,J दृष्टमात्रस्तु 4 B,G,J M.Ma °सान्नीते

**श्रीध०** गुहायां प्रविष्टः शेते स्म ॥ २१-२५ ॥

**वीर० एवमिति।** देवैस्तर्हि बहुकालमनिद्रस्य मम शयनार्थं निर्जनं प्रदेशं प्रदर्शयतेत्युक्तै रित्यर्थसामर्थ्यादत्र शेषो बोद्धव्यः। एवं स्वपन्तं यस्त्विति वक्ष्यमाण प्रकारेणोक्तो महायशाः। स च मुचुकुन्दो देवैः प्रदर्शितायां तस्यां गुहायां प्रविष्टः देवैः दत्तया विघ्नानुपहतीकृतया निद्रया। अध्ययनेन वसतीतिवत् हेत्वर्थे तृतिया। अशयिष्ट शयितवान्, निमित्तभूतया वा ॥ २१ ॥

**प्रतीति।** एवंशब्दविवक्षितं प्रकारमाह-अचेतनोऽजानन् यः कश्चित्स्वपन्तं शयानं त्वां[1] प्रतिबोधयति जाग्रदवस्थां प्रापयिष्यति स पुमान् त्वया[2] कर्त्रा दृष्टिमात्रेण करणेन त्वद्दृष्टिप्रसरमात्रेणेति फलद्वयफलितोऽर्थः। तत्क्षणात्[3] भस्मी भवतु इति[4] ॥ २२ ॥

प्रश्नस्योत्तरमुक्त्वा प्रकृतां कथामाह- **यवन** इत्यादिना । [5-]भस्मतां नीते[-5] भस्मतां प्रापिते सति सात्वतर्षभः भगवान्कृष्णः धीमते मुचुकुन्दायाऽऽत्मानं दर्शयामास ॥ २३ ॥

**तमिति।** तस्य भगवतस्तेजसा धर्षितः अभिभूतोऽत एव शङ्कितः,कस्येदं तेज इत्यादि शङ्कमानस्तेजसा दुर्धर्षम् अधृष्यमिव स्थितं तं भगवन्तं शनकैरवलोक्य महती विपुला बुद्धिर्यस्य स राजा मुचुकुन्दः पर्यपृच्छदिति सम्बन्धः।

तं कथम्भूतम् ? घनमिव श्यामं पीतकौशेये वाससी यस्य, श्रीवत्सो वक्षसि यस्य, तथाभूतं भ्राजता कौस्तुभेन विराजितं, वैजयन्त्या वनमालया शोभमानं च । विराजित मित्युक्तसमुच्चयार्थश्चशब्दः, अनुक्ताभरणान्तर समुच्चयार्थो वा। चारु[6] सुन्दरं प्रसन्नं च वदनं यस्य तम् ॥ २४, २५ ॥

1 K.W omit त्वां2 B सरण 3 B adds एव 4 K.W omit इति 5--5 K. omits 6 K.W omit चारु

विज० आत्मनस्तु बहुकालिकीं बहुकालभोग्याम् ॥ २१-२५ ॥

प्रेक्षणीयं त्रि[1]लोकस्य सानुरागस्मितेक्षणम्।
अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २६ ॥

पर्यपृच्छन्महाबुद्धि[3] स्तेजसा तस्य धर्षित[2] ः ।
शङ्कितः शनकै राजा दुर्धर्षमिव तेजसा ॥ २७ ॥

मुचुकुन्द उवाच

को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे ।
पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥ २८ ॥

किंस्वि त्तेजस्विनां तेजो भगवा[4]स्त्वं विभावसुः।
सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥ २९ ॥

मन्ये[5] त्वां देवदेवानां त्रयाणां पुरुषर्षभम्।
यद्बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ३० ॥

1 B,G,J, त्रृ 2 M,Ma. विस्मितः 3 M.v राजन् 4 B,G,J °वान्वा 5 M.Ma °न्नाससे

श्रीध० पर्यपृच्छदिति। धर्षितः अभिभूतः दुर्धर्षम[1]प्रधृष्यम् ॥ २६,२७ ॥

क इति । विपिनेऽरण्ये तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने, तत्राप्युरुकण्टके पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसीति ॥ २८ ॥

किंस्विदिति । तेजोमूर्तिः प्रभावो दीप्तिर्वा ॥ २९ ॥

सर्वत्रापरितोषा दाह-मन्ये इति । पुरुषर्षभं श्रीविष्णुम् । गुहाध्वान्तमन्तस्तमः ॥ ३० ॥

1 M.v. omit प्र

**वीर०** त्रिलोकस्य प्रेक्षणीयं दर्शनीयं सुन्दरतममिति यावत् । अपीच्यं सुन्दरं वयो यस्य तम् । प्रादुर्भूतवयस्कमिति भावः । मत्तस्य सिंहस्येव उदारो विक्रमः पराक्रमः पादविक्षेपो वा[1] यस्य तम् ॥ २६,२७ ॥

तं प्रश्नमेवाह **को भवानित्यादिना** वयं त्वित्यतः प्राक्तनेन । इह सम्प्राप्तो भवान् कः ? किं देवः, उत मानुषः ? इहेति विवक्षितमाह-विपिने अरण्ये तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने तत्राप्युरूणि कण्टकानि यस्मिन् तस्मिन् पद्मपलाशाभ्यां पद्भ्यां विचरसि ॥ २८ ॥

किंस्वित् ? किं वा त्वं तेजस्विना[3] यत्तेजः तदेव मूर्तीभूतः[2], किं वा भगवान्विभावसुः अग्निः अथवा सूर्यः। यद्वा सोमेन्द्रयोरन्यतमः उत वरुणाद्यन्यतमो लोकपालः ॥ २९ ॥

सर्वत्रापरितोषादाह-**मन्ये** इति । देवानामिन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां त्रयाणां[4] मध्ये यः पुरुषोत्तमो भगवास्त्व त्वामहं मन्ये । कुतः ? यत् यस्मात् गुहाध्वान्तं हृदयगुहास्थमपि ध्वान्तमज्ञानं च बाधसे विधुनोषि । यथा दीपः स्वप्रभया अन्धं तम स्तद्वत् ॥ ३० ॥

---

1 B omits वा 2 K °त 3 W °न्यो लो० 4 K.W omit °त्रयाणा

**विज०** त्रिलोकस्य मध्ये दर्शनीयगुणम् ॥ २६ ॥

अतितेजसा अधिकतेजसा ॥ २७ ॥

गिरिगह्वरे प्रवेष्टुमशक्ये ॥ २८ ॥

तेजस्विनां ज्योतिष्मतां पुञ्जीभूतमेकं तेजः किंस्वित् ? सामान्योक्तं विशिनष्टि - भगवानिति ॥ २९ ॥

त्रयाणां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं पुरुषश्रेष्ठं विष्णुं मन्ये। [1-]यद्वा त्रयाणां ब्रह्मरुद्रेन्द्राणां त्रेताग्नीनां वा। तत्र[-1] हेतुमाह-यदिति। गुहाध्वन्तमित्युपलक्षणं ब्रह्माण्डगुहाव्यापितिमिरमपि, प्रदीपो न गृहान्तर्वर्तिज्योतीरूपं परं न गृह्यते, किन्तु सूर्योऽपि ॥ ३० ॥

---

1--1 B omits

**शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव।**
**स्वजन्मकर्म गोत्रं वा कथ्यतां यदि रोचते॥ ३१ ॥**

**वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः।**
**मुचुकुन्द इति प्रोक्तो[1] यौवनाश्वात्मजः प्रभो॥ ३२ ॥**

चिरप्रजागरश्रान्तो[2] निद्रयाऽपहतेन्द्रियः[3]।
शयेऽ स्मि न्विपिने[4] कामं केनाऽप्युत्थापितोऽधुना॥ ३३॥

सोऽपि भस्मीकृतो नून मात्मीयेनैव पाप्मना।
अनन्तरं भवान् श्रीमाँल्लक्षितोऽमित्रशासनः[5]॥ ३४ ॥

तेजसा तेऽविषह्येण भूरि [6-]द्रष्टुं न शक्नुमः[-6]।
[7-]हतौजसो[-7] महाभाग माननीयोऽसि देहिनाम्॥ ३५ ॥

---

1 K,W. ख्यातो 2 M,Ma °रं 3 G,K,M,Ma °योपहते°; MI.V.W. °यापहृते 4 B,G,J,K,M,Ma,MI. °जने 5 B,G,J शातनः; MI, v शासन।
6- -6 M,Ma. द्रष्टुमशक्नुमः 7- -7 MI,v ततो वै त्वं

**श्रीध० वयन्त्विति।** वंश्याभिप्रायेण बहुवचनम्। तेष्वहं मुचुकुन्द इति [1-]प्रोक्त इति[-1]। युवनाश्वो मान्धातुः पिता अतो मान्धाता यौवनाश्वः॥ ३१- ३५ ॥

---

1- -1 B omits

**वीर० शुश्रूषतामिति।** यद्यपि चतुर्भुजत्वादिलिङ्गैः परमात्मासाधारणैः पुरुषर्षभं मन्ये इति पुरुषोत्तमत्वं निश्चित्य नरपुङ्गवेति सम्बोधनानुपपत्तिः। तथाऽपि पुनस्तथैव द्विभुजत्वादिविशिष्टरूपेणाऽवस्थितं तमवलोक्य तथा सम्बोधितम्। नरशब्दस्य पुरुषमात्रपरत्वं वा। स्वस्य[1] जन्म कर्म गोत्रं, वाशब्दः चार्थकः। श्रोतुमिच्छतामस्माकं अव्यलीकं[2] निष्कपटं यथा तथा कथ्यतां यदि रोचते, न वयं विधातुं प्रभव इति भावः॥ ३१॥

तर्हि तव जन्मादिकं कथयेत्यत आह - **वयन्त्विति।** वयन्त्विति वंश्याभिप्रायकं बहुवचनम्। हे पुरुषव्याघ्र! तावद्वयं क्षत्रबन्धवः क्षत्त्रेण वर्णेन बध्यन्त इति क्षत्त्रबन्धवः क्षत्त्रिया इत्यर्थः। तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः "दाण्डिनायन" (आष्टा० 6-4-174) सूत्रे निपातनात्साधुः। बहुषु लुगभाव आर्षः। तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्यापत्यं यौवनाश्वो मान्धाता, तास्यात्मजः पुत्त्रः मुचुकुन्द इति ख्यातः॥ ३२ ॥

चिरं बहुकालं प्रजागरेण श्रान्तः अत एव निद्रयोपहतान्यभिभूतानीन्द्रियाणि यस्य सोऽहमस्मिन् निर्जने देशे कामं यथेच्छं शये शयितवानस्मि। अधुना केनापि केनचिदुत्थापितश्च॥ ३३॥

यो मा मुत्थापितवान् सोऽपि स्वीयेनैव पापेन हेतुना नूनं भस्मीकृतः। अस्मद्दृष्टिप्रसारस्तु निमित्तमात्रमिति भावः।[3] अनन्तरं[4] भस्मीभावनानन्तरं अमित्रशासन श्शत्रूणां शास्ता श्रीमान् भवान् लक्षितः दृष्टः, मयेति शेषः। सोढुमशक्येन त्वत्तेजसा अभिभूतदृष्टयो वयं त्वां भूरि चिरं द्रष्टुं न शक्नुमः। महाभाग! हे भगवन्! हतमोजस्सामर्थ्यं येषां तेषां कर्मसङ्कुचितज्ञानात्मकसामर्थ्यानां अज्ञानां मादृशां देहिनां माननीयोऽसि पूज्योऽसि भजनीयोऽसीति यावत्॥ ३४,३५ ॥

---

1 W. omits स्वस्य 2 K.W. निष्कपटं 3 B. adds अस्य 4 B भावादन०

**विज०** अव्यलीकं सत्यं शुश्रूषतां श्रोतुकामानाम्॥ ३१ ॥

ऐक्ष्वाका इक्ष्वाकुकुले जाताः ॥ ३२-३४ ॥

हतौजसः नष्टतेजसः॥ ३५ ॥

एवं [1-]सम्भाषितो[-1] राज्ञा भगवान्भूतभावनः।
प्रत्याह प्रहसन्वाण्या मेघनाद[2]गभीरया॥ ३६ ॥

[3-]श्री भगवानुवाच[-3]

जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः।
न शक्यन्ते[4]ऽनुसङ्ख्यातु मनन्तत्वान्मया[5]पि हि॥ ३७ ॥

[6]क्वचिद्रजांसि विममे पार्थिवान्यु[7]रुजन्मभिः।
गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्॥ ३८ ॥

कालत्रयोपपन्नानि जन्मकर्माणि मे नृप।
अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः॥ ३९ ॥

तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम।
विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये।
भूमेर्भारायमाणाना [8]मसुरणां क्षयाय च॥ ४० ॥

अवतीर्णो यदुकुले गृह आनकदुन्दुभेः।
वदन्ति वासुदेवेति वसुदेवसुतं हि माम्॥ ४१ ॥

कालनेमिर्हतः कंसः प्रलम्बाद्याश्च [9]सद्द्विषः।
अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा॥ ४२ ॥

सोऽहं तवाऽनुग्रहार्थं गुहामेतामुपागतः।
प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः॥ ४३ ॥

वरान्वृणीष्व राजर्षे सर्वान्कामा न्ददामि ते।
मां प्रपन्नो जनः कश्चि न्न भूयोऽर्हति शोचितुम्॥ ४४ ॥

श्रीशुक उवाच

**इत्युक्तस्तं प्रणम्याऽऽह मुचुकुन्दो मुदान्वितः।**
**ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन्॥ ४५ ॥**

---

1- -1 M,Ma सुभाषितो, W सभाजितो 2 M,Ma,W ह्राद 3- -3 M,Ma श्रीकृष्ण उवाच 4 Ml,v °न्ते प्रस० 5 M,Ma Ml,v °मापि 6 M,Ma °कश्चि० 7 W °न्पुरु 8 K,W °मा° 9 K,W विद्विषः

**श्रीध० क्वचिदिति।** क्वचित्कदाचित् कश्चित् यद्यपि रजांस्यपि[1] विममे गणितवान्, तथापि जन्मानि कर्माणि न विमिमीते॥ ३६,४१ ॥

**कालेनेति।** ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः॥ ४२, ४३ ॥

**नरानिति।** अपूर्णोऽहमिति शोचितुम्। यद्वा अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु यथा शोचति[2] नैवं मां प्रपन्नः। मद्दत्तवंराणा मक्षय्यत्वादिति भावः॥ ४४ ॥

**इतीति।** अष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः॥ ४५ ॥

---

1 Ml,v omit °अपि 2 Ml,v °शोचन्ति

**वीर० एवमिति।** राज्ञा मुचुकुन्देनेत्थम्[1] उक्तो भगवान् प्रहसन् मेघगर्जितव द्गम्भीरया गिरा प्रत्युवाच॥ ३६॥

उक्तिमेवाह- जन्मकर्मेत्यादिना इत्युक्त इत्यतः प्राक्तनेन, यत्तावत्पृष्टं[2] स्वजन्मकर्मेत्यादि, तस्योत्तरमाह **जन्मेति।** अङ्ग! हे मुचुकुन्द! मम जन्मादीनि सहस्रशः बहुशः[3] सन्ति, अतस्तान्यत्राधुना मयाऽपि सङ्ख्यातुं एतावन्तीति परिच्छिद्य वक्तुं न शक्यन्ते। ननु किमनादिसंस्मरणशीलैरस्मदादिभिरिव विस्मृतत्वान्न शक्यन्त इत्याशङ्कावारणायानन्तत्वान्ममापीत्युक्तम्। अयं भावः -यद्यपि भवज्जन्मादीनि कर्मसङ्कुचितज्ञानै र्भवद्भि र्विस्मृतत्वा द्बहुत्वाच्च न सङ्ख्यातुं शक्यन्ते। तथापि सर्वज्ञेन मया तु शक्यन्त एव। अस्मज्जन्मादीनि त्वनन्तत्वान्नैव शक्यन्ते, न चैवं सर्वज्ञत्वहानिः, अनन्तानामानन्त्यज्ञानमेव[4] हि सर्वज्ञत्वावहम्। न तु तेषां परिच्छिन्नत्वज्ञानं तस्यायथार्थत्वेनाज्ञत्वावहत्वात् ॥ ३७ ॥

असङ्ख्येयत्वमेवोपपादयति[5]-**क्वचिदिति।** यद्यपि क्वचित्कदाचित्कश्चित्सूक्ष्मबुद्धिमान् बहुभिः जन्मभिः पृथिव्या स्सम्बन्धीनि रजांसि विममे गणयेत्। तथाऽपि मम गुणकर्माभिधानानि न विममे गणयितुं न शक्नुयादित्यर्थः "विष्णो र्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि" (ऋक्.सं.2-2-24-1) इति श्रुत्यर्थोऽत्रानुसंहितः॥ ३८ ॥

तथाहि परमर्षयः पराशरवैशम्पायनशौनकादयः कालत्रयोपपन्नानि कालत्रयोपयुक्तानि कालत्रयगोचराणीति यावत्, जन्मानि कर्माणि च अनुक्रमन्तोऽनुवर्णयन्तोऽवाप्यन्तं पारं नैव गच्छन्ति॥ ३९ ॥

यद्यप्येवं तथापि अङ्ग! हे मुचुकुन्द! अद्यतनान्याधुनिकानि मम जन्मादीनि[6] गदतो मत्तः शृणु, धर्मपरित्राणार्थं भूमेर्भारभूतानां आसुराणां[7] असुरसम्पत्याऽभिजातानां[8] क्षयाय च ब्रह्मणा प्रार्थितोऽहं यदुकुले तत्रा प्यानकदुन्दुभेः वसुदेवस्य गृहे ग्रहिष्यामीति भावः। अवतीर्णवानस्मि। ज्ञानशक्त्यादिस्वस्वभाव मजहदेव जात इत्यवतीर्णशब्दप्रयोगाभिप्रायः। एवमाधुनिकं जन्म उक्तम्[9]। अथ नामधेयमाह - वदन्तीति। वसुदेवसुत इत्यस्य[10] हेतुत्वद्योतको हिशब्दः। वसुदेवसुतत्वाद्वासुदेव इति वदन्ति। सन्धिरार्षः। प्रातिपदिकमात्रानुवादो वा। तस्यैव नामधेयत्वेन प्रदर्शनीयत्वा द्विभक्ते स्साधुत्वार्थत्वाच्च॥ ४०, ४१॥

अथाधुनिकानि कर्माण्याऽऽह - **कालनेमिरिति**। हे राजन्! तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन मयैवाय यवनो दग्धः, धर्मगुप्त्यार्थं प्रार्थितत्वाद्युक्त्यैव तदुपयुक्तसार्वज्ञ[11]चसर्वशक्तित्वादिगुणाना मुक्तप्रायत्वा न्न पृथग्गुणोक्तिः॥ ४२॥

तर्हीह किमर्थमागत इत्यत[12] आह-**सोऽहमिति**। स उक्तविधोऽहं त्वामनुग्रहीतुं इमां गुहां प्रति समुपागतः। तर्हि[13] सर्वानपि जनान् किं नानुगृह्णासीत्यत आत्मानं विशिनष्टि-भक्तवत्सल इति। नाऽहं भक्त इत्यतो विशिनष्टि- पुरा जन्मनि त्वया अहं प्रचुरं यथा तथा प्रार्थितः आराधितः॥ ४३ ॥

कोऽसावनुग्रह इत्यत आह - **वरानिति**। हे राजर्षे! ते तुभ्यं सर्वान्, काम्यन्त इति कामाः, तानिष्टान् ददामि। नन्वित्थं प्रचोदितेन मया देवाः प्रत्याख्याता इति सर्वज्ञस्त्वं किं न जानासीत्यत्राह-मामिति। भूयः पुन श्शोचितुं संसर्तुं नार्हति। किन्तु मुक्तिमेवार्हतीति भावः। मुक्तिं दास्याम्येव, किन्तु ततोऽन्येऽपि यदि कामाः प्रार्थ्या स्तानपि प्रार्थयस्व इति भावः॥ ४४ ॥

**इतीति**। इति[14] इत्थं भगवतोक्तो मुचुकुन्दस्तं श्रीकृष्णं देवं तत्रापि नारायणं ज्ञात्वा, तदुक्तिभिरिति शेषः। गर्गस्य[15] वृद्धगर्गस्य ऋषेः वाक्यं अष्टाविंशति तमे युगे भगवान् वसुदेवगृहेऽवतरिष्यतीति एवं विधमनुस्मरंश्च मुदा हर्षेण युतः[16] प्रणम्योवाच॥ ४५॥

---

1 B °नैव 2 B omits यत् 3 B omits बहुशः 4 B,W आनन्त्याना० 5 B दुस्स० 6 KW जन्मानि 7 B अ० 8 B आ० 9 B प्रो 10 B,K °त्वात् 11 B सर्वज्ञत्व 12 B °त्र 13 K,W omit तर्हि 14 K,W omit इति 15 B गर्गऋषेः 16 B युक्तः

विज० ह्रादः निस्स्वनः॥ ३६ ॥

मातुं सङ्ख्यातुं न शक्यन्ते। कुतः? अनन्तत्वात्। अतोऽनन्ताना मनन्ता इत्येव परिसङ्ख्यान मन्यथाऽनन्तत्वहानिः॥ ३७॥

अनन्तत्वमाह-कश्चिदिति। कश्चित् क इव ब्रह्मेव सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे॥ ३८॥

अनुक्रमन्तः निरन्तरं पठन्तः॥ ३९॥

भारायमाणानां भारवदाचरतां, कर्तुः क्यङ् सलोपश्च (अष्टा० 3-1-11) इति पाणिनिः॥ ४० ॥

गृहे मार्यालक्षणे। निमित्तं कथयति- वसुदेवेति॥ ४१ ॥

तिग्मचक्षुषा चण्डनेत्राग्निना॥ ४२-४५ ॥

## मुचुकुन्द उवाच

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक्।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषि त्पुरुषश्च वञ्चितः॥ ४६ ॥

लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्ग[1] मयत्नतो[2]ऽनघ।
पादारविन्दं न भजत्यसन्मति र्गृहान्धकूपे पतितो यथा पशुः॥ ४७ ॥

ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः।
मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया॥ ४८ ॥

कलेबरेऽस्मि न्घटकुडचसन्निभे निरूढमानो नरदेव इत्यहम्।
वृतो रथेभाश्वपदात्यनीकपै र्गां पर्यटंस्त्वा[3-] मगणय्य[3] दुर्मदः॥ ४९ ॥

प्रमत्तमुच्चैरिति कृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहि रिवाऽऽखुमन्तकः॥ ५० ॥

---

1 BGJ °व्य° 2 MIVW °तस्तव। 3- -3 BGJ °स्त्वागणयन्सु°

**श्रीध०** त्वद्भक्तिरेव केवलं दुर्लभा, कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाऽभक्तानां संसार मष्टभिः प्रपञ्चयन् स्तौति- **विमोहित** इति। हे ईश! योषित्पुरुषश्चेति द्विविधोऽप्ययं जनः त्वदीयया मायया विमोहितः, अतोऽनर्थदृक् [1-]अनर्थे संसारे दृक् दृष्टिः यस्याऽसौ। यद्वा अर्थं[1] परमार्थस्वरूपं त्वां न[2] पश्यतीति तथा। अतः त्वां न भजति किन्तु परस्परं वञ्चितस्सन् सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जते इति॥ ४६ ॥

किञ्च कामसुखं सूकरादिष्वपि सम्भवति भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभज न्नतिमूढ इत्याह- **लब्ध्वेति**। अत्र कर्मभूमौ अव्यङ्गमविकलाङ्गम्। किञ्च असति विषयसुखे मति र्यस्य सः। गृहमेवान्धकू पस्तस्मिन्निपतितः। यथा पशुः तृणलुब्धोऽन्धकूपे पततीति॥ ४७ ॥

न केवलमस्य जनस्येयं गतिः किन्तु ममापि तथैवेत्याह- **ममैष** इति। मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममाऽत एव सुतादिष्वाऽऽसज्जमानस्य॥ ४८ ॥

उन्नद्धमदत्वं प्रपञ्चयति- **कलेबर** इति। घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभव मतो ममैष कालो निष्फलो गत इति॥ ४९ ॥

त्वामगणयन्तं[3] **त्वमाक्रमसीत्याह- प्रमत्तमिति।** प्रमत्तमनवहितम्। त्वामन्तक मविगणय्य देहादिष्वासक्तमिति यावत्। कुतः प्रमत्तम्? इति कृत्यचिन्तया एवमेवं करणीयमिति मनोरथपरम्परया। मनोरथे भग्नेऽपि विषयेषु[4] लालसमुत्सुकम्। प्राप्तेऽपि पुनः प्रवृद्धो लोभः तृष्णा यस्य त मन्तकस्त्व मभिपद्यसेऽभिभवसीत्यर्थः। क्षुधा सृक्वणी लेलिहानोऽहि राखुं मूषकमिवेति॥ ५०॥

1- -1 MIV omit 2 B °ति 3 MIV add मा 4 B °क्वि°, J °क्कि°

**वीर०** उक्तिमेवाह- **विमोहित** इत्यादित्रयोदशश्लोकात्मिकाम्। यदुक्तं- "वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते" (भाग० 10-51-44) इति, तस्योत्तरोपयुक्तमाह- विमोहित इति। विषयाभिलाषेणैव निदानेनेदृशसंसृतिरूपानर्थं प्राप्तोऽहं भूयो विषयानेव वरयेति चोदयता त्वया वञ्चितस्स्याम्। अतो भक्तवञ्चनं तवानुचितमिति मैवं वादी रित्यभिप्रायः। हे ईश। त्वदीयया मायया मोहितो योऽयं मत्प्रभृतिः योषिच्च पुरुषश्च योषिदात्मकः पुरुषात्मकश्चेदित्यर्थः। जनस्त्वां निरतिशयपुरुषार्थभूतं न भजति, किन्तु स्वानर्थविषये दृग्बुद्धिः यस्य तथाभूतः वस्तुतोऽनर्थहेतुम प्यर्थव न्मन्यमानः प्रभवन्त्येभ्य इति प्रभवाः दुःखस्य प्रभवास्तेषु दुःखैकनिदानेषु गृहेषु सुखलेशाभासप्रभवेषु सुखाय सज्जते सक्तो भवति। सज्जनः पूर्वमेवं त्वया वञ्चित इत्यर्थः॥ ४६ ॥

नन्वित्थं जन वञ्चयन्नह निर्घृणो विषमश्च किमत्यत आह- **लब्ध्वेति।** हे अनघ! न विद्यते यद्भजना दघं तथाभूतेत्यर्थः। अयत्नत स्स्वप्रयत्नमन्तरेणापि केवलमनुजिघृक्षैकस्वभावत्वत्सङ्कल्पादेव हेतोः कर्मक्षेत्रे दुर्लभमपि मानुष मङ्गं शरीरं त्वदाराधनोपयुक्तं प्राप्याप्ययं जनस्त्वत्पादारविन्दं निरतिशयपुरुषार्थरूपं तत्प्राप्त्युपायभूतं च न भजति, किन्तु असन्मतिः प्रकृतिपरिणामात्मकदेह एव मतिरात्माभिमानो यस्य तथाभूतः केवलं गृहमेवान्धकूपः तस्मिन्पतितो भवति, यथा पशुः अजानन् तृणावृते कूपे जिघत्सया गतस्तत्र पतितो भवति, तद्वत्। न ह्येतावता तव वैषम्यादिकमापादयितुमुचितं केवलम नुजिघृक्षयैव स्वाराधनोपुयुक्त करणकलेबरादिप्रदानादिति भावः॥ ४७ ॥

जनसामान्योद्देशेनोक्तमर्थं स्वस्मिन् पर्यवसाययति - **ममेति।** हे अजित! एष भूतः कालो मम निष्फलो गतः मया निष्फलो नीत इत्यर्थः। कथम्भूतस्य? राज्यश्रियोन्नद्धः प्रभूतो[1] मदो यस्य दुष्टा विषयाभिलाषिणी मतिर्यस्य, तत्र हेतुः[2] - मर्त्ये मरणशीले देहे आत्मेति[3] बुद्धिर्यस्य, न केवलं मर्त्यात्मबुद्धैव किन्तु सुतादिषु तद्रक्षणपोषणादिविषयया अपार चिन्तया आसज्जमानस्य आसक्तस्य अहङ्कार ममकारयुक्तस्येति पदद्वयफलितोऽर्थः। तत्र कोशो धनागारम्॥ ४८॥

उन्नद्धमदत्वमेव प्रपञ्चयति- **कलेबर** इति। घटकुड्यसदृशे जडे अस्मिन् कलेबरे रूढमूलः मानः आत्माभिमानो यस्य सोऽह नरदेव इत्यभिमन्यमान इति शेषः। रथाश्च इभा गजाश्च[4] अश्वाश्च[5] पदातयश्च तेषामनीकानि सैन्यानि तानि पान्तीति तथा तैः परिवृतो गां भूमिं पर्यटन् त्वामगणय्य तुच्छीकृत्य दुर्मद, आसमिति शेषः॥ ४९ ॥

त्वा मगणयन्त मित्थं दुर्मदं मां त्वं कालरूपेणाक्रामसीत्याह- **प्रमत्तमिति।** इति कृत्यचिन्तया एवमेवंकर्तव्यमिति मनोरथपरम्परया नितरां प्रवृद्धः लोभो यस्य तं, विषयेषु शब्दादिषु लालसम् आसक्तचित्तं प्रमत्तं स्वहितानभिज्ञं मां त्वमप्रमत्तः अन्तं करोतीत्यन्तकः विनाशहेतुः कालरूपो भूत्वा अभिपद्यसे आकर्षसि, ग्रससे[6] इति यावत्। यथा क्षुधा बुभुक्षया लेलिहानः आस्वदमानः क्षुधा लोलजिह्व इति यावत्, यङ्लुगन्ताल्लिहेः कर्तरि लटश्शनजादेशः, अहिस्सर्पः आखुं मूषकम् आपद्यते तद्वत्॥ ५० ॥

---

1 B °तमदः 2 B omits हेतुः 3 KW आत्मबु° 4 B omit गजाः 5 KW omit अश्वाः 6 BW °सि

**विज०** अनर्थदृक् स्वपुरुषार्थदर्शी न भवतीत्यर्थः। यद्वा अनर्थं संसारमर्थं पश्यतीति दुःखप्रभवेषु दुःखहेतुषु पुरुषेण वञ्चिता योषित् तथा पुनः पुरुषश्च वञ्चितः॥ ४६ ॥

मायया मोहितत्व मुपपादयति- **लब्ध्वेति।** अत्र कर्मभूमौ मानुषमङ्गं देहं असत्सु विषयेषु मतिर्यस्य स तथा अन्धकूपे पतितः पशुः यथा स्वरूपं न भजति तथा गृहलक्षणान्धकूपे॥ ४७ ॥

मर्त्यात्मबुद्धेः देहात्मबुद्धेः॥ ४८ ॥

देहात्मबुद्धित्वं दर्शयति- **कलेबर** इति। दुरन्तविषयचिन्तया दुष्टो मदो विद्याभिजनलक्षणो यस्य स तथा॥ ४९ ॥

धनादिनिमित्तमदस्य दुष्टत्वं कथ मत्राह- **प्रमत्तमिति।** क्षुधा जिह्वया सृक्किणी[1] लेलिहन्॥ ५० ॥

---

1 B सृक्किणी

**पुरा रथै र्हेमपरिष्कृतै श्चर न्मतङ्गजैर्वा नरदेवसंज्ञितः।**
**स एव कालेन दुरत्ययेन ते[1] कलेबरो विट्कृमि[2]भस्मसंज्ञितः॥ ५१॥**

**निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः।**
**गृहेषु मैथुन्यसु[3]खेषु योषितां क्रीडामृगः पूरुष ईश नीयते[4]॥ ५२ ॥**

**करोति कर्माणि तपस्सुनिष्ठितो निवृत्तभोग स्तदपेक्षया दधत्[5]।**
**पुनश्च [6-]भूयासमहं स्वराडि[-6]ति प्रवृद्धतर्षो न सुखाय कल्पते॥ ५३ ॥**

**भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः।**
**सत्सङ्गमो यर्हि तदैव सद्गतौ परावरे[7]शे त्वयि जायते मतिः॥ ५४ ॥**

**मन्ये ममानुग्रह ईश[8]! ते कृतो राज्यानुबन्धापगमो यदृच्छया!**
**यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भि[9]रखण्डभूमिपैः॥ ५५ ॥**

---

1 K.W चेत्; M.Ma. वै, 2 MIV क्रिमि 3 MMa परेषु 4 MMa मी० 5 B,G,J,M,Ma. ददत्; MIV सकृत् 6- -6 B,G,J भूयेयमहं स्वराडिति, M,Ma. भूयाय महीशराधसे 7 MIV प 8 W एष 9 M,Ma °क्षु०

**श्रीध०** किञ्च कालात्मना त्वयाऽभिपन्नो देह एवं भवतीत्याह- **पुरेति**। श्वसृगालादिभि र्भक्षितो विट्संज्ञितः तैरभक्षितः कृमिसंज्ञितः, दग्धो भस्मसंज्ञितो भवति। इति बुद्ध्या विचार्यैवम्भूतशरीरे ममतां कुर्वन्तो जना हरिं नाराधयन्ति च ते आत्मनि शत्रुभूता ज्ञेयाः सततम्। यतः- "योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वम्। सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूताः" इति॥ ५१ ॥

किञ्च अन्तकप्राप्तेः प्रागपि दिग्विजयिनो राज्ञोऽपि पारतन्त्र्यदुःखं तदवश्यमेवेत्याह- **निर्जित्येति**। अभूतविग्रहोऽविद्यमानसङ्ग्रामः। पूर्वं ये समाना[1] राजान स्तै राजभि र्वन्दितोऽपि मिथुनीभावः सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ॥ ५२ ॥

किञ्च तत्राऽतितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह **करोतीति**। तपसि अधश्शयनब्रह्मचर्यादौ सुनिष्ठितः। पुनश्च स्वराडिन्द्रः स्यामिति। यद्वा जन्मान्तरेष्वेवमेव चक्रवर्ती स्यामिति ॥ ५३ ॥

तदेव मष्टभिः श्लोकैरीशबहिर्मुखानां संसारं प्रपञ्च्य भक्त्या तन्निवृत्तिक्रममाह- **भवापवर्ग** इति। भो अच्युत! भ्रमतः संसरतः जनस्य यदा त्वदनुग्रहेण भवस्य बन्धस्यापवर्गोऽन्तो भवेत् प्राप्तकालः स्यात् तदा सतां सङ्गमो भवेत्। यदा च सत्सङ्गमो भवे त्तदा सर्वसङ्गनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्ति र्भवति ततो मुच्यत इत्यर्थः ॥ ५४ ॥

मम तु सत्सङ्गमात्पूर्वमेव यो राज्यादिसङ्गविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह- **मन्य** इति। ते त्वया, साधुभि र्विवेकिभि स्तपसे वनं प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥ ५५ ॥

---

1 MIV समाः

**वीर०** नन्वतिदुर्लभकल्याणतरनरदेवशरीरं[1] प्राप्याऽपि किमिति तन्निन्दसीत्याशङ्कया मन्ततः कालाभिपन्नस्य तस्य गतिं पश्येत्यभिप्रायेणाह- **पुरेति**। पुरा तावत्सुवर्णालङ्कारालङ्कृतैः[2] रथै र्गजै र्वा सञ्चरन् यो नरदेवसंज्ञितः नरदेवसंज्ञाऽस्य सञ्जातेति तथा। तारकादित्वादितच्। स एव देहः दुरतिक्रमेण[3] कालेनाभिपन्नश्चेत्तावच्छ्वसृगालादिभिः[4] भक्षितो[5] विट्संज्ञितः तैरभिक्षितश्चेत्कृमिसंज्ञितः दग्धश्चेत् भस्मसंज्ञितः भवतीत्यर्थः ॥ ५१ ॥

"[6-]सर्वस्य वशी[-6] सर्वस्येशानः" (बृह.उ 4-4-22) इति श्रुत्युक्तविविधसर्ववस्त्वपेक्षस्वातन्त्र्यं[8] त्वामवि- गणय्य स्वतन्त्रम्मन्यस्य[7] मम निहीनप्रतियोगिकपारतन्त्र्य मवर्जनीयमेवाऽऽसी दित्यभिप्रेत्याह- **निर्जित्येति**। दिक्चक्रं दिङ्मण्डलं

निर्जित्याऽभूतः असम्भावितः विग्रहः विरोधो यस्य तथाभूतः असम्भावितप्रतिपक्ष इत्यर्थः। वरासनस्थः सार्वभौमासनाधिष्ठितः पूर्वं समास्तुल्या राजानस्तैरपि वन्दितः पुरुषः हे ईश![9] मैथुन्यमेव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां[10] केवल क्रीडामृगः क्रीडार्थं पोषितो वानरादिरिव नीयते इतस्ततश्चाल्यत इत्यर्थः। पुरुष इति पारोक्ष्यनिर्देशः सर्वदिग्विजयिपुरुषाभिप्रायकः॥ ५२॥

ननु भोग्यभोगोपकरणादि समृद्धान् राजगृहान् दुःखप्रभवेषु[11] मैथुन्यसुखेष्विति[12] च कथं निन्दसीत्यतस्तत्र सुखाभावमाह- **करोतीति**। पुनश्च जन्मान्तरेऽपि स्वराट् सार्वभौमो भूयासमितीत्थं प्रवृद्धः तर्षः तृष्णा यस्य तथाभूत स्तपस्सु जन्मान्तारीय सार्वभौमत्व साधनेषु तपस्सु अधश्शयन ब्रह्मचर्यादिषु निष्ठितः सञ्जातनिष्ठः अत एव निवृत्तो भोगो यस्य तथाभूतः तदपेक्षया भाविजन्मभोगापेक्षया दधत् बिभ्राणः, तपांसीति विपरिणतेनान्वयः। कर्माणि वर्तमानदेहभोगार्थानि भोजनादिकर्माणि करोति, इत्थम्भूतोऽसौ न सुखाय कल्पते न सुखी भवति, किन्तु दुःख्येवेति भावः। यद्वा एवमन्वयः- तावद्राजशरीरप्राप्ति साधनानि कर्माणि करोति, ततो दधत् राजशरीरमिति शेषः। निवृत्तभोगः तपस्सु निष्ठितः तदपेक्षया तद्धेतुभूतः स्वराट् स्यामिति प्रवृद्धः तर्षो यस्य तथाभूतो न सुखाय कल्पत इति ॥ ५३ ॥

तर्हि कदा सुखाय कल्पते इत्याह[13] **भवापवर्ग** इति। एवं संसृतौ भ्रमतः पुंसो भवापवर्गः संसारान्तः भवनिवृत्तिः मुक्तिरिति यावत्, स यदा भवेदासन्नस्स्यात्तदैवायं[14] सुखाय कल्पते, इति पूर्वेण सम्बन्धः। कदा तर्हि भवापवर्गो भवेदित्यत आह-तर्हीति। हे अच्युत! अस्य संसरतो जनस्य यर्हि यदा यस्मिन्जन्मनि सत्समागमः सद्भिः भागवतैस्समागमः सङ्गतिस्सहवास इति यावत्। तदा भवापवर्गः न हि[15] सत्समागमः साक्षाद्भवापवर्गसाधनभूतः[16] किन्तु त्वद्भक्तिजननादि प्रणाडचेत्याह- सत्सङ्गम इति। यदा हि सत्सङ्गमस्तर्ह्येव परे इन्द्रादयः अपरे अवमा यस्मात्तस्य चतुर्मुखस्याधीशे नियन्तरि सता गतौ त्वत्प्राप्त्युपायभूते त्वयि मतिर्भवत्यात्मिका बुद्धिः जायते उत्पद्यते ॥ ५४ ॥

यदुक्तं "सोहं तवानुग्रहार्थं गुहामेतामुपागतः" (भाग. 10-51-43) इति, तत्सत्यमेव, किन्तु[17] पूर्वमेव देहानुबन्ध्यपनयेन लिङ्गेन त्वयाऽनुगृहीतोऽहमिति मन्ये इत्यभिप्रेत्याह **मन्ये** इति। हे ईश! यदृच्छया त्रिदशसाहायक[18]व्याजेन राज्यरूपो योऽनुबन्धः पाशः तस्यापगमोऽपायः कृत[19] इत्येष महान् त्वयैवानुग्रहः कृत इति मन्ये। तस्यानुग्रहप्रयुक्तत्वे हेतुं वदन् तमेव राज्यानुबन्धापगम विशिनष्टि[20] य इति। यो राज्यानुन्धापनयस्साधुभिर्विवेकिभिः तपसे वनं प्रवेष्टमिच्छद्भिः सार्वभौमैरेकचर्यया एकचर्यार्थम् एकाकित्वेन सञ्चारार्थं प्रार्थ्यते ॥ ५५ ॥

---

1 B म 2 B स्वर्णा3 B क्रमणीयेन 4 B °श्र ता० 5 B शृ० 6- - 6 B omits 7 B °मानस्य 8 B °व्याद्यभि 9 B °न० 10 BW °य 11 B °न 12 B add इत्येव 13 B °त्यत आह 14 B adds °जनः 15 B adds किं 16 B adds (न) 17 B नयनेन 18 B °व्यकृत्य व्या० 19 B omits कृत 20 W °शि०

**विज०** किमत्र प्रमाणमित्यतः प्रत्यक्षमेवेत्याह- **पुरेति**। यो देहः पुरा नरदेव संज्ञितः स एव देहो दुरत्ययेन कालेन विट्कृमिभस्मसंज्ञितो, भवतीति शेषः। श्वादि भक्षितो विष्ठासंज्ञितो भवति। अदग्धः कृमिसंज्ञितः, दग्धः भस्मसंज्ञित इति विशेषः ॥ ५१ ॥

इदं च लज्जाकरमित्याह **निर्जित्येति**। दिक्चक्रं दिङ्मण्डलं अभूतविग्रहः अजातयुद्धः वयसा कुलेन दानेन विद्यया च समै राजभिर्वन्दितः बहिरेवंविधः पुरुषो मैथुन्यपरेषु ग्राम्यसुखमात्ररतेषु योषितां क्रीडामृगो गीयते इत्यन्वयः॥ ५२॥

त्वद्भक्तिरहितस्य पुसः कर्मकरण गजस्नानतुल्यमिति भावेनाह- **करोतीति**। हे महीश! निवृत्तभोगः तदपेक्षया तेषां भोगानां सजातीयभोगेच्छया सुनिष्ठितः तद्योग्यदेवतापूजासु नितरां स्थिरो यः कर्माणि तदनुगुणं तपश्च करोति। स पुनश्च धनादि ददत् भूयाय भूयसे महते राधसे सम्पदे प्रवृद्धतर्षः अत्युद्रिक्ततृष्णः सुखाय न कल्पते इत्यन्वयः। सुखं नाम मुक्तिलक्षणम् ॥ ५३ ॥

तर्हि कदा मोक्षः स्यादत्राह- **भवेति**। हे अच्युत! नानायोनिषु भ्रमतो जनस्य यदा सत्सङ्गमः तर्हि तदा भवापवर्गस्स्यात्। भगवज्ज्ञानफलं मोक्षः कथमन्यतस्स्यादिति तत्राह- सत्सङ्गम इति। यर्हि यदा सत्सङ्गमः स्यात्तदैव त्वयि श्रवणादिलक्षणः सङ्गमः स्यात्, तस्मात् परावरेशे मुक्तामुक्तस्वामिनि त्वयि मतिः त्वत्प्रसादजनकं ज्ञानं स्यात् ॥ ५४ ॥

अतो ज्ञानद्वारा सत्सङ्गमो मुक्तिसाधनमसत्सङ्गमोऽनर्थहेतुरिति गृहादिसङ्गत्यागः सत्सङ्गहेतुरित्याशयेनाह- **मन्ये** इति। ते त्वया राज्यानुबन्धापगमः राज्यस्य तदनुबन्धकस्य कोशादेश्चापगमः त्यागः एकचर्यया " एक एव चरेद्भिक्षुः" इति वचनात् एकाकित्वेन चरणम्। अखण्डभूमिपैः सार्वभौमैः विविक्षद्भिः प्रवेष्टुमिच्छद्भिः ॥ ५५ ॥

**न कामयेऽन्यं तव पादसेवनादकिञ्चन पार्थ्यतमाद्वरं विभो।**
**आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥ ५६ ॥**

**तस्माद्विसृज्याशिष ईश सर्वतो[1] रजस्तमस्सत्त्वगुणानुबन्धनाः।**
**निरञ्जनं[2] निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५७ ॥**

**चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै रवितृ[3][4-]षषडमित्रोऽ[-4]लब्धशान्तिः कथञ्चित्।**
**शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥ ५८ ॥**

## [5-]श्रीभगवानुवाच[-5]

**सार्वभौम महाराज मतिस्ते विमलोर्जिता।**
**वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ५९ ॥**

**प्रलोभितो वरैर्यस्त्वमप्रमादाय विद्धि तत्।**
**न धीर्मय्येक भक्तानामाशीर्भिर्भिद्यते क्वचित् ॥ ६० ॥**

[6-]युञ्जानानामभक्तानां[-6] प्राणायामादिभिर्मनः।
[7]अक्षीणवासनं राजन् दृश्यते [8]क्वचि दुत्थितम् ॥ ६१ ॥

विचरस्व महीं कामं मय्यावेशितमानसः।
[9]अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६२ ॥

[10]क्षात्त्रधर्मस्थितो जन्तून् [11]अवधीर्मृगयादिभिः।
समाहितस्तत्तपसा जह्यघं [12-]मदुपाश्रयः[-12] ॥ ६३ ॥

जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः।
भूत्वा द्विजवरस्त्वं वै मामु[13]पैष्यसि केवलम् ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्रयां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां उत्तरार्धे
दशमस्कन्धे मुचुकुन्दस्तुतिर्नाम एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

1 M.Ma °शो 2 M.Ma °मव्ययं 3 K.W °जित 4--4 M.Ma उत्कृच्छ्रेल० 5--5 Ml.V श्रीकृष्ण उवाच 6--6 M.Ma ज्ञानिनामेक 7 M.Ma न 8 B.G.J पुनरु० 9 K.W अस्त्येव; Ml.V अस्त्वियं 10 K.W क्षत्त्रधर्मे, M.Ma, Ml.V क्षत्त्रधर्म 11 B.G.J न्य० 12--12 B.G.J मदुपाश्रितः; M.Ml मामुपाश्रितः B.M.Ma.Ml °पे०

**श्रीध०** तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह- **न कामय** इति। अकिञ्चनाः निवृत्ताभिमानाः। आर्यो विवेकी ॥ ५६ ॥

**तस्मादिति**। रजस्तमस्सत्वगुणैरनु बध्यन्त इति तथा ता आशिष ऐश्वर्यादिशत्रु[1]मारणादि धर्मादिरूपा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनम्। कुतः? निरञ्जनम्। तत्कुतः? निर्गुणम्। तदपि कुतः? अद्वयम्। अत एव अक्षरं त्वां शरणं व्रजामीति ॥ ५७ ॥

भुङ्क्ष्व तावद्भोगान् कैवल्यं तु करस्थमेवेति पुनर्वैः प्रलोभयन्तं श्रीकृष्णं पादोप[2]सङ्ग्रहणेन प्रार्थयते-**चिरमिति**। वृजिनैः कर्मफलैरार्तः पुनस्तद्वा स्नाभिस्तप्यमानः तथाप्यवितृषषडमित्रः, तृषेन तृषा तृष्णा, न विगत तृषाः षडमित्राः शत्रवः इन्द्रियलक्षणा यस्य सः। अत एवलब्धशान्तिः कथञ्चिदैवक्शेन लब्धशान्तिरिति वा। शरणं स्वज्ञानं तद्ददातीति तथा, हे शरणद! समुपेतः प्राप्तोऽहम्। अशोकत्वे हेतुः अभयम्। तत्रापि हेतुः ऋतं [3]सत्यम्। [4]आपन्नमापदा व्याप्तं पाहीति ॥ ५८-५९ ॥

**प्रलोभित इति**। अप्रमादाय प्रमादाय न भवत्येव। कुत इत्यत आह- न धीरिति। एकान्त भक्तानां धीराशीर्भिः प्राप्ताभिरपि न [5]भिद्यते नासज्जत इत्यर्थः ॥ ६० ॥

व्यतिरेकमाह - **युञ्जानानामिति।** उत्थितं विषयाभिमुखम् ॥ ६१ ॥

**विचरस्वेति।** तुभ्यं तव ॥ ६२ ॥

युक्त्याभासेन भीषयन् तपसि लोकसङ्ग्रहे प्रवर्तयति- **क्षात्त्रधर्मेति**[6] ॥ ६३,६४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

1 MIV म० 2 BJ °पद्म० 3 MIV omit °सत्यम् 4 MIV °मापत्प्राप्त 5 MIV न स० 6 MIV क्ष०

**वीर०** तदेवं प्रतिवचनोपयुक्तार्थ उक्तः, अथ साक्षात्प्रतिवचनमाह-**न कामय** इति। हे विभो! अकिञ्चनैः अनन्यप्रयोजनैः एकान्तिभिरतितरां प्रार्थनीयात्तव पादसेवनादन्यं वरं न कामये, अन्यो मदिष्टो वरणीयोऽर्थ एव नास्तीत्यभिप्रायः। आर्यः श्रेष्ठो विवेकी चेत् को वा पुमान् साक्षान्मुक्तिप्रदं त्वामाराध्य आराधनेन प्रसन्नीकृत्य केवलमात्मा बन्ध्यते येन तदात्मबन्धनं शब्दादिविषयजालं वृणीत वृणुयात्, मूर्खश्चेद्वृणीत इत्यर्थः ॥ ५६ ॥

यस्मात् त्वत्पादारविन्द सेवनमेव प्रार्थनीयं तस्मात् हे ईश! सर्वतः सर्वाः आशिषः[1] रजस्तमस्सत्त्वगुणैः राजआदिगुणकार्यैः कामक्रोधादिभिः क्रोधाद्युत्तरफलका इत्यर्थः। आशिषः कामान् विसृज्य अहं त्वां व्रजामि। व्रज गतौ गत्यर्थाः बुद्ध्यर्थाः त्वत्प्राप्त्युपायत्वेन त्वामध्यवस्यामीत्यर्थः। शरण्यस्य तस्य जीवतुल्यत्ववारणाय तं विशिनष्टि निरञ्जनं पुण्यपापसम्बन्धरहितं प्रकृतिपारवश्यरूपाञ्जनरहितं वा। ननु किमहं मुक्तजीवः नेत्याह- निर्गुणं कदापि गुणत्रयसम्बन्धरहितम् अनेन बद्धदशायां गुणत्रयतत्कार्यरागादिसम्बन्धवन्मुक्तव्यावृत्तिः। तर्हि किं नित्यसिद्धः- नेत्याह। अद्वयं द्वित्वरहितं समाभ्यधिकरहितं तत्सत्वे हि ईश्वरद्वित्वप्रसङ्गः, अतः समाभ्यधिकराहित्यादीश्वराद्वित्वं नास्ति। नित्यसिद्धस्तु समाभ्यधिकवानिति तद्व्यावृत्तिः, अतः परं सर्वोत्कृष्टं सौलभ्याभावे केवलं परत्वं न शरण्यत्व प्रयोजकम् अतः वर्तमानमिति भावः। दिव्यात्मस्वरूपं निर्दिशति- ज्ञप्तिमात्रमिति। मात्रशब्देन क्वचिदपि जडत्वव्यावृत्तिः, ज्ञानैकस्वरूपमित्यर्थः। अत्र पुरुषपदलभ्यं[2] सौलभ्यमन्येषामपि वात्सल्यादिशरण्यतोपयुक्तगुणानामुपलक्षणम् ॥ ५७ ॥

इत्थं शरणं प्रतिपद्याऽथात्मनः कार्पण्यनिवेदनपूर्वकं रक्षां प्रार्थयते- **चिरमिति।** इह संसारे उरुभिर्विपुलैस्तापैराध्यात्मिकादिभिः तप्यमानोऽत एव चिरं वृजिनेन दुःखेनाऽऽर्तः पीडितः अविजिताष्षडमित्राश्शत्रवो मनष्षष्ठानीन्द्रियाणि येन सः। अवितृष षडमित्रः इति पाठे विगता तृषा येषां ते वितृषाः अवितृषास्ते षट् अमित्रा यस्येत्यर्थः। अत एव अलब्धा शान्तिर्मनः प्रसादो येन तथाभूतोऽहं हे शरणद! कथंचित्त्वत्सङ्कल्पादिवशेन त्वत्पदाब्जं समुपेतः शरणं गतवान्। पदाब्जं कथम्भूतम्? न विद्यते भयं संसारो यस्मात्, अत एव न विद्यते शोको यस्मात्, ऋतं सत्यं नित्यं वा अनेन स्वर्गयागादि साध्यसाधन वैलक्षण्यमुक्तम्। हे परात्मन्![3] परमात्मन्! हे सर्वनियन्तः! इत्थमापन्न मापदा व्याप्तम् अधुना प्रपन्नं मां पाहि संसृतिभयात् त्रायस्व ॥ ५८ ॥

एवं विज्ञापितः प्राह- **सार्वभौमे** त्यादिना यावत्समाप्ति। तव मतिः विमला रागादिमलरहिता ऊर्जिता बलवती **निवृत्तिधर्मे** एव दृढेत्यर्थः। कुतः? यतः वैरैर्हेतुभिः प्रलोभं प्रापितस्यापि तव मतिः कामैः विषयैः न विहता न विहन्यते ॥ ५९ ॥

वैरैः प्रलोभित इति यत् तदप्रमादाय विद्धि **बुद्धेरप्रमादार्थं** विजानीहि। ननु प्रलोभनात्कदाचिद्बुद्धिप्रमादोऽपि स्यात् ततश्च भ्रश्येत् अत आह-न धीरिति। मय्येकभक्तानाम् अनन्यप्रयोजनभक्तानां मतिः क्वचित्कदाचिदप्याशीर्भिः कामैः न भिद्यते न विहन्यते ॥ ६० ॥

अभक्तानां तु भिद्यत एवेत्याह - **युञ्जानानामिति**। प्राणायामादिभिः उपायैः युञ्जानानां नियुञ्जानानां मनोनियमनं कुर्वतां तु मनः अक्षीणवासनम् अक्षीणा वासना यस्य तत्, हेतुगर्भमिदम्। तत्त्वात् क्वचिद्विषये कदाचिद्वा उत्थितं विषयप्रवणं दृश्यते ॥ ६१ ॥

**विचरस्वेति**। मयि आवेशितं मानसं येन तथाभूतस्त्वं महीं कामं यथेच्छं विचरस्व। [4]मयि नित्यमनपायिनी भक्तिस्तु अस्त्येवं तथाऽनुगृह्णामीति भावः ॥ ६२ ॥

ननु भक्त्येकलभ्यो भवान् तामन्तरेणाप्यधुना प्रत्यक्षितः, किमिति मुक्तिं विलम्बयसीति विदिततदभिप्रायः प्राह- क्षत्त्रेति। क्षत्त्र वर्णोचित धर्मनिष्ठो मृगयादिभिः लोकरक्षानुपयुक्त मृगयादि व्यापारैः जन्तून्हतवानसि, ततः त्वम् अहमेवोपाश्रयः संश्रयो यस्य सः मद्भक्तिनिष्ठस्सन् तपसा मत्प्राप्ति प्रतिबन्धकनिवर्तकेन भक्तियोगोत्पत्ति प्रतिबन्धक निवर्तकेन, वा तपसा [5]जन्तुवधप्रयुक्तं पापं जहि अपनय प्रत्यक्षित परमात्मनामप्यघे प्रारब्धे तपसाऽनुभवेन वा विनाशिते सत्येव परमात्मप्राप्तिरिति भावः ॥ ६३ ॥

कदा तर्हि अघक्षयः त्वत्प्राप्ति श्चेत्यत आह-**जन्मनीति**। अनन्तरे एतज्जन्माव्यवहितोत्तरजन्मनि त्वं द्विजश्रेष्ठो भूत्वा सर्वभूतसौहार्दवान् समः कृत्स्नं जगत् ब्रह्मात्मकं पश्यंश्च केवलं प्रकृतिमण्डलात्परतः स्थितं मामुपैष्यसि प्राप्स्यसि, वै नूनम् ॥ ६४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

---

1. K.W. omit आशिषः 2 B. W omit लभ्यं 3 B omits परात्मन् 4 B. omits मयि 5 B. adds तत्.

**विज०** फलितमाह -**नेति**। आर्यो ज्ञानी आत्मनः स्वस्य बन्धनं संसारकारणं वरम् ॥ ५६ ॥

तर्हि किं करोषीति तत्राह -**तस्मादिति**। आशिषः स्वर्गादिसम्पदः रजसा मनुष्यः तमसा राक्षसादिः सत्त्वेन देवादिः ज्ञप्तिमात्रं ज्ञानघनम् ॥ ५७ ॥

अधुना कर्तव्यम् किम्? तत्राह-चिरमिति। वृजिनार्तः दुःखक्लिष्टः, एतदेव विवृणोति तप्यमान इति। अवितृषः सतृष्णः उरुकृच्छ्रविषये कथञ्चिल्लब्धशान्तिः लब्धमोक्षः प्राप्तत्याग इत्यर्थः। ऋतं शश्वदेकप्रकारं आपन्नं संसारकूपे पतितं उरुकृच्छ्रे वृजिनार्ते इति वा ॥ ५८, ५९ ॥

वैरैः प्रलोभित इति यत्तदप्रमादाय विद्धि, नैतच्चित्रमित्याशयेनाह-नेति ॥ ६० ॥

क्षीणा दुष्कर्मवासना यस्मिन् तत्तथा। उत्थितं विषयाभिमुखम् ॥ ६१,६२,६३ ॥

केवलं मां "केवलो निर्गुणश्च" (श्वेता. उ. 6-11) इति श्रुतेः ॥ ६४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

विजयध्वजरीत्या चतुःपञ्चाशत्तमोऽध्यायः

---

# द्विपञ्चाशोऽध्यायः

(विजयध्वजरीत्या पञ्चपञ्चाशोऽध्यायः

-: षट्पञ्चाशोऽध्यायः, सप्तपञ्चाशोऽध्यायश्च :-

श्रीशुक उवाच

इत्थं सोऽनुगृहीतोऽङ्ग! कृष्णेनेक्ष्वाकुनन्दनः।
तं परिक्रम्य सन्नम्य निश्चक्राम गुहामुखात् ॥ १ ॥

स[1]वीक्ष्य क्षुल्लकान् मर्त्यान् पशून्वीरुद्वनस्पतीन्।
मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥

तपश्श्रद्धायुतो धी[2]रो निस्सङ्गो[3] मुक्तसंशयः।
समाधाय मनः कृष्णे प्राविशद्गन्धमादनम् ॥ ३ ॥

बदर्याश्रममासाद्य नरनारायणा[4]लयम्।
सर्वद्वन्द्वसहः[5] शान्त स्तपसाऽऽराधयद्धरिम् ॥ ४ ॥

भगवा न्पुनराव्रज्य [6-]मधुरां यवनावृताम्[-6]।
हत्वा म्लेच्छ[7]बलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥

नीयमाने धने गोभि र्नृभिश्चाच्युतचोदितैः।
आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥

---

1 B स 2 MMa वीरो 3 W निर्मलो 4 M,Ma. °णाश्रमम्। 5 W °मः 6- -6 B,G,J पुरीं यवनवेष्टिताम्, MMa मधुरा यवनाहृताम्। 7 TW °गण

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम्। अन्वमोदत सन्देशं रुक्मिण्या द्विजवर्णितम् ॥

स इति। क्षुल्लकान् अल्पप्र[1]माणान् ॥ १,२ ॥

तप इति। तपसि श्रद्धायुतः ॥ ३ ॥

बदरीति। तत्र च बदर्याश्रमम् ॥ ४ ॥

**भगवानिति।** निन्ये अनयत् द्वारकां, [2-]मार्गे चलतिस्म[-2]॥ ५-६ ॥

---

1 B. प्राणान् 2- -2 MI,v. प्रापितवान्

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथाऽवशिष्टं मुचुकुन्दवृत्तान्तम्, इत्थं मुचुकुन्दमनुज्ञाप्य अनुगृहीतवतो भगवतोऽनन्तरचेष्टितञ्चाऽऽह- **इत्थमिति।** अङ्ग! हे राजन्! श्रीकृष्णेनेत्थमनुगृहीतो मुचुकुन्दः तं श्रीकृष्णं प्रदक्षिणीकृत्य प्रणम्य च गुहाद्वारा निर्गतवान्॥ १ ॥

स मुचुकुन्दः क्षुल्लकान् अल्पपरिमाणान् मर्त्यादीनवलोक्य कलियुगं प्राप्तं विज्ञाय उत्तरां दिशं प्रति जगाम। तपसे इति शेषः॥ २ ॥

धीरो जितेन्द्रियः देहतदनुबन्ध्यादिषु आसक्तिरहितः मुक्तसंशयः सेत्स्यामि वा न वेति एवंविधो येन सः, श्रद्धायुतः [1-]कर्तव्यविषयत्वरायुक्तः[-1] कृष्णे भगवति स्वमनः सम्यगाधाय स्थिरीकृत्य गन्धमादनं पर्वतं प्राविशत्॥ ३ ॥

तत्रापि बदर्याश्रमं नरनारायणयोः आलयं[2] स्थानं[3] प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा। शान्तः जितमनाः हरिमाश्रितबन्धहरं भगवन्तं तपसाऽऽराधयामास॥ ४ ॥

अथ मुचुकुन्दानुग्रहानन्तरं[4] भगवच्चेष्टितमाह-**भगवानित्यादिना।** यवनैरावृतां मधुरामामत्य म्लेच्छानां बलं हत्वा तदीयं म्लेच्छसम्बन्धि सर्वं धनं द्वारकां प्रति निन्ये प्रापयामास॥ ५ ॥

अच्युतेन चोदितैर्नृभिः कर्तृभिः गोभिः साधनैः धने नीयमाने सति पूर्वव त्रयोविंशत्यक्षौहिणीसेनाधिपतिः[5] जरासन्ध आजगाम॥ ६ ॥

---

1- -1 T omits 2. T,W आश्रमं 3 T,W omit स्थानं 4 B. °होत्तरं 5 K,T,W. सैन्याधि

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

इक्ष्वाकोः वंशं नन्दयतीति इक्ष्वाकुनन्दनः सन्नम्य सम्यक् नत्वा॥ १ ॥

क्षुल्लकान् गुणतः परिमाणतश्च अल्पमानान्॥ २ ॥

इदं तत्त्वम् उताऽतत्त्वमिद मिति संशयो मुक्तो येन स तथा॥ ३,४ ॥

प्रकृतमनुसरति-भगवानिति। यवनेन आहृतम् आनीतम्॥ ५ ॥

त्रयोविंशत्यनीकपः त्रयोविंशदक्षौहिणीपतिः ॥ ६ ॥

**(श्रीविजयध्वजीयरीत्या अधिकश्लोकाः)**

ततो राजा जरासन्धः कालान्तानलसन्निभः।
विधाय मकरव्यूहं रथनागाश्वपत्तिमत्॥
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे॥ (क)

ततो विलोक्य गोविन्दो वृक्षमुत्पाटय रंहसा।
गजान् रथान् हयान् युद्धे पोथयमास दुर्मदः॥ (ख)

कृष्णेन हन्यमाना स्ते वृक्षेण रिपुकुञ्जराः।
पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः॥ (ग)

रथाश्च रथिभिर्युक्ताः सतुरङ्गास्सचोदकाः।
निष्पिष्टा इव न क्काऽपि दृश्यन्ते कुरुसत्तम॥ (घ)

रामस्तु मुष्टिना चाऽऽजौ कुञ्जरा न्मदशालिनः।
जघान कुपितः शैलान् वज्रेणेव सुरेश्वरः॥ (ङ)

राममुष्टिप्रहारेण विकीर्णस्यन्दना नृप!।
न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत्॥ (च)

यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु।
निहत्य यादवा न्विश्वान् तद्गृहीत्वा जरासुतः॥
अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह! ॥ छ ॥

विज० रथनागाश्वपत्तिमदिति क्रियाविशेषणम्। रथादिमन्तमिति व्यत्ययेन वा योज्यम्॥ (क)

दुर्मदो यथा जन्तून्हन्ति तथा। लुप्तोपमा॥ (ख)

अद्रयो गिरयः। "अद्रयोऽर्कगिरिद्रुमाः" (वैज. को. 6-1-4) इति॥ (ग)

सतुरङ्गाः सचोदकाः ससादिनः निष्पिष्टा हताः॥ (घ - च)

यादवैः द्वारकां गच्छन्त नीयमान यवनस्य विश्व धनं दृष्ट्वा अनुद्रुत्य यादवा निहत्य निर्जित्य॥ (छ)

**विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ।★**
**मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतु र्द्रुतम्॥ ७ ॥**

**विहाय वित्तं प्रचुर मभीतौ भीरु[1]भीतवत्।**
**पद्भ्यां पद्मपलाशाभ्यां [2]चेरतुर्बहुयोजनम्॥ ८ ॥**

**पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली।**
**अन्वधावद्रथानीके रीशयोरप्रमाणवित्॥ ९ ॥**

---

★ तत्रापतन्तमालोक्य सहित सबलैर्नृपैः। कीर्यमाणो शरौघेण वृष्टयेव करिपोतकौ॥ विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ॥ ★ इदं श्लोकार्धत्रय विजयध्वजीयरीत्या विलोक्येत्यारब्धस्य श्लोकस्य पूर्वार्धोत्तरार्धयो र्मध्ये लक्ष्यते। ★ 1 K,W °त 2 B J °ल०

**श्रीध० विलोक्येति।** वेगरभसं वेगोद्रेकम्॥ ७ ॥

**विहायेति।** भीरुभीतवत् भीरोरपि भीतवत् अति[1]शयेन **भीतवदित्यर्थः चेलतुः पलायेतां बहुयोजनं** देशम्॥ ८॥

**पलायमानाविति।** अप्रमाणवित् प्रमाणमियत्ता, त न्न वेत्तीति तथा॥ ९ ॥

1 BG omit शयेन।

**वीर०** माधवौ रामकृष्णौ जरासन्धसैन्यस्य वेगरभसं वेगोद्रेकम्। अवलोक्य मनुष्यचेष्टां प्राप्तौ चिकीर्षन्तौ हेतुगर्भं वा। तत्त्वात् हे राजन्! द्रुत त्वरितं यथा तथा दुद्रुवतुः पलायितवन्तौ॥ ७ ॥

तदेवाह - **विहायेति।** प्रचुरं प्रभूतं यावनं वित्तं विहाय भीतादपि भीतवत् पद्मपत्रसदृशाभ्यां पद्भ्यां बहुयोजनं देशं चेरतुः जग्मतुः॥ ८ ॥

मागधो जरासन्धः तौ दृष्ट्वा बली स्वबलोपेतः दैहिकबलोपेतो वा, ईशयोः रामकृष्णयोः अप्रमाणवित् ईशयोः प्रमाणं स्वरूपरूपगुणानन्त्यरूपं, [1]त न्न वेत्तीति तथाभूतः रथानीकैः [2]रथिकसैन्यैस्सह अन्वधावत् अनुदुद्राव॥ ९ ॥

---

1 K,T,W omit तत् 2 K,T,W रथ

**विज०** वेगरभसं योगसम्भ्रमम्॥ ७,८ ॥

प्रमाणं ज्ञानवलेयत्तां न वेत्तीति अप्रमाणवित्॥ ९ ॥

**(विजयध्वजीये अधिकश्लोकाः)**

**प्रहृत्य वीरौ विश्रान्तौ करवीरपुरे निशि।**
**तावारुरुहतु र्वीरौ गोमन्तमुदिते रवौ॥ क ॥**

**सिद्धचारणगन्धर्व विद्याधरनिषेवितम्।**
**आरुह्य शैलं गोमन्तं रामकृष्णौ त्वरान्वितौ॥ ख ॥**

**प्रवर्षणाख्यं तच्छृङ्गं यत्राब्दा नित्यवर्षिणः।**
**तत्र ता वासतू राजन् फलमूलाशनौ सुखम्॥ ग ॥**

**जरासन्धस्तु दुष्टात्मा तावनुद्रुत्य माधवौ।**
**रुरोध शैलं गोमन्तं महत्या सेनया वृतः॥ घ ॥**

**स भूपालान् समाहूय स्वानुगान् युद्धदुर्मदान्।**
**कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा॥ ङ ॥**

**जयद्रथं सिन्धुपतिं सोमदत्तञ्च कौरवम्।**
**गान्धारराजं शकुनिं वैदर्भं रुक्मिमेव च॥ च ॥**

**सुदक्षिणञ्च काम्बोजं विराटं मत्स्यभूपतिम्।**
**एतानाज्ञापयामास पूर्वस्यान्दिशि भूपतीन्॥ छ ॥**

**पाञ्चालराजं द्रुपदं दमघोषञ्च चेदिपम्।**
**ब्रह्मदत्तञ्च शाल्वेश मेकलव्यं निषादिपम्॥ ज ॥**

**बाह्लिकञ्च कुरुश्रेष्ठं युधामन्युञ्च दुर्जयम्।**
**विन्दानुविन्दावावन्त्यौ काशिराजञ्च पौण्ड्रकम्॥ झ ॥**

**आज्ञापयामास नृपा नेतान्वीरो जरासुतः।**
**गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो॥ ञ ॥**

द्रुमं किम्पुरुषाधीशं दन्तवक्त्रं सहानुजम्।
वीरं विदेहराजानं भूरिश्रवसमेव च॥ ट ॥

करूषेशं बृहच्चापं दाशार्णञ्च शतध्वजम्।
शैब्यं सुवीरराजानं दरदञ्च महारथम्॥ ठ ॥

एतान्महीपतीन्राजा जरासन्धोऽमितद्युतिः।
प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतम्॥ ड ॥

त्रिगर्तञ्च सुशर्माणं बलिनं वेणुदारिणम्।
कलिन्दञ्च महासत्त्वं केकयानपि भूपतीन्॥ ढ ॥

शिशुपालञ्च भूपालं भीष्मकञ्चाऽपि दुर्जयम्।
पुरस्कृत्याऽऽरुरोहाऽऽशु कौबेर्यां मागधो दिशि॥ ण ॥

एवं गोमन्तमारुह्य सर्वर्तुफलपादपम्।
विचित्य तत्र सर्वत्राऽप्यधश्शृङ्गाप्रवर्षणात्।
चिच्छिदुः सकलान्वृक्षा न्नापश्यन्रामममाधवौ॥ त ॥

**विज०** गोमन्तं पर्वतमारुह्य ॥ क,ख ॥

प्रवर्षणाख्यं तस्य [1-] गोमन्तस्य [-1] शृङ्गम्, आपतुरिति शेषः। अत शृङ्गे आसतुः उपविविशतुः॥ग - त॥

---

1- -1 B omits

★प्राद्रुत्य[1] [2-]दूरं संश्रान्तौ[-2] तुङ्गमारुहतां गिरिम्।
प्रवर्षणाख्यं भगवा न्नित्यदा भत्र वर्षति॥ १० ॥

गिरौ निलीनावाज्ञाय नाऽ[3]धिगम्य पदं नृप।
ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन्॥ ११ ॥

तत उत्प्लुत्य[4] तरसा [5-]दह्यमानतटा दुभौ[-5]।
दशैकयोजनोत्तुङ्गा न्निपेततुरधो भुवि॥ १२ ॥

अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ।
स्वपुरं[6] पुनरायातौ[7] समुद्रपरिखां[8] नृप॥ १३ ॥

सोऽपि दग्धाविति मृषा मन्वानो[9] बलकेशवौ।
बलमाकृष्य सुमहत्[10] मगधा न्मागधो ययौ॥ १४ ॥

★This verse is not found in M,Ma Edns. 1 G,J,K,W. प्र० 2- -2 Ml,v दूरमश्रान्तौ 3 K,W चाऽ० 4 B,G,J,Ml,V उत्पत्य 5--5 M,Ma. मानात्तु तावुभौ। 6 M,Ma. पुरीं 7 Ml,v. °तान् 8 K,Ml,V,W °धां 9 W मत्त्वा तौ 10 Ml,v महान्

**श्रीध० प्रादुत्येति।** तुङ्गमेकादशयोजनोन्नतम्। प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्या यस्य तं, तदाह - भगवानिति। भगवान् इन्द्रः ॥ १० ॥

**गिराविति।** तत्र विचिन्वन्नपि तयोः पदं निलयस्थान मनधिगम्य॥ ११ ॥

**तत इति।** ततो गिरेः दशचैकञ्च यानि[1] योजनानि तावदुत्तुङ्गात् मागधसंरोधदेश मतिक्रम्य परतोऽधो निपेततुः॥ १२-१४॥

1 B,J omit यानि

**वीर०** तौ रामकृष्णौ प्रद्रुत्य पलाय्य[1] श्रान्तौ सन्तौ[2] तुङ्गमुन्नतं[3] प्रवर्षणाख्यं गिरिमारूढवन्तौ। आख्याया अन्वर्थतामाह - [4-]भगवानिति[-4]। भगवान्पर्जन्यो यत्र गिरौ नित्यदा वर्षति प्रकृष्टं नित्य मस्मिन्वर्षतीति प्रवर्षणः अधिकरणे ल्युट्॥ १०॥

स जरासन्धः हे नृप। पदं रामकृष्णयोः पादाङ्कितं तत्र तत्र भूप्रदेश मधिगम्य अवलोक्य तेन लिङ्गेन गिरौ विलीनौ अन्तर्हितौ आज्ञाय अनुमाय। नाऽधिगम्येति पाठे तत्र विचिन्वन्नपि तयोः पदं नियतस्थान मज्ञात्वा केवलं तत्र विलीनौ ज्ञात्वा तं गिरिं सर्वतो दशयोजनमेधोभिः काष्ठैः चितिं कारयित्वेति शेषः। तत्राऽग्निमुत्सृजन् ददाह॥ ११॥

तदा दह्यमानानि तटानि यस्य तस्माद्गिरे रुत्प्लुत्य दशैकञ्च योजनानि यानि तावदुत्तुङ्गात् गिरेः मागधसंरोधदेश मतिक्रम्य परतोऽधो निपेततुः॥ १२ ॥

ततो रिपुणा मागधेनाऽदृश्यमानौ रामकृष्णौ, समुद्र एव परिखा यस्यास्तां पुरीं द्वारकां प्रति पुन राजग्मतुः॥ १३॥

सोऽपि मागधोऽपि रामकृष्णौ दग्धाविति मृषा यथा तथा मन्वानो बलं सैन्यम् आकृष्याऽऽदाय मागधान् देशान् प्रति आजगाम॥ १४ ॥

1 B पलायित्वा 2 B omits सन्तौ 3 K,T,W °मत्युन्नतं 4- -4 B omits

**विज०** एधोभिः काष्ठैः॥ १०-१२ ॥

समुद्र एव परिखा खातं, नदी यस्यास्सा तथा॥ १३,१४ ॥

(श्रीविजयध्वजीयरीत्या सार्धं श्लोकद्वयमधिकं लक्ष्यते)

अष्टादशे तु सङ्ग्रामे जित्वा यादवसत्तमौ।
इम स्स्वराष्ट्रे न्यवस ज्जितदिङ्मण्डलो नृप॥

माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम्।
स्तूयमानौ दिवारात्रं सूतमागधवन्दिभिः॥

वृतावानन्दबहुलै र्बन्धुभि स्सुखमूषतुः॥

इति श्रीविजयध्वजरीत्या पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥
अथ श्रीविजयध्वजरीत्या षट्पञ्चाशत्तमोऽध्यायः आरभ्यते

श्रीशुक उवाच

कदाचि द्देवकीपुत्रो रामशैनेयसंयुतः।
सेव्यमान स्सभायां वै नानादेशेश्वरै र्नृपैः॥ क॥

पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतै र्मृधे।
बद्धं शुश्राव कौरव्य ब्राह्मणैस्सत्रयाजिभिः॥ ख॥

तच्छ्रुत्वा हृष्टहृदयः कृतवर्माण मच्युतः।
नगरं हस्तिनपुरं प्रेषयामास वेदितुम्॥ ग॥

स गत्वा हस्तिनपुरं वृद्धं कुरुपितामहम्।
ददर्श द्रोणविदुरधृतराष्ट्रकृपै र्वृतम्॥ घ॥

युधिष्ठिरञ्च राजानं चतुर्भिर्भ्रातृभि र्वृतम्।
सभाजयामास भृशं कुन्तीञ्च हृदिकात्मजः॥ ङ॥

युधिष्ठिरोऽपि पप्रच्छ सानुगं कंसमर्दनम्।
हतञ्च कालयवनं जरासन्धञ्च निर्जितम्॥ च॥

वासुदेवञ्च निहतं करवीरपुरेश्वरम्।
द्वारवत्याश्च करणं नगर्या वरुणालये॥ छ॥

हतौ च हंसडिभकौ ब्रह्मदत्तश्च दुर्जयम्।
श्रुत्वा हार्दिक्यवचना द्यथार्थेन युधिष्ठिरः॥ ज ॥

मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम्।
सभाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः॥ झ ॥

पाण्डुपुत्रैस्तथा कुन्त्या सौहार्दस्नुतबाष्पया।
हार्दिक्य स्ताननुज्ञाप्य बान्धवा न्पृथया सह॥ ञ ॥

मातृष्वसेयान्धर्मज्ञा नभिवाद्य यथावयः।
गाङ्गेयेनाऽभ्यनुज्ञातो धृतराष्ट्रेण चाऽनघ!॥ ट ॥

विदुरेणाङ्गराजेन द्रोणेन च कृपेण च।
प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च॥ ठ ॥

कृतवर्माऽभ्यनुज्ञातो निर्गत्य गजसाह्वयात्।
द्वारकां वृष्णिनिलया माजगाम दिनात्यये॥ ड ॥

स प्रविश्य सभां दिव्या मनेकनृपसेविताम्।
दृष्ट्वा गोविन्दमासीनं काञ्चने परमासने॥ ढ ॥

वीजच्चामरसङ्घातसहितं वनमालिनम्।
आचचक्षेऽखिलं तस्य यथादृष्टं यथाश्रुतम्॥ ण ॥

वृत्तान्तं कौरवेयाणां नगरे गजसाह्वये।
तदाकर्ण्य हरि स्सर्वं वृत्तान्तं जगदीश्वरः॥
पौरुषं पाण्डुपुत्राणां बभूवाऽऽनन्दनिर्भरः॥ त ॥

(इति श्रीविजयध्वजरीत्या षट्पञ्चाशत्तमोऽध्यायः॥ ५६ ॥)

**विज॰** "परा पूर्वेषां संख्यां वृणक्ति वितर्तुराणो अपरेभिरेति" इत्यादिश्रुत्यर्थं दीपकन्यायेन दर्शयत्यस्मिन्नध्याये। तत्र श्रीकृष्णो युद्धे कुन्तीसुतैर्बद्धं पाञ्चालभूपतिं श्रुत्वा हृष्टः तद्वृत्तान्तविवित्सया तत्समीपे कृतवर्माणं प्रेषयामासेति कथयति -कदाचिदिति॥ क ॥

ब्राह्मणैरुक्तम्॥ ख - च ॥

वासुदेवं सृगालनामानम्। वरुणालये समुद्रे॥ छ ॥

आनन्दनिर्भरः आनन्दपूर्णो बभूवइत्यनेन पूर्णानन्दत्वं सदातनं न कादाचित्कमिति सूचयति। 'भू सत्तायाम्' इति धातोः सत्तायाः सदातनत्वादिति॥ ज-त ॥

इति श्रीविजयध्वजरीत्या षट्पञ्चाशोऽध्यायः॥५६ ॥

(अत्र विजयध्वजरीत्या सप्तपञ्चाशत्तमोऽध्यायः आरभ्यते)

आनर्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम्।
ब्रह्मणा चोदितः प्रादात् बलायेति पुरोदितम्॥ १५ ॥

(श्रीविजयध्वजीयरीत्या अधिकश्लोकाः)

राजोवाच

रेवतो नाम राजऽसौ ब्रह्मणा चोदितः कथम्।
तदहं श्रोतुमिच्छामि विस्तरेण महामुने॥ क ॥

श्रीशुक उवाच

रेवतो नाम राजाऽऽसीत्पुरा धर्मार्थतत्त्ववित्।
रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी॥ ख ॥

स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति।
अदत्त्वा याच्यमानोऽपि नानाजनपदेश्वरैः॥ ग ॥

सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हाहा हूहू।
तस्मिन्नगायतां काले ग्राममूर्छाविचक्षणौ॥ घ ॥

राजाऽतिष्ठद्वहिः किञ्चित्तद्विरामप्रतीक्षया।
गीतावसाने पप्रच्छ प्रणिपत्य पितामहम्॥ ङ ॥

एष मे भगवन्कन्या कस्मै दास्या इमामिति।
तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते॥ च ॥

तत्राऽन्यांश्च महीपाला नाचक्ष्वेति कुरूद्वह।
ततस्तान् रेवतः प्राह भूपालान्विषयेश्वरान्॥ छ ॥

स तानाकर्ण्य नृपतीन्प्रहस्योवाच रेवतम्।
युगानि तु बहून्यत्र गतानि तव भूपते॥ ज ॥

क्षणमात्रमिवाऽश्राव्यं शृण्वतो गीतमेतयोः।
केदानीं तव ते भूपाः सुतायाः सदृशावराः॥ झ ॥

इदानीं राजशार्दूल यदुवंशविवर्धनौ।
वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू॥ ञ ॥

तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते।
इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः॥ ट ॥

रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने।
तामादियुगसम्भूतां दीर्घदेहां महाभुजः॥
आकृष्य लाङ्गलेनांसे समां चक्रे हलायुधः॥ ठ ॥

भगवानपि गोविन्द उपयेमे कुरूद्वह।
वैदर्भीं भीष्मकसुतां [1-]श्रियो मात्रां[-1] स्वयंवरे॥ १६ ॥

प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान्।
पश्यतां सर्वलोकानां तार्क्ष्यपुत्रस्सुधामिव॥ १७ ॥

राजोवाच

भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम्।
राक्षसेन [2-]विवाहेन[-2] उपयेम इति श्रुतम्॥ १८ ॥

भगवन् श्रोतुमिच्छामि कृष्णस्यामिततेजसः।
★ रुक्मिण्या ग्रहणं पाणेः प्रमथ्यान्यान् स्वयंवरे॥
यथा मागधशाल्वादीन् [3-]जित्वा कन्यामुपाहरत्[-3]॥ १९ ॥

ब्रह्मन् [4]कृष्णकथाः पुण्या माध्वी लोकमलापहाः।
को नु तृप्येत [5]शृण्वानः श्रुतज्ञो नित्यनूतनाः॥ २० ॥

---

1- -1 M,Ma इन्दिरांशां 2- -2 B,G,J,Ml,V विधानेन ★ This half verse is found in Ml,v Edns only 3--3 K,W जित्वैकः पुनरागमत्; M,Ma जित्वा तत्पारमागमत् 4 M,Ma,Ml,v विष्णु 5 K,W शृणुवान्

**श्रीध०** श्रीकृष्णस्य विवाहं[1] निरूपयितुं बलदेवविवाहं नवमस्कन्धोक्तम् अनुस्मारयति- **आनर्तेति** ॥ १५ ॥

**भगवानिति**। लक्ष्म्याः[2] मात्रां कलाम्॥ १६ ॥

**प्रमथ्येति**। गरुडो यथा देवान् प्रमथ्य सुधां अमृतं[3] अहरत्[4] तथेति॥ १७ ॥

**भगवानिति**। "राक्षसो युद्धहरणात्" (याज्ञ. स्मृ. 1-3-61) इति स्मृतेः। राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेन उपयेमे परिणीतवानिति श्रुतं पूर्वमेव वा॥ १८ ॥

**भगवन्निति**। सामान्यत एव श्रुतम्, विशेषन्तु श्रोतुमिच्छामि॥ १९ ॥

श्रवणौत्सुक्यमाविष्करोति- **ब्रह्मन्निति**। पुण्या महाफला माध्वीः श्रुतिसुखाः लोकस्य मलापहाश्च शृण्वानः शृण्वन्नित्यर्थः। श्रुतज्ञः श्रुतसारवित् नित्यनूतनाः प्रतिक्षणमाश्चर्यवत् प्रतीयमानाः॥ २० ॥

1 B,J °हान् 2 B,J omit लक्ष्म्याः 3 B,J omit अमृतं 4 MI,V आ०

**वीर०** अथ श्रीकृष्णस्य विवाहान् निरूपयितुकामस्तावत् बलभद्रविवाहं नवमस्कन्धोक्तञ्च मनुस्मरति -**आनर्तेति**। स्पष्टोऽर्थः॥ १५॥

अथ भगवद्विवाहान् निरूपयितुकामस्तावत् रुक्मिणीकल्याणं तद्विस्तरबुभुत्सा मुत्थापयन्[1] सङ्ग्रहेणाऽऽह - **भगवानपीति** द्वाभ्याम्। हे कुरूद्वह! श्रियो लक्ष्म्याः मात्रामंशभूतां भीष्मकस्य राज्ञः सुतां वैदर्भीं, यथा तार्क्ष्यपुत्रो गरुडः सुधा माजहार, तद्वत् स्वयंवरे सर्वभूतानां पश्यतां सतां चैद्यपक्षपातिनः सर्वान् शाल्वादीन् राज्ञः क्षत्रियान् तरसा बलेन प्रमथ्याऽऽलोड्य अभिभूयेति यावत्। आहृतामिति शेषः, उपयेमे इत्यन्वयः॥ १६, १७ ॥

तत्र तद्विस्तरबुभुत्सया पृच्छति राजा **भगवानिति**। रुचिरं सुन्दरमाननं यस्यास्ताम्; उपयेमे विवाहितवानिति श्रुतं, मयेति शेषः। त्वन्मुखा दधुना श्रुतमिति भावः। नियुध्याऽऽनीताया विवाहो राक्षसविवाहः। "राक्षसो युद्धहरणात्" (याज्ञ; स्मृ 1-3-61) इति स्मृतेः, यद्वा युद्धे हरणमेव राक्षसविवाहः तथाऽपि[2] च राक्षसेन विवाहेन हेतुभूतेन पश्चात् यथावत् उपयेमे इत्यर्थः॥ १८ ॥

**भगवन्निति**। यथा येन प्रकारेण मागधादी नेक एव सन् जित्वा पुनरागमत्, वैदर्भीं माह्वायेति शेषः। त ममिततेजसः श्रीकृष्णस्य जयाऽऽगमनादिप्रकारं श्रोतुमिच्छामि॥ १९ ॥

आत्मनः श्रवणौत्सुक्यम् आविष्करोति- **ब्रह्मन्निति**। हे ब्रह्मन्! श्रीकृष्णस्य कथाः पुण्याः शृण्वतां वदताञ्च पुण्यावहाः, माध्वीः श्रुतिसुखावहाः, न केवलं पुण्या एव अपि तु शृण्वतो मदलश्च जनस्य मलापहाः पापघ्नीश्च अतः ताः श्रुतज्ञः श्रोत्रेन्द्रियविषयसुखसारासारविवेकी चेत् को वा पुमान् शृणुवान् शृण्वन्, उबङ् दीर्घश्चाऽऽर्षः[3]। न सेवेत। श्रुतज्ञश्चेत् सर्वोऽपि सेवेतेत्यर्थः। सत्यं सेवेतेति, सकृच्छ्रुत्वा पुन र्न सेवेते त्यतः ता विशिनष्टि नित्यनूतना इति॥ २० ॥

1 K,T,W °मुत्पादयन् 2 K,T,W omit अपि 3- -3 B शृण्वान् उपधा दीर्घश्च आर्षः।

**विज०** अनित्यत्वात् संसारो हेयः, तदर्थं कामक्रोधादिनिलयात् देहात् संविदेवाऽऽहर्तव्येति दर्शनायोत्तराध्यायस्य प्रारम्भः। आनर्तविषयाधिपतिः॥ १५ ॥

धर्मार्थो धर्मविषयो विष्णु स्तस्य तत्त्वं वेत्तीति धर्मस्यार्थस्य तत्त्वं हरिविषयत्वलक्षणं वेत्तीति वा॥ क,ख ॥

येयं मम कन्या, तां प्रति याचकत्वसम्भवात् कुतो न दत्तेत्यत्राऽऽह-अदत्वेति। ब्रह्मणः सर्वस्य गुरुत्वात् गुर्वनुज्ञापूर्वकं क्रियमाणं सर्वं फलव दित्यभिसन्धाय याचकेभ्यो न दत्तेति भावः॥ ग ॥

तत्र तस्मिन्नवसरे ग्राममूर्छाविचक्षणौ सप्तस्वरगानविशेषविदग्धौ, स्वराणां मण्डलं ग्रामः। आरोहावरोहः मूर्छा। सप्त स्वरा स्त्रयो ग्रामा एकविंशतिः मूर्छना इति भरतः॥ घ ॥

अल्पार्थे किञ्चिदित्यव्ययम्। अल्पकालमित्यर्थः॥ ङ ॥

त्वदभीष्टवरो नास्ति तदानीन्तनकालीयाना मतीतत्वादिति ब्रह्मा वक्ति, तं प्राहेति॥ च ॥

तव ते तुभ्यं मनुष्यस्य सुबहूनि युगानि क्षणमात्रमिव गतानीति तत्र निमित्तमाह आश्राव्यमिति॥ ज,झ॥

तर्हि किं कर्तव्यमिति तत्राऽऽह इदानीमिति॥ ञ ॥

आदियुगं कृतं नाम॥ ठ ॥

तेषां पारं यथा तस्य हरेर्विवाहलक्षणं चरितं श्रोतुमिच्छामि॥ १६-१९ ॥

माध्वीः मधुराः॥ २० ॥

## -: रुक्मिणीविवाहकथारम्भः :-

### श्रीशुक उवाच

**राजाऽऽसीद्भीष्मको नाम विदर्भाधिपतिर्महान्।**
**तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना॥ २१ ॥**

**रुक्म्यग्रजो रुक्मरथो रुक्मबाहु रनन्तरः।**
**रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती॥ २२ ॥**

[1-]सोपश्रुत्य[-1] मुकुन्दस्य रूपवीर्यगुणश्रियः।
गृहागतै र्गीयमाना स्तं मेने सदृशं पतिम्॥ २३ ॥

तां बुद्धिलक्षणौदार्य रूपशीलगुणाश्रयाम्।
कृष्ण स्स्व[2]सदृशीं भार्यां समुद्वोढुं मनो दधे॥ २४ ॥

बन्धूना मिच्छतां दातुं कृष्णाय भगिनीं नृप।
[3]ततो निवार्य कृष्णद्विट् रुक्मी [4-]चैद्य ममन्यत[-4]॥ २५ ॥

---

1--1 KW सा पश्यन्ती 2 B,G,J M,Ma °श्व 3 M Ma रुक्मी 4--4 M Ma चैद्याय समकल्पयत्

**श्रीध०** **बन्धूनामिति** चैद्यममन्यत तस्या वरमित्यर्थः॥ २१-२५ ॥

**वीर०** इत्थमापृष्टो विस्तरतो वर्णयति **राजाऽऽसीदिति**। विदर्भाणां देशानाम् अधिपतिः महान्, गुणैरिति शेषः। तस्य भीष्मकस्य सुताः पञ्च, कन्यकात्वेकैव। सा च वरानना। आननग्रहणं सर्वावयवानां उपलक्षणम्। सर्वावयवसौन्दर्य[1]वतीत्यर्थः॥ २१ ॥

पुत्रान् क्रमेण निर्दिशन् कन्यकाख्या[2]नमाह - **रुक्मीति**। अग्रजो रुक्मी ततः क्रमेण रुक्मरथादयः, एषां रुक्म्यादीनां स्वसा भगिनी रुक्मिणी सा सती सुशीला॥ २२ ॥

सा रुक्मिणी स्वगृहान् प्रति आगतैः जनैः गीयमानाः श्रीकृष्णस्य रूपसौन्दर्यवीर्यगुणाः अन्ये गम्भीर्योदार्यादयः श्री भोग्यभोगोपकरणादिसम्पत्तिः। एताः पश्यन्ती शृण्वती[3] तं मुकुन्दमेव आत्मनः सदृशमनुरूपं पतिं मेने॥ २३ ॥

तथा कृष्णोऽपि गृहागतजनमुखात् बुद्ध्यादिगुणैकतानां ता[4]ं रुक्मिणीं श्रुत्वा आत्मनोऽनुरूपां भार्यां समुद्वोढुम् उपयन्तुं मन श्चक्रे॥ २४ ॥

एवं स्थिते रुक्मी बन्धूनां, रुक्मीतरेषामिति शेषः। कृष्णायैव भगिनीं दातुमिच्छतां सतां हे नृप! ततः त न्निवार्य श्रीकृष्णं द्वेष्टीति तथाभूतस्सन् चैद्यं शिशुपालमेव भगिन्याः पतिं ममन्यत चैद्यायैव दातुं निश्चिकायेत्यर्थः॥ २५॥

---

1 B शालिनीत्यर्थः 2 K,T,W °ख्यामाह 3 B °न्ती 4 B omits °ता

**विज०** वरं मनोहरम् आननं यस्या स्सा तथा॥ २१,२२ ॥

गृहागतैः जनैः॥ २३ - २५ ॥

**तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम्**
**विचिन्त्याप्तं द्विजं कञ्चि त्कृष्णाय प्राहिणोद्द्रुतम्॥ २६ ॥**

द्वारकां स समभ्येत्य प्रतीहारैः[1] प्रवेशितः।
अपश्य दाद्यं पुरुष मासीनं काञ्चनासने ॥ २७ ॥

दृष्ट्वा ब्रह्मण्यदेव स्त मवरुह्य निजासनात्[2]।
उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः॥ २८ ॥

तं भुक्तवन्तं विश्रान्तं उपगम्य सताङ्गतिः।
पाणिनाऽभिमृशन्पादा वव्यग्र स्तमपृच्छत॥ २९ ॥

[3-]श्रीभगवानुवाच[-3]

[4]कच्चि द्विजवरश्रेष्ठ धर्म स्ते वृद्ध सम्मतः।
वर्तते नातिकृच्छ्रेण सन्तुष्टमनस स्सदा॥ ३० ॥

---

1 K,Ml,V,W °ति 2 M,Ma, Ml.V °सने 3- -3 B,G,J, M,Ma omit, Ml,V श्रीकृष्ण उवाच 4 J क्वचि०

**श्रीध०** तदिति। अवेत्य ज्ञात्वा असितापाङ्गी [1]सुनीलकटाक्षा कृष्णाय कृष्णमानेतुं प्रेषयामास॥ २६॥

**द्वारकामिति।** प्रतीहारैः द्वारपालैः॥ २७ ॥

**दृष्ट्वेति।** आत्मानं श्रीकृष्णम्॥ २८ ॥

**तमिति।** अभिमृशन् शनैः[2] सम्मर्दयन्॥ २९, ३० ॥

---

1 Ml,V omit सु 2 Ml V add शनैः

**वीर०** तद्भ्रातुर्निश्चितमालक्ष्य, असितावपाङ्गौ यस्याः सा वैदर्भी दुःखितचित्ता ततो विचिन्त्याऽऽलोच्य[1] आप्तं कञ्चिद्[2]द्विजश्रेष्ठं द्रुतं त्वरितं यथा तथा श्रीकृष्णाय प्राहिणोत् कृष्णमानेतुं प्रेषयामासेत्यर्थः। "क्रियार्थोपपदस्य" (अष्टा. 2-3-14) इति चतुर्थी॥ २६ ॥

स द्विजः द्वारकां प्रति गत्वा तत्र द्वारपालैरन्तः प्रवेशितः काञ्चनमये सिंहासने स्थितं जगत्कारणं पुरुषं श्रीकृष्णं ददर्श॥ २७ ॥

[3-]किञ्च। दृष्ट्वेति[-3]। तं दृष्टवन्तं द्विजमवलोक्य ब्रह्मणि [5]कुले साधवो ब्रह्मण्याः तेषां मध्ये देवः दीप्यमानः [6-]श्रेष्ठ[-6] इत्यर्थः। स भगवान् निजासनात् [4-]स्वकीयसिंहासनात्[-4] अवरुह्य अवतीर्य द्विजमुपवेश्य अर्हयाञ्चक्रे पूजयामास। तत्र दृष्टान्तः [7-]यथा दिवौकस इन्द्राद्यः आत्मानं श्रीकृष्णरूपिणं पूजयन्ति तद्वदित्यर्थः[-7]॥ २८ ॥

तमिति। विश्रान्तं विगताध्वश्रमं तं द्विज मुपगम्य स्वासने सत्कृतिः [8][illegible][8] [illegible] सद्भिरेव मनुष्ठेयमिति प्रदर्शयन्निवेति भावः। अभिमृशत् शनै स्संमर्दयन्, अव्यग्रः अवहितचित्तः, तं द्विजश्रेष्ठ मपृच्छत्॥ २९ ॥

प्रश्नमेव वर्णयति - कच्चिदिति षड्भिः[9]। हे द्वि[10]जवरश्रेष्ठ[10] ! द्विजश्रेष्ठानामपिश्रेष्ठ। ते[11] तव धर्मः आर्यसम्मतो वर्तते कच्चित्? मदिष्टे इति भावः कोऽसा वार्यसम्मतः त्वदिष्टश्चेऽत्यतो विशिनष्टि। नातिकृच्छ्रेणाऽनतिक्लेशेन अयत्नलब्धेन सदा सन्तुष्टं मनो यस्य तस्य तव, धर्म इति पूर्वेण सम्बन्धः। सन्तोष एव ब्राह्मणस्य परमो धर्म आर्यसम्मतो मदिष्टश्चेति भावः॥ ३० ॥

---

1 K,T,W omit आलोच्य 2 T,W °विप्र 3- -3 K,T,W omit 4--4 K,T,W omit 5 K,T,W अवतीर्य 6--6 K,T,W omit 7--7 K,T,W यथा देवाः आत्मानं पूजयन्ति तद्वत् 8--8 K,T,W द्विजमपृच्छत। 9 K,T,W omit षड्भिः 10--10 K,T,W omit 11 K,T,W omit ते

विज० असितापाङ्गी नीलकटाक्षस्थला आप्तं विश्वस्तम्॥ २६-२८ ॥

अव्यग्रः असम्भ्रान्तः॥ २९-३० ॥

सन्तुष्टो यर्हि[1] वर्तेत ब्राह्मणो येन केन चित्।  
अहीयमानः स्वाद्धर्मात् स ह्यस्याऽखिल कामधुक्॥ ३१ ॥

अस[2]न्तुष्टोऽसकृ[2] ल्लोकान्[3] नाऽऽप्नोत्यपि सुरेश्वरः।  
अकिञ्चनोपि सन्तुष्टः शेते सर्वाङ्गविज्वरः॥ ३२ ॥

विप्रान् स्वलाभसन्तुष्टान् साधून् भूतसुहृत्तमान्।  
निरहङ्कारिण श्शान्तान् नमस्ये शिरसाऽसकृत्॥ ३३ ॥

कच्चि द्वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः।  
सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः॥ ३४ ॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया[4]।  
सर्वं नो[5] ब्रूह्यगुह्यश्चे[6]त् किं कार्यं[6] करवाम[7] ते ॥ ३५ ॥

[8]श्रीशुक उवाच[8]

एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना।  
★ लीलागृहीतदेहेन तस्मै सर्व मवर्णयत्॥ ३६ ॥

1 Ml,V यदि 2--2 M,Ma °ष्टः सुखं विप्र! 3 B,G,J,Ml, आ० 4 M,Ma यद० 5 K,W मे 6--6 K,W क्वं किं 7 K,W °महे; Ml,V °म तत् 8--8 B,G,J,M, Ma,Ml,V omit ★ This half verse is not found in M,Ma Edns

**श्रीध०** **सन्तुष्ट** इति। स धर्मोऽस्य ब्राह्मणस्याऽखिलकामदोग्धा भवति। यद्वा स ब्राह्मणोऽस्य विश्वस्याऽखिलकामधुगिति॥ ३१॥

**असन्तुष्ट** इति। लोकानाप्नोति। लोकाल्लोकान्तरं पर्यटति[1], नैकत्र निर्वृत स्तिष्ठतीत्यर्थः। नाऽऽप्नोतीति पाठे सुरेश्वरोऽपि भूत्वा लोका न्नाऽऽप्नोति उत्तमलोका न्प्राप्तोपि अप्राप्त इव क्लिश्यतीत्यर्थः। शेते सुख मास्ते इत्यर्थः। तदेवाऽऽह सर्वेष्वङ्गेषु वाक्पाण्यादिषु विज्वर स्तापरहितः॥ ३२ ॥

**विप्रानिति**। स्वलाभः स्वत एव प्राप्तो लाभः आत्मलाभो वा तेन सन्तुष्टान् पूर्णान् साधून् स्वधर्मनिष्ठान्॥ ३३॥

**कच्चिदिति**। यस्य राज्ञो विषये देशे॥ ३४ ॥

**यत** इति। यतः स्थानात् यदिच्छया [2-]यत्कार्येच्छया[-2] दुर्गं समुद्रम्॥ ३५॥

**एवमिति**। सम्पृष्टः सम्प्रश्नः प्रष्टव्योऽर्थो य[3] सः परमेष्ठिना परमेश्वरेण बन्धूना मनभिप्रेतं रुक्मिण श्चेष्टित मित्यादि सर्वम्॥ ३६॥

---

1 MI,V °टन् 2--2 MI,V यस्य कार्यस्येच्छया 3 MI,V यस्य

**वीर०** एतदेवोपपादयति- **सन्तुष्ट** इति। यर्हि यदा येन केनचि दयत्नलब्धेनैव देहधारणोपयुक्तेन सन्तुष्टस्सन्[1] स्वात्[2] स्वस्मात् धर्मा द्वर्णाश्रमोचिता द्धर्मा दहीयमानो वर्तेत, स हि नित्यसन्तोषरूपो धर्मः, अस्य नित्यसन्तुष्टस्य स्वधर्मा दनपतेस्य च पुंसः अखिलान् कामान् इष्टार्थान् दोग्धीति तथा। स्वादित्यत्र "पूर्वादिभ्यो नवभ्यो वा" (अष्टा7-1-16) इति विकल्पात्स्मादादेशाभावः। अखिलकामधुग् इत्यनेन वृद्धसम्मतत्त्वं फलितं, शिष्टसम्मतस्यैव धर्मस्य फलसाधनत्वाव्यभिचारात्, फलसाधनत्वाध्यवसायिना मेव शिष्टत्वात्॥ ३१ ॥

एवं सन्तोषस्य पारलौकिकसुखसाधनत्वमुक्तम्, अथेह लोकेऽपि सुखहेतुत्व वक्तु मसन्तोषस्योभयत्र दुःखहेतुता माह **असन्तुष्ट** इत्यर्धेन। सुरेश्वरोऽपि असन्तुष्टश्चेत् लोकाननुकूलतया लोक्यन्त इति लोका आनन्दाः सुखानीति यावत्, ता नैहिकामुष्मिकांश्च न प्राप्नोति। अकिञ्चनोऽपि सन्तुष्टश्चेत् सर्वाङ्गविज्वरः कस्मिंश्चिदङ्गेपि तापरहितः शेते॥ ३२ ॥

अथ सन्तोषस्य स्वाभिमतत्वमाह **विप्रानिति**। स्वलाभेन स्वसत्तालाभेन "स्वोजीवनेच्छा यदि ते स्वसत्ताया स्पृहा यदि। आत्मदास्यं हरेः स्वाम्यं स्वभावञ्च सदा स्मर" (विष्णुतत्त्वम्)। इत्युक्तहरिदास्याद्यनुसन्धानप्रयुक्तात्मलाभेनेत्यर्थः। तेनैव[3] सन्तुष्टान् साधून् परोपकारिणः देहात्माभिमानरहितान् शान्तान् जितेन्द्रियान् द्विजा नह मस्तकुच्छिरसा नमस्ये नमस्करोमि अतीव मदिष्टं कुर्वद्भ्यस्तेभ्यः प्रत्युपकर्तु मशक्तः केवलं नमस्करोमीत्यभिप्रायः॥ ३३ ॥

हे ब्रह्मन्! वो युष्माकं राजतः राज्ञः सकाशात् कुशलं कच्चित्। यस्य राज्ञो विषये देशो प्रजाः पाल्यमानाः सुखं यथा तथा वसन्ति स राजा मम प्रियः॥ ३४ ॥

यतो यस्माद्देशा दिह दुर्गं समुद्रजलात्मकं निस्तीर्य यदिच्छया यत्प्रयोजनेच्छया हेतुभूतया आगतः, तत्सर्वं मगुह्यञ्चेत् नोऽस्मभ्यं ब्रूहि, वयं किङ्करवामहे किङ्करा वयमित्यर्थः ॥ ३५ ॥

**एवमिति**। लीलया हेतुभूतया गृहीतो देहो येन। परो मा यस्मात् तस्मिन्महिम्नि तिष्ठतीति तथाभूते[4]- "स्वे महिम्नि प्रतिष्ठितः" (छान्दो० उ० 7-24-1)इति श्रुतेः। तेन भगवता इत्थं सम्पृष्टः सम्प्रश्नः प्रश्नविषये यस्य स ब्राह्मणः तस्मै श्रीकृष्णाय सर्वं पृष्टं वर्णयामास॥ ३६ ॥

---

1 K,T,W omit सन् 2 B omits स्वात् 3 B omits एव 4 K,T,W omit भूते

**विज०** यः स्वधर्मा दहीयमानः स्वधर्मत्यागी न स्यात्॥ ३१ ॥

सुरेश्वरोऽप्यसन्तुष्टः सुखं नाऽऽप्नोति, अकिञ्चिनो दरिद्रोऽपि सन्तुष्टः अलम्बुद्धिः॥ ३२ ॥

स्वतो लाभो यस्य धनस्य तत्तथा तेन॥ ३३ ॥

तस्य विषये राष्ट्रे, स राजा मे प्रियः॥ ३४ ॥

आगमनकारणं पृच्छति - यत इति। यतः कारणा त्तत्सर्वं कारणम्॥ ३५ ॥

परमेष्ठिना सर्वोत्तमेन॥ ३६ ॥

★ **रुक्मिण्या प्रेषित स्तेऽहं सकाशं पुरुषोत्तम।**
**तस्या स्सन्देश माकर्ण्य क्रियतां तदनन्तरम्[1]॥**

○ **निधाय[2] लिखितं पत्रं पादयोः प्रणनाम तम्।**
**तदादाय जगन्नाथः स्मितसुन्दरलोचनः॥**
**वाचयामास धर्मात्मा सादरं स्पृहयन्निव॥**

## रुक्मिण्युवाच

**श्रुत्वा गुणान् भुवनसुन्दर [3-]शृण्वतां ते[-3] निर्विश्य कर्णविवरैर्[4] हरतोऽङ्गतापम्।**
**रूपं [5-]दृशां दृशिमता मखिलार्थलाभं[-5] त्वय्यच्युताऽऽ विशति चित्त मपत्रपं मे॥ ३७ ॥**

**का त्वा मुकुन्द महती [6]गुणशीलरूप विद्यावयोद्रविणधामभि रात्मतुल्यम्।**
**[7-]धीरा पतिं[-7] कुलवती न वृणीत कन्या काले नृसिंह! नरलोकमनोभिरामम्॥ ३८ ॥**

☆ स त्वं मयाऽप्यभिवृतः पतिरिन्दिराया भक्तप्रियः कृपणलोकशरण्य ईशः।
मत्वैत दङ्ग तव पादसरोजदास्याः कामं कुरु प्रियतम प्रणताऽस्मि तेऽङ्घ्रिम्॥

तन्मे भवान् खलु वृतः पति रङ्ग! जाया मात्मार्पितश्च भवतेऽत्र विभो विधेहि।
मा वीरभाग मभिमर्शतु चैद्य आरा द्गोमायुव न्मृगपते र्बलि मम्बुजाक्ष॥ ३९ ॥

पूर्तेष्टदत्तनियमव्रतदेवविप्र गुर्वर्चनादिभि रलं भगवा न्परेशः।
आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे, न दमघोषसुतादयोऽन्ये॥ ४० ॥

---

★ The two half verses beginning with 'रुक्मिण्या' and ending with 'तदनन्तरम्' is not found in G,J,M,Ma edns But in the place of the half verse beginning with 'रुक्मिण्या' and ending with 'पुरुषोत्तम' three extra half verses are found in Ml,V edns as following, विदर्भाधिपतेः पुत्री रुक्मिणी तव किङ्करी। विज्ञापयति ते किञ्चित् प्रस्तुतोद्वाहमङ्गला॥ तया सम्प्रेषितोऽहं ते सकाशं भीष्मकन्यया॥
1 Ml,V य०

o The three half verses beginning with 'निधाय' and ending with स्पृहयन्निव are not found in G,J, Ml V edns 2 M,Ma बि० 3- -3 M,Ma सङ्गमास्ते 4 M,Ma ९ ह० 5- -5 M,Ma पर भुवनमङ्गल! मङ्गलं ते। 6 G,J,Ml,V कुल 7- -7 M,Ma व्रीडावती ☆ This extra verse is found in M,Ma edns only

**श्रीध०** रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम्। मुद्राम[1]उन्मुच्य कृष्णाय प्रेमचिह्नमदर्शयत्[2]॥ ब्राह्मणः श्रीकृष्णाज्ञया वाचयति - **श्रुत्वेति**। अयमर्थः -हे अच्युत! हे भुवनसुन्दरेत्यौत्सुक्यं द्योतयति। क्व तव महिमा, क्वचाहं रूपकुलशीलादियुक्ताऽपि, तथाऽपि अपगता त्रपा यस्मात् तन्मे चित्तं त्वय्याविशति आसज्जते। तत्कुतः? तत्राऽऽह - शृण्वतां कर्णविवरै रन्तः प्रविश्य अङ्गतापम्, अङ्गेति पृथक् सम्बोधनं वा। हरत स्तव गुणान् श्रुत्वा तथा दृशिमतां चक्षुष्मतां दृशा मखिलार्थलाभात्मकं रूपञ्च श्रुत्वेति॥ ३७ ॥

अहो कुलकन्याना मिद मतिधार्ष्ट्यमिति मा शङ्किष्ठाः[4] इत्याह - **का त्वेति**। हे मुकुन्द! हे नृसिंह नरश्रेष्ठ! का नाम कन्या कुलवती तथा महती रूपगुणोदारा[5] तथा धीरा धृतिमती[6] त्वा त्वां पतिं न वृणीत। [7]मय्येव केयं[7] दोषशङ्केति भावः। कथम्भूतं, कुलशीलादिभि रात्मनैव तुल्यं, निरुपममित्यर्थः। द्रविणं द्रव्यसम्पत् धाम प्रभावः तथा नरलोकस्य मनसा मभिरामोऽभिरमणं यस्मात्तम्। किञ्च काले विवाहावसरे॥ ३८ ॥

**तन्मे इति**। हे विभो! तत्तस्मान्मे मया भवा न्खलु पतिर्वृतः आत्मा च भवतोऽर्पितोऽत स्त्वम् अत्राऽऽगत्य मां भवतो जायां विधेहि। विपक्षे बाधकं द्योतयन्नाह - मा **वीरभागमिति**। वीरस्य तव भागं माम् आरात् शीघ्र [8]एत्याऽऽगत्य चैद्यः [9]शिशुपालः[9] मा अभिमर्शतु मा स्पृशतु मृगपतेः [10]सिंहस्य बलिं [11]भागं [12]गो मायुवत्[12] गोमायुः सृगाल इवेति॥ ३९॥

अनेकजन्मकृतैः सुकृतै रिदमेव मे[13] भूयादिति प्रार्थयते **पूर्तेति**। पूर्तं कूपादि, इष्ट मग्निहोत्रादि, दत्तं हिरण्यादि दानम्। नियम स्तीर्थाटनादिः, व्रतं कृच्छ्रादि॥ ४० ॥

---

1 B,J,Ml. चिह्ना० 2 B,J कृष्णानुज्ञया 3 Ml,V दर्शयति 4 J,Ml,V शङ्कीः 5 B,J पुरु० 6 Ml,V धीमती 7- -7 Ml V न मय्येव केवल 8 Ml,V, omit एत्य 9- -9 B,J omit 10 B,J omit सिंहस्य 11 B,J, omit भागं 12--12 Ml,V omit 13 B,J, Omit मे

वीर० [1]वर्णन मेवाऽऽह[-1]- रुक्मिण्येति। तव सकाशं समीपं प्रति प्रेषितोऽहं [2]हे कृष्ण! हे माधव[-2]! तस्याः [3]रुक्मिण्याः[-3] सन्देशं वाचिक माकर्ण्य अनन्तर [4]तत् रुक्मिण्युक्तं क्रियताम्। यद्वा, तदनन्तर श्रवणानन्तरं क्रियतां, यथोचितमिति शेषः॥

एवमुक्त्वा लिखितं, रुक्मिण्येति शेषः पत्रं पादयोः, भगवत इति शेषः निधाय तं श्रीकृष्णं प्रणनाम नमस्कृतवान्, [5]ब्राह्मण इति शेषः[-5]। तत्पत्रमादाय सादरं यथा तथा वाचयामास। ब्राह्मणमुखेनेति[6] शेषः। कथम्भूतो भगवान्[7]? स्मितेन सुन्दरे लोचने यस्य स धर्मात्मा याचितार्थप्रदानरूपधर्मप्रवणबुद्धिमान् इत्यर्थः[8]। स्पृहयन्निव वाचनेनैव लिङ्गेन तद्विषयक स्पृहां व्यञ्जयन्निवेत्यर्थः।

[9]अथ ब्राह्मणः श्रीकृष्णानुज्ञया वाचिकं वक्ति - श्रुत्वेति। हे भुवनसुन्दर! अनेनौत्सुक्यं द्योतयति। त्वद्गुणानेव[10] शृण्वतां जनानां कर्णरन्ध्रै रन्तः प्रविश्य अङ्गताप माध्यात्मिकं तापं हरत स्ते तव गुणान् तथा दृशिमता चक्षुष्मतां दृशा मखिलार्थाना मनुकूलविषयाणा लाभो यस्मा त्तथाभूत तव रूपञ्च श्रुत्वा हे अच्युत। मम चित्तं निर्लज्जं यथा तथा, चित्तविशेषणं वा? त्वय्येवाऽऽविशति आसज्जते क्वच तव महिमा क्वचाहं रूपशीलादियुक्तापि? तथा प्यपत्रपं निर्विशति इत्यभिप्रायेण अपत्रप मित्युक्तम्॥ ३७ ॥

अहो कुलकन्याना मिद मतिधाष्टर्य मिति मा शङ्किष्टा इत्याह - केति। हे मुकुन्द! हे नृसिंह! नरश्रेष्ठ! का नाम कन्या कुलवती तथा महती गुणोदारा तथा धीरा स्थिरचित्ता चेत् त्वा त्वाम् पतिं न वृणीत। तेन न मय्येव केवलं दोषशङ्केति भावः। कथम्भूतम्? गुणशीलादिभिः आत्मनैव तुल्यम् निरुपम मित्यर्थः[11]। द्रविणं द्रव्यसम्पत्, धाम तेजः, प्रभाव इति यावत्। तथा नरलोकस्य मनसः अभिराम मतीवानुकूलविषयभूतम्, किञ्च काले विवाहावसरे॥ ३८ ॥

तन्मे इति। हे विभो! [12]तत् तस्मा न्मे मया भवान् खलु पति र्वृतः आत्मा च भवते तुभ्यमर्पितः अतोऽङ्ग! हे कृष्ण! जायां भार्यां विधेहि। त्वमागत्य मामिति शेषः विपक्षे बाधकं द्योतयन्त्याह - मा [13]वीरभागमिति। हे अम्बुजाक्ष! मृगपतेः सिंहस्य बलि गोमायुः सृगाल इव वीरस्य तव भागभूतां मां चैद्यः शिशुपालः आरात् शीघ्रमागत्य मा[-13] माअभिमर्शतु मा स्पृशतु॥ ३९ ॥

अनेकजन्मार्जितैः[14] सुकृतैः इदमेव मे भूयादिति प्रार्थयते - पूर्तेति[15]। पूर्तं स्मार्तं कर्म वापीकूपतटाकादानमाणम् वा, इष्टं वैदिकं यज्ञादिकर्म[16]। दत्तादयः प्रदर्शनार्थाः। तत्र दत्तं दानं सत्पात्रे[17] द्रव्यत्यागात्मकं, नियम स्त्रीसंगत्यागादिः, व्रतं कृच्छ्रादिः देवादीनां द्वन्द्वः तेषामर्चनम्। आदिशब्देन भूतहितत्वदयादिसङ्ग्रहः। एभि र्यदि नूनं भगवा नाराधितः स्यात्तर्हि गदाग्रजः श्रीकृष्णः [18]श्वः आगत्य मम पाणिं गृह्णातु। [19]नत्वन्ये दमघोषसुतादयः[-19] [20]शिशुपालादयः गृह्णन्तु इत्यर्थ[-20]॥ ४० ॥

---

1- -1 TW omit 2- -2 K.T.W omit 3- -3 B omits 4 B omits तत् 5- -5 K.T.W omit 6 B वेति 7 K.T.W omit भगवान्। 8 K.T.W omit इत्यर्थः B 9 K.T.W omit अथ 10 K.T.W omit एव 11 B omits इत्यर्थः द्रविणं 12 B omits तत् 13- -13 B omits 14 K.T.W °तः 15 B °ति 16 K.T.W यागादि 17 TW °त्र० 18 B K एव 19- -19 B omits 20- -20 K.T.W omit

विज० धर्मः आत्मा स्वरूपं यस्य स तथा, सुकृतविषयो वा। स्पृहयन्निव कामयमान इव।

हे भुवनसुन्दर! श्रोतॄणां कर्णविवरं निर्विश्य अङ्गतापं शरीरसन्तापं हरतः सम्यग्गमो व्याप्तिः येषां ते तथा तान् स्वरूपाभिन्नान् वा ते तव गुणान् श्रुत्वा ते तव भुवनमङ्गल! मङ्गलं पर मुत्कृष्टं रूपञ्च श्रुत्वा मे चित्तं त्वय्यपत्रप माविशति॥ ३७ ॥

महती विशाला मनो गुणेनेति शेषः। धाम तेजः कुलवती शुद्धवंशा नरलोको मुक्तामुक्तप्रपञ्च स्तस्य मनोभिरामं मनांस्यभिरमयतीति॥ ३८ ॥

अभिवृतः आभिमुख्येन वृतः, एतद्भक्तप्रियत्वादिकं पादसरोजदास्याः मम यतोऽङ्घ्रिं प्रणतास्मि।

तत्तस्मात् हे अङ्ग! हे अम्बुजाक्ष! मां जायां विधेहि। च शब्द एवार्थे। अस्या मे ममाऽऽत्मा देहः भवतोऽर्पित एव। वीरस्य तव भाग मात्मानं आरात् दूरात् स्थातुं योग्य श्चैद्यो माऽभिमर्शतु मा स्पृशतु। तत्र दृष्टान्तमाह- गोमायुवदिति। गोमायवः सृगालाः मृगपतेः सिंहस्य बलिमुपहारम्॥ ३९-४० ॥

श्वो भाविनि त्व मजितोद्वहने विदर्भान् गुप्त[1] स्समेत्य पृतनापतिभिः परीतः[2]।
निर्मथ्य चैद्यमगधेन्द्र[3]बलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम्॥ ४१ ॥

अन्तःपुरान्तरचरी[4] मनिहत्य बन्धून् त्वा मुद्वहे कथमिति प्रवदा म्युपायम्।
पूर्वेद्यु रस्ति महती कुलदेवयात्रा[5] यस्यां बहि र्नववधू र्गिरिजा[6] मुपेयात्॥ ४२ ॥

★ तत्रैत्य मां रथपदातिगजाश्वयुक्तः सम्मथ्य शाल्वमगधान् सहचेदिभूपान्।
आदाय मां सहचरीभि रथो रमेशो गृह्णातु पाणि मुपनीय पुरीं स्वकीयाम्॥

यस्याङ्घ्रिपङ्कजरजस्स्नपनं[7] महान्तो वाञ्छ न्त्युमापति रिवाऽऽत्मतमोपहत्यै[8]।
यर्ह्यम्बुजाक्ष[9] न लभेय भवत्प्रसादं जह्या मसून् व्रतकृशान् शतजन्मभिः स्यात्[10]॥ ४३ ॥

श्रीशुक उवाच

▲ इति पत्रगतं विश्वं विमृश्य मधुसूदनः।
सन्देशं राजकन्याया स्तं ब्राह्मण मवैक्षत॥

ब्राह्मण उवाच

इत्येते गुह्यसन्देशा यदुदेव मयाऽऽहृताः।
विमृश्य कृत्यं[11] यच्चाऽत्र क्रियतां तदनन्तरम्॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे श्री वैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे
उत्तरार्धे रुक्मिण्युद्वाहप्रस्तावे द्विपञ्चाशोऽध्यायः॥ ५२ ॥

---

1 MMa गुप्ता स० 2 MMa समेतैः 3 MIV °धेश 4 MMa चरालवि० 5 BGJMMa देवि 6 K याम् ★ This extra verse is found only in MMa edns 7 MMa °स्स्तवन 8 MMa तमो निहत्यै 9 K.MMaW यद्य० 10 KMMaW स्याम् ▲ This additional verse is found only in MMa edns 11 BGJ कर्तुं, MMa युक्त

**श्रीध०** ननु चैद्याय बन्धुभिरर्पितायां त्वयि किमधुना करणीय मित्यपेक्षायामाह- **श्वो भाविनीति।** हे अजित! श्वो भाविन्युद्वहने विवाहे प्रथमं गुप्तोऽलक्षित एवाऽऽगत्य पश्चात्पृतनापतिभिः परिवृतस्सन् चैद्यादिबलं निर्मथ्य प्रसह्य बलात् [1-]वीर्यं प्रभावदर्शन[-1] मेव शुल्कं वैवाहिकं देयं यस्या स्तां माम् अनेन राक्षसविधिना उद्वह - इत्युपदेशरहस्यम्॥ ४१॥

ननु भवतु शिशुपालादिबलप्रमथनम् अन्तःपुरमध्यगताया स्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येते त्यत आह-**अन्तःपुरेति।** पुराद्बहि र्वर्तमानां गिरिजा मम्बिकाम्, अम्बिकागृहादेव मम हरणं सुकर मिति भावः॥ ४२॥

ननु किमनेनान र्थकारिणा निर्बन्धेन, चैद्योऽपि ताव त्प्रख्यातगुणकर्मा योग्य एव वर इति तत्राऽऽह - **यस्येति।** हे अम्बुजाक्ष! यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपन मात्मन स्तमसोऽपहत्यै उमापतिरिव महान्तो वाञ्छन्ति। तस्य भवतः प्रसादं यर्ह्यहं न लभेय न प्राप्नुयां, तर्हि व्रतै रुपवासादिभिः कृशा नसून् प्राणान् जह्यां त्यजेयम्। ततः किं[2] मित्यत आह- शतजन्मभिरिति। एवमेव वारं वारं जह्यां याव च्छतजन्मभिरपि तव प्रसादः स्यादिति॥ ४३ ॥

**इतीति।** अत्र य[3] त्कृत्यं करणीयं तद्विमृश्य क्रियताम्, तच्चाऽनन्तरमेव क्रियतामिति॥ ४४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
द्विपञ्चाशोऽध्यायः॥ ५२ ॥

---

1- -1 MIV वीर्यप्रदर्शन० 2 MIV किमत० 3 BJ य त्कर्तुं

**वीर०** ननु, बन्धुमि[1] श्चैद्यायार्पितायां त्वयि किं मधुना मया विधेय मित्यत्राऽऽह- **श्वो भाविनीति।** हे अजित! श्वो भावि न्युद्वहने विवाहे त्वं ताव द्गुप्तः अलक्षित एवाऽऽगत्य . ततः सेनापतिभिः परिवृतस्सन् चैद्यादिबलं निर्मथ्य पराभूय प्रसह्य हठात्, वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्या स्तां मां राक्षसेन विधिनोद्वह इत्युपदेशरहस्यम्॥ ४१ ॥

ननु भवतु[2] शिशुपालादि बलप्रमथनम् अन्तःपुरगताया स्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह- **अन्तरिति।** अन्तःपुरमध्यचरीं त्वां बन्धूनहत्वा कथ मुद्वहे इति चेत्, तत्रोपायं वदामि। **पूर्वेद्युः**, विवाहदिनादिति शेषः। महती कुलदेवयात्राऽस्ति, यस्यां यात्रायां बहिः, पुरादिति शेषः। नववधू रहं गिरिजा मम्बिका मुपेयां गच्छेयम्, दर्शनार्थमिति शेषः। अम्बिकागृहादेव मम हरणं सुकरमिति भावः॥ ४२ ॥

ननु किमनेनानु थर्थकारिणा निर्बन्धेन, चैद्योऽपि ताव त्प्रख्यातगुणकर्मा योग्य एव वर इत्यत आह- **यस्येति।** हे अम्बुजाक्ष! यस्य तव[3] भवतोऽङ्घ्रिरजोभिः स्नपन मात्मनस्तमसो पहत्यै [4]अज्ञाननिवृत्त्यै[4] उमापतिरिव अन्येऽपि महान्तो वाञ्छन्ति। तस्य भगवतः प्रसादं यद्यहं न लभेय न प्राप्नुयां, तर्हि व्रतै रुपवासादिभिः कृशा नसून् प्राणान् जह्यां त्यजेयम्। ततः किमि त्यत आह- शतजन्मभिरपि स्यां, तवाऽहं भार्या स्या मित्यर्थः॥ ४३ ॥

इत्थं वाचिकं पठित्वाऽथ स्ववचन मप्याह- **इतीति[5]** हे यदुदेव! इत्येवंविधा गुह्यतमाः सन्देशा मया आहृताः। यदत्र कर्तव्यं तद्विमृश्य क्रियतां, तच्च समनन्तरमेव क्रियता मिति॥ ४४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्विपञ्चाशोऽध्यायः॥ ५२ ॥

---

1 K.T.W omit 2 K.T.W. मां 3 K. omits तव 4- -4 B omits 5- -5 K.T.W आह द्विजः

**विज०** उद्वहने विवाहे श्वोभाविनि श्वः प्रभाते भविष्यति सति समेतैः पृतनापतिभिः गुप्तान् विदर्भा न्समेत्य राक्षसेन विधिना बलात् कन्याहरणलक्षणेन वीर्यं शुल्कं मौल्यं यस्याः सा तथा, तां माम्॥ ४१ ॥

नववधू र्दर्शनाय॥ ४२ ॥

**यथोमापतिः** श्रीहरिचरणसरसिजस्तुतिं करोति तस्य तव यदि भवत्प्रसादं पूज्यानुग्रहं न लभेय तर्हि असून् प्राणान् जह्यां त्यक्ष्यामि। किञ्च शतजन्मभिः व्रतकृशा तव भार्यैव स्या मित्यर्थः॥ ४३, ४४ ॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां**
**श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे**
**द्विपञ्चाशोऽध्यायः॥ ५२ ॥**

**(श्रीविजयध्वजरीत्या सप्त पञ्चाशोऽध्यायः)**

# त्रिपञ्चाशोऽध्यायः

(विजयध्वजरीत्या अष्टपञ्चाशत्तमोऽध्यायः)

### श्रीशुक उवाच

वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः।
प्रगृह्य पाणिना पाणिं[1] प्रहस न्द्विज[2]मब्रवीत् ॥ १ ॥

### श्रीभगवानुवाच

★ [3-]यथा सा रुक्मिणी नित्यं मच्चित्ताऽऽस्ते सुशोभना[-3]।
तथाऽहमपि तच्चित्तो निद्रां [4-]च न लभे[-4] निशि ॥
वेदाऽहं रुक्मिणा[5] द्वेषा न्ममोद्वाहो निवारितः ॥ २ ॥

तामानयिष्य उन्मथ्य राजन्यापशदा[6] न्मृधे।
मत्परामनवद्याङ्गी मेधसोऽग्निशिखामिव ॥ ३ ॥

### [7-]श्रीशुक उवाच[-7]

उद्वाहर्क्षं रा[8] विज्ञाय रुक्मिण्या मधुसूदनः।
रथ स्संयुज्यता माशु दारुकेत्याह सारथिम् ॥ ४ ॥

स चाश्वैः सैन्य[9]सुग्रीवमेघपुष्पवलाहकैः।
युक्तं रथ मुपानीय तस्थौ प्राञ्जलि रग्रतः ॥ ५ ॥

1 K W पाणौ 2 B J ०न्दिदम० ★This additional verse (3 halves) is not found in G, J, M, Ma edns 3--3 Ml, V यथा विनिद्रा मच्चित्ता रुक्मिणी रुचिरानना। 4--4 M Ma नाऽध्यगमं 5 Ml, V, W °णो 6 B, G, J, M, Ma °स० 7--7 M, Ma, Ml, V omit 8 B G, J M, Ma च 9 B, G, J, M, Ma शैब्य

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रिपञ्चाशत्तमे गत्वा विदर्भा नद्धुतेहितः। रुक्मिणी म[1]हर त्कृष्णो मिषतां द्विषतां बलात्॥

**यथेति।** निद्राया अलाभे कारणान्तरं- वेदेति। [2-]उद्वाहो निवारित इति[-2] तया अकथितमप्यहं जानामीति॥ १,२,॥

**तामिति।** आनयिष्ये आ[3]नेष्यामि। राजन्यापश[4]दान् राजसु हीनान्। उन्मथ्याऽऽनयने दृष्टान्तः- एधस इति॥ ३॥

**उद्वाहर्क्षमिति।** परश्वो रात्रौ विवाहनक्षत्र मिति वि[5]ज्ञाय॥ ४ ॥★

**स इति।** शै[6]ब्येत्यादीनि चत्त्वरि अश्वनामानि॥ ५ ॥

---

1 Ml, V °मा० 2--2 B, J omit 3 Ml, V आनयिष्यामि 4 B, J °स० 5 Ml, V ज्ञात्वा ★ The commentary of 6th verse is attached to the 4th verse in B, J edns. 6 Ml.V सैन्ये०

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**वैदर्भ्या** इति। तत स्स भगवान् यदुनन्दनस्तु **वैदर्भ्याः** सन्देश माकर्ण्य स्वपाणिना द्विजं पाणौ गृहीत्वा [1]प्रहसन् उवाच॥ १ ॥

उक्तिमेवाह - **यथेति।** मच्चित्तेति निद्राया अलाभे हेतुः। तथा तच्चित्त इत्यपि हेत्वन्तरं चाह-वेदेति। मयि द्वेषाद्धेतोः रुक्मिणा मदुद्वाहो निवारित इत्यहं वेद्मि। अतश्चाहं निद्रां न लभे इत्यर्थः॥ २ ॥

अधुना तु राजन्याधमान् युद्धे उन्मथ्य अनवद्यानि निर्दुष्टानि शोभनान्यङ्गानि यस्याः। अहमेव परो यस्याः, तां मच्चित्तां वा, तां रुक्मिणीं आनयिष्यामि, उन्मथ्य आनयने दृष्टान्तः- एधसो दारुणोऽग्निशिखामिवेति॥ ३ ॥

इति ब्राह्मण मुक्त्वाऽथ सूतमाह इत्याह- **उद्वाहेति।** मधुसूदनो रुक्मिण्या[3] उद्वाहर्क्षं परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय सारथिमाह- [2-]किमिति[-2]? हे दारुक! रथ स्संयुज्यता मश्वै स्संयुक्तः क्रियताम् ॥ ४ ॥

ततो दारुकः सैन्याद्याख्यैः चतुर्भि श्श्रेष्ठैः अश्वै र्युक्तं रथ मुप समीप मानीय अग्रतः पुरतः बद्धाञ्जलिः तस्थौ॥ ५॥

---

1 B omits प्रहसन् 2- - 2B कल्पेति। 3 B adds इति।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मम द्वेषात् रुक्मिणा विवाहो निवारित इतीम मर्थं अहं वेद वेद्मि॥ १,२ ॥

एधसः काष्ठा दग्नेः शिखां ज्वालाम्॥ ३ ॥

उद्वाहर्क्षं विवाहनक्षत्रम्॥ ४ ॥

हयै र्युक्तम्॥ ५ ॥

**आरुह्य स्यन्दनं शौरि र्द्विज मारोप्य तूर्णगैः।**
**आनर्ता देकरात्रेण विदर्भा नगम द्धयैः॥ ६ ॥**

**राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः।**
**शिशुपालाय स्वां[1] कन्यां दास्य न्कर्माण्यकारयत्॥ ७ ॥**

**पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम्।**
**चित्रध्वजपताकाभि स्तोरणैः समलङ्कृतम्॥ ८ ॥**

**स्रग्गन्धमाल्याभरणै र्विरजो[2-]ऽ[-2][3]म्बरभूषितैः।**
**जुष्टं स्त्रीपुरुषैः श्रीमद्गृहै[4] रगरुधूपितैः॥ ९ ॥**

**पितॄ[5] न्देवा न्समभ्यर्च्य विप्रांश्च विधिव न्नृप।**
**भोजयित्वा यथान्यायं[6] वाचयामास मङ्गलम्॥ १० ॥**

1 MI V ता 2- -2 M, Ma, MI, V °जाऽम्बर 3 M Ma भूषणैः 4 B, G, J, M, Ma °गु० 5 MI V पितृदे० 6 MI V °य्य

**श्रीध० ★ आरुह्येति।** तस्यां रात्र्यां प्रस्थाय प्रातः विदर्भदेशा नगमत्। श्वोभाविनि त्वं अजित! उद्वहने विदर्भान् गुप्तः समेत्येति रुक्मिणीसन्देशात्॥ ६ ॥

**राजेति।** पुत्रस्य रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा। अनेन शिशुपाले अ[1]नभिरुचिं द्योतयति। कर्माणि पुरालङ्कारपितृ[2]देवार्चनादीनि ॥ ७ ॥

तान्येवाह- **पुरमित्यादि** चतुर्भिः। सम्मृष्टाः संसिक्ताश्च मार्गादयो यस्मिन् तत्। चित्रा ध्वजेषु पताकास्ताभिः समलङ्कृतमकारयत्॥ ८ ॥

**स्रगिति।** स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः। यद्वा स्रग्गन्धमाल्यानि आबिभ्रतीति तथा तैः विरजो[3]ऽम्बरैः भूषितैश्च स्त्रीपुरुषैर्जुष्टम्। तथा श्रीमद्भि र्गृहैश्च जुष्टम्॥ ९ ॥

पितॄनिति। यथान्यायमन्यांश्च[4]। कन्यां प्रति मङ्गलं वाचयामास॥ १०

★ The commentary of 6th verse is attached to the 4th verse in B. J. edns 1. Ml. V अनीडाविरमि॰ 2 Ml. V °क्ता॰ 3 Ml. V °जै रन्यैः 4 Ml. V °न्य॰।

वीर॰ आरुह्येति। तावत् द्विज मारोप्य तत स्स्वयमपि स्यन्दनं रथ मारुह्य आनर्तात् स्वदेशा द्विदर्भान् देशान् हयै स्तुरगै[1] रेकरात्रेणाऽगमत्। तस्यां रात्र्यां प्रस्थाय प्रातः विदर्भदेशा नगमदित्यर्थः। "श्वोभाविनि त्व मजितोद्वहने" (भाग 10-52-4) इति[2]। रुक्मिणीसन्देशात्॥ ६ ॥

राजेति। कुण्डिनपति र्भीष्मकः पुत्रस्य रुक्मिणः स्नेहवशङ्गतः पुत्रस्नेहेन तत्परतन्त्रीभूत इत्यर्थः। दास्यन् 'लक्षणहेत्वोः' (अष्टा. 3-2-126) इति शत्रादेशः, दातुमित्यर्थः। कर्माणि पुरालङ्कारपितृदेवार्चनादीनि कारयामास॥ ७ ॥

कर्माण्येवाह- पुरमिति चतुर्भिः। सम्मृष्टा स्संसिक्ताश्च मार्गादयो यस्मिन् तत्, चित्रध्वजेषु पताका[3-] स्ताभिः[-3] तोरणैश्च सम्यगलङ्कृत मकारयत्॥ ८ ॥

स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थीयोऽर्श आद्यच् द्रष्टव्यः। स्रगादिमद्भिः तथा विरजोम्बरैश्च भूषितैः स्त्रीपुरुषै र्जुष्टं तथा श्रीमद्भिः अगरुणा धूपितै र्गृहैश्च जुष्टम्॥ ९ ॥

पितॄन्देवांश्च सम्यगभ्यर्च्य हे नृप! सविसर्गपाठे भीष्मकः, विप्रान् यथाविधि भोजयित्वा विधिव त्समभ्यर्च्येति वा। यथान्यायं भोजयित्वा रुक्मिणीं प्रति मङ्गलं वाचयामास, यथान्याय मन्याश्च कन्याः प्रति मङ्गलं वाचयामास इति वार्थः॥ १० ॥

---

1 B. °रै॰ 2 B. इत्यादि 3- -3 B. °काभिः

कार्याणि विवाहयोगकार्याणि अकारयत्॥ ६,७ ॥

उक्तमेव स्पष्टयति - पुरमिति। प्राक् सम्मृष्टा स्त्यक्तावस्कराः पश्चा त्संसिक्ताः गोमयोदकादिप्रोक्षिता मार्गादयो यस्मिन् तत्तथा॥ ८- १० ॥

[1-]सुस्नातां सुदतीं कन्यां[-1] कृतकौतुकमङ्गलाम्[2]।
अहतांशुकयुग्मेन भूषितां[3] भूषणोत्तमैः॥ ११ ॥

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः।
पुरोहितोऽथर्वविद् वै जुहाव ग्रहशान्तये॥ १२ ॥

हिरण्यरूप्यवासांसि[5] तिलांश्च गुडमिश्रितान्।
प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः॥ १३ ॥

एवं चेदिपती[6] राजा दमघोषः सुताय वै।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम्॥ १४ ॥

मदच्युद्भिर्गजानीकैः स्यन्दनै र्हेममालिभिः।
पत्त्यश्वसङ्कुलैः[7] सैन्यैः परीतः कुण्डिनं ययौ॥ १५ ॥

1- - 1 M, Ma सुस्नाता सुदती कन्या 2 M, Ma °ला 3 M, Ma °ता 4 W मन्त्रैः 5 Ml, V रौ० 6 M, Ma चैद्य 7 Ml, V °श्वैस्स०

**श्रीध० सुस्नातामिति।** कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम्। अहतं नवीनम्। भूषणोत्तमैश्च भूषिताम्॥ ११ ॥

**चक्रुरिति।** वध्वा[-1] स्तस्याः कन्यायाः, सामादिभि[1-] र्मन्त्रैः रक्षां चक्रुः अथर्वमन्त्रैः रक्षां चक्रुः। अथर्ववित् पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव॥ १२, १३ ॥

**एवमिति।** अभ्युदये उचितम्॥ १४ ॥

**मदेति।** ततः चतुरङ्गसैन्यैः परीतः परिवृतः कुण्डिनं भीष्मकस्य[2] पुरं ययौ। मदं च्यवन्ते इति[3] मदच्युत स्तैः। स्यन्दनैः रथैः हेमरचिता माला विद्यन्ते येषु तैः॥ १५ ॥

1- -1 J Ml V अथर्ववित् आथर्वणवेदमन्त्रवित्। 2 Ml V °क पु० 3 Ml V omit इति

**वीर०** कथम्भूताम्? **सुस्नातामिति।** कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम्। अहतयोः नवीनयोः अंशुकयो र्युग्मेन भूषणोत्तमैश्च अलङ्कृतां चक्रुरिति॥ ११ ॥

वध्वा स्तस्याः कन्यायाः सामादिभिः मन्त्रैः रक्षां च चक्रुः[1]। अथर्वमन्त्रवित्[2] पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव॥ १२॥

**हिरण्येति।** विधिविदां विधिज्ञानां वरो राजा भीष्मकः हिरण्यादीन् धेनूश्च विप्रेभ्यः प्रादात्॥ १३ ॥

एवं यथा रुक्मिण्यै तथा दमघोषः सुताय शिशुपालाय च सर्वमभ्युदयोचितं कर्म मन्त्रज्ञैः द्विजैः कारयामास॥ १४॥

ततो मदजलानि स्रवद्भिः गजानां अनीकैः हेम्नो माला येषां सन्तीति तथा तैः रथैः पदातिभि रश्वैश्च सङ्कुलै र्व्याप्तैः सैन्यैश्च परिवृतः, चैद्य इति शेषः। कुण्डिनं पुरं ययौ॥ १५ ॥

1 B adds अथर्व रक्षा च चक्रुः 2 B omits मन्त्र

**विज०** सुस्नाताऽभूदिति शेषः। कृतं कौतुके कुतूहले महोत्सवे मङ्गलं यस्याः सा तथा। यद्वा कृतं कौतुकं हस्तसूत्रलक्षणं मङ्गलं यस्या स्सा तथा। "आबध्नन्ति करे सूत्रं माङ्गल्यार्थं नवस्त्रियाः" इति, "कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले, कामे ख्याते मङ्गले च" (वैज..को 7-3-10,11) इति यादवः। अहतांशुकयुग्मेन नूतनवस्त्रयुगलेन। "अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः" (वैज.को. 7-3-1) इति च॥ ११ ॥

गृहा नेतान् रक्षया विवृणोमीत्याद्यथर्ववेदोक्तवित्॥ १२ ॥

रूप्यं रजतम्॥ १३ ॥

सुताय शिशुपालाय॥ १४ ॥

पूर्वोक्तयात्राशेषं कथयति - **मदच्युद्भिरिति**। मदच्युद्भिः मदजलस्राविभिः॥ १५ ॥

**[1-]तं वै विदर्भाधिपतिः[-1] [2-]समभ्येत्याऽभिपूज्य[-2] च।**
**निवेशयामास मुदा कल्पितान्यनिवेशने॥ १६ ॥**

**तत्र सा[3]ल्वो जरासन्धो दन्तवक्त्रो विदू[4]रथः।**
**आजग्मु श्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः॥ १७ ॥**

**कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम्।**
**यद्यागत्य हरे त्कृष्णो रामाद्यै र्यदुभि र्वृतः॥ १८ ॥**

**योत्स्यामः स[5]हिता स्तेन इति निश्चितमानसाः।**
**★ आजग्मु र्भूभुज[6]स्सर्वे समग्रबलवाहनाः॥ १९ ॥**

**श्रुत्वैत द्भ[7]गवा न्रामो विपक्षीयनृपोद्यमम्।**
**कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः॥ २० ॥**

**बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः।**
**त्वरितः कुण्डिनं प्रागा[8] द्गजाश्वरथपत्तिभिः॥ २१ ॥**

1- -1 MI V तं विदर्भाधिपस्सम्यक् 2- -2 M, Ma समेत्याभि० 3 B, G, J, M, Ma शा० 4 MI, V, W °डू० 5 B, G, J, सहता०

★ This half verse is not fonud in MI, V editions 6 K, W °श्चान्ये 7 K, W °द्बल० 8 MI, V °या०

**श्रीध० तमिति।** कल्पितं निर्मितं यदन्यत्[1] निवेशनं तस्मिन्॥ १६, १७ ॥

**कृष्णेति।** यदि श्रीकृष्णो हरे दिति शङ्किताः। कन्यां साधयितु मित्यर्थः॥ १८-२१ ॥

1 B J °न्यनि०

**वीर०** तं चैद्यं समभ्येत्याऽभिपूज्य च कल्पितं निर्मितं यदन्य न्निवेशनं तस्मिन् मुदा निवेशयामास॥ १६ ॥

**तत्रेति।** कृष्णरामौ द्विषन्तीति तथा ते चैद्यपक्षानुवर्तिनः साल्वादयः पौण्ड्रकाद्याश्च सहस्रशः॥ १७ ॥

यत्तास्सन्तः चैद्याय कन्या साधयितु माजग्मुः। कथम्भूताः? रामाचै र्यदुभिः परिवृतः श्रीकृष्णः आगत्य यदि कन्यां हरेत्, तर्हि सर्वे वयं सङ्घीभूता स्तेन कृष्णेन सह योत्स्यामः। चैद्याय कन्यां साधयिष्यामः- इतीत्थं कृतः निश्चयो यै स्तथाभूताः, तथा अन्ये च भूभुजो राजानः समग्राणि बलानि वाहनानि येषां तथाभूताः आजग्मुः॥ १८-१९॥

बलवान् प्रशस्तबलसम्पन्नः रामः विपक्षीयाणां [1-]शत्रुपक्षीयाणां[-1] राज्ञा[2] मुद्यमं प्रयत्नं श्रुत्वा कन्या माहर्तुं गत मेकम सहायं श्रीकृष्णं ज्ञात्वा नूनं तत्र कलहो भविष्यतीति शङ्काऽस्य सञ्जातेति तथाभूतः, भ्रातरि कृष्णे स्नेहेन व्याप्तः महता विपुलेन बलेन[3] सह, बलमेव प्रपञ्चयति- गजाश्वरथपत्तिभिरिति। त्वरितः सञ्जातत्वरः कुण्डिनं पुरं प्रति प्रागात्॥ २०, २१ ॥

1- -1 K omits 2 B °ज्ञा समु० 3 K omits बलेन

**विज०** तदर्थं कल्पितेऽन्यस्मिन् निवेशने गृहे॥ १६ ॥

तत्र कुण्डिनपुरे॥ १७-२१ ॥

**भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः।**
**प्रत्यापत्तिमपश्यन्ती द्विजस्याऽचिन्तयत्तदा॥ २२ ॥**

**अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः।**
**नाऽऽगच्छ त्यरविन्दाक्षो नाऽहं वेद्म्यत्र कारणम्।**
**सोऽपि नाऽऽवर्ततेऽद्यापि मत्सन्देशहरो द्विजः॥ २३ ॥**

**अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चि ज्जुगुप्सितम्।**
**मत्पाणिग्रहणे नूनं नाऽऽयाति हि कृतोद्यमः॥ २४ ॥**

दुर्भगाया न मे धाता नाऽनुकूलो महेश्वरः।
देवी वा विमुखी[1] गौरी रुद्राणी गिरिजा सती॥ २५ ॥

1 B, G, J, M, Ma °खा

**श्रीध०** सूर्योदया त्पूर्वमे वौत्सुक्येन रुक्मिण्यचिन्तय दित्याह- **भीष्मकन्येति**। प्रत्यापत्तिं प्रत्यागमनम्॥ २२ ॥

**अहो** इति। त्रियामा रात्रिः तावन्मात्रेणान्तरितः **अल्पराधसो मन्दभाग्यायाः**॥ २३ ॥

**अपीति**। जुगुप्सितं धाष्टर्चादि। अपीति शङ्कायाम्। नाऽऽयाति हि कृतोद्यम इति। अयमर्थः[1]- आदौ कृतोद्यमत्वा त्तं न प्रस्थापितवान्, प्रस्थानावसरे च[2] किञ्चि न्मयि जुगुप्सितं मत्वा प्रत्याचष्ट, अतः सोऽपि द्विजो नूनं नाऽऽयातीति॥ २४ ॥

यद्वा ततो निर्गतोऽपि श्रीकृष्णो मद्दैववैमुख्यात् क्वचि त्प्रतिबद्धो भवेदित्याह- **दुर्भगाया** इति॥ २५ ॥

1. MI.V. अस्यार्थः 2 MI V वा

**वीर०** ततः पूर्वमेव रुक्मिणी औत्सुक्यादचिन्तयदित्याह- **भीष्मकन्येति**। हरेरागमनमाकाङ्क्षन्ती[1] द्विजस्य प्रेषितस्य प्रत्यापत्तिं प्रत्यागमन मपश्यन्ती च अचिन्तयत्॥ २२ ॥

चिन्ताप्रकार[2] मेवाह- **अहो** इति चतुर्भिः। त्रियामा रात्रिः तावन्मात्रान्तरितो मन्दभाग्याया मम विवाहः। अरविन्दाक्षः कृष्णः[3] अधुनाऽपि नाऽऽगच्छति। अत्र अनागमने कारणं न वेद्मि। यश्च मत्सन्देशहरो द्विज स्सोऽप्यद्यापि नावर्तते नागच्छति॥ २३ ॥

अपि किं वा अनवद्यात्मा मुकुन्दः किञ्चि न्मयि जुगुप्सितं धाष्टर्चादिकं[4] दृष्ट्वा मत्पाणिग्रहणे निमित्ते कृतः उद्यमः प्रयत्नो येन तथाभूतोऽपि[5] नूनं नाऽऽयाति नाऽऽगच्छत्येव कि मित्यर्थः॥ २४ ॥

किं वा धाता[6] विश्वकृत् महेश्वरो दुर्भगाया मम अननुकूल[7] एव। किं वा रुद्रस्य स्त्री मम विमुखी प्रतिकूला[8]॥ २५ ॥

1 B °माणा 2 B omits प्रकार 3 B भगवान् 4 B adds अपि 5 K, T, W omit अपि 6 B adds तु 7 B नानु कू० 8 B adds एव

**विज०** वरो वरणीय आरोहो जघनप्रदेशो यस्यास्सा तथा प्रत्यापत्तिं पुनरागमनम्॥ २२ ॥

**त्रियामान्तरितः** रात्रिमात्रव्यवहितः **अल्पराधसः** मन्दीभूतकार्यसिद्धेः॥ २३, २४ ॥

"गौरोऽरुणे सिते पीते" (अम.को 3-344) इति गौरी (र) शब्दस्याऽदन्तस्य अनेकार्थवाचित्वेनाऽनिश्चय इत्यतो रुद्राणीति। सामान्यविवक्षायां गङ्गाया अपि तत्पत्नीत्वेन संशयाऽनिस्तार इत्यतो गिरिजेति। "गिरिजा मेनकात्मजा"

(हला.को 1-16) इत्यभिधानम्। नन्वभिधानस्य योगबलानुसारित्वेन प्रवृत्तेः नचा अपि गिरिजात्वा दित्वतः सतीति। "सती सती योगविसृष्ट देहा तां जन्मना (ने) शैलवधूं प्रपेदे" (कुमा.सं.) इति॥ २५ ॥

एवं चिन्तयती बाला गोविन्दहृतमानसा।
न्यमीलयत कालज्ञा नेत्रे अश्रु[1]कलाकुले॥ २६ ॥

एवं वध्वा प्रतीक्षन्त्या गोविन्दाऽऽगमनं[2] नृप।
वाम ऊरु र्भुजो नेत्र मस्फुर न्प्रियशंसिनः[3]॥ २७ ॥

अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः।
अन्तःपुरचरीं[4] देवीं राजपुत्रीं ददर्श ह॥ २८ ॥

सा तं प्रहृष्टवदन मव्यग्रात्मगतिं सती।
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता॥ २९ ॥

[5-]आवेदयामास तस्यै[-5] तं [6-]प्राप्तं[-6] यदुनन्दनम्।
उक्तं च सत्यवचन मात्मोपनयनं प्रति॥ ३०॥

1 B, G, J चाश्रु 2 M, Ma °न्द० 3 B, G J M, Ma भाषिणः 4 M Ma MI, V °रा 5- -5 B, G, J तस्या आवेदय त्प्राप्त 6- -6 B, G, J शशस, K सराम, M, Ma सम्प्राप्त

**श्रीध० एवमिति।** कालज्ञा न [1-]अधुनापि[-1] गोविन्दागमनकाल इति मन्वाना किञ्चि दाश्वस्तचित्ता सती चिन्तास्तब्धे लेचने निमीलितवतीत्यर्थः॥ २६ ॥

**एवमिति।** प्रियशंसिनः[2] प्रियसूचकाः॥ २७ ॥

**अथेति।** पुरोपवनं प्राप्तेन श्रीकृष्णेन विनिर्दिष्टः प्राप्तं मां कथयेत्यादिष्टः॥ २८ ॥

**सेति।** न व्यग्रा आत्मनो देहस्य गति र्यस्य तम्। लक्षणाभिज्ञा दूतस्य लक्षणं [3-]तत्कालकर्मभिः[-3] अभिजानातीति तथा॥ २९ ॥

**आवेदयामासेति।** तस्यै प्राप्तं यदुनन्दन मावेदितवान्। तच्च शशांस। आत्मोपनयनं प्रात आत्मना स्वय श्रीकृष्णस्याऽऽनयनं प्रति तेन द्विजेन सत्यवचनं प्रोक्तमिति। आत्मनः प्राणेश्वरस्येति वा। यद्वा आत्मनः तस्या उपनयनं प्रति श्रीकृष्णेन यदुक्तं सत्यवचनं "ता मानयिष्ये" इत्यादि, तच्च शशंसाऽवर्णयदित्यर्थः॥ ३० ॥

1- 1 MLV. अधुना 2 B, J भाषिणः 3- -3 B, J तत्तत्कार्यसूचकम्

वीर० एवमिति। इत्थं चिन्तयन्ती बाला रुक्मिणी गोविन्देन हृतं मानसं यस्यास्सा। कालज्ञा नाऽधुनाऽपि गोविन्दागमनकाल इति मन्वाना अश्रुबिन्दुभि राकुले स्तब्धे लोचने न्यमीलयत निमीलितवती॥ २६ ॥

हे नृप! इत्थं गोविन्दागमनं गोविन्दागमनवार्ताहरं द्विजं तदागमनद्वारं च प्रतीक्षन्त्याः रुक्मिण्या वामा[1] ऊर्वादयः प्रियशंसिनः कृष्णागमनरूपप्रियसूचकाः अस्फुरन् सञ्चलितवन्तः॥ २७ ॥

अथ ततः यः[2] पूर्वम् आत्मना प्रेषितः स एव द्विजः श्रीकृष्णेनाऽऽदिष्टोऽन्तःपुरचरीं रुक्मिणीं ददर्श ह॥ २८॥

सा रुक्मिणी न व्यग्रा आत्मनो देहस्य गतिर्यस्य, प्रहृष्टं वदनं यस्य तं द्विजमालक्ष्य लक्षणाभिज्ञा दूतलक्षणतत्कार्यभिज्ञा अत एव शुचिस्मिता सती सम्यगपृच्छत्॥ २९ ॥

तस्यै पृच्छन्त्यै रुक्मिण्यै रामेण सहितं कृष्णं प्राप्तमागत मावेदयत् शशंस। आत्मोपनयनं प्रति आत्मनो रुक्मिण्याः उपनयनं स्वसमीपप्रापणं प्रति भगवता यत्सत्यवचन मुक्तं- "ता मानयिष्य उन्मथ्य राजन्यापशदा न्मृधे मत्परा मनवद्याङ्गी-मेधसोऽग्निशिखामिव" (भाग.10-53-3) इत्युक्तं सत्यवचनं शशंसेत्यर्थः॥ ३० ॥

---

1 T W omits वामा 2 B omits यः

विज० ध्यानकालज्ञा॥ २६ ॥

वाम ऊरु रस्फुरत् नेत्रभुजा वस्फुरताम्। प्रियभाषिणः अभीष्टकार्यशंसिनः॥ २७, २८ ॥

अव्यग्रात्मगति मसम्भ्रान्तनिजगमनम्॥ २९, ३० ॥

तमागतं समाज्ञाय वैदर्भी हृष्टमानसा।
न पश्यन्ती ब्राह्मणाय प्रियमन्य न्ननाम सा॥ ३१ ॥

प्राप्तौ श्रुत्वा स्वदुहितु रुद्वाहप्रेक्षणोत्सुकौ।
अभ्यया त्तूर्यघोषेण रामकृष्णौ समर्हणैः॥ ३२ ॥

मधुपर्क मुपानीय वासांसि [1-]स्रुचिराणि[-1] सः।
उपायना न्यभीष्टानि विधिव त्समपूजयत्॥ ३३ ॥

तयो र्निवेशनं श्रीमदुपकल्प्य महामतिः।*
बाह्योद्याने कुण्डिनस्य यथायोगं सुविस्तृतम्॥
आवेद्य पूर्णं[2] नगरं जरासन्धादिभि र्नृपैः॥
ससैन्ययोः सानुगयो रातिथ्यं विदधे यथा॥ ३४ ॥

एवं राज्ञां समेतानां यथावीर्यं यथावयः।
यथाबलं यथावित्तं[3] सर्वैः कामैः समार्हयत्[4]॥ ३५॥

कृष्ण मागतमाकर्ण्य विदर्भपुरवासिनः।
आगत्य नेत्राञ्जलिभिः पपु स्तन्मुखपङ्कजम्॥ ३६ ॥

अस्यैव भार्या भवितुं रुक्मिऽण्यर्हति नापरा।
असाव प्यनवद्यात्मा भैष्म्याः समुचितः पतिः॥ ३७ ॥

किञ्चि त्सुचरितं य न्न स्तेन तुष्ट स्त्रिलोककृत्।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणि मच्युतः॥ ३८ ॥

उवाच[-5]

एवं प्रेमकलाबद्धां वदन्ति स्म पुरौकसः।
कन्या चाऽन्तः पुरा त्प्रागा द्भटै र्गुप्ताऽम्बिकालयम्॥ ३९ ॥

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम्[6]।
☆ परिवारैः कतिपयैः युक्तो यादवनन्दनः।
सा चाऽनुध्यायती सम्य ङ्मुकुन्दचरणाम्बुजम्॥ ४०॥

1- -1 B G J Ml V विरजासि ★ After this half-verse, a verse beginning wit नाद्योपाने is found in B M Ma edns only and it is commented by Vijayadhwaja 2 B पूर्ण० 3 K. W कृत्त 4 Ml V °मार्प० 5- -5 G, J, K, Ml, V, W omit 6 K, पङ्कजम्
☆ This additional half-verse is found in B, M, Ma edns

**श्रीध०** - **तमिति**। तं श्रीकृष्णम्। अस्मिन्काले[1] सर्वस्वार्पणम प्यपर्याप्त मिति तदुचितं प्रिय मपश्यन्ती तदा केवलं ननाम। पश्चा द्बहु ददावित्यर्थः। यद्वा मां श्रियं ये नमन्ति ते तावत् सर्वसम्पदा मास्पदं भवन्ति किं पुन र्मयि प्रणताया मिति ततोऽधिक मन्य त्प्रि यमपश्यन्ती ननामेति॥ ३१-३३ ॥

**तयोरिति**। महामति रित्यनेन श्रीकृष्णो बाढं कन्या मुद्वोढुमेवाऽऽगतः स्या दिति [illegible] विधिना समपूजयदिति सूचितम्। यथा यथावत्॥ ३४ ॥

**एवमिति।** समेतानां राज्ञां मध्ये वीर्या द्यनतिक्रम्य तं तं समर्हितवानित्यर्थः[2]॥ ३५ ॥

श्रीकृष्णे भाविकर्मसूचकं जनानुरागं दर्शयति- **कृष्ण मागत मिति** त्रिभिः॥ ३६ ॥

**अस्येति।** अस्यैव रुक्मिण्येवाऽर्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि। तत्रैकस्मि न्व्यतिरेक प्रदर्शनाऽमुपलक्षणार्थं ना परेति। न च वाक्यभेददोषः। अनूद्यविधेयविधि[3]भेदेन विभिन्नाना मेकवाक्यानां[4] सहप्रयोगात् ग्रहं सम्मार्ष्टीत्यादिवदिति॥ ३७ ॥

**किञ्चिदिति।** अयमेवाऽनुग्रह इति निर्दिशन्ति- **गृह्णात्विति**॥ ३८ ॥

**एवमिति।** प्रेम्णः कला लेश स्तेन बद्धा वदन्ति स्म। सम्पूर्णं प्रेम तेषां हृद्येवाऽवर्तत इत्यर्थः॥ ३९ ॥

तस्याः[5] गमनं[6] विशिनष्टि- **पद्भ्यामिति** द्वयेन॥ ४० ॥

---

1 B, J °र्थे 2 MI, V °मर्पि० 3 B, J, omit विधि 4 B, J °मेव 5 B, J omit तस्याः 6 MI V add °आ

**वीर०** ततस्तं श्रीकृष्ण मागतं ज्ञात्वा हृष्टं मानसं यस्यास्सा रुक्मिणी ब्राह्मणाय प्रत्युपकर्तुं प्रियं योग्यं वस्त्वपश्यन्ती केवलं ननाम॥ ३१ ॥

**प्रामाविति।** स्वदुहितु रुद्वाहप्रेक्षणे निमित्ते उत्सुकौ प्राप्तौ उद्वाहदिदृक्षयाऽऽगतावित्यर्थः। श्रुत्वा तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्याजगाम॥ ३२ ॥

तत स्स भीष्मको मधुपर्कादीनि समर्प्य यथाविधि सम्यगपूजयत्। तत्रोपायनानि श्रेष्ठवस्तूनि॥ ३३ ॥

महामतिः भीष्मकः तयोः रामकृष्णयोः श्रीमत् भोग्यभोगोपकरणादिसमृद्धिमत् निवेशनं गृह मुपकल्प्य सभृत्ययो स्ससैन्ययोश्च तयोः यथाव दातिथ्यं चक्रे॥ ३४ ॥

इत्थ मन्येषामपि सर्वेषां समुदितानां राज्ञां तत्तद्वीर्यवयःप्रभृत्यनुरूपं सर्वैः कामैः अपूजयत्॥ ३५ ॥

**कृष्णमिति।** विदर्भपुरवासिनः कुण्डिनपुरवासिनो जनाः कृष्ण मागतं श्रुत्वा इतस्ततः स्थित्वेति शेषः। तस्य कृष्णस्य मुखपङ्कजं मुखपङ्कजस्य लावण्यसुधां नेत्ररूपैरञ्जलिभिः पपुः पीतवन्तः॥ ३६ ॥

किञ्च, एवमित्थं प्रेमकलाबद्धाः प्रेमाश्रुगद्गदस्वरास्सन्तः पुरौकसः पुरवासिनो जनाः ऊचुः। किमिति? असौ कृष्णः अनवद्यात्मा सुन्दरतरतनुः अपिशब्दो भैष्म्या अप्यनवद्यात्मत्वसमुच्चयार्थः। समुचितोऽनुरूपः पतिः। अत्र अस्यैव रुक्मिण्ये वार्हत्येव, असावेव भैष्म्या एव समुचित एवेति षडवधारणानि। नोऽस्माभिः किञ्चित्सुचरितं स्वनुष्ठितं यद्यस्माकं प्राचीनं पुण्य मस्तीत्यर्थः। तेन सुचरितेन तुष्टः प्रीतः त्रिलोककृत् ब्रह्मा वैदर्भ्याः पाणि मच्युतो गृह्णात्विति अनुगृह्णात्विति॥ ३७, ३८॥

एव स्थिते तदा भैष्मी कन्या भटै र्गुप्ता सती अन्तःपुरात् अम्बिकागृह प्रति भवान्याः पादपङ्कजे द्रष्टु पद्भ्यामेव निर्जगाम। कथम्भूता ? सा रुक्मिणी मुकुन्दवदनाम्बुज सम्यग्ध्यायन्ती॥ ३९, ४० ॥

**विज०** किमिति नगरप्रवेशाप्रदान कृष्णरामयो रिति तत्राह- **आवेद्येति।** जरासन्धादिराजभिः नगर पूर्ण निबिड मनवकाश मित्यावेद्य विज्ञाप्य॥ ३१-४० ॥

यतवा ज्ञातृभिः सार्धं सखीभिः परिवारिता।
गुप्ता राजभटैश्शूरैः सन्नद्धै रुद्यतायुधैः॥ *
वेत्रझर्झरहस्तैश्च वृद्धैः कञ्चुकिभि स्तथा।
मृदङ्गशङ्खपणवाः[1] तूर्यभेर्यश्च जघ्निरे॥ ४१ ॥

नानोपहारबलिभि र्वारमुख्याः सहस्रशः।
स्रग्गन्धवस्त्राभरणै र्द्विजपत्न्यः स्वलङ्कृताः॥ ४२ ॥

गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः॥ ४३ ॥

आसाद्य [2]देवीसदनं धौतपादकराम्बुजा।
उपस्पृश्य शुचि श्शान्ता प्रविवेशाम्बिकान्तिकम्॥ ४४ ॥

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः।
भवानीं वन्दयाञ्चक्रु र्भवपत्नीं भवान्विताम्॥ ४५ ॥

नमस्ये त्वाऽम्बिकेऽभीक्ष्णं स्वसन्तान[3]युतां शिवाम्[3]।
भूया त्पति र्मे भगवा न्कृष्ण स्त दनुमोदताम्॥ ४६ ॥

★ इति सम्प्रार्थयन्ती [4]सा देवीं [5]देवमुमां [5]शिवम्।
पूजयामास विधिवद्द्विजपत्नीपुरस्कृता[6] ॥

अद्भि र्गन्धाक्षतै र्धूपै[1]र्वासस्स्रङ्माल्य[1]भूषणैः।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक्॥ ४७ ॥

विप्रस्त्रियः पतिमती स्तथा तैः समपूजयत्।
लवणापूपताम्बूल कण्ठसूत्रफलेक्षुभिः॥ ४८ ॥

तस्यै स्त्रियस्ताः प्रददुः [8]शेषां युयुजु राशिषः।
ताभ्यो देव्यै नमश्चक्रे [9]शेषां च जगृहे वधूः॥ ४९ ॥

[10]मुनिव्रत मथ त्यक्त्वा निश्चक्रामाऽम्बिकागृहात्।
♦ उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम्।
तौ विदर्भप्रसूतानां नृपाणां कुलदेवते॥
तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् ।
चिराराधितपादाब्जां सा प्रणम्य विनिर्ययौ॥
प्रगृह्य पाणिना [11]भृत्यां रत्न[12]मुद्रोपशोभिताम्॥ ५०॥

---

❋ After this verse a half verse begining with 'वेत्रझर्झर' is follows in B, M, Ma edns only 1 Ml V व० 2 K, M, Ma, Ml, V, W देव 3- -3 Ml, V युत शिवम्।·★ This verse is not found in B, G, J, M Ma edns 4 Ml V ता 5- -5 Ml, V °मापतिम्। 6 Ml, V तम्। 7- -7 M, Ma वस्त्रमाल्यविभू० 8 M, Ma शेषाः Ml, V शेषान् 9 M Ma शेषाश्च, Ml V शेषाश्च 10 K. W मौन० ♦ These two additional verses are found in B, M, Ma edns only 11 M, Ma धात्रीं 12 B, G, J, Ml, V °ना।

**श्रीध० यतवागिति**। अपि च मृदङ्गादयः जघ्निरे आहताः वादिता इत्यर्थः॥ ४१ ॥

**नानेति**। वारमुख्याः गणिकोत्तमाः॥ ४२, ४३ ॥

**आसाद्येति**। उपस्पृश्याऽऽचम्य॥ ४४ ॥

**तामिति**। प्रवयसो वृद्धाः। भवान्विता मिति भवस्योपसर्जनत्वं स्त्रीकर्मोचित मुक्तम्॥ ४५ ॥

**नमस्ये** इति। रुक्मिण्या तदैव दृष्टोऽयं मन्त्रः स्वसन्तानयुतां[1] गणेशादिसहिताम्[2]। आत्मारामोऽसौ कथं त्वत्पति र्भवे दिति चे दत आह- त दनुमोदतामिति, भवती, श्रीकृष्णएव वा॥ ४६ ॥

**अद्भिरिति**। वासस्स्रग्गन्धादिभिः अम्बिकां समपूजयत्॥ ४७ ॥

**विप्रस्त्रिय** इति। तथा विप्रस्त्रियोऽपि तैर्द्रव्यै र्लवणादिभिश्च समपूजयदिति॥ ४८ ॥

**तस्यै** इति। शेषां निर्माल्यम्॥ ४९ ॥

मुनिव्रतमिति। मुनिव्रतं मौनम्। भृत्यां सखीम्[3]॥ ५० ॥

---

1 MIV °त 2 MIV °तम्। 3 MIV °नादि।

वीर० यतवाक्[1-] मौनिनी मातृभिः सखीभिश्च परीवारिता उ[-1 2-]द्यतानि[-2] उद्धृतान्यायुधानि यै स्तैः सन्नद्धै रायत्तैः शूरैः राजभटैः गुप्ता, तदा मृदङ्गादयो जघ्निरे ताडिताः[3] वादिता इत्यर्थः॥ ४१ ॥

नानाविधै रुपहारैः नैवेद्यैः बलिभिः पूजासाधनैश्च सह सुष्ठ्वलङ्कृता द्विजपत्न्यः गणिकोत्तमाश्च तथा गायका गायन्तः स्तुवन्तः सूतादयः वाद्यादीनां तूर्यादीनां वादकाः वादयन्तश्चेति शेषः। वधूं कन्यां परिवार्य परिवेष्ट्य जग्मुः॥ ४२, ४३ ॥

आसाद्येति। देवसदन मम्बिकापतिगृहम् उपगम्य तत्र धौते प्रक्षालिते पादाम्बुजे कराम्बुजे च यस्यास्सा। उपस्पृश्याऽऽचम्य अत एव शुचि श्शान्ता समाहितचित्ता च अम्बिकागृहं प्रविवेश॥ ४४ ॥

ततः प्रवयसो वृद्धाः विधिज्ञाश्च विप्रयोषितः भवस्य पत्नीं भवेनान्वितां भवानीं प्रति तां कन्यां वन्दयाञ्चक्रुः। यद्यपि भवानीमिति पुंयोगलक्षण ङीषैव भवसम्बन्धलाभः, तथाऽपि साहित्यलाभार्थं तत्रापि भवस्याप्राधान्यसूचनार्थं भवान्विता मित्युक्तम्। पुंयोगश्चात्र भर्तृभार्यासम्बन्धविशेषरूप इति द्योतयितुं भवपत्नीमिति॥ ४५ ॥

तदा[4] रुक्मिणी नमस्य इत्यादि मन्त्रमपूर्वमेव स्वयं[5] पश्यन्ती तन्मुखेन स्वमनीषितं च प्रार्थयन्ती यथाव त्पूजयामासेत्याह- नमस्य इति त्रिभिः। हे अम्बिके! स्वसन्तानयुतां गणेशादिसहितां शिवां मङ्गलरूपां त्वा मभीक्ष्णं पुनः पुनः नमस्ये नमस्करोमि। भगवान् कृष्णः मम पति र्भूयादिति यत्, तदनुमोदताम् अनुगृह्णातु, भवतीति कर्तृपदाध्याहारः। यद्वा कृष्णो मम पति र्भूयात् कृष्ण एव त दनुमोदता मिति त्व मनुगृह्णीष्वेत्यर्थः॥ ४६ ॥

इत्थं प्रार्थयन्ती सा रुक्मिणी द्विजपत्नीभिः पुरस्कृता पुरोऽवस्थापिता अद्भादिभि र्यथाविधि देवीम्[6] उमां देवं शिवं च पूजयामासेति[7] सम्बन्धः ॥

अद्भि श्शुद्धोदकैः गन्धैः चन्दनै रक्षतैश्च वासोभिः दिव्याम्बरै स्स्रग्भि र्माल्यै र्भूषणैश्च नानाविधै रुपहारै नैवेद्यै- र्बलिभिश्च। यद्यपि "वैदर्भी भीष्मकसुतां श्रियो मात्राम्"(10-52-16) इति लक्ष्म्यवतारत्वेनो[8]क्ताया भगवन्नित्यानपायिन्या स्सर्वोत्तमाया रुक्मिण्याः केवलप्राकृतस्त्रिया इव अम्बिकावन्दनादिक मनुचितम्, तथाऽपि भगवत इव तमनुव्रताया अस्या मानव्यवतारत्वात् "यद्यदाचरति श्रेष्ठः" (भ.गी 3-21) इति न्यायेन लोकानुग्रहशीलत्वाच्च तथा कृतमि त्यवगन्तव्यम्॥ ४७ ॥

तत स्तया लवणापूपादिभिः तै रन्नादिभिश्च पतिमतीः जीवद्भर्तृकाः विप्रस्त्रीश्च सम्यगपूजयत्॥ ४८॥

ततस्ताः स्त्रियः[9] द्विजपत्न्यः शेषां स्वपूजोपयुक्तावशिष्टां सामग्रीं यद्वा शेषाशब्दः स्त्रीलिङ्गो देवतोपभुक्त स्रगादिनिर्माल्यवाची, तदा शेषां गौर्युपभुक्तनिर्माल्यमित्यर्थः। तस्यै रुक्मिण्यै प्रददुः, अलङ्कारार्थमिति शेषः। तथा आशिषो युयुजुः पेठुः। तदा वधूः रुक्मिणी ताभ्यो द्विजपत्नीभ्यो देव्यै च नमश्चक्रे। शेषां जगृहे च॥ ४९ ॥

ततो मौनव्रतं विहाय रत्नमुद्रिकाभिरुपशोभितां भृत्यां सखीं गृहीत्वा रत्नमुद्रिकोपशोभितं[10] सखीपाणिं स्वपणिना गृहीत्वेत्यर्थः। अम्बिकागृहा न्निर्गतवती॥ ५० ॥

---

1- -1 B omits 2- -2 K, T, W omit 3 K, T, W omit ताडिताः 4 T, W तथा 5 T, W omit स्वय 6 B adds शिवा 7 K, T, W °त्यर्थः। 8 B °न प्रोक्ता° 9 K T, W omit स्त्रियः 10 B °द्रोप°

विज० वेत्राणि झर्झराश्च राजाज्ञासूचकयष्टयश्च हस्तेषु येषां ते तथा, तैः कञ्चुकिभिः दौवारिकैः छन्नलिङ्गैः॥ ४१- ४३ ॥

धौतपादकराम्बुजा प्रक्षालितपादहस्तपद्मा॥ ४४ ॥

प्रवयसो वृद्धाः विधिज्ञाः स्त्रीशास्त्रकुशलाः॥ ४५-४७॥

पतिमतीः भर्तृमत्यः॥ ४८ ॥

शेषाः अक्षताः अवशिष्टा राजस्त्रियो वा॥ ४९ ॥

मुनिव्रतं मौनव्रतं, उपकण्ठे समीपे पौलोम्याः शच्याः॥ ५० ॥

★ धृतानेकाऽऽतपत्राद्यां वीजच्चामरसङ्कुलाम्।
तां देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम्।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम्॥ ५१ ॥

शुचिस्मितां बिम्बफलाधरद्युभिः[1] शोणायमानद्विजकुन्दकुड्मलाम्[2]।
पदा चलन्तीं[3] कलहंसगामिनीं शिञ्जत्कलानूपुरधामशोभिना[4]।
विलोक्य वीरा मुमुहुः समागता यशस्विन स्तत्कृतहृच्छयार्दिताः॥ ५२ ॥

यां वीक्ष्य ते नृपतय स्तदुदारहास व्रीडावलोकहृतचेतस उज्झितास्त्राः।
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम्॥ ५३ ॥

सैवं शनै श्चलयती चलपद्मकोशौ[6] प्राप्तिं तदा भगवतः प्रसमीक्षमाणा।
उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपा न्ददृशेऽच्युतं[7] च॥ ५४ ॥

तां राजक[8]न्यां रथ मारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम्।
रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः।
ततो ययौ रामपुरोगम[9] श्शनैः[10] सृगालमध्यादिव भाग[11]हृद्धरिः॥ ५५ ॥

★ त[12]ं मानिनः स्वाभिभवं यशःक्षयं परे जरासन्ध[13]मुखा न सेहिरे।
धि गस्मद्य[14]श आत्तधन्[15]विनां गोपै र्हृतं केसरिणां मृ[16]गैरिव॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे त्रिपञ्चाशत्तमोऽध्यायः॥ ५३ ॥

---

★ This extra half verse is found in B, M and Ma editions 1 B, G, J, M, Ma °रि 2 B, G, J, M, Ma °ड्म० 3 K, W °र० 4 B, J, M, Ma सि० 5- -5 M, Ma °ल नूपरपादशोभिताम्। 6 B, G, J चलपद्म; Ml, V चरणाब्ज 7 B, G, J, M, Ma सा 8 Ml, V पुर्त्री 9 B, G, J M Ma °भैश्श० 10 B, M, Ma शृ० 11 M, Ma नाग ★ अयं श्लोकः विजयध्वजरीत्या अनन्तराध्याये प्रथमत्वेन पठ्यते। 12 K, W तन्मा० 13 B G J M, Ma वशा 14 G, J, Ml V W °स्मान्यश 15 G, J, K, W °न्व० 16 K, W वृकै०

**श्रीध० तामिति।** तां विलोक्य वीरा मुमुहु रिति तृतीयेनान्वयः। श्यामा मजातरजस्काम्। कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्यास्ताम्॥ ५१ ॥

**शुचिस्मितामिति।** द्विजा एव कुन्दानां कुट्[1]मलानि[2] मुकुलानि, बिम्बफलवत् योऽधरः तस्य द्युतिभिः शोणायमानानि तानि यस्यास्ताम्। कला शोभा तद्युक्तं नूपुरं शिञ्जच्च त त्कलानूपुरं च तस्य धाम दीप्ति स्तेन शोभितुं शील मस्य तेन पदा चलन्तीम्॥ ५२ ॥

न केवलं मुमुहुः पेतुश्चेत्याह- **यामिति।** यात्रामिषेण हरये स्वलावण्यं समर्पयन्तीं यां वीक्ष्य क्षितौ पेतुः सा तान्प्राप्तान् ह्रिया ऐक्षत, तदैवाऽच्युतं च ददर्श त्युत्तरेणान्वयः॥ ५३ ॥

**सैवमिति।** चलत्पद्मकोशतुल्यौ चरणौ चालयन्ती॥ ५४ ॥

**तामिति।** सुपर्णलक्षणं गरुडध्वजम्। हरिः सिंहः॥ ५५ ॥

**तमिति।** असहमानानां तेषाम् आक्रोश माह- अहो धि गस्मान्! यतोऽस्माकं यशो गोपै र्हृ[3]तमिति॥ ५६॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
त्रिपञ्चाशत्तमोऽध्यायः॥ ५३ ॥

1 B, J °ड्म० 2 B, J सि० 3 J °हृ०

वीर० तदा तां विलोक्य समागता स्सर्वे प्रसिद्धा वीराः तद्दर्शनोद्दितस्मरातुरा मुमुहुरिति तृतीयश्लोकेनान्वयः। कथम्भूताम्? देवमायामिव सर्वाश्चर्यकरीं मूर्तीभूतां देवमायामिव स्थिता मित्यर्थः। वीरान् मोहयतीति तथा तां शोभनः कृशो मध्यप्रदेशो यस्याः, कुण्डलाभ्यां मण्डितमाननं यस्याः तां, श्यामाम् अजातरजस्कां नितम्बयोः श्रोण्यो रर्पिता निबद्धा रत्नमयी मेखला यस्याः, व्यञ्जन्तौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्याः, कुन्तलेभ्यश्शङ्किते इव चपले ईक्षणे यस्याः॥ ५१ ॥

शुचि स्मितं यस्याः, बिम्बफलमिव योऽधरोष्ठस्तस्य द्युभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि[1] मुकुलानि यस्यास्तां, कलहंसव द्गच्छतीति[2] तच्छीला तथा तां कला शोभा तद्वती नूपुरे शिञ्जन्ती कूजन्ती[3] च ते कलानूपुरे च तयोः धाम दीप्तिस्तेन शोभते इति तथोक्तेन पदा पादेन पद्भ्यामित्यर्थः चलन्तीम्॥ ५२ ॥

न केवलं मुमुहुः अपि तु पेतुश्चेत्याह- यामिति। रथारूढा स्ते नृपतयो यात्रामिषेण हरये स्वलावण्यमर्पयन्तीं यां वीक्ष्य तस्या उदारहासेन व्रीडावलोकेन[4] च हृतानि चेतांसि येषां ते अत एव विमूढाः[5] अत एव च उज्झितानि त्यक्ता न्यस्त्राणि यै स्ते भूमौ पेतुः[6]॥ ५३ ॥

सैवमिति। सा रुक्मिणी इत्थं पद्मकोशतुल्यौ चरणौ शनैश्शनै श्चालयन्ती[7], तत्र हेतुः भगवतः श्रीकृष्णस्य प्राप्तिं प्रसमीक्षमाणा वामकरनखैः अलकानुत्सार्य अपाकृत्य अपाङ्गैः तान्प्राप्तान् नृपान् ह्रिया अवैक्षत, तदैवाऽच्युतं च ददर्श॥ ५४॥

तामिति। तदा कृष्णः रथमारोढु मिच्छन्तीं तां राजपुत्रीं द्विषतां चैद्यादीनां समीक्षतां सतां[8] जहार। ततो माधवः सुपर्णलक्षणं गरुडध्वजं रथ मारोप्य रथोपस्थे आरोप्ये त्यर्थः। राजन्यमण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रयायी यस्य तथाभूत श्शनैर्ययौ। शनैः इत्यनेन निर्भयत्वं सूच्यते। हरिः सिंहः सृगालमध्याद्यथा स्वभागह च्छनै र्याति, तद्वत्॥ ५५॥

तदिति। मानिनः केवलं दुरहङ्कारिणश्शत्रवो जरासन्धादयः तत्कन्याहरणं स्वाभिभवं यशःक्षयं च न सेहिरे। असहमानानां तेषा माक्रोशमाह- अहो इति। अस्मत्कीर्तिं धिक्! कुतः? यतः आत्तधन्वनां[9] धनुर्धारिणाम्[10] अस्माकं, स्वमिति शेषः। गोपै रपहृतं[11] केसरिणां सिंहानां भागो वृकै रिवेति॥ ५६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रिपञ्चाशत्तमोध्यायः॥ ५३ ॥

---

1 B ड्म 2 B omits इति 3 K, T, W omit कूजन्ती 4 K.T.W लोकनेन 5. T.W omit वि 6 K, T, W निपेतुः 7 K ०ती 8 K omits सतां 9 B धन्विनां 10 B °र्धराणाम् 11 K, T, W °ह्य०

विज० देवमायां लक्ष्मीं श्यामां द्व्यष्टवर्षां कुन्तलै रावरकैः शङ्कितमिव ईक्षणं यस्याः सा तथा ताम्॥ ५१ - ५४॥

नागहृत् गजहरो, हरिः सिंहः॥ ५५ ॥

यः अरिभिः कृतः तं, के के परे इति तत्राह- जरासन्धेति॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
त्रिपञ्चाशत्तमोऽध्यायः॥ ५३ ॥

(विजयध्वजरीत्या अष्टपञ्चाशत्तमोऽध्यायः)

---

# चतुष्पञ्चाशत्तमोऽध्यायः

## (विजयध्वजरीत्या एकोनषष्टितमोऽध्यायः)

### [1-]श्रीशुक उवाच[-1]

★ इति सर्वे सुसंरब्धा वाहा नारुह्य दंशिताः।
स्वैः स्वै र्बलैः परिक्रान्ता अन्वीयु र्धृतकार्मुकाः॥ १ ॥

ता नापतत आलेक्य यादवानीकयूथपाः।
तस्थु [2-]स्तत्सम्मुखा[-2] राजन् वि[3]ष्फार्य स्वधनूंषि ते॥ २ ॥

अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः।
मुमुचुः शरवर्षाणि मेघा अद्रि ष्वपो यथा॥ ३ ॥

पत्यु र्बलं शरासारै श्छन्नं वीक्ष्य सुमध्यमा।
सव्रीड मैक्ष त्तद्वक्त्रं [4]भयविह्वललोचना॥ ४ ॥

प्रहस्य भगवानाह [5-]मा स्म भै र्वा[-5]मलोचने।
विनङ्क्ष्य त्यधुनैवैतत् तावकैः शात्रवं बलम्॥ ५ ॥

---

1- -1 Ml, V omit ★ अय श्लोकः विजयध्वजरीत्या द्वितीयः 2- -2 M, Ma र्वै सम्मुखा 3 B, G, J, विष्फूर्ज्य; M, Ma विस्फूर्य, W विस्फूर्ज्य

4 M, Ma भाव० 5- -5 M, Ma मा भै स्त्वं वाम

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुष्पञ्चाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान्। रुक्मिणं च विरूप्याऽथ भैष्म्याः पाणिं पुरेऽग्रहीत्।

**इतीति**। अहो धिगस्मान् इत्येवं वदन्तः सुसंरब्धाः क्रोधाविष्टाः। दंशिताः कृतसन्नाहाः। परिक्रान्ताः परिवृताः। अन्वीयुः अन्वधावन्॥ १ ॥

**तानिति।** विस्फूर्ज्य[1] टङ्कारयित्वा[2]॥ २ ॥

**अश्वेति।** परेषां शराणां बाहुल्ये यादवाना मचलत्वे च दृष्टान्तः- मेघा इति॥ ३ ॥

**पत्युरिति।** ऐक्ष दैक्षत॥ ४ ॥

**प्रहस्येति।** मा स्म भैः मा भयं कुरु। हे वामलोचने! वराक्षि! तावकैः त्वदीयैः कृत्वा॥ ५

1 MI, V विष्फार्य 2 MI, V °रं कृत्वा

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ असहमानानां यदुभिस्सह सङ्ग्रामं पराजयं चाऽनुवर्णयति चतुष्पञ्चाशत्तमेन - **इतीति।** इति अहो धिगित्येवं ब्रुवाणास्सर्वे सुतरां क्रोधाविष्टा दंशिताः कवचिताश्च वाहान् अश्वादीनारुह्य स्वस्वबलैः परिक्रान्ताः परिवृताः धृतानि कार्मुकाणि धनूंषि यैस्ते अन्वीयुरन्वधावन्॥ १ ॥

ता नापतत श्शत्रून् अवलोक्य ते यादवसैन्याधिपतयः हे राजन्! स्वधनूंषि विष्फार्य[1] टङ्कारयित्वा सम्मुखा उत्तस्थुः॥ २॥

परेषां शराणां बाहुल्ये यादवाना मल्पत्वे च दृष्टान्तः - मेघा इत्यादि। मेघा यथा अद्रिषु अपो जलधारा मुञ्चन्ति, तद्व दश्वपृष्ठादिषु कोविदा श्शत्रवो यादवसैन्येषु[2] शरवर्षाणि मुमुचुः॥ ३॥

तदा सुमध्यमा रुक्मिणी शराऽऽसारैः[3] छन्नं भर्तु र्बल मवलोक्य भयेन कातरे लोचने यस्यास्सा, सव्रीडं यथा तथा तस्य पत्युः वक्त्रं मुख मैक्षत॥ ४ ॥

तदा भगवान् प्रहस्य तामाह, उक्तिमेवाह- मास्मेति। हे वामलोचने! त्वं मास्म भैः भयं मा कृथाः, अधुनैव त्वदीयैः सैन्यै श्शात्रवं बलं विनङ्क्ष्यति नाशमेष्यति॥ ५ ॥

1 B विस्फूर्य 2 B °न्ये 3- -3 B शरैः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यादवाना मनीकानां यूथानि समूहाः तान् पान्ति रक्षन्तीति यादवानीकयूथपाः॥ १, २ ॥

अश्वपृष्ठादिषु स्थित्वा॥ ३ ॥

आसारो वेगवान् वर्ष इति। सुमध्यमा रुक्मिणी ऐक्षत् ऐक्षत[1] दृष्टवती॥ ४,५ ॥

1 B, M, omit ऐक्षत

तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः।
अमृष्यमाणा नाराचै र्जघ्नु र्हयगजान् रथान्॥ ६ ॥

पेतुः शिरांसि रथिना मश्विनां गजिनां भुवि।
सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः॥ ७ ॥

हस्ताः सासिगदेष्वासाः [1-] करभा ऊरवो[-1]ऽङ्घ्रयः।
अश्वाश्वतरनागोष्ट्र खरमर्त्यशिरांसि च॥ ८ ॥

हन्यमानबलानीकाः वृष्णिभि र्जयकाङ्क्षिभिः।
राजानो विमुखा जग्मुः जरासन्धपुरस्सराः[2]॥ ९ ॥

शिशुपालं [3]समेत्याऽथ हृतदारमिवाऽऽतुरम्।
नष्टत्विषं गतोत्साहं शुष्यद्वदन मब्रुवन्॥ १०॥

---

1- -1 W °भोरु भुजा 2 MI, V पुरोगमाः 3 B, G, J, MI, V समभ्येत्य

श्रीध० तेषामिति। स चासौ विक्रमश्च तम्॥ ६॥

पेतुरिति। उष्णीषाणि शिरोवतंसवस्त्राणि तत्सहितानि शिरांसि॥ ७ ॥

हस्ताः इति। करभाः प्रकोष्ठा ऊरुविशेषणं वा॥ ८,९ ॥

शिशुपालमिति। अप्राप्तदारमेव तं हृतदारमिवाऽऽतुरम्॥ १० ॥

वीर० इति तेषां चैद्यादीनां तथाविधं विक्रम मसहमाना वीरा गदादयो यादवाः नाराचै [1]र्हयादीन् जघ्नुः॥ ६ ॥

तदा अश्विनां अश्वा एषां सन्तीति ते तेषाम्, अश्वारूढानां रथिनां गजिनां च कोटिशः शिरांसि कुण्डलकिरीटसहितानि उष्णीषसहितानि च भुवि निपेतुः। खड्गगदाधनुर्भिः सहिता हस्ताश्च करभाः प्रकोष्ठाश्च ऊरवश्च अङ्घ्रयश्च निपेतुः। करभाः तत्सदृशा ऊरव इत्यूरुविशेषणं वा। तथा अश्वादीनां शिरांसि च निपेतुः। तत्र नागा गजाः॥ ७, ८ ॥

इत्थं जयकाङ्क्षिभि र्यदुभिः हन्यमानानि बलानीकानि सैन्यसमुदायाः येषां ते जरासन्धादयो राजानो विमुखाः पराङ्मुखास्सन्तो जग्मुः॥ ९॥

तत स्ते सर्वे शिशुपाल मभ्येत्य अब्रुवन्। कथम्भूतम्? आत्मसमरेण हृतदारमिवाऽऽतुरं नष्टत्विषं निस्तेजस्कं, गत उत्साहो यस्मात्, शुष्यत् वदनं यस्य तम्॥ १० ॥

1 K, W °चन्

विज० करभाः कनिष्ठिकाया मूलप्रदेशाः, गर्दभा दश्वायां जातोऽश्वतरः॥ ६-८ ॥

आत्मनो जयकाङ्क्षिभिः जयप्रकाशकैः जयेच्छुभिर्वा॥ ९ ॥

हृतदारं बला दपहृतभार्यं पुरुषम्॥ १० ॥

राजान ऊचुः[1-1]

भो भो[2] पुरुषशार्दूल दौर्मनस्य मिदं त्यज।
न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते॥ ११ ॥

यथा दारुमयी योषित् नृत्यते कुहकेच्छया।
एव मीश्वरतन्त्रोऽय मीहते सुखदुःखयोः॥ १२ ॥

जरासन्ध उवाच[3-3]

शौरिः सप्तदशाहं वै संयुगानि पराजितः।
त्रयोविंशतिभिः सैन्यै र्जिग्य एक महं परम्॥ १३ ॥

तथाप्यहं न शोचामि न प्रहृष्यामि कर्हि चित्।
कालेन दैवयुक्तेन[4] जान न्विद्रावितं जगत्॥ १४ ॥

अधुनापि वयं सर्वे वीरयूथपयूथपाः।
पराजिताः फल्गुतन्त्रै र्यदुभिः कृष्णपालितैः॥ १५॥

1- -1 G J, K, Ml, V, W omit 2 B, G J K, W भोः 3- -3 B, G J, M, Ma, Ml, V omit 4 M, Ma योगेन

श्रीध० भो भो इति। निष्ठा स्थैर्यम्॥ ११ ॥

यथेति। कुहको नर्तयिता तस्येच्छया। दुःखेऽपीहमानत्वेन पारवश्यं व्यक्तं दर्शितम्॥ १२

अत्र चाऽहमेव दृष्टान्त इत्याह जरासन्धः - शौरिरिति। शौरेः[1] कृष्णात्सकाशात्। एकं संयुगम्। परं केवल मन्तिमं वा जिग्ये जितवानहम्। १३ ॥

तथेति। दैव मदृष्टं तद्युक्तेन॥ १४ ॥

अधुनेति। फल्गुतन्त्रैः स्वल्पसैन्यैः॥ १५ ॥

---

1 B, J omit शौरेः

वीर० उक्तिमेवाह- भो भो इति। हे पुरुषश्रेष्ठ! दौर्मनस्यं विषादं त्यज। न हि सुखदुःखयोः देहिषु स्थैर्यं दृश्यते। किन्तु ते क्षणिके आगमापयिनी इति भावः॥ ११ ॥

नन्वप्रतिहतपौरुषाणा मस्माक मयं पराभवोऽविषह्य इत्यत आहुः-यथेति। कुहको नर्तकः तस्येच्छया इच्छानुसारमित्यर्थः। दारुमयी योषि त्प्रतिमा यथा[1] नृत्यते तथा अयं देहिवर्गोऽपि ईश्वरपरतन्त्रः सुखदुःखयो रीहते सुखदुःखयोः निमित्तभूतयो श्चेष्टते सुखदुःखार्थकर्माणि करोतीत्यर्थः। न हि सुखदुःखप्रापणे स्वात्मन स्स्वातन्त्र्यमस्ति। अपि तु सुखायै वेहमानोऽयं जनः स्वस्वकर्मानुगुणेश्वरेच्छया सुखदुःखे प्राप्नोति। अतः किं विधेय मित्यर्थः॥ १२ ॥

एव मीश्वरपारतन्त्र्यमुक्तम्। तत्र चाऽहमेव दृष्टान्त इत्याह जरासन्धः[2]-शौरिरिति। सप्तदश संयुगानि युद्धानि, कृत्वेति शेषः। त्रयोविंशत्यक्षौहिणीकै स्सैन्यै स्सहितोऽप्यहं शौरेः श्रीकृष्णात्सकाशा त्पराजितः, सप्तदशकृत्व इति शेषः। एकं संयुगं त्वहं परं केवलं जिग्ये जितवानस्मि॥ १३ ॥

तथाऽपि सप्तदशकृत्वः पराजयकालेऽप्यहं कर्हिचि न्न शोचामि। नाऽपि जयकाले हृष्यामि च। किं कुर्वन्? दैवमदृष्टं तद्युक्तेन कालेन कालशरीरकेणेश्वरेण दैवमीश्वर स्तद्युक्तेन तदात्मकेन कालेनेति वा। कृत्स्नं जग द्विद्रावितम् उपद्रुतं जानन्॥ १४ ॥

अतोऽधुनाऽपि वयं सर्वे वीरयूथपा अपि फल्गुतन्त्रैरपि अल्पबलैरपि पराजिताः॥ १५ ॥

---

1 B, W omit यथा 2 K, W ॰ष्ण स॰

विज० प्रियाप्रिययोः सुखदुःखयोः निष्ठा व्यवस्था नियतत्वं "निष्ठोत्कर्षे व्यवस्थायाम्" (वैज. को. 6-2-21) इति॥ ११ ॥

कुहकेच्छया मायिकेच्छया॥ १२ ॥

योऽहं त्रयोविंशतिभिः सैन्यैः अक्षौहिणीभिः शौरेः सप्तदशसंयुगानि सप्तदशसंयुगेषु पराजितः। परं पश्चात् सोऽहं तावतीभिः सम्भूय एकं सेनादिविकलं कृष्णं जिग्ये, तथापि उभयथाऽपि एक मष्टादशमं सङ्ग्रामं वा॥ १३, १४ ॥

फल्गुतन्त्रैः अल्पसेनादिपरिच्छदैः॥ १५ ॥

रिपवो जिग्यु रधुना काल आत्मानुसारिणी।
तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः॥ १६ ॥

[2-] श्रीशुक उवाच [-2]

एवं [3] प्रबोधितो मित्रै श्चैद्योऽगा त्सानुगः पुरम्।
हतशेषाः पुन स्तेऽपि ययुः [4-] स्वं स्वं [-4] पुरं नृपाः॥ १७ ॥

रुक्मी तु राक्षसोद्वाहं कृष्णद्वि डसह न्स्वसुः।
पृष्ठतोऽन्वगम त्कृष्ण मक्षौहिण्या वृतो बली॥ १८ ॥

रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम्।
प्रतिजज्ञे महाबाहु र्दंशितः सशरासनः॥ १९ ॥

अहत्वा समरे कृष्ण म[5]प्रत्यूह्य च रुक्मिणीम्।
कुण्डिनं न प्रवेक्ष्यामि सत्य मेतद ब्रवीमि वः॥ २०॥

---

1 M Ma °तु जे०, Ml V च जे० 2- -2 G J omit 3 M Ma स 4- -4 Ml V स्वस्व 5 Ml, V °मोच्य

श्रीध० रिपव इति। प्रदक्षिणोऽनुकूलः स्यात्॥ १६ - २० ॥

वीर० रिपवस्तु आत्मानुसारिणि स्वानुकूले काले प्राप्ते सति जिग्युः। यदा च प्रदाक्षणाऽस्मदनुकूलः कालो भावी, तदा वयमपि जेष्याम एव॥ १६ ॥

इत्थ मित्रै र्जरासन्धादिभिः बोधितः सान्त्वितः चैद्यः स्वपुर प्रति जगाम। ततो हतशेषा स्ते जरासन्धादयोऽपि नृपाः [1-] स्व स्व [-1] गृह प्रति जग्मुः॥ १७ ॥

ततः कृष्णद्विट् रुक्मी तु स्वसुर्भगिन्याः राक्षसोद्वाह मसहमानः अक्षौहिण्या सैन्येन परिवृतः कृष्ण पृष्ठतोऽन्वधावत्॥ १८॥

अनुधावनात्पूर्वं तस्य सरम्भमाह-रुक्मीति। अमर्षी क्रुद्धः सुसरब्धः सन्नद्धः। तदेव प्रपञ्चयति - दंशितः कवचितः शरासनेन धनुषा सहितः सर्वभूभुजा शृण्वता सता प्रतिजज्ञे॥ १९॥

प्रतिज्ञा मेवाह- अहत्वेति। अप्रत्यूह्य [2] अनावर्त्य॥ २० ॥

---

1- -1 B स्वस्व 2 B °हृत्य

विज० प्रदक्षिणः अनुकूलः॥ १६,१७ ॥

असहन् असहमानः॥ १८,१९ ॥

अप्रत्यूह्य अनावृत्य, अन्यस्याऽदत्वेति वा॥ २० ॥

इत्युक्त्वा रथ मारुह्य सारथिं प्राह सत्वरः।
चोदयाऽश्वान् यतः कृष्ण स्तेन[1] मे संयुगो[2] भवेत्॥ २१ ॥

अद्याहं निशितै र्बाणै र्गोपालस्य सुदुर्मतेः।
नेष्ये वीरमदं[3] येन स्वसा मे प्रसभं हृता॥ २२ ॥

विकत्थमानः कुमति रीश्वरस्याऽप्रमाणवित्।
रथेनैकेन गोविन्दं तिष्ठ[4-] तिष्ठेत्युपाद्रवत्[-4]॥ २३॥ ★

△ धनु र्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभि श्शरैः।
आह चोर[5] क्षणं तिष्ठ यदूनां कुलपांसन॥ २४ ॥

कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षव द्धविः।
हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः॥ २५ ॥

याव न्न मे हतो बाणैः शयीथा[6] मुञ्च दारिकाम्।
स्मय न्कृष्णो धनु श्छित्वा षड्भि र्विव्याध रुक्मिणम्॥ २६ ॥

अष्टाभि श्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः।
स चाऽन्यद्धनु रादाय कृष्णं विव्याध पञ्चभिः॥ २७ ॥

तै स्ताडितः शरौघैस्तु[7-] चिच्छेद[-7] धनु रच्युतः।
पुन[8-] स्त्य दुपादत्त[-8] तदप्यच्छिन[9] दव्ययः॥ २८ ॥

परिघं[10] पट्टिशं शूलं चर्मासी शक्तितोमरौ[11]।
यद्य दायुध[12] मादत्त तत्सर्वं सोऽच्छिन[13] द्धरिः[14]॥ २९ ॥

ततो रथा दवप्लुत्य[15-] गृहीत्वा खड्गचर्मणी[-15]।
कृष्ण मभ्यद्रव[16] त्क्रुद्धः पतङ्ग इव पावकम्॥ ३०॥

---

1. B.G.J.M.Ma, ०स्तस्य० 2. B.G.J.M.Ma °गं 3. B.G.J.M.Ma °र्य०4- -4 तिष्ठ तिष्ठे त्यथाह्वयत्; M.Ma अन्वधावत रंह्सा ★ After 23rd Verse this extra Verse is found in B.M.Ma editions. स गत्वा नर्मदां देवीं तरन्तं मधुसूदनम्। आसाद्य युद्धसन्नद्धः तिष्ठ तिष्ठेति चाऽब्रवीत्॥ △ An half Verse beginning with धनुर्विकृष्य.........त्रिभि:शरैः is repeated in B.M.Ma editions 5 B.G.J. चाऽत्र; M.Ma चाऽरे 6. W °ता 7- -7 K.W. शराग्रैस्तच्चि०; MI.V शरौघैस्तच्चि० 8- -8 K.W. °रप्यन्यदा; 9. M.Ma °दच्युतः 10. B.G.J.M.Ma पट्टिशं 11. M.Ma.°रैः; W °रान् 12 MI V.W °ध० 13. MI.V. चाऽ० 14. M.Ma.MI.V. ° द्विभुः 15- -15 B.G.J.MI.v खड्गपाणि र्जिहांसया 16. K पतत्कु०

**श्रीध० अद्येति।** गोपालस्य, वेदपालकस्येति वास्तवोऽर्थः। तथा सुदुर्मते रिति शोभनाऽनुग्रहवती दुष्टेष्वपि मति र्यस्य तस्येति॥ २१-२३ ॥

**धनुरिति।** यदूनां कुलपांसन। कुलदूषण! [1-]इति लौकिकार्थः[-1]। [2-]वास्तवार्थस्तु[-2] यदूनां कुलप[3]। हे [4-]यदुकुलपते[-4]! हे अंसन! स्वयं च रिपुहननचतुर! "अंस समाघाते" इत्यस्मा द्धातोः कर्तरि ल्युट्प्रत्ययो नन्द्यादिविहितः॥ २४ ॥

**कुत्रेति।** ध्वाङ्क्षः काकः स यथा हवि र्मुष्णाति तद्वत्। वस्तुतस्तु अध्वाङ्क्षवदितिच्छेदः। सहस्राक्षवदित्यर्थः। हे मन्द![5] स्थिरेत्यर्थः॥ २५-३० ॥

---

1- -1 B.J omit 2- -2 B.J वस्तुतस्तु 3 B.J. कुलस्य पते 4- -4 B.J omit 5.MI V.add सिंहतार्क्ष्यवद्वा

**वीर० इतीति।** सत्वरः त्वरया सहितः, उक्तिमेवाह-चोदयेति सार्धेन। यतो यत्र कृष्णः तत्राऽश्वा नाशु चोदय गमयेत्यर्थः। तेन कृष्णेन सह मम संयुगः सङ्ग्रामो भवेत् भवितव्यः॥ २१ ॥

सुतरां दुर्बुद्धे र्गोपालस्य वीरमदं वीरोऽहमेवे त्येवंविधं मदं नेष्ये, ततो नयामि, त्याजयामीत्यर्थः। तत्र हेतुं वद न्विशिनष्टि-येन कृष्णेन मम भगिनी प्रसह्य नीता अपहृता॥ २२ ॥

**विकत्थमान** इति। ईश्वरस्य श्रीकृष्णस्य प्रमाणं ज्ञानशक्तिबलादीना मनन्तपरिमाणत्व मजानन् अत एव कुमति रत एव चैवं विकत्थमानः प्रगल्भं भाषमाणः तिष्ठ तिष्ठेति वद न्निति शेषः। उपाद्रव दन्वधावत्॥ २३ ॥

**धनुरिति।** दृढं धनुर्विकृष्य शरान् सन्धायेति शेषः। कृष्ण मुरो वक्षःस्थलं जघ्ने। आह च। उक्तिमेवाह-क्षणमित्यादिना स्मय न्नित्यतः प्राक्तनेन। हे यदुकुलदूषक! क्षणं तिष्ठ, ममाग्रत इति शेषः॥ २४ ॥

ध्वाङ्क्षः काकः स यथा हविः हृत्वा याति, तथा मम स्वसारं मुषित्वा क्व यास्यसि[1] नैल्य मयोग्यत्वं च दृष्टान्ताभिप्रेतम्। हे मन्द कूटयोधिनः कूट स्समुदितो युध्यते[2], तच्छीलः तथा, तस्य एकाकितया योद्धु मसमर्थस्येत्यर्थः। तव मदं हरिष्ये॥ २५ ॥

मम बाणै र्याव द्व्रो न शयीथाः[3] [4] ततः पूर्वमेव दारिकां कन्यां मुञ्च। स्मयन्निति। षड्भिर्बाणै रिति शेषः। तथोत्तरत्रापि॥ २६ ॥

स चेति। सः रुक्मी, तैः रुक्मिप्रयुक्तैः[5] शराग्रैस्ताडितः कृष्णः तदपि धनुः चिच्छेद। एवं पुनः पुनः यद्य[6] द्धनु राददे तदप्यव्ययो भगवान् चिच्छेद॥ २७,२८ ॥

ततः परिघादिकमपि यद्य दाददे, तत्सर्वम प्यच्छिनत्॥ २९ ॥

तत इति। खड्गः पाणौ यस्य स रुक्मी रथा दवप्लुत्य हन्तुमिच्छया पतङ्गः शलभः पावकमिव कृष्ण मभ्यपतत्॥ ३० ॥

---

1 K यासि 2. K.W. °ति 3. B °त 4 B adds भवान् 5 B °क्मिणा 6 K.W यद्धनु०

**विज०** अरे, नीचसम्बोधनं, तदेव व्यनक्ति यदूनामिति॥ २१-२५ ॥

ततः पूर्वमेव मुञ्च॥ २६-२८ ॥

परिघं परिघातनं पट्टिशं लोहदण्डं, शक्तितोमरैः सह चिच्छेद। द्विमुख स्तोमरः॥ २९,३० ॥

**तस्य चाऽऽपततः खड्गं तिलश श्चर्म चेषुभिः।**
**छित्त्वाऽसि माददे तिग्मं[1] रुक्मिणं हन्तु मुद्यतः॥ ३१ ॥**

**दृष्ट्वा भ्रातृवधोद्योगं[2] रुक्मिणी भयविह्वला।**
**पतित्वा पादयो[3] र्भर्तु रुवाच करुणं सती॥ ३२ ॥**

**[4-]रुक्मिण्युवाच[-4]**

**योगेश्वराप्रमेयात्मन् देवदेव जगत्पते!।**
**हन्तुं नार्हसि कल्याण! भ्रातरं मे महाभुज॥ ३३ ॥★**

**श्रीशुक उवाच**

**तया परित्रासविकम्पिताङ्गया शुचा[5]ऽवशुष्यन्मुखरुद्धकण्ठया।**
**कातर्यविस्रंसितहेममालया गृहीतपादः करुणो न्यवर्तत॥ ३४ ॥**

[6]चेलेन बद्ध्वा त मसाधुकारिणं सश्मश्रुकेशं प्रवप न्व्यरूपयत्।
[7-]ताव न्ममर्दुः परसैन्य [-7]मुद्धतं यदुप्रवीरा नलिनीं यथा गजाः॥ ३५ ॥

कृष्णान्तिक मुपव्रज्य ददृशु स्तत्र रुक्मिणम्।
तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः॥
विमुच्य [8]बद्धं करुणो भगवा न्कृष्ण मब्रवीत्॥ ३६ ॥

बलभद्र उवाच

असाध्विदं त्वया कृष्ण कृत मस्मि[9] जुगुप्सितम्।
वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः॥ ३७ ॥

मैवास्मा न्साध्व्यसूयेथा भ्रातु र्वैरूप्यचिन्तया।
सुखदुःखप्र[10-]दो नान्यो[-10] यतः स्वकृतभुक् पुमान्॥ ३८ ॥

बन्धु र्वधार्हदोषोऽपि न [11]बन्धु र्वध मर्हति।
त्याज्य [12]स्तेनैव दोषेण हतः किं हन्यते पुनः॥ ३९ ॥

क्षत्रियाणा मयं धर्मः प्रजापतिविनिर्मितः।
भ्राताऽपि भ्रातरं हन्या द्येन घोरतर स्ततः॥ ४०॥

1 KW तीक्ष्ण 2 MIV °तुर्व० 3 MMaW °योः पत्यु० 4- -4 GJMIV omit ★ इत्युक्त्वा जगृहे पादौ कृपणा दीनभाषिणी। भ्रातर त्रातुकामा सा कृष्णस्य जगतीपतेः॥ This extra Verse is found in M.Ma editions between the Verses 33 and 34 5 MMa शुचा च०, MIV शुचा वि० 6 BGJMMa चै० 7- -7 BGJ तावन्ममर्दुः परसैन्यमद्भुत; MMa ताव त्समीपु र्जितशत्रुसैन्याः 8 K. बन्ध 9 BGJKW°स्मज्जु० 10- -10 BGJMMa °दो नचान्योऽस्ति 11 BGJ बन्धो र्वध° K.W बन्धो। वध° 12 BGJMMaW स्वेनैव

**श्रीध० तयेति।** परित्रासेन विकम्पितान्यङ्गानि यस्या स्तया। शुचा शोकेन [1]अवशुष्यत् मुखं यस्याः। रुद्धः कण्ठो यस्या स्सा च। तया कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्या स्तया। गृहीतौ पादौ यस्य सः॥ ३१-३४॥

**चेलेनेति।** सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा। तेनैवासिना प्रवपन् मुण्डयन् व्यरूपयत् विरूपमकरोत्॥ ३५ ॥

**कृष्णान्तिकमिति।** तथाभूतं हतप्राय मित्युत्तरवाक्येऽप्यनुषङ्गः॥ ३६,३७ ॥

रुक्मिणीं सान्त्वयति-**मैवास्मानिति**॥ ३८ ॥

पुनः कृष्ण माक्षिपति **बन्धुरिति**॥ ३९ ॥

पुन र्देवीं प्रत्याह-**क्षत्रियाणामिति**। येन धर्मेण भ्रातापि भ्रातरं हन्यात्। ततः तस्मा द्घोरतरोऽतिदारुणो धर्मश्च। अतः कोऽस्माक मपराध इति भावः॥ ४० ॥

---

1 MIV विशु०

**वीर०** आपततः तस्य रुक्मिणः खड्गं चर्म खेटं च इषुभि स्तिलप्रमाणश श्चिच्छेद, एवं छित्वा रुक्मिणं हन्तुं निशितं खड्ग मादत्त॥ ३१ ॥

तदा भ्रातृवधार्थ मुद्योगं प्रयत्नं दृष्ट्वा भयकम्पिता सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथा तथोवाच॥ ३२॥

उक्तिमेवाह-**योगेश्वरेति**। हे योगेश्वर! योगनिर्वाहक! योगीश्वरेति पाठे योगिहृत्कमलाभिव्यक्त! तन्नियन्तश्चेत्यर्थः। योगपरिशुद्धमनोग्राह्यस्य तव स्वरूपस्वभावादिकं कथम् अयं देहाभिमानी विद्यात् ? ततोऽयं मूढः केवल मनुग्राह्य एवेति तत्सम्बोधनाभिप्रायः। नन्वसाधुलोकदमनार्थ मवतीर्णोऽहमेनं निगृह्णाम्येव इत्यतः सम्बोधयति- हे जगत्पते! शरणागतजगत्पालक! नाऽयं शरणागतोऽपि कृतापराध एवे त्यत आह मे[1] शरणागताया मम भ्रातरं हन्तुं नाऽर्हसीति, शरण्यत्वोपयुक्तं [2]वीरत्ववात्सल्यसौशील्यादिकमपि सम्बोधनेनैवाह- देवानां ब्रह्मादीनामपि देव! अप्रमेयात्मन्[3]! अपारवात्सल्यसौशील्यादिस्वभावस्वरूप! लोकदृष्ट्या अधुना तवैतद्वधो नोचित इति सम्बोधयति- **कल्याणेति**। आरब्धे विवाहरूपकल्याणेऽपरिसमाप्त एवान्तरा मद्भ्रातृ वधोऽनुचित इत्यर्थः। अहो दृष्टं सखड्गस्य त्वद्भुजस्य सौन्दर्य मिति साक्षेपं सम्बोधयति-महाभुजेति॥ ३३ ॥

**तयेति**। परित्रासेन परितो भयेन विशेषतः कम्पितान्यङ्गानि यस्याः शुचा शोकेन अवशुष्यत् मुखं यस्याः, रुद्धः कण्ठो यस्या स्सा च सा कातर्येण वैक्लब्येन विस्रंसिता हेममयी माला यस्या स्तया रुक्मिण्या गृहीतौ पादौ यस्य सः करुणः करुणावान् न्यवर्तत, रुक्मिवधा दिति शेषः॥ ३४ ॥

**चेलेनेति**। तत स्त मसाधुकारिणं रुक्मिणं चे[4]लेन तद्वस्त्रेण बद्ध्वा सश्मश्रुकेशं सहितानि स्थाने स्थाने अवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् मुण्डयन् विरूप मकरोत्। नलिनीं यथा गजा इति दृष्टान्तेनाऽनायासः खेलनमात्रं चाऽभिप्रेतम्॥ ३५ ॥

**कृष्णान्तिकमिति**। ददृशुः यदुप्रवीरा इति कर्तृपदानुषङ्गः, भगवान् सङ्कर्षणः तथाभूतं विरूपता मापन्नं हतप्रायं हततुल्यं रुक्मिणं दृष्ट्वा सकरुणो बन्धं विमुच्य कृष्ण मब्रवीत्॥ ३६ ॥

उक्तिमेवाह-**असाध्विति**। हे कृष्ण! असाध्वसमञ्जसं निन्दितं चेदं कर्म कृतम्। ननु बन्धुवध एवाऽसाधुः जुगुप्सितश्चे त्यत आह-वपनमिति। सुहृदो बन्धोः वधो नाम श्मश्रुकेशवपनं वैरूप्यकरणं चे त्येष एव॥ ३७ ॥

अथ रुक्मिणीं सान्त्वयति-**मैवाऽस्मानिति**। हे साध्वि! भ्रातृवैरूप्यप्रयुक्तया[5] चिन्तया अस्मान्[6] माऽसूयेथाः। ननु दुःखप्रदा यूय मसूयितव्या एवे त्यत आह-सुखेति। सुखप्रदः दुःखप्रदश्च अन्यो नास्ति, कुतः? यतः पुमान् स्वकृतभुक् स्वकृतकुशलाकुशलकर्मापादितसुखदुःखभुक्, सुखग्रहणं दृष्टान्तार्थम्॥ ३८ ॥

पुनः कृष्ण माक्षिपति- **बन्धुरिति**। [7-]हे बन्धो[-7]! वधायाऽर्हः उचितः दोषो यस्य सोऽपि बन्धु र्वधं नार्हति, किन्तु त्याज्य एव। स हि तेन वधार्हेण दोषेण हत एव हतप्राय एव, हतोऽपि पुन र्हन्यते कि मिति॥ ३९ ॥

भूयो रुक्मिणीं प्रत्याह- **क्षत्रियाणामिति**। प्रजापतिना ब्रह्मणा विनिर्मितोऽयं परो[8] धर्मः। कोऽसौ? येन धर्मेण भ्राताऽपि भ्रातरं हन्यात्, यश्च[9] घोरतरः अतिदारुणः। अतः को नामाऽस्माक[10] मपराध इति भावः॥ ४० ॥

1 KTW omit मे 2 B परत्व 3 B रूपे 4 B चै० 5 B omits प्रदः 6 KTW omit कुतः 7- -7 B omits 8 B वधो 9 B यतश्च 10 B omits नाम

**विज०** परित्रासेन परितो भयेन कम्पितमङ्गं यस्या स्सा तथा तया शुष्यन्मुखा च रुद्धकण्ठा च तया करुणः करुणाकरः॥ ३१-३४॥

प्रवपन् वपनं मुण्डनं कुर्वन् व्यरूपयत् सौन्दर्यहीन मकरोत्॥ ३५,३६ ॥

श्मश्रुकेशानां वपनलक्षणं वैरूप्यं सुहृदो बन्धो र्वधं कृतवान्॥ ३७ ॥

इदानीं रुक्मिणीं सान्त्वयति-**मैवेति**। हे साध्वि। रुक्मिणि! अस्मान्प्रति। स्वस्मा दन्यः, अत्र हेतुः यत इति॥ ३८॥

नन्वस्तु सुखादेः स्वय हेतुः अथापि बन्धोः देहवियोगकरणलक्षणो वधो लोकाचारो न भवति जुगुप्सितत्वादिति। तत्सत्यमित्याह-**बन्धुरिति**। बधार्हो दोषो यस्य स तथा। द्वितीयबन्धुशब्दो हेत्वर्थः। तत्र किं कर्तव्य मित्यत्राह-त्याज्य इति। त्यागो देशनिर्यातनादिलक्षणः। किं त्याज्य इत्यतो[1] मृतमारणदोषापत्ते रिति भावेनाह-हत इति॥ ३९ ॥

तर्ह्येत दीदृश कर्म किमिति क्रियते इति। अतोऽय न्यायः क्षत्रियेभ्योऽन्यत्र, न क्षत्रियाणा मित्याह- **क्षत्रियाणामिति**। कोऽसौ धर्म इत्यत्राह- भ्राताऽपीति। तत स्तस्मात् राजा येन कर्मणा घोरतर इत्युच्यते, धर्मविषयो वा अघोरतरो धर्म इति॥ ४०॥

---

1 Ma omits अतः

**राज्यस्य भूमे र्वित्तस्य स्त्रियो[1] मानस्य तेजसः।**
**मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि॥ ४१ ॥**

★ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम्।
यन्मन्यसे सदाऽभद्रं सुहृदां भद्र मज्ञवत्॥ ४२ ॥

आत्ममोहो नृणा मेष कल्प्यते देवमायया।
सुहृ[2] दुर्हृ दुदासीन इति देहात्ममानिनाम्॥ ४३ ॥

एक एव परो ह्यात्मा सर्वेषामपि देहिनाम्।
नानेव गृह्यते मूढै र्यथा ज्योति र्यथा नभः॥ ४४ ॥

देह आद्यन्तवा नेष द्रव्यप्राणगुणात्मकः।
आत्म न्यविद्यया क्लृ[3]प्तः संसारयति देहिनम्॥ ४५॥

---

1 BGJMIV स्त्रिया ★ This Verse is not found in MMa editions 2 MMaW च्छत्रुरु० 3 MMa क्षिप्तः

श्रीध० पुनः श्रीकृष्णं प्रत्याह-**राज्यस्येति**। तथाऽप्यस्माक मेत दनुचितमिति भावः॥ ४१ ॥

पुनर्देवीं प्रत्याह-**तवेयमिति**। सर्वभूतेषु दुर्हृदा महितानां भ्रातृणा मज्ञवत् य दभद्रं मन्यसे इच्छसि इयं तव विषमा असमीचीना बुद्धिः। कुतः? यत स्तदेव सुहृदा मभद्रमिति। यद्वा सर्वभूतेषु दुर्हृदामपि स्वसुहृदां भद्रमेव इदं[1] दण्डरूपं मुण्डन मभद्रं यन्मन्यसे तवेयं विषमा बुद्धिरिति। अथवा सर्वभूतेषु मध्ये दुर्हृदां शिशुपालादीना मभद्रं सुहृदां भद्रं च यन्मन्यसे, तवेयं विषमा बुद्धिः समा न भवति। अज्ञवत् अज्ञानामिव॥ ४२ ॥

कुत इत्यत आह- **आत्ममोह** इति॥ ४३ ॥

परमार्थमाह- **एक एवेति**। परः शुद्धः ज्योतिश्चन्द्रादिः यथोदकेषु। नभो यथा घटादि ष्विति॥ ४४ ॥

कुत स्तर्हि न चन्द्रादिव दात्मानम् एकं शुद्धं प्रतीम स्तत्राह- **देहे** इति। द्रव्य मधिभूतम्, प्राणा इन्द्रिया ण्यध्यात्मम्। गुणशब्देनाऽधिदैवं, तत्त्रितयात्मकः देहोपाधिना शुद्धो न प्रतीयते इत्यर्थः॥ ४५ ॥

---

1 B.J. omit इद

**वीर०** पुनः कृष्णं प्रत्याह- **राज्यस्येति**। श्रीमदेनैश्वर्यमदेनाऽन्धाः[1] विवेकरहिता मानिनो दुरहङ्कारिणो जनाः राज्यादेः अन्यस्य वा हेतोः कारणात् राज्याद्यर्थं तेभ्योऽन्यार्थं वेत्यर्थः। क्षिपन्ति हि क्षिपन्ति निरस्यन्ति, बन्धू निति शेषः। अस्माकं त्वेत दनुचितमिति भावः। तत्र मानस्य वयमेव वीरा इत्याभिमानस्य, तेजसः पराभिभवनसामर्थ्यस्य॥ ४१॥

सान्त्वितामपि विषण्णामेव ता मालक्ष्य अन्तरेण तत्त्वोपदेशम् अस्या विषादो न शाम्यतीति मत्वा तत्त्व मुपदिदिक्षुः तावत् देहानुबन्धिषु सौहार्दस्य तदभद्रत्वप्रयुक्तचित्तविकारस्य चाऽज्ञानप्रयुक्तत्व माह- **तवेति द्वाभ्याम्।** अज्ञवत् देहात्मस्वतंत्रा-त्माभिमानवत् सदा सुहृदां भद्रं दुर्हृदा महिताना मभद्रं च मन्यस इति यत्, तवेयं बुद्धि स्सर्वेषु भूतेषु विषयभूतेषु विषमा। असमा, एकरूपा न भवतीत्यर्थः॥ ४२ ॥

कुत इत्यत आह-[2-]**आत्ममोह** इति। नृणां एषः[-2] आत्ममोहो बुद्धिमोहो भगवन्मायया अनात्म न्यात्मबुद्धि मस्वतन्त्रे स्वातन्त्र्यबुद्धिं च कल्पयन्त्या कल्पितः। कोऽसौ, यो देहात्मवादिनां सुहृ दित्यादिरूपः॥ ४३ ॥

सुहृदादिविभागस्याऽज्ञानकल्पितत्व मेवोपपादयति- **एक एवेति।** सर्वेषामपि देहिनां जीवात्मना मात्मा अन्तरात्मा एक एव परः। गूढतयाऽवस्थाने दृष्टान्तमाह-यथा ज्योतिरिति। यथा ज्योति रग्निः काष्ठे गूढतयाऽवतिष्ठते, तथा परमात्माऽपीत्यर्थः। अवस्थितस्यापि, परस्य तत्तद्वस्तुगतदोषास्पर्शे दृष्टान्तमाह- यथा नभ इति। यथा सर्वत्र व्याप्नुवत आकाशस्य न व्याप्यगतदोषस्पर्श स्तथेत्यर्थः। एवं स्थिते एकस्य परमात्मनः कृत्स्नं जगत् शरीरभूतमिति एकशरीरभूतपाणिपादादिषु शत्रुमित्रादिविभागोऽनुपपन्नः। मूढैः परमात्मशरीरत्वानभिज्ञैस्तु नानेव शत्रुमित्रादिविभागयुक्त मिव जग द्विज्ञायते इत्यर्थः॥ ४४॥

कोऽसौ देहातिरिक्तो जीवो नाम, कीदृशश्च, देहश्च कीदृशः, कथं च देहातिरिक्तस्यात्मन स्सुखदुःखादि भोक्तृत्व मित्यतआह- **देह** इति। देहस्तावत् द्रव्यप्राणगुणात्मकः द्रव्यं पृथिव्यादिभूतपञ्चकम्। प्राणा इन्द्रियाणि, गुणाः पृथिव्यादिभूतपञ्चकगुणाः[3-] गन्धादयः, सत्त्वादिप्रकृतिगुणा रब्धद्रव्यादितत्त्वान्तरसमुदायरूपाः। आत्मा तु ज्ञानात्मक इति भावः। स च आद्यन्तवान् उत्पत्तिविनाशवान्। आत्मा तु नित्य इति भावः। स चाऽविद्यया प्रकृत्या आत्मनि क्लृप्तस्सन् देहिनं जीवात्मानं संसारयति, तस्य जन्मजरामरणादि दुःखं जनयतीत्यर्थः[-3]॥ ४५ ॥

---

1 KTW omit क्षिपन्ति 2- -2 omits 3- -3 B omits

**विज०** ननु तर्हि सर्वः सर्वं हन्या दित्यतिप्रसङ्ग इत्यत्राह- **राज्यस्येति।** मानिनः देहाभिमानवन्तः अन्यस्य स्त्रीजनस्य वा क्षिपन्ति घ्नन्ति। राज्यादेः सर्वस्य हेतोः इति सम्बन्धः॥ ४१ ॥

किमत इत्यतः स्वस्य श्रीहर्यधीनत्वकल्पनामन्तरेण स्वकपोलकल्पनाबुद्धिः भ्रम एवेत्याह- **आत्मेति।** देह एव आत्मेति मानं ज्ञानं एषां ते तथा तेषां नृणां निरपेक्षत्वेनोपकर्त्ता सुहृत्, स्वसुखनाशकर्ता शत्रुः, तदुभयकर्तृत्वशून्य उदासीन इत्येष आत्ममोहो मनोभ्रमः देवस्य हरेः मायया बन्धकशक्त्या कल्प्यते। ततः सुहृच्छत्रू उभयो रितर उदासीन इति स्वकपोलकल्पना इत्याद्येति भावः॥ ४२,४३ ॥

देवः कीदृश इति तत्स्वरूप माह- **एकएवेति।** आत्मा परः परमात्मा, नियामक इति शेषः। नन्वेकत्वे "सच त्यच्चाऽभवत्" इति नानाभावः कथ मिति तत्राह-नानेति॥ ४४ ॥

देहात्मत्वं भ्रमनिमित्त मित्यत्र हेतुमाह-देह इति। द्रव्याणि, पञ्च भूतानि, पञ्च प्राणाः, त्रयो गुणाः, देह आत्मा न भौतिकत्वात् घटवदिति। आत्मनि जीवे अविद्यया हरीच्छया अज्ञानेन वा देहिनं देहात्मदर्शनं संसारयति संसारिणं करोति "तत्करोतीत्युपसंख्यान"मिति णिच्॥ ४५ ॥

★ नात्मनोऽन्येन संयोगो वियोग श्चाऽसता[1] सति।
तद्धेतुत्वा त्तत्प्रसिद्धे र्दृग्रूपाभ्यां यथा रवेः॥ ४६ ॥

जन्मादयस्तु देहस्य विक्रिया नाऽऽत्मनः क्वचित्।
कलाना[2] मेव नैवेन्दो र्मृति र्ह्यस्य[3] कुहूरिव॥ ४७ ॥

यथा शयान आत्मानं विषया न्फलमेव च।
अनुभुङ्क्तेऽप्यसत्यर्थे [4-]तथाऽऽप्नोत्यबुधो भवम्[-4]॥ ४८ ॥

तस्मा दज्ञानजं शोक मात्मशोष[5]विमोहनम्।
तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते॥ ४९ ॥

[6-]श्रीशुक उवाच[-6]

एवं भगवता तन्वी रामेण प्रतिबोधिता।
वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे॥ ५० ॥

---

★These two Verses (46,47) are not found in M Ma editions 1 B G.J ऽसतः 2 B,G,J °मिव 3 M I V रस्य 4- -4 M Ma तथाऽऽत्माऽपि ध्रुवोऽध्रुवम्। 5 M.Ma बोध०, M I V शोक० 6- -6 M Ma omit

श्रीधः० : ननु देहसम्बन्धेनापि संसारे सति शुद्धत्वं गतमेव, तत्राह- नात्मन इति। हे सति! अन्येनाऽधिभूतादिना आत्मनः संयोगवियोगौ न स्तः। कुतः? असतः असत्वा दन्यस्येत्यर्थः। कुतोऽसत्त्वं तत्राह - तद्धेतुत्वादिति। तस्याऽन्यस्य भूतेन्द्रियादेः प्रसिद्धेः, प्रकाशस्य तद्धेतुत्वा दात्महेतुकत्वात्[1]। ननु देवै रधिष्ठितेभ्य इन्द्रियेभ्यो भूतानां प्रतीतिः प्रसिद्धा। भूतप्रतीत्या च तत्प्रसिद्धिः, नाऽऽत्मन इत्यत आह - दृग्रूपाभ्यां यथा रवेः। यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात् प्रसिद्धि र्द्वयोरपि तैजसत्वात्, तदभेदश्च; तथा भूतेन्द्रियादीनां परस्परं सिद्धानामपि चैतन्याधीन एव प्रकाशः तत्का र्यत्वाच्च, तद्व्यतिरेकेणाऽसत्त्वं चेत्यर्थः। तथा च द्वादशे वक्ष्यति- "दीप श्चक्षुश्च रूपं च ज्योतिषो न पृथक् भवेत्। एवं धीः खानि मात्राश्च न स्यु रन्यतमा दृतात्"॥ (भाग. 12-4-24) इति। यद्वा रवेः प्रसिद्धाभ्यामेव दृग्रूपाभ्यां परस्परं[2] प्रसिद्धि र्यथा भवति तद्वदिति॥ ४६ ॥

देहसम्बन्धाभावादेव नाऽऽत्मनो जन्मादयोऽपीति वक्तुं जन्मादीनां देहधर्मत्वमाह - जन्मादयस्त्विति। कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽह मित्यात्मनि जन्मादिप्रतीतिः। देहजन्मादिनैवेति सदृष्टान्त माह- कलानामेवेति। इन्दोः कलानामेव जन्मादयो नैवेन्दो र्यथा तद्वत्। यथा च कलानाशादेव कुहूः अमावास्या इन्दुक्षय उच्यते। तद्व दस्यात्मनो देहनाशादेव मृतिव्यवहार इत्यर्थः॥ ४७ ॥

नन्वात्मनो देहादिसम्बन्धाभावे कथं भोक्तृभोग्यभोगप्रतीतिः? इत्याशङ्क्य स्वप्नदृष्टान्तेन समर्थयति - यथा शयान इति। आत्मानं भोक्तारं विषयान् भोग्यान् फलं भोग मसत्यप्यर्थेऽनुभुङ्क्ते, तथा अबुधः संसारं प्राप्नोति[5] ॥ ४८ ॥

तस्मादिति। आत्मानं शोषयति विमोहयति चेति तथा तम्। निर्हृत्या[6]ऽपाकृत्य॥ ४९ ॥

एवमिति। समादधे समाहितमकरोत्॥ ५० ॥

---

1 B, J omit क 2 MI, V ºर 3- -3 MI, V अत आह नाऽऽत्मन इति 4 B, J मिवेति 5 MI, V add इति। 6 MI, V ºपहृत्य

वीर० ननु यदि देहः स्वसम्बन्धमात्रेण जीवात्मानं संसारयेत्, तर्हि परमात्मानमपि स्वसम्बन्धादेव संसारयत्वित्यत आह- नाऽऽत्मन इति। हे सति! आत्मनः परमात्मनः असता देहेन जीवपराभ्यामन्येन सह जीवस्येव संयोगवियोगौ उत्पत्तिमरणात्मकौ न भवतः। अनेन जीवस्योत्पत्तिविनाशौ नाम देहसंयोगवियोगात्मकावेवेत्युक्तम्। कुतः? तत्प्रसिद्धेः देहोत्पत्तेः संयोगवियोगोत्पत्ते र्वा तद्धेतुत्वा त्परमात्मसङ्कल्पहेतुकत्वात् परमात्माधीनत्वा देहः परमात्मनो न बन्धक इत्यर्थः। तदधीनेन तस्य बन्धाभावे दृष्टन्तमाह- दृग्रूपाभ्यां यथा रवे रिति। आदित्येनाऽनुग्राह्यं चक्षुः तेन प्रकाश्यश्श्यामादिरूपं चेत्युभाभ्याम् आदित्यस्य न संसर्गः दूरस्थत्वात्। एवं परमात्माधीनेन देहेनाऽन्तःस्थितस्यापि परमात्मनो दूरस्थस्येव न तत्कृतदोषाश्रयत्व मित्यर्थः॥ ४६ ॥

आद्यन्तवा नित्यनेन सूचित मात्मनो जन्माद्यभाव मुपपादयति- जन्मादयस्त्विति। जन्मादयो विक्रिया विकारा देहस्यैव, क्वचिदपि शरीरे स्थितस्यापि आत्मनो न सन्ति। यथा कलानामेव जन्मादयः[1-1], न चन्द्रस्य, तद्वत् द्रव्यादिसङ्घातात्मक देहानामेव न जीवस्येत्यर्थः। जन्मादय इत्यादिशब्देन बाल्यादिविकारसङ्ग्रहः। तर्हि " विज्ञानघन एवैतेभ्यो भूतेभ्य स्समुत्थाय तान्येवाऽनुविनश्यति" (बृह. उ. 2-4-12) इति जीवविनाशवादिनी श्रुति र्विरुध्येत इत्यत आह - मृति र्ह्यस्य कुहू रिवेति। अस्य जीवस्य मरणं चन्द्रस्य कुहू रिवेत्यन्वयः। नष्टेन्दुकला पञ्चदशी कुहूः। यथा चन्द्रस्य कलानाशादेवाऽमावास्या कुहू रिन्दुक्षय इति व्यपदिश्यते, तद्वत् अस्याऽऽत्मनो देहनाशादेव मृति रिति व्यवहारः इत्यर्थः॥ ४७ ॥

देहो देहिनं संसारयतीत्युक्तम्, तत्र यावदयं संसरति, किं वा तत्र कारणम्? देहसम्बन्ध एवेति चे न्न, परमात्मनोऽपि तदविशेषा त्संसारापत्ते रित्यतः सदृष्टान्तमाह - यथेति। अर्थे स्वाप्ने असत्यपि अस्थिरोऽपि शयानः पुरुषः स्थिरबुद्ध्या याव दात्मानं भोक्तारं, विषयान् स्वाप्ना न्विषयान्, फलं तद्भोगञ्चाऽनुभुङ्क्ते, तद्व[2] द्विषयधुवबुद्ध्या विषया न्याव दनुभवति, तदा ताव दय मबुधोऽज्ञस्सन् भवं संसारं प्राप्नोति, न तु ततो मुच्यते; प्रबुद्धस्तु मुच्यत इति भावः। स्वरूपेणाऽऽत्मनो नित्यत्वेऽपि स्वप्नावस्थावैशिष्ट्यस्याऽनित्यत्वा त्तन्नित्यत्वबुद्धिः तदनुभवनिमित्ते त्यभिप्रायेणाऽऽत्मान मित्युक्तम्॥ ४८ ॥

उपसंहरति- **तस्मादिति।** तस्मात् तत्त्वस्थिते[3] रीदृशत्वात् आत्मानं मानसं शोषयति अभास्वरयति विमोहयति चेति तथा। तमज्ञानप्रभवं सुहृद्दुर्हृदुदासीन इत्येवंविधं मोहं तत्त्वज्ञानेन कृत्स्नस्य जगतः परमात्मशरीरकत्वज्ञानेन निर्हृत्य अपाकृत्य, हे शुचिस्मिते! स्वस्था स्वस्मिन् स्थिता ज्ञानानन्दस्वरूपात्मविमर्शनपरा भव। सुस्थेति पाठे निर्विषादा भवेत्यर्थः॥ ४९॥

**एवमिति।** तन्वी रुक्मिणी एवं प्रतिबोधिता वैमनस्यं दुःखं[4] त्यक्त्वा बुद्ध्या तत्त्वनिर्णयात्मिकया मनः सङ्कल्पविकल्पात्मकं समाहितवती॥ ५० ॥

---

1- -1 T, W omit 2 B adds न तु जागर्ति 3 B दृशो री० 4 K, T, W omit दुःखं

**विज०** देहः स्वेतरवृत्तिनित्यनिष्ठाधिकरणं मेयत्वा द्घटवदिति, तत्राह - **यथेति।** शयानः स्वप्नं पश्यन् आत्मानं विषयान् फलं दुःखादिलक्षणं यथाऽनुभुङ्क्ते वासनानुगुणं अनुभवति[1], अर्थे विषये तदानी मसत्य प्यविद्यमानेऽपि तथा आत्मा जीवो ध्रुवोऽध्रुवा ननित्यान् देहादी ननुभुङ्क्ते इत्यन्वयः। देहः स्वस्वेतरवृत्त्यनित्यनिष्ठाधिकरणमिति प्रत्यनुमानपराहतं, तदनुमानमिति सन्तोष्टव्यम्॥ ४६ - ४८॥

उपसंहरति- **तस्मादिति।** ॥ ४९ ॥

बुद्ध्या कदाऽप्यतिरोहितज्ञानेन॥ ५० ॥

---

1 B omit अनु

**प्राणावशेष उत्सृष्टो द्विड्भि[1] र्हतबलप्रभः।**
**स्मर न्विरूपकरणं वितथात्ममनोरथः॥**
**★ चक्रे[2] भोजकटं नाम निवासाय[3-] महत्पुरम्[-3]॥ ५१ ॥**

**अहत्वा दुर्मतिं[2] कृष्ण मप्रत्यूह्य यवीयसीम्।**
**कुण्डिनं न प्रवेक्ष्यामी त्युक्त्वा तत्राऽवस द्रुषा॥ ५२ ॥**

**भगवान् भीष्मकसुता मेवं निर्जित्य भूमिपान्।**
**पुर मानीय विधिव दुपयेमे कुरूद्वह[5]!॥ ५३ ॥**

**तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे।**
**अभू दनन्यभावानां कृष्णे यदुपतौ नृप॥ ५४ ॥**

**नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः।**
**पारिबर्ह मुपाजह्रु र्वरयो श्चित्रवाससोः॥ ५५ ॥**

सा वृष्णिपुर्युत्तभितेन्द्रकेतुभि र्विचित्रमाल्याम्बररत्नतोरणैः[8]।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलै रापूर्णकुम्भा[9]गुरुधूपदीप[10]कैः॥ ५६ ॥

सिक्तमार्गा[11] मदच्युद्भि राहूतप्रेष्ठभूभुजाम्।
गजै र्द्वाःसु परामृष्टरम्भापूगोपशोभिता[12]॥ ५७ ॥

कुरुसृञ्जयकैकेय विदर्भयदुकुन्तयः।
मिथो मुमुदिरे[13] तस्मि न्सम्भ्रमा[14] त्परिधावताम्॥ ५८ ॥

रुक्मिण्या हरणं श्रुत्वा गीयमानं[15] ततस्ततः।
राजानो राजकन्याश्च बभूवु र्भृशविस्मिताः। ५९ ॥

द्वारकाया मभू द्राजन् महामोदः[16] पुरौकसाम्।
रुक्मिण्या[17-] रमयोपेतं[-17] दृष्ट्वा कृष्णं श्रियःपतिम्॥ ६० ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्याया पारमहस्या संहितायां दशमस्कन्धे उत्तरार्धे
चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४ ॥

---

1 Ml V रुक्मी ह० ★ This half verse is printed in Ml V after the half verse beginning with कुण्डिन न प्रवेक्ष्यामि (V52) 2 Ml V यत्र 3- -3 Ml V °याऽभवत्पु० 4 K W °तिः 5 K, W यदूद्वह। 6 K, W निन्यु० 7 Ml,V वेषयोः 8 M Ma °ला० 9 M Ma Ml V °ग० 10 K, W °पैः 11 Ml V °र्गा 12 Ml V ताम्। 13 K, W मध्ये स० 14 M, Ma °तः 15 W °नमित० 16 Ml V °हान्मो० 17 M Ma °र्णी रमणोपेता

श्रीध० · रुक्मिण स्त्वेव श्रुतवतो नाऽज्ञानं निवृत्तमिति दर्शय न्नाह - प्रमाणाक्रोशेन इति॥ ५१ ॥

अहत्वेति। अहत्वा अज्ञात्वाऽदुर्मति मितिच सत्योर्थः। अप्रत्यूह्याऽनावर्त्य। अप्रतिबुध्यैति[1] तु सत्यम्। यवीयसीं स्वसारम्। यत्र[2] विरूपित स्तत्रैवाऽवसत्। तत्र च भोजकट नाम पुर मभवत्॥ ५२ - ५४ ॥

नरा इति। वरयोः[3] वरवध्वोः[4-] पारिबर्हं[-4] देय मुपस्करम्॥ ५५ ॥

सेति। उत्तभितै रिन्द्रकेतुभिः ध्वजविशेषैः। उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पप्रकारादीनि तैः॥ ५६ ॥

सिक्तेति। आहूताः प्रेष्ठाः भूभुज स्तेषां गजैः परामृष्टा उच्छ्रिता रम्भाश्च पूगाश्च तै[5] रुपशोभिता। यद्वा तैरेव गजैः परामृष्टाः संस्पृष्टाः[6] रम्भाश्च पूगाश्च तै रुपशोभिता॥ ५७ ॥

कुर्विति। सम्भ्रमा दौत्सुक्यात् परिधावतां बन्धूनां मध्ये मिथः समेत्य मुमुदिरे[7] मुदं प्रापुः॥ ५८-६० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४॥

---

1 Ml, v omit तु 2 Ml, V यत्र 3 Ml, V वधूवरयोः 4- -4 Ml, V omit 5 Ml, V °ताम् 6 Ml, V °ताम् 7 B, J omit मुमुदिरे

**वीर०**: रुक्मिण स्त्वेवं श्रुतवतोऽपि नाऽज्ञानं निवृत्तमिति सूचयन्नाह- **प्राणेति**। रुक्मी तु द्विड्भिः शत्रुभिः हतं बलं प्रभा तेजश्च यस्य सः। अत एव प्राणमात्रावशिष्ट स्त्यक्तश्च, वितथो व्यर्थः स्वमनोरथो यस्य सः। आत्मनः स्वस्य विरूपकरणं, कृष्णकर्तृक मिति शेषः। स्मरन् भोजकटाख्यं विपुलं पुरं चक्रे॥ ५१ ॥

तत्रेत्थं [1-]सङ्कल्प्याऽवसच्[-1]चेत्याह - **अहत्वेति**। दुर्मतिः रुक्मी यवीयसीं कनीयसीं कन्यां रुक्मिणीम् अप्रत्यूह्य अनावर्त्य कुण्डिनं पुरं न प्रवेक्ष्यामीति प्रतिज्ञाय रुषा क्रोधेन तत्र भोजकटे न्यवसत्॥ ५२ ॥

**भगवानिति**। पुरं प्रति प्रापय्य यदूद्वहो भगवान् यथाविधि विवाहितवान्॥ ५३ ॥

**तदेति**। तदा उद्वाहदिनेष्वित्यर्थः। [2]नृणाम् उत्सवो बभूव। कथम्भूतानाम्? यदुपतौ कृष्णे अनन्यभावानाम् एकान्तस्नेहानाम्॥ ५४ ॥

**नरा इति**। प्रमृष्टानि निर्मलीकृतानि मणिमयकुण्डलानि येषा यासां च ते ताश्च, वरयोः वरवध्वोः देयं पारिबर्ह मुपस्करम् आनिन्युः॥ ५५ ॥

तात्कालिकीं [3]पुरी मालक्षयति- **सेति**। उत्तभितै रुद्धृत्य प्रतिबद्धै रिन्द्रकेतुभिः ध्वजकेतुविशेषैः[5] विचित्रै र्माल्यादिभिश्च गृहाणां द्वारे द्वारे उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्प[4]प्रकरादीनि तैश्च समन्ता त्पूर्णैः कुम्भैः अगरुधूपैः दीपैश्च सा वृष्णीनां पूरी द्वारका बभौ॥ ५६ ॥

**सिक्तेति**। आहूताः ये [6] [7]प्रेष्ठा भूभुजो नृपा स्तेषां [8] सम्बन्धिभि र्मदोदकं स्रवद्भिः गजै स्सिक्ताः गजमदोदकै स्सिक्ताः इत्यर्थः। ते मार्गाः वीथयो यस्यां सा तथा द्वार्षु परामृष्टा उच्छ्रिताः रम्भाः कदल्यः ताभिः पूगै श्चोपशोभिता अलङ्कृता च बभौ॥ ५७ ॥

**कुर्विति**। सम्भ्रमा दौत्सुक्यात् परितो वीथिषु धावतां सञ्चरतां बन्धूनां मध्ये कुर्वादयो मिथ स्समेत्य मुदं [9]प्रापुः॥ ५८॥

**रुक्मिण्याहरणमिति।** ततस्ततः तत्र तत्र देशेषु गीयमानं रुक्मिण्यानयनात्मकं भगवच्चेष्टितं श्रुत्वा नितरां विस्मिता बभूवुः॥ ५९ ॥

**द्वारकायामिति।** हे राजन्! रमया लक्ष्म्यवताररूपया रुक्मिण्या सहितं [10-] श्रियः पतिं [-10] श्रीकृष्णं दृष्ट्वा पुरवासिनां महान् मोदो बभूव॥ ६० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४॥

1- -1 B सङ्कल्पयामासे० 2 B omits नृणाम् 3 T, W पुर० 4 B कुट्टकादीनि 5 B ग्गु० 6 B adds ये 7 T, W क्षे० 8 B adds तेषा 9 B प्राप्ताः 10- -10 T, W omit

**विज०** रुक्मी तत्र किं चकारेति तत्राह- **प्राणेति** ॥ ५१ ॥

अप्रत्यूह्य अनिवर्तयित्वा यवीयसी मनुजाम्॥ ५२, ५३ ॥

यदुपतौ कृष्णे अनन्यभावानां अन्यः शत्रुरिति भावरहितानां निरतिशयभक्तियुक्तानामित्यर्थः॥ ५४, ५५ ॥

उत्तभितेन्द्रकेतुभिः उत्क्षिप्तेन्द्रध्वजैः॥ ५६ ॥

आहूतप्रेष्ठभूभुजां गजैः, जुष्टेति शेषः। वास्तुपरामृष्टा गृहदेवतासंयुक्ता, यद्वा, वास्तुपरानृष्टा त्यक्तरजोगृहा॥ ५७॥

तस्मिन्नगरे परिधावन्तः इतस्ततो धावन्तः॥ ५८ - ६० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
टीकायां चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४ ॥

(विजयध्वजरीत्या एकोनषष्टितमोऽध्यायः)

# पञ्चपञ्चाशोऽध्यायः

## (अय मध्यायो विजयध्वजपाठे नोपलभ्यते)

### प्रद्युम्नजनन शम्बरवधादि वृत्तान्तः

श्रीशुक उवाच

कामस्तु वासुदेवांशो दग्धः प्राग्रुद्रमन्युना।
देहोपपत्तये भूय स्तमेव प्रत्यपद्यत ॥ १ ॥

स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः।
प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥

तं शम्बरः कामरूपी हृत्वा तोक मनिर्दशम्।
स विदित्वाऽऽत्मन श्शात्रुं प्रास्योदन्व त्यगाद्गृहम् ॥ ३ ॥

तं निर्जगार बलवान् मीनः सोऽप्यपरै स्सह।
वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ४ ॥

तं शम्बराय कैवर्ता उपाजहु रुपायनम्।
सूदा महानसं नीत्वाऽवद्यन्[1] स्वधितिनाऽद्भुतम् ॥ ५ ॥

---

1 K, Ml, V, W ॰घ्यन्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः। शम्बरेण हृत स्सोऽथ हत्वा तं कान्तयाऽगमत् ॥
प्रद्युम्नहानिलाभाद्यैः शम्बराहरणादिना। कुटुम्बिना मपत्यादिसुखदुःख मसूचयत्[1] ॥

**काम** इति। जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म, ततो विवाहा स्ततः शम्बरागारा[2] त्प्रद्युम्नप्रत्यागमनम्। अतः पुत्रकथनप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शम्बरेण हरणं निरूप्यते। प्रत्यागमन न्तूत्तरकालिकमपि[3] कथापर्यवसानाय अत्रोक्तमिति। वासुदेवाधिष्ठितचित्तप्रभवत्वा द्वासुदेवांशः सृष्टिहेतुत्वाच्च। देहोपपत्तये देहप्राप्तये॥ १ ॥

**स इति। अनवमोऽन्यूनः॥ २ ॥**

**तमिति। सः प्रसिद्धः कामशत्रुः शम्बर स्त मात्मन श्शत्रुं विदित्वा [4] हृत्वा समुद्रे प्रास्य प्रक्षिप्य गृह मगादिति॥ ३॥**

**तमिति॥ निर्जगार गिलितवान्॥ ४ ॥**

**तमिति। स्वधितिना शस्त्रिकया, अवद्यन् [5] अवाद्यन् खण्डितवन्तः॥ ५ ॥**

1 B, J °सुचत् 2 Ml, V °रगृहात् 3 B, J कालीन० 4 Ml, V omit हृत्वा 5 Ml, V omit अवाद्यन्

## श्रीवीरराघवविदुषा लिखिता

इत्थं भगवतो रुक्मिणीविवाहः सविस्तर मनुवर्णितः। अथ जाम्बवत्यादिविवाहान् विवक्षु स्तेभ्यः प्रागेव प्रद्युम्नजन्मेति तदनुवर्णयति पञ्चपञ्चाशत्तमेन काम इत्यादिना। यद्यपि शम्बरा[1]गारा त्प्रत्यागमनादिकन्तु विवाहेभ्यः पाश्चात्त्यं, तथाऽपि कथापर्यवसानाय अत्रोक्तमिति द्रष्टव्यम्। **कामस्त्विति।** कामो मन्मथ स्तस्य च वासुदेवांश इति विशेषणेन भाविजन्मप्रभृतिसम्बन्धः कीर्तितः। वासुदेवविभूतित्वाद्वासुदेवांशः। अत एव पुन र्देहोपपत्तये देहसंयोगाय तमेव वासुदेवमेव प्रत्यपद्यतेत्युक्तम्। प्रत्यपद्यत भगवन्तनु माश्रित्याऽवतस्थे इत्यर्थः। अनेन चतुर्व्यूहेषु तृतीयव्यूहविभूतित्व मुच्यते, नामसाम्यञ्च तद्विभूतित्वनिबन्धन मेव॥ १॥

स एव काम एव कृष्णस्य भगवतो वीर्यात् सङ्कल्परूपज्ञानात्मकात् समुद्भवो यस्य सः, वैदर्भ्यां रुक्मिण्यां जातः प्रद्युम्न इति वि[2]ख्यातोऽभिहितः, सर्वतः सर्वप्रकारेण पितुरनवमोऽन्यून स्तुल्य इत्यर्थः॥ २॥

**तमिति।** स प्रसिद्धः कामशत्रु श्शम्बरः तं प्रद्युम्न मात्मन स्स्वस्य शत्रुं विदित्वा, नारदमुखादिति शेषः। अनिर्दश मनतीतदशाहं तोकं शिशुं कामरूपी सन् हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यगात्॥ ३ ॥

तं शिशुं कश्चि द्बलवा न्मीनो मत्स्यो निर्जगार निगीर्णवान्। ततः कदाचि न्मत्स्यजीविभि र्दाशैः, सोऽपि मीनोऽपि अपरै र्मीनैस्सह महता जालेन वृतः आवृतो गृहीतश्च॥ ४ ॥

कैवर्ताः दाशाः, तं महामीनं शम्बरायोपायन मुपाजह्रुः समर्पयामासुः। ततः सूदाः पाचका श्छेत्तारो वा महानसं पाकगृहं प्रति तं मीनं प्रा[3]पय्य स्वधितिना शस्त्रविशेषेण अव[4]द्यन् खण्डितवन्तः॥ ५ ॥

1 B omits अगारात् 2 T, W, omit वि 3 B प्राप्य 4 K, T, W °घ्यन्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

विजयध्वजतीर्थमते अयमध्याय एव नाऽस्ति अतः अस्य अध्यायस्य (५५) पदरत्नावलीव्याख्या नाऽस्ति। ॥

दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन्।
नारदोऽकथय त्सर्वं तस्या श्शङ्कितचेतसः॥
बालस्य तत्त्व मुत्पत्तिंमत्स्योदर निवेशनम्॥ ६ ॥

सा च कामस्य वै पत्नी रति र्नाम यशस्विनी।
पत्यु र्निर्दग्धदेहस्य देहोत्पत्तिं [1]प्रतीक्षती॥ ७ ॥

निरूपिता शम्बरेण सा [2]सूदौदनसाधने।★
कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदाऽर्भके॥ ८ ॥

नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः।
जनयामास नारीणां वीक्षन्तीनाञ्च विभ्रमम्॥ ९ ॥

सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नर[3]लोकसुन्दरम्।
सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रति रङ्ग! सौरतैः॥ १० ॥

---

1 MI, V निरी० 2 B, G, J सूपौ०, MI, V स सूपौ ★ An additional half verse स च त सुन्दरवर विलोक्य मुदितानना is found in MI, V edns only 3 MI, V °देव०

**श्रीध० दृष्ट्वेति।** तत्त्वं कामोऽयं, तव भर्तेति, उत्पत्तिं श्रीकृष्णा द्रुक्मिण्या मुत्पन्न इति॥ ६ ॥

**सेति।** यशस्विनी पतिव्रता [1]भर्तृदेहप्राप्तिं प्रतीक्षमाणा॥ ७ ॥

**निरूपितेति।** तं शिशुं कामदेवं बुद्ध्वा [2]विज्ञाय॥ ८ ॥

**नेति।** विभ्रमं सम्मोहम्॥ ९ ॥

**सेति।** अङ्ग! हे राजन्! सौरतैर्भावै रुपतस्थेऽभजत्॥ १० ॥

---

1 MI, V भर्तुः 2 MI, V मत्वा

**वीर०** तदा तस्य मत्स्यस्योदरेऽद्भुतं बालं दृष्ट्वा तं मायावत्यै रत्यै[1] मन्मथपत्न्यै रत्याख्यायै शम्बरेण प्रसह्याऽऽहृत्य महानसे स्थापितायै न्यवेदयन्। कोऽसा वयं बाल इति मम भर्तेव स्थितः, किं वा स एवाऽय मित्येवं शङ्कितं चेतो[2] यस्या स्तथा, मायावत्याः नारदः तत्सर्वं कथयामास। किं तत्सर्वम्, यदकथयत्? तत्राऽऽह- बालस्येति। तत्त्वं याथार्थ्यं, काम एवाऽयमि त्येवंविधं, मत्स्योदरनिवेशनादिकञ्चेति सर्व मकथयत्॥ ६ ॥

**सा चेति**। सा शम्बरेण सूदैः सह ओदनसाधने पाकगृहे निरूपिता सूदानां परिचारकतया स्थापिता मायावती पत्युः कामस्य देहोत्पत्तिं प्रतीक्षमाणा स्थिता सती तं शिशुं नारदमुखात्कामदेवं ज्ञात्वा तस्मि न्नर्भके सदा[3]ऽविच्छिन्नं स्नेहं चक्रे॥ ७, ८ ॥

स[4] कार्ष्णिः कृष्णस्याऽपत्यं प्रद्युम्नः नातिदीर्घेणाऽल्पेनैव कालेन रूढं प्राप्तं यौवनं यस्य सः, विभ्रमं सम्मोहं जनयामास॥ ९ ॥

**सेति**। अङ्ग! हे राजन्, सा मायावती तं प्रद्युम्नं रूढयौवनं प्रीत्या सौरतै भवि रुपतस्थे अभजत्। कथम्भूता? व्रीडया सहितो यो हासः, तेन उत्तम्भिते भ्रुवौ यस्यास्तया, दृशेति विशेष्यस्याऽध्याहारः[5]। ईक्षती ईक्षमाणा॥ १० ॥

---

1 K, T, W omit रत्यै 2 B °त्यं 3 K, T, W, omit सदा 4 K, T, W, omit सः 5 K, T, W °ध्याध्या०

ता माह भगवान् कार्ष्णि र्मात स्ते मतिरन्यथा।
मातृभाव मतिक्रम्य वर्तसे कामिनी यथा॥ ११ ॥

रतिरुवाच

भवा न्नारायणसुतः शम्बरेणाऽऽहृतो[1] गृहात्।
अहं तेऽधिकृता[2] पत्नी रतिः, कामो भवा न्प्रभो॥ १२ ॥

एष त्वाऽनिर्दशं सिन्ध्या[3] वक्षिप च्छम्बरोऽसुरः॥
मत्स्योऽग्रसी त्तदुदरा दिह[4] प्राप्तो भवा न्प्रभो॥ १३ ॥

तमिमं जहि दुर्धर्षं दुर्जयं शत्रु मात्मनः।
मायाशतविदं त्वञ्च मायाभि र्मोहनादिभिः॥ १४ ॥

परिशोचति ते माता [5-]कुररीव गतप्रजा[-5]।
पुत्रस्नेहाकुला दीना विवत्सा गौरिवा[6]ऽऽतुरा॥ १५ ॥

---

1 Ml. J °णाहृ० 2 K. W दयिता 3 Ml. V. W °धौ प्राक्षि० 4 B, J °दितः 5- -5 K, W कुररीव हत 6 K, W °र्यथाऽऽतुरा

**श्रीध० भवानिति।** अधिकृता पत्नीत्यत्र हेतुः रति रहं, भवा न्काम इति॥ ११- १३ ॥

**तमिति।** दुर्जयत्वे हेतुः - मायाशतविदमिति। कथन्तर्हि हन्तव्यः? तत्राऽऽह - मायाभिरिति॥ १४ ॥

न चाऽत्र विलम्बः कार्य इत्याह- **परिशोचतीति।** परिशोचति रोदितीत्यर्थः॥ १५ ॥

**वीर०** तथा भगवान्कार्ष्णिः तां मायावतीमाह - उक्तिमेवाऽऽह - **मातरिति।** हे मातः! तव मति रन्यथा विपरीता बभूव। अन्यथात्वमेव दर्शयति मातृभावमिति। कामिनी पुंश्चली यथा तद्वत्॥ ११ ॥

एव मुक्ता प्राह रतिः - **भवानिति** [1-] चतुर्भिः [-1]। नारायणस्य श्रीकृष्णस्य सुतः। एवञ्चे त्तद्गृह एव किं न वसामि, इत्यत आह- शम्बरेणेति। गृहा न्नारायणस्य गृहात्। तवाऽहं दयिता प्रियतमा पत्नी॥ १२ ॥

एषः शम्बरोऽसुरोऽनतीतदशाहमेव त्वां समुद्रे पातयामास। हे प्रभो! समर्थ!॥ १३ ॥

त मात्मनश्शत्रुं शम्बरं जहि। दुर्जयत्वे हेतुः- मायाशतविदमिति। कथन्तर्हि हन्तव्यः? तत्राऽऽह-मायाभिरिति। मोहन मादि र्यासां ताभि र्मायाभि र्मयोपदेक्ष्यमाणाभिरिति शेषः॥ १४ ॥

न चाऽत्र विलम्बः कार्य इत्याह [2] - **परिशोचतीति।** तव माता रुक्मिणी हता विनष्टा अदृष्टेति यावत्, प्रजा पुत्रो यस्या स्सा कुरङ्गीव हरिणीव परिशोचति। किञ्च, पुत्रस्नेहेनाऽऽतुरा विवत्सा विनष्टवत्सा अत एवाऽऽतुरा गौ र्यथा, तद्वत्॥ १५ ॥

---

1- -1 K, T, W omit 2 B, omit परि

[1] प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने [2]।
मायावती महामायां सर्वमायाविनाशनीम्॥ १६ ॥

स च शम्बर मभ्येत्य संयुगाय समाह्वयत्।
अविषह्यै स्त माक्षेपैः क्षिपन् सञ्जनय न्कलिम्॥ १७ ॥

सोऽधिक्षिप्तो दुर्वचोभिः [3] पदाहत इवोरगः।
निश्चक्राम गदापाणि रमर्षा त्ताम्रलोचनः॥ १८ ॥

गदा माविध्य तरसा प्रद्युम्नाय महात्मने।
प्रक्षिप्य न्यनद न्नादं वज्रनिष्पेषनिष्ठुरम्॥ १९ ॥

ता मापतन्तीं [4] भगवान् प्रद्युम्नो [5] गदया [6] गदाम् [7]।
अपास्य शत्रवे क्रुद्धः प्राहिणो त्स्वगदां नदन्॥ २० ॥

---

1 MI, V आ० 2 B, G, J °शि० 3 G, K, W पा० 4 K, W गदया 5 W °म्नस्तरसा 6 MI, V °त्स्वां 7 B, G, J नृप

**श्रीध० गदेति।** वज्रस्य[1] निष्पेषे निर्घाते यथा निष्ठुर स्तीव्रो नादो भवति तथाभूतं नादं व्यनदत्, सामान्य विशेषतया व्याप्यव्यापकत्वभावेन ओदनपाकं पचतीतिवत्; अतिनिष्ठुरं नाद मकरोदित्यर्थः॥ १६- २० ॥

---

1 B omits ओदन

**वीर० प्रभाष्येति।** सर्वा श्शात्रो स्सम्बन्धिनी र्मायाः विनाशयतीति तथा। तां मायां मोहनादिमायात्मिकां विद्यां ददौ॥ १६॥

ततः स च प्रद्युम्नः संयुगाय युद्धार्थं समाहूतवान्। किं कुर्वन्? सोढु मशक्यै रधिक्षेपै स्तं शम्बरं क्षिपन् परिभवन् कलिं कलहं जनयंश्च॥ १७ ॥

स इति। स शम्बरः पादेन ताडित स्सर्प इव दुर्वचोभि रधिक्षेपै रधिक्षिप्तः[1] अत एव क्रोधा त्ताम्रे लोचने यस्य, गदा पाणौ यस्य सः, निश्चक्राम॥ १८ ॥

तरसा बलेन गदा माविध्य भ्रामयित्वा प्रक्षिप्य प्रयुज्य वज्रस्याऽशने र्निष्पेषे निर्घाते यथा निष्ठुर स्तीव्रो नादो भवति तथाभूतं नादं व्यनद च्चकार। पाकं पचतीतिव दयं निर्देशः॥ १९ ॥

**तामिति।** प्रद्युम्नः स्वगदया तां शम्बरप्रयुक्ता माकाशे आपतन्तीं गदा मपास्य निरस्य स इव स्वयमपि नदन् शत्रवे शम्बराय स्वगदां प्रायुङ्क्त॥ २० ॥

1 B ततः

स च मायां सामाश्रित्य दैतेयीं मयदर्शिताम्।
[2-]मुमुचेऽस्त्रमयं[-2] वर्षं कार्ष्णौ वैहायसोऽसुरः॥ २१ ॥

बाध्यमानोऽस्त्रवर्षेण[3] रौक्मिणेयो महारथः।
सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम्॥ २२ ॥

ततो गौह्यकगान्धर्व पैशाचौरगराक्षसीः।[4]
प्रायुङ्क्त शतशो दैत्यः कार्ष्णि र्व्यधमय त्स[5] ताः॥ २३ ॥

निशात मसि मुद्यम्य सकिरीटं सकुण्डलम्।
शम्बरस्य शिरः काया [6-]त्ताम्रश्मश्र्वोर्जहार तत्[-6]॥ २४ ॥

आकीर्यमाणो दिविजैः[7] स्तुवद्भिः कुसुमोत्करैः।
भार्ययाऽम्बरचारिण्या पुरं[8] नीतो विहायसा॥ २५ ॥

---

1 MI, V °या 2 MI, V मुमोचाऽस्त्र, K W मुमुचेश्म० 3 K, W °श्म० 4 B G, J, K, V, W चो० 5 K, W °त्स्म० 6- -6 B, G, J श्मश्रोजसाऽहरत्, MI V श्मश्रु जहार तत् 7 K, W विबुधैः 8 K W पुरीं

**श्रीध० स** इति। वैहायसः आकाशे स्थितः॥ २१ ॥

**बाध्यमान** इति। सत्त्वात्मिकां सत्त्वगुणमयीं, प्रायुङ्क्ते त्युत्तरस्याऽनुषङ्गः॥ २२ ॥

**तत** इति। ताः मायाः व्यधमयत् व्यनाशयत्॥ २३ ॥

**निशातमिति**। ताम्राणि श्मश्रूणि यस्मिंस्तत्। [1-]ओजसा बलेन[-1]॥ २४, २५ ॥

1 - -1 Ml, V omit

**वीर०** स च शम्बरः मयेन दैत्यदानवाचार्येण दर्शिता मुपदिष्टां माया मन्तर्धनाद्यात्मिका माश्रित्य वैहायसः आकाशे स्थितः कार्ष्णौ प्रद्युम्ने शिलामयं वर्षं मुमुचे॥ २१ ॥

तदा रौक्मिणेयः प्रद्युम्नः शिलावर्षेण बाध्यमान स्ताडचमानः सत्त्वत्मिकां सत्त्वगुणमयीं [1]मायां महाविद्याख्यां सर्वासुरमायोपघातिनीं प्रायुङ्क्तेत्युत्तरस्याऽपकर्षः॥ २२ ॥

ततः पुनः दैत्यः गुह्यकानांसम्बन्धिनीं तथा गन्धर्वादि सम्बन्धिनीं च मायां प्रायुङ्क्त। कार्ष्णिस्तु तास्सर्वा मायाः व्यधमयत् व्यनाशयत्॥ २३ ॥

ततः निशितं खड्गमुद्धृत्य निर्मायिस्य ताम्राणि श्मश्रूणि यस्य तस्य शम्बरस्य काया त्सकिरीटं सकुण्डलञ्च शिरो जहार पातयामासेत्यर्थः॥ २४ ॥

**आकीर्यमाण** इति। स्तुवद्भिः विबुधैः देवैः कर्तृभिः कुसुमोत्करैः कुसुमाञ्जलिभिः कुसुमजालैर्वा आकीर्यमाणः प्रद्युम्नः अम्बरे स्वयं चरति अन्यांश्च चारयति तच्छीला तथा, तया भार्यया कर्त्र्या विहायसा आकाशमार्गेण पुरीं द्वारकां प्रति नीतः॥ २५ ॥

1. K, T, W omit मायां

**अन्तःपुरवरं राजन् ललना[1]शतसङ्कुलम्।**
**विवेश पत्न्या गगना द्विद्युतेव वलाहकः॥ २६ ॥**

**तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्।**
**प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम्॥ २७ ॥**

**[2]अलङ्कृतमुखाम्भोजं नीलवक्रा[3]लकालिभिः।**
**कृष्णं मत्वा स्त्रियो ह्रीता निलिल्यु स्तत्र तत्र ह॥ २८ ॥**

**अवधार्य शनै रीषद्वैलक्षण्येन योषितः।**
**उपजग्मुः प्रमुदिताः सस्त्रीरत्नं शुचिस्मिताः[4]॥ २९ ॥**

**अथ तत्राऽसितापाङ्गी वैदर्भी वल्गुभाषिणी।**
**अस्मर त्स्वसुतं नष्टं स्नेहस्नुतपयोधरा॥ ३० ॥**

---

1 K, W रत्न 2 B, G, J, स्वल० 3 B °दि० 4 B, G, J, MI, V सुवि०

**श्रीध० अन्तःपुरेति।** विद्युता सह वलाहको मेघ इव॥ २६, २७ ॥

**अलङ्कृतेति।** नीलाश्च वक्राश्च येऽलका स्त एव अलयः तैः, ह्रीताः लज्जिताः॥ २८ ॥

**अवधार्येति।** श्रीकृष्णो न भवती त्यवधार्य स्त्रीषु रत्नं श्रेष्ठा रतिः तत्सहितम्॥ २९, ३० ॥

**वीर०** तत्र हे राजन्! ललनाः स्त्रिय एव रत्नानि तैःसङ्कुलम् अन्तःपुरश्रेष्ठं पत्न्या सह प्रविवेश, यथा विद्युता सह वलाहको नीलमेघ स्तद्वत्॥ २६ ॥

**तमिति।** प्रविष्टं प्रद्युम्नं दृष्ट्वा स्त्रियः कृष्णमेव मत्वा लज्जिता स्तत्र तत्र निलिल्युः। कृष्णं मत्वेत्यत्र हेतुं वदन् कृष्णसाधारणै धर्मैर्विशिनष्टि जलदश्याम मित्यादि। प्रलम्बौ दीर्घौ बाहू यस्य तं, नीला वक्राश्च येऽलंकाः, त एवालयः तै रलङ्कृतं मुखुम्भोजं[1] यस्य तम्॥ २७, २८ ॥

तत स्ता योषितः शनै रीषद्वैलक्षण्येन श्रीवत्साद्यभावरूपेणेति भावः। अवधार्य कृष्णो न भवत्ययमिति निश्चित्य स्त्रीरत्नेन सहितं प्रद्युम्न मुपजग्मुः [2-]समीप माजग्मुः[-2]॥ २९ ॥

**अथ तत्रेति।** वल्गु सुन्दरं यथा तथा भाषते इति तथा सा वैदर्भी रुक्मिणी नष्टं सुत मस्मरत्। स्नेहेन स्नुतौ तरलौ पयोधरौ यस्याः। इत्थं, प्राहेति शेषः॥ ३० ॥

---

1 T, W °म्बु० 2- -2 T, W omit

**कोन्वयं नरवैदूर्यः[1] कस्य वा कमलेक्षणः।**
**धृतः कया वा जठरे केयं[2] लब्धा त्वनेन[3] वा॥ ३१ ॥**

**[4-]ममाऽसा वात्मजो[-4] नष्टो नीतो य[5] स्सूतिकागृहात्[6]।**
**एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित्॥ ३२ ॥**

**कथन्त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः।**
**आकृत्याऽवयवै र्गत्या स्वरहासावलोकनैः॥ ३३ ॥**

**[7-] स एव वा भवे न्नूनं[-7] यो मे [8]गर्भगतोऽर्भकः।**
**अमुष्मि न्प्रीति रधिका वामः स्फुरति मे भुजः॥ ३४ ॥**

**एवं मीमांस्यमानायां[9] वैदर्भ्यां[10] देवकीसुतः।**
**देवक्यानकदुन्दुभ्या मुत्तमश्लोक आगमत्॥ ३५ ॥**

1 Ml, V °डू० 2 B, G, J केयं Ml V कया 3 Ml, V °ऽथ केन 4- -4 B, G, J, Ml, V मम चाऽप्यात्मजो 5 Ml, V °ऽयं सू० 6 K, W °काऽऽलयात्
7- -7 K, W स एव भगवा न्नून; Ml, V स एवाऽसौ भवे न्नूनं 8 B, G, J गर्भे धृ०; Ml, V गर्भ धृ० 9 B °या: 10 B °र्भ्या:

**श्रीध०** सुतं स्मरन्त्याह - **को न्वयमिति।** नरवैदूर्यः[1] पुरुषश्रेष्ठः[2]॥ ३१ ॥

**ममेति।** एतेन तुल्यं वयो रूपञ्च यस्य स भवे दिति॥ ३२ ॥

तस्य स्वपुत्रत्वं सम्भावय न्त्याह - **कथन्त्विति**॥ ३३ ॥

तदेवाऽधिकं सम्भावयति, **स एवेति**॥ ३४ ॥

**एवमिति।** देवक्यानकदुन्दुभ्यां देवक्यानकदुन्दुभिभ्या मित्यर्थः॥ ३५ ॥

---

1 Ml, V °डू० 2 Ml, V नर

**वीर०** उक्तिमेवाह - **कोन्विति पञ्चभिः।** अयं नर एव वैदूर्यः पुरुषरत्न मित्यर्थः। को नु को वा कस्य वा सम्बन्धी पुत्र इति यावत्। कया स्त्रिया जठरे धृतः कस्याः पुत्र इत्यर्थः। अनेनेयं स्त्री क लब्धा॥ ३१॥

योऽसौ ममाऽऽत्मजः[1] सूतिकागृहा न्नीतो नष्टोऽदृष्टश्च स एवाऽयं किं वेत्यर्थः। एतेन तुल्यं वयो रूपञ्च यस्य सोऽस्मत्पुत्रः क्वचि [2-]द्यदि जीवति किं वा जीवति[-2]॥ ३२॥

तस्य स्वपुत्रत्वं सम्भावय न्त्याह - **कथमिति**॥ ३३॥

निश्चिनोति। **स एवेति।** यो भगवान् कृष्णांशभूतो मम गर्भगतस्स एवाऽयं, नूनं ध्रुवम्। स एवाऽयं, भवेदिति पाठान्तरम्। तत्र हेतुः- अमुष्मिन् अस्मिन् मम प्रीति रधिका भवति, मम वामो भुजश्च स्फुरति सञ्चलति, अन्यथैत न्न घटेतेति भावः॥ ३४॥

इत्थं वैदर्भ्यां मीमांसमानायां तर्कयन्त्यां सत्या मुत्तमश्लोको भगवा न्देवकीवसुदेवाभ्यां सह तत्राऽऽजगाम॥ ३५॥

1 B °नः 2 -- 2 B omits

विज्ञातार्थोऽपि भगवां स्तूष्णीमास जनार्दनः।
नारदोऽकथय त्सर्वं शम्बराहरणादिकम्॥ ३६ ॥

तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः।
अभ्यनन्द न्बहू नब्दा न्नष्टं [1-]पुनरिवाऽऽगतम्[-1]॥ ३७ ॥

देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः।
दम्पती तौ परिष्वज्य रुक्मिणी च ययु र्मुदम्॥ ३८ ॥

नष्टं प्रद्युम्न मायात[2] माकर्ण्य द्वारकौकसः।
अहो मृत इवा[3]ऽऽयातो बालो दिष्ट्येति चा[4]ऽब्रुवन्॥ ३९ ॥

यं वै मुहुः पितृसरूपनिजेशभावा स्तन्मातरो य दभज न्रह ऊ[5]ढभावाः।
चित्रं न तत्खलु रमास्पदबिम्बबिम्बे कामे स्मरेऽक्षिविषये किमुताऽन्यनार्यः॥ ४० ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
प्रद्युम्नोत्पत्तिनिरूपणं नाम पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

---

1 B, G, J मृतमिवा०, MI, V पुनरिहा० 2 MI, V °न्त० 3 K, W °हाऽऽ० 4 B, G, J °हाऽ० 5 B, G, J रूढ

**श्रीध०** अतिसौन्दर्येण प्रद्युम्नं[1] वर्णयति **यमिति**। पिता श्रीकृष्ण स्तत्सरूपे स[2]दृशे प्रद्युम्ने निज आत्मीय ईशो भर्तेति भावो भावना यासां ताःतन्मातरः कृष्णपत्न्योऽपि रहसि ऊ[3]ढभावास्सत्यः य मभज न्निति यत् त न्न खलु चित्रम्। कथं स[4]ति स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति। किञ्च रमास्पदं श्रीकृष्ण स्तस्य बि[5]म्बं श्रीमूर्तिःतस्य बिम्बे प्रतिबिम्बे पुत्रे। तदा कि[6]न्नु वक्तव्य मन्यनार्यो भे[7]जुः इति॥ ३६- ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

---

1 MI, V add अनु 2 MI, V omit सदृशे 3 B, J निरूढ 4 MI, V तस्मिन् 5 MI, V बिम्बः 6 MI, V किमु 7 MI, V भजेयुः

**वीर०** विज्ञातोऽध्यवसितः अर्थः इतरसंशयविषयीभूतोऽर्थो येन तथाभूतोऽपि तूष्णीमास। तदा नारदः शम्बराहरणादिकं सर्वमकथयत्॥ ३६ ॥

त न्नारदकथितं महदाश्चर्यं श्रुत्वा कृष्णान्तःपुरस्त्रियो देवक्यादयश्च मृतं प्रेतं[1] पुत्रं[2] पुनरागतमिव बहू नब्दान् वत्सरान् नष्टमदृष्टं [3-] सम्प्रति दृष्टं, [-3] दृष्ट्वेति शेषः, अभ्यनन्दन्॥ ३७ ॥

तौ दम्पती देवकीवसुदेवौ रुक्मिणी च परिष्वज्य, प्रद्युम्नमिति शेषः। नष्टं प्रद्युम्न मायात मित्यस्य अपकर्षो वा। मुदं ययुः॥ ३८ ॥

**नष्टमिति।** द्वारकौकसो द्वारकावस्थायिनो जना इत्थ मब्रुवन्। किमिति? अहो मृतो बालः पुन रिहाऽऽयातः दिष्ट्या! अय मानन्द इति॥ ३९ ॥

सौन्दर्यातिशयेन प्रद्युम्नं वर्णयति- **यमिति।** पिता श्रीकृष्णः तत्सरूपतया निज आत्मीय ईशः भर्तेति भावो भावना यासां ताः, पितृसारूप्या न्निजभर्तृबुद्धिसहिता इत्यर्थः। तन्मातरः श्रीकृष्णपत्न्यो रहसि निरूढभावा स्सत्यः। य मभज न्निति यत्, त न्न खलु चित्रम्। "तन्मातरो मनसिजार्द्रदृशो बभूवुः" इति पाठे ताः कृष्णपत्न्यः यं प्रद्युम्नं, दृष्ट्वेति शेषः। कामवशात् स्निग्धदृष्टयोऽभव न्निति यत् नैतच्चित्र मिति सम्बन्धः। स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति। किञ्च, रमाया आस्पदं श्रीकृष्णः, तस्य बिम्बं मूर्तिः तस्य बिम्बे प्रतिबिम्बे भगवद्विग्रहसदृशे पुत्रे सतीत्यर्थः। तत् किमु वक्तव्यं य दन्या नार्यो भजेयुरिति॥ ४० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
व्याख्यायां पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

---

1 K, T, W omit प्रेतं 2 B omits पुत्रं 3- -3 K, T, W omit

# षट्पञ्चाशोऽध्यायः

## (विजयध्वजरीत्या षष्टितमोऽध्यायः)

श्रीशुक उवाच

सत्राजितः[1-] स्वतनयां[-1] कृष्णाय कृतकिल्बिषः।
स्यमन्तकेन मणिना स्वय मुद्यम्य दत्तवान्॥ १ ॥

राजोवाच

सत्राजितः किमकरोद्ब्रह्मन् कृष्णस्य किल्बिषम्।
स्यमन्तकः कुत स्तस्य कस्मा द्दत्ता सुता हरेः॥ २ ॥

श्रीशुक उवाच

आसी त्सत्राजित स्सूर्ये[2-] भक्तस्य[-2] परम स्सखा[3]।
प्रीत स्तस्मै मणिं प्रादा त्सूर्य स्तुष्टः स्यमन्तकम्॥ ३ ।

स तं बिभ्र न्मणिं कण्ठे भ्राजमानो यथा रविः।
प्रविष्टो द्वारकां राजन् तेजसा नोपलक्षितः॥ ४ ॥

तं विलोक्य जना दूरा त्तेजसा मुष्टदृष्टयः।
दीव्यतेऽक्षै र्भगवते शशंसु स्सूर्यशङ्किताः॥ ५ ॥

---

1- -1 M Ma °जि त्तनयां तन्वीं 2- -2 K. W र्य भक्तश्च 3 K, W °दा

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणि माहरत्। कन्यां जाम्बवतः प्राप कृष्णः सत्राजित स्ततः॥

पुत्रादिकामसौख्यस्य निष्ठा मुक्त्वाऽतिचञ्चलाम्। अर्थस्याऽनर्थता माह स्यमन्तहरणादिना[1]॥

सत्यभामाजाम्बवत्यो र्विवाहप्रस्तावाय स्यमन्तकाख्यान माह - **सत्राजित** इति। सत्राजित इत्यकारान्तः, क्वचित्त तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः। कृतापराध स्तच्छान्तये स्वय मेवोद्यमं कृत्वा मणिना सह प्रादादिति॥ १, २ ॥

**आसीदिति**। भक्तस्य सत्राजितः सूर्यः स्वाम्यपि सखेवाऽऽसी दित्यर्थः। स च तुष्टः तस्मै स्यमन्तकं नाम मणिं प्रादात्, प्रीतः स्निग्धः॥ ३ ॥

**स इति**। नोपलक्षितः सत्राजितोऽसा विति अविज्ञातः[2]॥ ४ ॥

**तमिति**। दीव्यते क्रीडते सूर्योऽय मिति शङ्किता स्सन्तः कथयामासुरिति॥ ५ ॥

---

1 MI, V °न्ता० 2 MI, V न ज्ञातः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ सत्यभामाजाम्बवत्यो र्विवाहं वर्णयितुकाम स्तद्विस्तरपिपृच्छिषा मुत्पादयितु माह- **सत्राजित** इति। सत्राजित इत्यकारान्तः, क्वचित्तकारान्तोऽपि अन्वयानुसारेण द्रष्टव्यः। तत्राकारान्तः कर्तरि क्तान्तः सत्रेणाऽऽसमन्ता जितः जितवान् सर्वोत्कर्षेण वर्तितवा निति तथा। स च ताव त्कृतं किल्बिष मपराधो येन तथाभूतः स्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां कृष्णायोद्यम्योद्धृत्य ददौ॥ १ ॥

तत्र लब्धप्रश्नावसरः पृच्छति राजा- **सत्राजित** इति। हे ब्रह्मन्, ताव त्सत्राजि त्किं किल्बिष मपराध मकरोत्, तस्य सत्राजितस्य स्यमन्तकः कुतः कस्मा ल्लब्धः। कस्माद्धेतोः सुता च हरे र्हरये दत्ता॥ २ ॥

इति पृष्टः सविस्तर मनुवर्णयितुं ताव दुपोद्घात माह **आसीदिति**। सत्राजिताख्यः कश्चिद्राजा सदा परमः सूर्यभक्तः आसीत्। सूर्य स्तुष्टः, भक्त्येति शेषः। तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं ददौ॥ ३ ॥

स सत्राजित स्तं मणिं कण्ठे बिभ्राणः रविरिव भ्राजमानः हे राजन्, मणितेजसा अनुपलक्षितशरीरो द्वारकां प्रविष्टः॥ ४ ॥

तं प्रविष्ट मवलोक्य जनाः दूरादेव तस्य तेजसा मुष्टा अपहृता अभिभूता दृष्टयो येषां ते सूर्योऽयमिति शङ्किता स्सन्तः अक्षै र्दीव्यते क्रीडां कुर्वाणाय भगवते श्रीकृष्णाय शशंसुः कथयामासुः॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

त्रिविक्रमावतारस्य निरपेक्षभक्तानुकम्पिनो यदुनन्दनस्य एतज्जन्मानुष्ठितकर्मनिमित्त दुर्यशश्शामनहेतु विक्रम मनुक्रामति-अस्मिन्नध्याये। तत्र परीक्षितः प्रश्नबीज मुत्थापयति - **सत्राजिदिति**। सत्रेण हिरण्यादिदानलक्षणतपसा सूर्यस्थितं

हरिं जितवा न्वशीकृतवा नित्यतः सत्राजिदिति नाम लब्धवान्। "यज्ञभेदे सदादाने सत्र माच्छादने वने" (अम०.को 3-336) इति। कृतकिल्बिषः कृतापराधः मणिना सह स्वयमुद्यम्य याचनादिपरप्रेरणामन्तरेण मत्कन्यां तुभ्यं दास्यामीति वचनादि प्रयत्नं विधाय। सत्राजितोऽन्तरात्मा सत्रविषये अजित इति वा॥ १, २ ॥

भक्तस्य सत्राजितः सखा॥ ३ ॥

तेजसाऽर्चिषा नोपलक्षितो न दृष्टः॥ ४ ॥

अक्षै र्देवनाक्षै र्दीव्यते द्यूतक्रीडां कुर्वते॥ ५ ॥

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर।
दामोदरारविन्दाक्ष, गोविन्द यदुनन्दन॥ ६ ॥

एष आयाति सविता त्वां दिदृक्षु र्जगत्पते।
मुष्ण न्गभस्तिचक्रेण नृणां[1] चक्षूंषि तिग्मगुः[2]॥ ७ ॥

[3-]नन्विच्छन्ति[-3] ते मार्गं त्रिलोक्यां विबुधर्षभाः।
ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वाऽऽया[4] त्यजः प्रभो॥ ८ ॥

श्रीशुकः (श्रीकृष्णः)

निशम्य बालवचनं प्रहस्याऽम्बुजलोचनः।
प्राह नाऽसौ रवि र्देवः सत्राजि न्मणिना ज्वलन्॥ ९ ॥

[5-]श्रीशुक उवाच[-5]

सत्राजि त्स्वगृहं श्रीम[6] त्कृतकौतुकमङ्गलम्।
प्रविश्य देवसदने मणिं विप्रै र्न्यवेशयत्॥ १० ॥

---

1 Ml, V नृ० 2 M, Ma °रुक् 3- -3 K, W अन्विच्छन्ति हि 4 G, J, M, Ma त्वां या० 5- -5 G, J, M, Ma, Ml, V omit 6 K, W °मान् कृ०

श्रीध० नारायणेति। सूर्यं नमस्कारार्थ मागतं कल्पयि त्वोद्रिक्तभक्तीनां सम्बोधनानि नारायणेत्यादीनि॥ ६॥

एष इति। गभस्तिचक्रेण रश्मिजालेन मुष्णन् प्रतिघ्नन् तिग्माः तीक्ष्णाः गावो रश्मयो यस्य सः॥ ७ ॥

न चेद मघटमान मित्याहुः- **नन्विति अन्विच्छन्ति मृगयन्ते, अजः सूर्यः॥ ८ ॥**

**निशम्येति।** बालाना मज्ञानां वचनं, ज्वलन् विद्योतमानः॥ ९ ॥

**सत्राजिदिति।** कृतानि कौतुकेन उत्सवेन मङ्गलानि यस्मिं स्तत्। विप्रैः कृत्वा॥ १० ॥

**वीर०** नमस्कर्तु मागतं सूर्यं सम्भाव्य भक्त्युद्रेकेण भगवन्तं सम्बोधयन्ति नारायणेति॥ ६ ॥

**एष** इति। एष इत्यागच्छतो रूपप्रदर्शनपरं, सविता[1] सूर्य स्त्वां द्रष्टुमिच्छुः। हे जगत्पते, आयाति। कथम्भूतः? तिग्माः तीक्ष्णाः[2] गावो रश्मयो यस्य सः गभस्तिचक्रेण रश्मिजालेन नृणां चक्षूंषि मुष्णन् प्रतिघ्नन्॥ ७ ॥

न चेत दघटमान मित्याहुः- **अन्विच्छन्तिहीति।** विबुधर्षभा देवश्रेष्ठा स्त्रिलोक्यां तव मार्ग मन्विच्छन्ति अन्वेषयन्ति, त्वं यद्रूपगुणकर्मकः तथाभूतं त्वां द्रष्टु मिच्छन्तीत्यर्थः। अतोऽधुना यदुषु गूढं गृहीतयदुवेषं त्वां ज्ञात्वा हे प्रभो, अजः सूर्यःआयाति॥ ८ ॥

**निशम्येति।** बालाना मागच्छतो याथात्म्यानभिज्ञानां वचन माकर्ण्य प्रहस्याऽऽह[3] - नासाविति। असावागच्छन्न देवो रवि स्सूर्यः, किन्तु सत्राजित्। कुत स्तस्येदृशं तेज इत्यतो विशिनष्टि मणिना स्यमन्तकेन ज्वलन् विद्योतमान आयाति॥ ९ ॥

कीदृश स्तस्य मणेः प्रभाव इति जिज्ञासुं राजानं प्रत्याह मुनिः- **सत्राजिदिति।** अस्य 'सूर्याल्लब्धमणिः' इत्यादिः। श्रीमान् भाग्यवान् सत्राजित् कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिं स्तत् स्वगृहं प्रविश्य [4-]देवसदने[-4] विप्रैः प्रयोज्यकर्तृभिः मणिं न्यवेशयत्॥ १० ॥

---

1 K, T, W omit सविता 2 B तीव्राः 3 B adds उक्तिमाह 4- -4 B देवतागृहे

**विज०** गभस्तिचक्रेण रश्मिमण्डलेन तिग्मरुक् सूर्यः॥ ६, ७ ॥

विबुधर्षभाः देवश्रेष्ठाः त्रिलोक्यां ते मार्ग मन्विच्छन्ति मृगयन्ते। ननु ते ध्वज स्सूर्यः अद्य यदुषु गुह्यं ज्ञात्वा द्रष्टुं या त्यायाति ,"अजाय लेकत्रयभावनाय" इति वचनात्॥ ८,९ ॥

गृहे देवसदने देवस्थाने न्यवेशयत् प्रतिष्ठितवान्। १० ॥

**दिने दिने स्वर्णभारा[1] नष्टौ स सृजति प्रभो।**
**दुर्भिक्षमार्यरिष्टानि सर्वाधिव्याधयोऽशुभाः॥**
**न सन्ति मायिन स्तत्र [2-]यत्राऽऽस्तेऽ[-2]भ्यर्चितो मणिः॥ ११ ॥**

स याचितो मणिं[3] क्वाऽपि यदुराजाय शौरिणा।
नैवार्थकामुकः प्रादा द्याच्ञाभङ्ग मतर्कयन्[4]॥ १२ ॥

-: जाम्बवतः स्यमन्तकप्राप्तिः, मण्यर्थे नागरैस्सह भगवतो वनगमनश्च :-

त मेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम्।
प्रसेनो हय मारुह्य मृगयां व्यचर द्वने॥ १३ ॥

प्रसेनं सहयं हत्वा मणि माच्छिद्य केसरी।
गिरिं[5] विशन् जाम्बवता निहतो मणि मिच्छता॥ १४ ॥

सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले।
अपश्य न्भ्रातरं भ्राता सत्राजि त्पर्यतप्यत॥ १५ ॥

1 B, G, J सर्पाऽधि०; M Ma सर्पेऽपि 2- -2 M, Ma यद्राष्ट्रे 3 M, Ma मणिः 4 M, Ma °त् 5 M, Ma बिलं

**श्रीध० दिने दिन इति।** भारप्रमाणञ्च- "चतुर्भि र्व्रीहिभि र्गुञ्जं गुञ्जान्पञ्च पणं पणान्। अष्टौ धरण मष्टौ च कर्ष तांश्चतुरः पलम्। तुलां पलशतं प्राहु र्भारः स्या द्विंशति स्तुलाः" इति। मारीनामाऽकालमृत्युः। अरिष्ट मभद्रम्। अशुभा दुःखहेतवः॥ ११॥

**स इति।** क्काऽपि कदाचि दनेन भगव त्यसमर्प्य स्वय मग्रभोजिनः सर्वानिष्टनिवर्तकम प्यनिष्टहेतुरेव भवतीति सूचितम्॥ १२॥

तदेव दर्शयितु माह **तमेकदेति।** प्रतिमुच्य बद्ध्वा प्रसेनः सत्राजिद्भ्राता॥ १३ ॥

**प्रसेनमिति।** आच्छिद्य आकृष्य गृहीत्वा॥ १४, १५ ॥

**वीर०** स च मणिर्हि प्रभो राजन्, प्रतिदिन मष्टौ स्वर्णभारान् सृजति असूत, भारः प्रमाणविशेषः। तथा हि-"चतुर्भि र्व्रीहिभि र्गुञ्जं गुञ्जान् पञ्च पणं पणान्। अष्टौ धरण मष्टौ तान् कर्ष तांश्चतुरः पलम्। तुलां[1] पलशतं प्राहुः भारः स्याद्विंशति स्तुलाः।" इति॥ किञ्च, दुर्भिक्षेति। मारी नाम अकालमृत्युः। अरिष्ट मभद्रम्। अशुभाः दुःखहेतवः, आधिः मनःपीडा, व्याधयो रोगाः। मायिनो वञ्चका श्चोरा इति यावत्। यस्मि न्राज्ये स मणि रर्चितः स्या त्तत्र कदाचिदपि दुर्भिक्षादयो न सन्ति स्म[2]॥ ११ ॥

क्वाऽपि कदाचित् यदुराजाय उग्रसेनार्थं शौरिणा मणिं प्रति[3] याचितोऽपि स सत्राजित् अर्थकामुकः, हेतुगर्भ मिदम्। तत्त्वात्, [4-]याच्ञाभङ्गं[-4] याच्ञावैयर्थ्यं अविचारयन्[5] नैव ददौ॥ १२ ॥

एवं स्थिते, महती प्रभा दीप्ति र्यस्य तं मणि मेकदा प्रसेनः सत्राजिद्भ्राता कण्ठे प्रतिमुच्य बद्ध्वा अश्व मारुह्य वने मृगयां व्यचरत्॥ १३ ॥

तदा कश्चि त्केसरी सिंहः साश्वं प्रसेनं हत्वा मणि माच्छिद्याऽऽकृष्य गृहीत्वा गिरिं प्रविशन् आत्मानं दृष्टवता मणि मिच्छता जाम्बवता ऋक्षराजेन हतः॥ १४ ॥

सोऽपि जाम्बवानपि बिले स्वनिवासभूते गिरिबिले तं मणिं स्वकुमारस्य क्रीडनकं क्रीडासाधनं चक्रे। भ्राता सत्राजित् भ्रातरं प्रसेनं मणिश्चाऽपश्यन् पर्यतप्यत परितप्याऽऽहेत्यर्थः॥ १५ ॥

---

1 B omits अशुभाः 2 B omits स्म 3 K, T, W omit प्रति 4- -4 K omits 5 B, T, W add एव

**विज०** पञ्चविंशतितुलात्मको भारः, ता नष्टौ भारान् सृजति ददाति। मारी अकालमृत्युः। अरिष्टं मृत्युचिह्नम्॥ ११ ॥

क्वाऽपि कदाचित्। अतर्कयत् अनिरूपयत्॥ १२ ॥

प्रतिमुच्य बद्ध्वा॥ १३ ॥

आच्छिद्य स्वीकृत्य॥ १४ ॥

क्रीडनकं लीलासाधनम्॥ १५ ॥

**प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः।**
**भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजप[1]ञ्जनाः॥ १६ ॥**

**भगवां स्तदुपश्रुत्य दुर्यशो लिप्त मात्मनि।**
**मार्ष्टुं प्रसेनपदवी मन्वपद्यत नागरैः॥ १७ ॥**

**हतं [2-]प्रसेन मश्वञ्च[-2] वीक्ष्य केसरिणा वने।**
**तञ्चाऽद्रिपृष्ठे निहत मृक्षेण ददृशु र्जनाः॥ १८ ॥**

**- भगवतः स्यमन्तकार्थे जाम्बवता सह युद्धम्-**

**ऋक्षराजबिलं भीम मन्धेन तमसाऽऽवृतम्।**
**एको विवेश भगवा नवस्थाप्य बहिः प्रजाः॥ १९ ॥**

**तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम्।**
**हर्तुं कृतमति स्तस्मि न्नवतस्थेऽर्भकान्तिके॥ २० ॥**

---

1 K, W °पजनः 2- -2 Ml, V °नं साश्चञ्च

**श्रीध०** **प्रायःइति।** अजपन् उपांशु अवोचन्॥ १६-२० ॥

**वीर०** उक्तिमेवाऽऽह - **प्राय** इति। मणिः ग्रीवायां यस्य सः मम भ्राता वनं प्रति गतः, तत्र प्रायो बहुधा, ध्रुवमिति यावत्, श्रीकृष्णेनैव हतः। इत्येत द्वचो जनः श्रुत्वा कर्णे कर्णे अजपत् उपांश्ववोचत्॥ १६ ॥

क्रमेण भगवानपि तद्वच आकर्ण्य आत्मनि स्वस्मिन् दुर्यशोलिप्तं, भावेक्तः, दुर्यशोलेपं प्रमार्ष्टुं अपोहितुं नागरै र्जनैस्सह प्रसेनपदवी मन्वपद्यत अन्वगच्छत्॥ १७ ॥

**हतमिति।** तं[1] केसरिणश्चाऽद्रिपृष्ठे ऋक्षेण जाम्बवता निहतं ददृशुः॥ १८॥

**ऋक्षराजबिलमिति।** तत स्तत्र बिलद्वारे प्रजाः नागरा जनान् अवस्थाप्य भगवा नेकोऽसहाय एव तद्बिलं प्रविवेश॥ १९॥

**तत्रेति।** तत्र बिले क्रीडनकं क्रीडासाधनं यथा तथा कृतं मणिश्रेष्ठं दृष्ट्वा हर्तुं कृता निश्चिता मति र्येन सः, तस्मिन् अर्भकसमीपे अवतस्थे॥ २० ॥

---

1 B omits तं

**विज०** शौरे र्यच्चाभङ्गदोषा दिद मनर्थजात मभूत्, अन्यथा मणिमाहात्म्यस्तवनं व्यर्थ मिति तात्पर्यमवगन्तव्यम्। मणिः ग्रीवायां यस्य स तथा। मम भ्राता कृष्णेन निहत इति यत् तच्छ्रुत्वा॥ १६-१७ ॥

ऋक्षेण जाम्बवता॥ १८-२० ॥

**तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत्।**
**तच्छ्रुत्वाऽभ्यद्रव त्क्रुद्धो जाम्बवा न्बलिनां वरः॥ २१ ॥**

**स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः।**
**पुरुषं प्राकृतं मत्वा कुपितो नाऽनुभाववित्॥ २२ ॥**

**द्वन्द्वयुद्धं सुतुमल मुभयो र्विजिगीषतोः।**
**आयुधाश्मद्रुमै र्दोर्भिः क्रव्यार्थे श्येनयोरिव॥ २३ ॥**

आसी त्तदष्टाविंशाह मितरेतरमुष्टिभिः।
वज्रनिष्पेषपरुषै रविश्रम महर्निशम्॥ २४ ॥

[1-]कृष्णस्य मुष्टिनिष्पातै[-1] र्निष्पिष्टाङ्गोरुबन्धनः।
क्षीणसत्त्वः स्विन्नगात्र स्त माहाऽतीव विस्मितः॥ २५ ॥

---

1- -1 B, G, J, M, Ma कृष्णमुष्टिविनिष्पात; K, W श्रीकृष्णमुष्टिनिर्घात

**श्रीध० द्वन्द्वेति।** क्रव्यार्थे आमिषार्थे॥ २१-२३ ॥

**आसीदिति।** अष्टाविंशाहम्, अष्ट च विंशतिश्च अहानि [1]दिनानि यस्मिंस्तत् अष्टाविंशा[2]हम्। विंशतिशब्दे तिलोप आर्षः। वज्रस्य निष्पेषो निर्घातः तद्व त्परुषै र्निष्ठुरैः॥ २४ ॥

**कृष्णस्येति।** श्रीकृष्णस्य मुष्टीनां [3]विनिष्पातैः आघातैः [4]निष्पिष्टानि [5]श्लथानि अङ्गाना मुरूणि बन्धनानि सन्धिस्थानानि यस्य सः॥ २५ ॥

1 Ml, V omit दिनानि 2 Ml, V °शत्यहम् 3 Ml, V omit वि 4 Ml, V add वि० 5 Ml, V add वि०

**वीर० तमिति।** त मुपस्थित मदृष्टपूर्वं नरं दृष्ट्वा भीतव द्धात्री उपमाता चुक्रोश। तच्छ्रुत्वेति तदाक्रोशनम्, अभ्यद्रवत् अभ्यधावत्॥ २१ ॥

स वै जाम्बवान् नाऽनुभाववित् भगवत्प्रभाव मजानन् अत एव तं केवलं प्राकृतं लौकिकं पुरुषमेव मत्वा आत्मनः स्वस्य स्वामिनाऽपि तेन भगवता सह युयुधे अयुध्यत॥ २२ ॥।

**द्वन्द्वयुद्धमिति।** विजिगीषतो र्जेतुमिच्छतो र्दोर्भि र्भुजैः यथा क्रव्यार्थे आमिषार्थे श्येनयो र्युद्धं भवति तद्वत्॥ २३॥

**आसीदिति।** इतरेतरयो रन्योन्ययो र्मुष्टिभि र्वज्रनिष्पेषो वज्रनिर्घात स्तद्वत् निष्ठुरै स्तद् द्वन्द्वयुद्धम्, न विद्यते विश्रमो यस्मिन् तद्यथा तथा अहर्निशं मष्टाविंशतिदिना न्यासीत्॥ २४ ॥

**श्रीकृष्णेति।** श्रीकृष्णस्य मुष्टीनां निर्घातै र्निष्पातै र्निष्पिष्टानि विश्लथा न्यङ्गानि उरूणि बन्धनानि सन्धिस्थानानि यस्य सः अत एव क्षीणबलः अत एव स्विन्नं प्रस्वेदयुक्तं मात्रं यस्य सः। कदाऽपि मद्बलविनाशो न दृष्टः। अहो! अधुना मृतप्रायोऽभव मित्येव मतीव विस्मितः॥ २५ ॥

**विज० अविश्रमम् निरन्तरम्॥ २१- २५ ॥**

: जाम्बवत्कृतकृष्णस्तुतिः; मणिना सह जाम्बवतीप्राप्तिश्च :

जाने त्वां सर्वभूतानां प्राण[1] मोज स्सहो बलम्।
विष्णुं पुराणपुरुषं प्रभविष्णु मधीश्वरम्॥ २६ ॥

त्वं हि विश्वसृजां स्रष्टा [2-]सृज्याना मपि यच्च सत्[-2]
कालः कलयता मीशः [3]परमात्मा तथाऽऽत्मनाम्॥ २७ ॥

य स्येषदुत्कलितरोषकटाक्षमोक्षै
वर्त्माऽदिश न्क्षुभितनक्रतिमिङ्गिलोऽब्धिः।
सेतुः कृत स्स्व[4]यशसोज्ज्वलिता च लङ्का
रक्षश्शिरांसि भुवि पेतु रिषुक्षतानि॥ २८ ॥

इति विज्ञातविज्ञान मृक्षराजानमच्युतः।
व्याजहार महाराज! भगवा न्देवकीसुतः॥ २९ ॥

अभिमृश्याऽरविन्दाक्षः पाणिना शङ्करेण त[5]म्।
[6-]कृपया परया[-6] भक्तं [7]मेघगम्भीरया गिरा॥ ३० ॥

1 B, G, J, M, Ma, Ml, V ॰ण ओ॰ 2- -2 M, Ma सृष्टाना मधिपो वसन् 3 B, G, J, M, Ma, Ml, V पर आत्मा 4 B, G, J, M, Ma, Ml, V यश उज्ज्वलिता 5 Ml V तु 6- -6 Ml, V तमाह कृपया 7 B, G, J प्रेम

**श्रीध॰** लोके को वाऽयं मत्तो बलीया निति विस्मितस्सन् विमृश्याऽऽह - **जाने** इति। सर्वभूतानां यः प्राणः तत्र च यदोजः सहो बलश्च इन्द्रियहृदयदेहबलानि तत्सर्वं त्व मित्यहं जाने। कथं तथा त्वमतआह- **विष्णु** मित्यादि॥ २६॥

**त्वमिति**। पुराणत्वे हेतुः **त्वं हीति**। स्रष्टा निमित्तम्। यच्च सत् उपादानम्। अतः पुराणम्[1]। प्रभविष्णुत्वे हेतुः काल इति। अधीश्वर[2] स्त्वम प्यत एवेत्याह - ईशः पर इति। न च तटस्थ इत्याह आत्मना मात्मेति॥ २७ ॥

यत एवम्भूतोऽतो ममेष्टदैवतं[3] रघुनाथ एव त्व मित्याह **यस्येति**। ईषदुत्कलित उद्दीपितो यो रोष स्तेन ये कटाक्षमोक्षा स्तैः क्षुभिता नक्रा ग्राहा स्तिमिङ्गिला महामत्स्याश्च यस्मिन् सोऽब्धि वर्त्म मा[4]र्गं मादिशत्[5] दत्तवान्। तथाऽपि [6-]तस्मिन् येन त्वया[-6] स्व यश एव सेतुः कृतः, उज्जवलिता दग्धा च, यस्येषुभिः क्षतानि छिन्नानि रक्षसो दशग्रीवस्य शिरांसि भुवि पेतुः स एव त्वमिति जाने॥ २८ ॥

**इतीति**। इति विज्ञातं विज्ञानं येन तम्। विज्ञानशब्दः करणसाधनः कर्मसाधनो वा, ऋक्षराजं[7] [8]प्रत्युक्तवान्[9] ॥ २९, ३० ॥

---

1 MI, V °णः 2 MI, V °रत्वमपि 3 MI, V °वं 4 MI, V omit मार्गं 5 MI, V omit तथाऽपि 6- -6 MI, V °श्चेव 7 MI, V राजानं 8 MI, V omit प्रति 9 MI, V adds विज्ञायतेऽनेनेति विज्ञानम्

**वीर०** ततो विमृशन् तं कृष्ण माह - उक्ति मेवाऽऽह **जाने** इति त्रिभिः। त्वां जाने, कथम्भूतम्? ओजः प्रवृत्तिसामर्थ्यम्, सहो वेगः, बलं धारणसामर्थ्यं, प्राणादीनां निर्वाहकमित्यर्थः। पुराणपुरुषं जगत्कारणपुरुषं प्रभविष्णुं जगद्रूपेण प्रभवनशीलं, समर्थीभवनशीलं वा कारणत्वोपयुक्तसार्वज्ञ्यसार्वशक्त्यादियुक्त मित्यर्थः। अधीश्वरं सर्वान्तरात्मानम्। तत्र देवताविशेष निर्धारणाय विष्णुमिति॥ २६ ॥

पुराणपुरुषत्वे हेतुं वदन् विशिनष्टि- **त्वं हीति**। विश्वसृजां महदादिपृथिव्यन्तानां तत्त्वानां स्रष्टा। अनेन निमित्तकारणत्व मुक्तम्। उपादानत्व माह-सृज्यानां महदादीनां यत्सत् उपादानकारणं तदपि त्वमेव। उपादानत्वप्रयुक्तं सार्वात्म्य माह - काल इति। कलयतां परिच्छिन्दतां सर्वं स्ववशीकुर्वता मिति यावत्। तेषां य[1] ईशः प्रभुः कालः सोऽपि त्वमेव, तच्छरीरक इत्यर्थः तथा आत्मनां जीवानां परमात्मा अन्तः प्रविश्य प्रशासनेन धर्ता व्याप्यगतदोषै रस्पृष्टश्च जीवशरीरक श्चेत्यर्थः॥ २७ ॥

यत एवम्भूत, स्ततो ममेष्टदैवतं श्रीरघुनाथ एव त्व मित्याह - **यस्येति**। यस्य रघुपतेः ईषदुत्कलितः उद्दीपितो यो रोषः तेन ये कटाक्षमोक्षाः तैः क्षुभिताः नक्रा ग्राहाः तिमिङ्गिला महामत्स्याश्च यस्मि न्सोऽब्धिः वर्त्म मार्ग मदिशत् दत्तवान्, येन स्वयशसा, अध्ययनेन वसतीति वत् हेत्वर्थे तृतीया। स्वकीर्त्यर्थं सेतुः कृतो निर्मितः। येन च लङ्का उज्ज्वलिता दग्धा। यस्य चेषुभिः क्षतानि छिन्नानि रक्षसो दशकण्ठस्य शिरांसि भुवि पेतुः स त्व मिति जाने इत्यन्वयः॥ २८॥

**इतीति**। इत्थं विज्ञातं विज्ञानं विज्ञेयं येन, त मृक्षराजानम्, अनित्यत्वा दार्षत्वाद्वा "राजाहः" (अष्टा. 4-5-91) इति समासान्ताभावः। व्याजहारोवाच॥ २९ ॥

कथमित्यत आह- **अभिमृश्येति**। शङ्खरेण [2-]सुखकरेण[-2] पाणिना भक्तं त मृक्षराज मभितः संस्पृश्य परया निरतिशयया कृपयोपलक्षितः मेघध्वनिव द्गम्भीरया गिरा प्राह॥ ३० ॥

---

1. K.W. omit यः 2- -2 K.W. omit

**विज०** सर्वभूतानां प्राणादिप्रदं, प्राणः प्राणनं चेष्टाशक्तिः, ओजः अवष्टम्भशक्तिः, सह श्शरीरसामर्थ्यं, बलं स्थौल्यम्॥ २६ ॥

सृष्टाना मधिपः सृष्टेषु वसन् कालः संहर्ता आत्मनां चेतनानां परः आत्मा परमचेतनः "नित्यो नित्यानाम्" (कठ.उ 5-13) इति श्रुतिः॥ २७ ॥

उत्कलितेन उन्नतेन रोषेण जातैः कटाक्षमोक्षैः नेत्रान्तपातैः क्षोभिता नक्रा स्तिमिङ्गिलाश्च यस्मिन् स तथा। स्वयशोरूपः, उज्ज्वलिता धग्धा, इषुक्षतानि शरच्छिन्नानि॥ २८,२९ ॥

शङ्करेण सुखकरेण॥ ३० ॥

मणिहेतो रिह प्राप्ताः वयमृक्षपते बिलम्।
मिथ्याभिशापं प्रमृज न्नात्मनो मणिनाऽमुना॥ ३१ ॥

इत्युक्त स्स्वां दुहितरं कन्यां जाम्बवतीं मुदा।
अर्हणार्थं [1-]स मणिना[-1] कृष्णायोपजहार ह[2]॥ ३२ ॥

★ [3-]ततोऽन्यैश्च मणिश्रेष्ठैः[-3] पूजितो भक्तवत्सलः।
तस्मै ददौ परां मुक्तिं [4-]पुनरावृत्तिवर्जिताम्[-4]॥ ३३ ॥

अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः।
प्रतीक्ष्य द्वादशाहानि दुःखिता[5] स्ते पुरं ययुः॥ ३४ ॥

निशम्य देवकी देवी रुक्मि ण्यानकदुन्दुभिः।
सुहृदो ज्ञातयोऽशोच न्बिला त्कृष्ण मनिर्गतम्॥ ३५ ॥

सत्राजितं शपन्त स्ते दुःखिता द्वारकौकसः।
उपतस्थु [6-]र्महामायां[-6] दुर्गां कृष्णोपलब्धये॥ ३६ ॥

---

1- -1 MMa सह मणि 2 BGJMIV सः ★This Verse is not found in G.J.M.Ma editions 3- -3 MIV अन्यै स्स मणिमुख्यैश्च
4- -4 MIV प्रीत्या जाम्बवते हरिः 5 BGJ °ताः स्व० 6- -6 MIV °श्चन्द्रभागा

**श्रीध० मणीति।** वयं[1] बहवो बिलद्वारं प्राप्ता स्तत्र मिथ्याभिशाप ममुना मणिना प्रमृजन् प्रमार्ष्टु[2] मिच्छन् अह[3] मेक एव अन्तर्बिल मिह प्राप्त इत्यर्थः॥ ३१ ॥

**इतीति।** सह मणिना समर्पयामास॥ ३२-३५ ॥

**सत्राजितमिति।** श्रीकृष्णप्राप्तये चन्द्रभागां नाम दुर्गा मभजन्॥ ३६ ॥

1 MIV add हि 2 BJ omit इच्छन् 3 BJ omit एक एव

**वीर०** [1-]उक्तिमेवाऽऽह[-1] - **मणिहेतोरिति।** हे ऋक्षपते! मण्यर्थ मिह बिलं प्रति वय मागताः। अवाप्तसमस्त कामस्य तव किं मणिने[2-] त्यत आह[-2]-मिथ्येति। अमुना मणिना हेतुना आत्मनो मम यो मिथ्याभिशापः मिथ्यापवादः प्रसक्तः तममुना मणिनैव विमृजन्, "**लक्षणहेत्वोः**" (अष्टा 3-2-126) इति शत्रादेशः। विमार्ष्टु मपनेतु मिति यावत्। विमृज न्नह मागत इति शाब्दयोजना॥ ३१ ॥

**इतीति।** इत्थ मुक्तः स जाम्बवान् [3-]स मणिना[-3] मणिना सह स प्रसिद्धः जाम्बवान् [4-]मणिना सहेति[-4] वाजाम्बवती मुपायनार्थं श्रीकृष्णाय समर्पयामास॥ ३२ ॥

ततोऽन्यैश्च मणिश्रेष्ठैः पूजितो भक्तवत्सलो भगवान् तस्मै जाम्बवते परा मुत्कृष्टा पुनरावृत्तिरहितां मुक्तिं ददौ, दास्यामि इति सङ्कल्पितवा नित्यर्थः। तदैव ददाविति वा॥ ३३ ॥

**अदृष्ट्वेति।** बिलं प्रविष्टस्य शौरेः पुन र्निर्गमन[5] मदृष्ट्वा द्वाःस्थाः जना द्वादशदिनानि प्रतीक्ष्य दुःखिताः पुरं द्वारकां जग्मुः॥ ३४ ॥

**निशम्येति।** देवक्यादयो बिला दनिर्गतं कृष्णं श्रुत्वा अशोचन्॥ ३५ ॥

ते दुःखिता स्सन्तः सत्राजितं शपन्तः कृष्णप्राप्तये महामायां दुर्गाम् उपतस्थुः अभजन्॥ ३६ ॥

---

1- -1 W omits 2- -2 KW नेत्याह 3- -3 KW omit 4- -4 KW omit 5 KW °ममद०

**विज०** उपतस्थुः अभजन्॥ ३१-३६ ॥

**तेषान्तु देव्युपस्थानात् प्रत्यादिष्टाऽऽशिषा[1] स[2] च।**
**प्रादुर्बभूव सिद्धार्थः सदारो हर्षय न्हरिः॥ ३७ ॥**

**उपलभ्य हृषीकेशं मृतं पुनरिवा[3]ऽऽगतम्।**
**सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः॥ ३८ ॥**

**-: सत्राजिताय मणिप्रत्यर्पणं, सत्यभामाविवाहश्च :-**

**सत्राजितं समाहूय सभायां राजसन्निधौ**
**प्राप्ति श्चाऽऽख्याय भगवान् मणिं तस्मै न्यवेदयत्॥ ३९ ॥**

स चाऽतिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुख[4] स्ततः।
अनुतप्यमानो[5] भवन मगम त्स्वेन पाप्मना ॥ ४० ॥

सोऽनुध्यायं स्तदेवाऽघं[6] बलवद्विग्रहाकुलः।
कथं मृजा म्यात्मरजः प्रसीदे द्वाऽच्युतःकथम्॥ ४१ ॥

---

1 K.M.Ma.W °षा 2 M.ma भवन्, MIV च सः 3 M Ma °हा० 4 MIV स्स्थितः 5 M.Ma तप्य न्स्व भ० 6 K.W स्त मेवाऽर्थं

श्रीध० तेषामिति। स च कृष्ण स्तेषां प्रादुर्बभूव । असव इति पाठे असव इन्द्रियाणि, तेषां प्रेष्ठ इत्यर्थः। कदा देव्या उपस्थानात्, तया तान्प्रति आदिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सहैव॥ ३७ ॥

उपलभ्येति। [1]लोके जनाः [2]कथञ्चि न्मृतं बन्धुं पुनरागत मुपलमन्ते। तद्व दुपलभ्य सर्वे जातमहोत्सवा आसन्निति॥ ३८, ३९ ॥

स इति। पाप्मना अपराधेन अनुतप्यमानः। [3-]अत्र वर्णाधिक्यमार्षम्[-3]॥ ४० ॥

स इति। अघं दोषम् आत्मनो रजो मल मपराधमिति॥ ४१

---

1 MIV add यदि 2 MLV कश्चित् 3- -3 B.J omit

वीर० तेषामिति। स च कृष्ण स्तेषां प्रादुर्बभूव। कदा? तस्या देव्या उपस्थानात्, तया तान्प्रति आदिष्टा आशिषः श्रीकृष्णं द्रक्ष्यथेत्येवंविधाः येषां तेषां सताम्, कथम्भूतः? सिद्धः साधितोऽर्थः मण्यानयनरूपं[1] प्रयोजनं यस्य सः। सदारः जाम्बवतीसहितः अत एव हर्षयन्॥ ३७ ॥

उपलभ्येति। यथा लोके जनाः मृतं बन्धुं पुनरागत मुपलभन्ते तद्वत् हृषीकेशं, तत्राऽपि पत्न्या सहितं मणि ग्रीवायां यस्य त मुपलभ्य सर्वे जातमहोत्सवा आसन्॥ ३८ ॥

सत्राजितमिति। राज्ञ उग्रसेनस्य सन्निधौ प्राप्तिं मणिलाभप्रकार माख्याय तस्मै सत्राजिते मणिं न्यवेदय दर्पयामास॥ ३९॥

सचेति। स्वेन पात्मना याच्जावैकल्यकरणमिथ्यापवादापादनादिरूपेण अनुतप्यमानः स्वगृहं जगाम॥ ४० ॥

स सत्राजि त्तमेवार्थ मपराधरूप मनुचिन्तयन्। अघमिति च पाठः। बलवता भगवता सह यो विग्रहो विरोधः तेनाऽऽकुलश्च, चिन्तयामासेति शेषः। चिन्ताप्रकार मेवाऽऽह- कथमिति सार्धेन। आत्मरजः स्वापराधं मृजामि अपनयामि, कथं वा अच्युतः प्रसन्नो भवेत्? ॥ ४१ ॥

---

1 K.W °प

**विज०** ततः किमभूदत्राऽऽह- **तेषामिति।** हरि स्तेषां प्रादुर्बभूवे त्यन्वयः। देव्या उपस्थाना न्निषेवणा त्प्रत्यादिष्टाशिषाम् अभ्यागताभ्युदयानां भव न्पूज्य! सिद्धार्थः नित्यलब्धप्रयोजनः 'प्रत्यादिष्टाशिष'ः इति पाठे ये प्रथमं नष्टकृष्णाख्याशिषोऽभवन्। तेषाम्, तुशब्दो हेत्वर्थः। देव्युपस्थानाद्धेतो रित्यर्थः। अनेनाऽऽपदि प्राप्तायां देवताशरणं कर्तव्य मित्युक्तं भवति॥ ३७॥

आख्यायोक्त्वा॥ ३९ ॥

स्वेन पाप्मना अनुतप्यन् पश्चात्तापं कुर्वन्॥ ४०, ४१ ॥

**किं कृत्वा साधु मह्यं स्या न्न शपेद्वा जनो यथा।**
**अदीर्घदर्शनं क्षुद्रं[1-] मूढं[-1] द्रविणलोलुपम्॥ ४२ ॥**

**दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च।**
**उपायोऽयं समीचीन स्तस्य शान्ति र्नचाऽन्यथा॥ ४३ ॥**

**एवं व्यवसितो बुद्ध्या सत्राजि त्स्वसुतां[2] शुभाम्।**
**मणिञ्च स्वय मुद्यम्य कृष्णायोपजहार ह॥ ४४ ॥**

**तां सत्यभामां भगवा नुपयेमे यथाविधि।**
**बहुभि र्याचितां शीलरूपौदार्यगुणान्विताम्॥ ४५ ॥**

**भगवा नाह न मणिं प्रतीच्छामो वयं नृप।**
**तवाऽऽस्तां[3] देवभक्तस्य वयञ्च[4] फलभागिनः॥ ४६ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
स्यमन्तकोपाख्याने षट्पञ्चाशोऽध्यायः॥ ४६ ॥

---

1- -1 K. W मूढं मां धिक्; M. Ma धिङ्मा मूढं 2 M. Ma ताम् 3 M. Ma तवाऽस्तु 4 k. W. ष्यन्तु; M. Ma यं हि

**श्रीध० किमिति।** किं कृत्वा करस्मि न्कृते इत्यर्थः। साधु भद्रम्। अदीर्घदर्शन मविचारकं मां[1] क्षुद्रं कृपणं मूढं मन्दमतिम्॥ ४२ ॥

एवं ध्याय न्नुपायं निश्चिनोति-**दास्ये** इति। स्त्रीरत्नं दुहितरं ताव द्दास्यामि, तदनन्तरं पारिबर्हत्वेन रत्नमपीति॥ ४३,४४ ॥

**तामिति।** बहुभिः कृतवर्मादिभिः॥ ४५ ॥

**भगवानिति।** मणिं न प्रतीच्छामः न स्वीकुर्मः। देव स्सूर्यः तद्भक्तस्येति, कटाक्ष फलभागिन इति। तवाऽपुत्रत्त्वा त्त्वदीयं धन मस्माकमेवेति गूढोऽभिप्रायः॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
षट्पञ्चाशोऽध्यायः॥ ५६ ॥

---

1 MI V omit मां

**वीर०** किं कृत्वा, कस्मिन्कर्मणि कृते इत्यर्थः। साधु भद्रम् स्यात्। कथञ्च मां जनो न शपेत्। मां धिक्। अहं निन्द्यइत्यर्थः। तत्र हेतुं वदन्नात्मानं विशिनष्टि अदीर्घदर्शनं दूरविचारानभिज्ञं मूढं मन्दमतिं, वित्तैकासक्तम्॥ ४२ ॥

इत्थं विचार्य निश्चिनोति। **दास्ये** इति। स्त्रीरत्नं दुहितरं, रत्नं स्यमन्तकञ्च कृष्णाय दास्ये[1] दास्यामि। अन्यथा यदि न दास्ये इत्यर्थः, तस्य कृष्णस्य शान्ति श्चित्तसमाधिर्न भवेत्॥ ४३ ॥

**एवमिति।** बुद्ध्या व्यवसितः निश्चिन्वन् शुभां शुभलक्षणां स्वसुतां सत्यभामां मणिं स्यमन्तकञ्च उद्यम्योद्धृत्य आदाय वा कृष्णाय समर्पयामास॥ ४४ ॥

**तामिति।** उपयेमे विवाहितवान्। कथम्भूतां, बहुभिः कृतवर्मशतधन्वादिभिः याचितां, रूपादिभि रन्वितां च। तत्र रूपं सौष्ठवं, शीलं सुस्वभावः, गुणाः प्रदिमकरुणादयः॥ ४५ ॥

**भगवानिति।** उक्तिमेवाऽऽह न [2-]मणि मिति[-2]। हे नृप सत्राजित! मणिं न प्रतीच्छामः। न प्रतिगृह्णीमः। किन्तु स्त्रीरत्नमेव प्रतीच्छामः। देवभक्तस्य सवितृभक्तस्य तवैव मणि रास्तां तिष्ठतु, वयं तु केवलं फलभागिनः दुर्भिक्षादि शान्तिरूपफलभागिनः। यद्वा, तवाऽपुत्रत्वात् त्वदीयं धन मस्माक मेवे त्यन्ततः फलभागिन इत्यर्थः॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षट्पञ्चाशोऽध्यायः॥ ५६ ॥

1 W omits दास्ये 2- -2 W omits

**विज०** मह्यं मम अदीर्घदर्शनं भविष्यज्ज्ञानहीनम्॥ ४२ ॥

तस्य पापस्य॥ ४३-४४ ॥

फलभागिनः प्रयोजनांशमेव स्वीकुर्मः॥ ४५,४६ ॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां**
**श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे**
षट्पञ्चाशोऽध्यायः॥ ५६ ॥

(विजयध्वजरीत्या षष्टितमोऽध्यायः)

---

# सप्तपञ्चाशोऽध्यायः

## (विजयध्वजरीत्या एकषष्टितमोऽध्यायः)

### श्रीशुक उवाच

विज्ञातार्थोऽपि [1]भगवान् दग्धा नाकर्ण्य पाण्डवान्।
कुन्तीश्च कुल्यकरणे सहरामो ययौ कुरून्॥ १ ॥

भीष्मं [2]कृपं सुविदुरं गान्धारीं द्रोणमेव च।
[3-]तुल्यकष्टान्[-3] [4]समागम्य हा कष्टमिति [5]होचतुः॥ २ ॥

[6-]लब्ध्वा तदन्तरं[-6] राजन् शतधन्वान मूचतुः।
अक्रूरकृतवर्माणौ मणिः कस्मा न्न गृह्यते॥ ३ ॥

योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नं [7]विगृह्य नः।
[8]कृष्णायाऽदा न्न [9]सत्राजित्कस्माद्भ्रातर मन्वियात्॥ ४ ॥

एवं भिन्नमति स्ताभ्यां सत्राजित मसत्तमः।
शयान मवधी ल्लोभा त्स पापः क्षीणजीवितः॥ ५ ॥

---

1 BGJMMa गोविन्दो 2 MMa MIV नृप 3- -3 BGJMIV तुल्यदुःखौ, MMa समदुःखौ 4 BGJ च सङ्गम्य 5 MIV शो० 6 BGJMMa लब्ध्वैतदन्तर, KW ज्ञात्वा तदन्तर 7 BGJMMa गर्ह्य 8 MMa °यादात्स 9 MMa °त्त०

## श्रीधरस्वामिविरचिता भावर्थदीपिका।

सप्तपञ्चाशत्तमे तु पुन श्शतधनो र्वधे। प्राप्तं [1]स्म दुर्यशो मार्ष्टि कृष्णोऽक्रूराऽऽ[2]हृतान्मणेः।
अक्रूर मुरीकृत्य मणेः पात्र मथाऽच्युतः। उपामन्त्र्य त मेकान्ते स रामोऽगा द्गजाह्वयम्॥

सत्राजितः श्रीकृ[3]ष्णयाच्ञाभङ्गफलं व्यक्तीकर्तुम् [4-]कथा मुपक्रमते[-4]- **विज्ञातार्थोऽपीति।** पाण्डवा बिलद्वारेण जतुगृहा न्निर्गता इत्येवं विज्ञातोऽर्थो येन सः, कुन्तीश्च दग्धा माकर्ण्य कुल्यकरणे कुलोचितसं[5]व्यवहारार्थम्॥ १ ॥

**भीष्ममिति।** अन्येषां तद्वाहदुःखाभावा द्भीष्मादीन् [6]समागम्येत्युक्तम्॥ २,३ ॥

ननु जीव न्सत्राजि त्कथं मणिं दास्यति[7]। तत्रोचतुः- सोऽस्मम्बमिति। भ्रातरं प्रसेनं मृतं कस्मा न्नान्वियात् नाऽनुगच्छेत्, म्रियता मित्यर्थः॥ ४,५ ॥

---

1 M.I.V स्व० 2. M.I.V. °ग० 3. B.J °ष्णाज्ञा 4--4 B.J आह 5 M.I.V omit सं 6 B.J सङ्क्ष्ये० 7 M.I.V add इति।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

फलभागिन इत्युक्तं, तदेव दर्शयितुं मणिकथाशेष माह- सप्तपञ्चाशत्तमेन विज्ञातार्थ इत्यादिना। विज्ञातः विदितोऽर्थः पाण्डवाः बिलद्वारेण जतुगृहान्निर्गताः इत्येवंविधोऽर्थो येन तथाभूतोऽपि केवलं प्राकृतलोक इव पाण्डवान् कुन्तीञ्च दग्धान्, जतुगृहेष्विति शेषः। आकर्ण्य कुल्यकरणे कुलोचितसंव्यवहारार्थं रामेण सहितः कुरून् देशान् ययौ॥ १ ॥

भीष्मं कृपमिति। पाण्डवेतरेषां जतुगृहदुःखाभावात् भीष्मादी न्समागम्येत्युक्तम्। तुल्यकष्टान् आत्मना तुल्यदुःखान् 'हा कष्टम्! दुःखं प्राप्त मित्येवं तान् प्रत्यूचतुः सान्त्वयामासतुः॥ २ ॥

ज्ञात्वेति। तदा अक्रूरकृतवर्माणौ भगवा नधुनाऽत्र नाऽस्ति[1] अयमेवावसर इत्येव मन्तरं समयं ज्ञात्वा हे राजन्! शतधन्वान मूचतुः। उक्तिमेवाऽऽह-मणिरित्यादिना सपादेन, न गृह्यते, त्वयेति शेषः॥ ३ ॥

ग्राह्यत्वे हेतुः य इति। यः सत्राजित् कन्यारत्नं सत्यभामाम् अस्मभ्यं प्रतिश्रुत्य दास्यामीति प्रतिज्ञाय नोऽस्मान् विगर्ह्य[2] अनादृत्य कृष्णायादात् ददौ। अतो मणि र्ग्राह्य इति भावः। ननु, जीवन् सत्राजित् कथं मणिं दास्यतीति, अत्रोचतुः- नेत्यादि। सत्राजित् कस्मा द्धेतो र्भ्रातरं प्रसेनं नान्वियात् नाऽनुगच्छेत्, हन्तव्य एव स इत्यर्थः॥ ४ ॥

एवमिति। इत्थं ताभ्या मक्रूरकृतवर्मभ्यां भिन्ना भेदितामति र्यस्य सोऽसत्तमः पापात्मा शतधन्वा क्षीणजीवितः हेतुगर्भ मिदम्। तत्त्वात्, लोभा न्मणिलोभात् शयानं सत्राजितं हतवान्॥ ५ ॥

---

1 K.W नाऽऽस्ते 2 K.W °गृह्य।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अज्ञानिनां तमःप्राप्तिसाधनं ज्ञानिनां भगवद्भक्त्युद्रेककारणं लोकविडम्बनार्थं भगवच्चरितविशेषं पूर्वाध्यायार्थबीजं निरूपय त्यस्मि न्नध्याये। अपिना सन्देहं निवारयति-कुल्यं शवदहनानन्तरं तद्दुःखजिहासया तद्गृहगमनं तस्य करणे त न्निमित्तीकृत्येत्यर्थः। ॥ १,२ ॥

अन्तरमवकाशम्॥ ३ ॥

भ्रातरं प्रसेन मन्वियात् अनुगतः स्यात्, मृतोऽस्तु। तं हन्मीत्यर्थः॥ ४,५ ॥

स्त्रीणां विक्रोशमानानां क्रन्दन्तीना मनाथवत्।
हत्वा पशू न्सौनिकवत् मणि मादाय जग्मिवान्॥ ६ ॥

सत्यभामा[1] च पितरं हतं वीक्ष्य शुचाऽर्पिता।
व्यलप त्तात तातेति हा हताऽस्मीति मुह्यती॥ ७ ॥

तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम्।
कृष्णाय विदितार्थाय [2]तप्ताऽऽचख्यौ पितु र्वधम्॥ ८ ॥

तदाऽऽ कर्ण्येश्वरौ राज न्ननुसृत्य नृलोकताम्।
अहो नः परमं कष्ट मित्यस्राक्षौ विलेपतुः॥ ९ ॥

आग[3]त्य भगवां स्तस्मात् [4-]सभार्य स्साऽ[-4]ग्रजः पुरम्।
शतधन्वान मारेभे हन्तुं हर्तुं [5-]च तं मणिम्[-5] ॥ १० ॥

★ ततः पाञ्चालनगरा द्याज्ञसेन्याः स्वयंवरम्।
घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः॥ ११ ॥

आहूत स्तेन गोविन्दो गत्वा पाञ्चालके पुरे।
ददर्श साग्रज स्तत्र किशोरान् पाण्डुनन्दनान्॥ १२ ॥

अदृष्टपूर्वा न्सुव्यक्तं ब्रह्मरूपधरा न्नृपान्।
तै र्विह्वलक्ष्यैः पौरुष्यप्रतिलब्धमनोरथैः॥ १३ ॥

कुम्भकारस्य शालायां समागम्याऽभिवन्द्य च।
पितृष्वसा मनुज्ञाप्य राजानञ्च युधिष्ठिरम्।
निहन्तुं शतधन्वानं तूर्णं द्वारावतीमियात्॥ १४ ॥

---

1 MIV ०माऽपि 2 K.W तत्राऽऽ० 3 M.Ma ०गम्य 4- -4 M Ma भार्यया सा० 5- -5 B G J K W मणिं ततः। ★ The verses from 11th to 14th sloka found only in M.Ma editions

**श्रीध०**: **स्त्रीणामिति**। जग्मिवान् जगाम॥ ६-१४ ॥

**वीर०** **स्त्रीणामिति**। यथा सौनिकः पशुहिंसकः पशुं हन्ति, तद्व द्धत्वा अनाथवत् स्त्रीणां सत्राजिन्नारीणां विक्रोशन्तीनां [1-]आक्रोशन्तीनां[-1] रुदन्तीनाञ्च सतीनामेव मणिमादाय जगाम॥ ६ ॥

**सत्यभामेति।** शुचा शाकेनाऽर्पिता व्याप्ता मुह्यती मध्ये मध्ये मूर्छां प्राप्नुवती[2] व्यलपत्। विलापनप्रकार मेवाऽऽह तात तातेति, हा हताऽस्मीति॥ ७ ॥

ततो मृतं पितरं तैलद्रोण्यां तैलकटाहे प्रास्य निधाय हास्तिनपुरं[3] जगाम। तत्राऽऽगत्य विज्ञातपितृमरणरूपार्थायाऽपि[4] अजानते इव स्थिताय कृष्णाय पितु र्वधं शतधन्वकृतमाचख्यौ॥ ८ ॥

तद्वधाऽऽख्यानं श्रुत्वा हे राजन्! ईश्वरौ रामकृष्णौ नृलोकता मनुसृत्य नरचेष्टा मभिन यन्तावित्यर्थः। अस्राक्षौ अश्रुपूर्णनेत्रौ अहो! नोऽस्माकं परम मनवधिकं कष्टं दुःखं प्राप्त मित्येवं विलेपतुः विलपितवन्तौ॥ ९ ॥

ततः ससत्यभामः साग्रज स्स[5] भगवान् पुरं द्वारका मागत्य शतधन्वानं हन्तुं, ततः शतधन्वनो मणिं हन्तु म्वारेभे उद्युक्तवान्॥ १०-१४ ॥

---

1- -1 K. omits 2 B ०न्ती 3 B °नापुरं 4 K.W omit अपि 5 B °श्च०

**विज०** क्रन्दन्तीनां वैक्लव्यस्वरं कुर्वतीनां सौनिकवत् मारकवत् राक्षसव दित्यर्थः॥ ६,७ ॥

प्रास्य निक्षिप्य॥ ८ ॥

अस्राक्षौ अश्रुजलकलिलेक्षणौ॥ ९,१० ॥

याज्ञसेन्याः द्रौपद्याः॥ ११,१२ ॥

ब्रह्मरूपधरान् ब्राह्मणवेषं बिभ्राणान् पौरुष्येण पराक्रमेण प्रतिलब्धो मनोरथो येषां ते तथा, तैः॥ १३

पितृष्वसां पितृष्वसारम् कुन्तीम्॥ १४ ॥

**सोऽपि[1] कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया।**
**साहाय्यं कृतवर्माण मयाचत, स चाऽब्रवीत्॥ १५ ॥**

**नाऽहं मीश्वरयोः कुर्यां हेलनं रामकृष्णयोः।**
**को नु क्षेमाय कल्पेत तयो र्वृजिन माचरन्॥ १६ ॥**

**कंस स्सहानुगोऽपेतो यद्द्वेषात्त्याजितः[3] श्रिया।**
**जरासन्धः सप्तदश संयुगा द्विरथो गतः॥ १७ ॥**

**प्रत्याख्यातः स चाऽक्रूरं पार्ष्णिग्राह मयाचत।**
**सोऽप्याह को विरुध्येत विद्वा नीश्वरयोर्बलम्॥ १८ ॥**

★ यं कैलासाश्रय श्शम्भु र्ननाम शिरसा हरिम्।
यो हंसडिम्भकौ युद्धे जितवा न्वरदुर्मदौ॥
आशीविषो महानागो येन निर्वासितो हृदात्।
य इदं लीलया विश्वं सृजत्यवति हन्ति[4] च।
चेष्टां विश्वसृजो यस्य न विदुर्मोहिता[5]ऽजया॥ १९ ॥

1 BGJMMa °य्ये 2 BGJ °गोऽपीतो, MMa °गो वीरो 3 BGJ °न्वि° ★ These three half Verses are found only in M.Ma editions 4 K.W हन्त्यजः। 5 MMa °ता यया।

**श्रीध० नेति।** हेलनं प्रतिकूलम्, वृजिन मपराधम्॥ १५,१६ ॥

**कंस** इति। अपीतो मृतः। सप्तदशसंख्याकात्[1] संयुगात्[2]॥ १७,१८ ॥

तौ रामकृष्णा वेकमेव तत्त्व मित्यभिप्रेत्याह-**य इदमिति।** अजया मायया। मोहिताऽजयेति सन्धिरार्षः॥ १९॥

1 BJ °न् 2 BJ °न्

वीर० सोऽपि शतधन्वाऽपि कृष्णस्योद्यम मुद्योग माकर्ण्य प्राणपरीप्सया प्राणरिरक्षिषया कृतवर्माणं साहाय्यं सहायार्थ मयाचत। स च कृतवर्माऽब्रवीत्॥ १५ ॥

उक्ति मेवाऽऽह **नाहमिति** द्वाभ्याम्। हेलनं प्रातिकूल्यम्। न कुर्याम्। तत्र हेतुमाह-**कोन्विति।** तयोः रामकृष्णयोः वृजिन मपराधं कुर्वन् को नु पुमान् क्षेमाय कल्पेत क्षेमं प्राप्नुया दित्यर्थः । न कोऽपीति भावः॥ १६ ॥

किं त्वयेत्थं दृष्ट मित्य त्रोदाहरणमात्र माह **कंस** इति। यस्मिन्[1] श्रीकृष्णे द्वेषाद्धेतोः श्रिया राज्यश्रिया, प्राणैश्चेति शेषः, त्याजितः। तथा जरासन्धोऽपि सप्तदशसंख्याकात् संयुगात्[2] विरथः शरीरमात्रावशिष्टो गतः॥ १७ ॥

इत्थ तेन प्रत्याख्यातः ततो[3]ऽक्रूरं साहाय्यं अयाचत। **सोऽपीति।** सोऽपि अक्रूरोऽपि। उक्तिमेवाह- **क** इत्यादिना आत्मने नम इत्यन्तेन। ईश्वरयो रामकृष्णयो र्बलं जान न्कः[4] पुमान् विरुध्येत, ईश्वराभ्यामिति शेषः॥ १८ ॥

भगवतो[5] बलं वक्तु तावत्तस्य कृत्स्नजगदुदयविभवलयलीलत्व माह- **य** इति। अवति रक्षति। अजः सृज्यगत जन्मादिस्पर्शरहितः। [6-]एवंविधेन को वा[-6] विरुध्येतेति भावः। सर्वेऽप्येवं किं न विदु रित्यत आह- **चेष्टामिति।** यस्य भगवतोऽजया मायया मोहिता स्तस्य चेष्टां विश्वसृष्ट्यादिरूपां न विदुः। मोहिताऽजयेत्यत्र सन्धि रार्षः॥ १९॥

1 B यत्र 2 B सङ्ग्रामात् 3 KTW omit ततः 4 B adds वा 5 T.W भक्तो 6- -6 K.T.W तेन को

**विज०** वृजिन मपराधम्॥ १५, १६ ॥

अपराधकार्यत्वे निमित्तानि कथयति **कंस** इति॥ १७ ॥

प्रत्याख्यातो निराकृतः। कृतवर्मणेति शेषः। पार्ष्णिग्राहं पृष्ठबलम्॥ १८,१९ ॥

**य स्सप्तहायन श्शैलमुत्पाट्यैकेन पाणिना।**
**दधार लीलया बालः उच्छि[1]लीन्ध्र मिवाऽर्भकः॥ २० ॥**

**नम स्तस्मै भगवते कृष्णायाऽद्भुतकर्मणे।**
**अनन्तायाऽऽदिभूताय कूटस्थायाऽऽत्मने नमः॥ २१ ॥**

**प्रत्याख्यात स्स तेनाऽपि शतधन्वा महामणिम्।**
**तस्मि न्न्यस्याऽश्व मारुह्य शतयोजनगं ययौ॥ २२ ॥**

**गरुडध्वज मारुह्य रथं रामजनार्दनौ।**
**अन्वयातां महावेगै रश्वै राजन् गुरुद्रुहम्॥ २३ ॥**

**मिथिलाया[2] उपवने विसृज्य पतितं[3] हयम्।**
**पद्भ्या मधाव त्सन्त्रस्तः कृष्णोऽप्यन्वद्रव द्रुषा॥ २४ ॥**

---

1 MIV °त्सि० 2 BGJ °या मु° 3 MMa °ऽन्वभ्य°

**श्रीध० प्रत्याख्यात** इति। अन्तर्यामिकृष्णनियुक्तः तस्मि न्नक्रूरे मणिं न्यस्य ययौ अपलायत॥ २०-२२॥

**गरुड** इति। गुरुः श्वशुरः, तद्धन्तारम्॥ २३ ॥

**मिथिलाया** इति। शतयोजनमात्र[1]गामित्वात् ततः पर गन्तुमशक्तः तत्र पतितः। तं हयं विसृज्य॥ २४ ॥

---

1 MIV omit मात्र

**वीर०** बल प्रपञ्चयति-य इति। यो भगवान् **बालः**, तत्राऽपि **सप्तवर्षवयास्सन्नेव शैलं गोवर्धनम्**, एकेनै[1]व पाणिना उत्पाट्य लीलया दधार, यथाऽर्भकः शिलीन्ध्र मुत्पाट्य धरति तद्वत्। शिलीन्ध्रं भूतालकुसुमम्॥ २० ॥

अतः स केवलं नमस्कार्य एवेत्यभिप्रयन् **नमस्करोति- नमः** इति। **भगवते षाड्गुण्यपूर्णाय** अत एव अद्भुत ममानुष मदैवञ्च कर्म यस्य तस्मै। अनन्ताय अपरिच्छेद्यस्वरूपस्वभावाय, आदिभूताय जगत्कारणभूताय, कूटस्थाय स्वरूपतः स्वभावतश्च निर्विकाराय, आत्मने **सर्वान्तरात्मने कृष्णाय तस्मै नमो नमः**॥ २१ ॥

**प्रत्याख्यात** इति। तेन[1] अक्रूरेणाऽप्येवं प्रत्याख्यातः स शतधन्वा महामणिं तस्मि न्नक्रूरे न्यस्य निधाय, अक्रूराधीनं कृत्वेत्यर्थः। शतयोजनगं शतयोजनैः[2] गन्तव्यं देशं ययौ॥ २२ ॥

तदा गरुडो ध्वजे यस्मिन् तं रथ मारुह्य हे राजन्! महावेगै रश्वैः गमनसाधनैः गुरुद्रुहं श्वशुरहन्तारं शतधन्वान मन्वयाताम् अन्वगच्छताम्॥ २३ ॥

**मिथिलायामिति**। शतयोजनमात्रगामित्वात् ततः परं गन्तुमशक्तं पतितं हय मश्वं विसृज्य सन्त्रस्तः पद्भ्यामधावत्। एवं धावन्तं शतधन्वानं रुषा भगवान प्यन्वधावत्॥ २४ ॥

1 B omits एव 2- -2 B °नगन्तव्य°

**विज०** उच्छिलीन्ध्रं छत्राकारम्[1]॥ २०,२१ ॥

शतयोजनगं शतयोजनगमनसमर्थम्॥ २२ ॥

गरुडो ध्वजे यस्य स तथा तं रथम्॥ २३ ॥

मिथिलानगर्याः॥ २४ ॥

1 B °कम्

**पदाते धावत[1] स्तस्य पदाति स्तिग्मनेमिना।**
**चक्रेण शिर उत्कृत्य वाससो र्व्यचिनोन्मणिम्॥ २५ ॥**

**अलब्धमणि रागत्य कृष्ण आहाऽग्रजान्तिकम्।**
**वृथा हतश्शतधनु र्मणिस्तत्र न विद्यते॥ २६ ॥**

**तत आह बलो नूनं स मणि श्शतधन्वना।**
**कस्मिंश्चि त्पुरुषे[2] न्यस्त स्तमन्वेष्टु पुरं व्रज॥ २७ ॥**

**-: बलदेवस्य मिथिलानिवासः तत्र दुर्योधनस्य गदाभ्यासश्च :-**

**अहं वैदेह[3] मिच्छामि द्रष्टुं प्रियतमं[4] मम।**
**इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः॥ २८ ॥**

**तं दृष्ट्वा सहसोत्थाय मैथिलः[5] प्रीतमानसः।**
**अर्हयामास विधिव दर्हणीयं वै समर्हणैः॥ २९ ॥**

1 BGJMIV °र्भगवा° 2 BGJ MIV °ष; M Ma °षन् 3 B.G.J वि° 4 M Ma °र 5 B.G.J °र्थीयं स°

**श्रीध० पदातेरिति।** व्यचिनोत् मृगयामास। अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवञ्चनाय तथा कृतवानिति[1-] [-1] भावः॥ २५,२६ ॥

**तत** इति। अन्वेष अन्विच्छ॥ २७ ॥

सर्वज्ञस्यैवं [2] विचेष्टितं मद्वञ्चनायेति मत्वा गूढमन्यु राह-**अहमिति**॥ २८,२९ ॥

1- -1 MI.V. °नित्यर्थः। MI.V omit वि

**वीर० पदातेरिति।** तिग्मनेमिना तीक्ष्णधारेण चक्रेण तस्य शिर उत्कृत्य छित्वा[1] तस्य वाससो: अन्तरियोत्तरीययो: मणिं व्यचिनोत् मृगयामास। अक्रूरे मणिरस्तीति सर्वज्ञतया बिदित्वाऽपि रामवञ्चनार्थं तथा कृतवा नित्यर्थः॥ २५ ॥

तदाह **अलब्धमणिरिति।** न लब्धो मणि र्येन तथाभूतः अग्रजान्तिक मागत्योवाच। उक्तिमेवाऽऽह वृथेति। तत्र शतधन्वनि॥ २६॥

एवं वञ्चितोऽपि स बलो बलभद्रः सर्वज्ञत्वात् तं कृष्णमाह- नूनमिति। नूनं कस्मिंश्चित् पुरुषे सः[2] मणिर्न्यस्तः अत स्तमन्वेष्टुं स्वपुरं द्वारकां गच्छेति॥ २७ ॥

ततः पुनः सर्वज्ञेनैवं चेष्टितं मद्वञ्चनायेति गूढमन्यु राह-**अहमिति**। वैदेहं जनकम्। इतीति। हे राजन्! यदुनन्दनो बलभद्रः॥ २८ ॥

मैथिलो जनकः, तं रामं दृष्ट्वा प्रीतमानसः सहसोत्थाय पूजार्हं रामम् अर्हणैः पूजासाधनैः यथाविधि पूजयामास॥ २९॥

1. T.W भित्वा 2. K.T.W omit सः

**विज०** पद्भ्या मतिः सततं गमनं यस्य स तथा तस्य। तिग्मनेमिना चण्डधाराग्रेण, व्यचिनोत् अन्वेषणं कृतवान्॥ २५,२६ ॥

अन्वेषन् मार्गणं कुर्वन्॥ २७,२८ ॥

अर्हण्यं पूज्यम्॥ २९ ॥

**उवास तस्यां कतिचि न्मिथिलायां समा विभुः।**
**ततोऽशिक्ष द्गदां काले धार्तराष्ट्र स्सुयोधनः॥**
**मानितः प्रीतियुक्तेन जनकेन महात्मना॥ ३० ॥**

केशवो द्वारका मेत्य निधनं शतधन्वनः।
अप्राप्तिश्च मणेः प्राह प्रियायाः प्रियकृ द्विभुः॥ ३१ ॥

तत स्स कारयामास क्रिया[1] बन्धो [2]र्हतस्य वै।
साकं सुहृद्भि र्भगवान् या याः स्यु स्साम्परायिकाः॥ ३२ ॥

-: अक्रूरेण मणिप्रत्यर्पणम् :-

[3-]अक्रूरः कृतवर्मा च[-3] श्रुत्वा शतधनो र्वधम्।
व्यूषतु र्भयवित्रस्तौ द्वारकायाः प्रयोजकौ॥ ३३ ॥

अक्रूरे प्रोषितेऽ[4-]रिष्टा आसन्वै[-4] द्वारकौकसाम्।
शारीरा मानसा स्तापा मुहु र्दैविकभौतिकाः॥ ३४ ॥

---

1 M.Ma °यां 2 M.Ma °र्मृ० 3- -3 M.Ma °रकृतवर्माणौ 4- -4 B.G.J.M.Ma °ष्टा न्यास न्वै

**श्रीध०** कतिचि त्समाः संवत्सरान्। प्रासङ्गिक माह- **उवासेति**॥ ३० ॥

सत्यभामाम प्यवञ्चय दिति सूचय न्नाऽऽह- **केशव** इति॥ ३१ ॥

**तत** इति। बन्धोः सत्राजितः। साम्परायिकाः पारलौकि[1]क्यः॥ ३२ ॥

**अक्रूर** इति। व्यूषतुः द्वारकायाः सकाशात् क्वाऽपि पलायितौ। प्रयोजकौ मणिहरणे शतधन्वनः प्रवर्तकौ, तत्राऽक्रूरः कृष्णानुमतेनैव गतः। कृतवर्मा तु भक्तपक्षपातप्राकट्यभया दिवोपेक्षित इति गम्यते। कथ मन्यथा सर्वज्ञेश्वरवञ्चनं तयो स्सम्भवतीति॥ ३३॥

तदेवं श्रीवाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकै र्महाध्वरैः यजमाने निवसति [2]सति पुनः श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति [3]सति जने सत्यभामारामादीनाम प्यविश्वासे जनसङ्कुहायाऽक्रूरं [4]समाहूय साक्षेपं श्रीकृष्णः प्राह — इदञ्च भगवन्मतं सङ्गोप्य केचन ऋषयोऽन्यत्कारण मक्रूरानयने वर्णयन्ति। त बथाश्रुतं दूषयितु मनुवदति **अक्रूरे प्रोषिते** इति॥ ३४ ॥

---

1. Ml.V. °काः 2. B.J omit सति 3. B.J omit सति 4. Ml.V omit सं

**वीर० उवासेति**। विभू रामः कतिचि त्समाः वत्सरा नुषितवान्। प्रासङ्गिक माह- तत इति। धृतराष्ट्रस्यापत्यं सुयोधनः तदा काले लब्धावसरे ततो रामात् गदा मशिक्षत् गदाधारणविद्यां गृहीतवा नित्यर्थः। सुयोधनं विशिनष्टि - मानित इति॥ ३०॥

सत्यभामाम प्यवक्षय दित्याह-केशव इति। एत्य आगत्य। शतधन्वनो निधनं वधं मणेरलाभश्च प्रियायाः सत्यभामायाः प्राह — प्रियकृत् प्रियं कुर्वन्निव॥ ३१ ॥

अक्रूर इति। प्रयोजकौ मणिहरणार्थं शतधन्वनः प्रवर्तकौ। हेतुगर्भ मिदम्। तत्त्वात् भयेन वित्रस्तौ कृतवेपथू द्वारकायाः सकाशात् व्यूषतुः प्रोषितवन्तौ। तत्राऽक्रूरः कृष्णानुमत एव गतः। कृतवर्मा तु भक्तपक्षपातप्राकट्यभया देवोपेक्षित इति गम्यते। कथ मन्यथा सर्वज्ञेश्वरवञ्चनं तयो स्सम्भवति॥ ३३ ॥

तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकै र्महाध्वरैः यजमाने निवसति सति कृष्णेनैव प्रस्थापितोऽक्रूर[2] इति कर्णे कर्णे जपति सति जने सत्यभामारामादीनामपि[1] अविश्वासे जनसङ्ग्रहाय अक्रूर माहूय साक्षेपं कृष्णः प्राह-इदञ्च भगवन्मतं सङ्गोप्य केचन ऋषयोऽक्रूरानयने कारणान्तर मनुवर्णयन्ति। तद्दूषयितु मनुवदति मुनिः- अक्रूरे प्रोषिते इति, प्रोषिते देशान्तरं गते सति, द्वारकास्थानां जनानां शारीरा मानसा इत्याध्यात्मिकतापकीर्तनम्। तत्र शारीरा व्याधयः, मानसा आधयः, दैविका इत्याधिदैविकतापोक्तिः भौतिका इति त्वाधिभौतिकस्य॥ ३४ ॥

---

1. B °मादी° 2. B प्रार्थितवानिति

विज० काले कृष्णवियोगसमये॥ ३०,३१ ॥

बन्धोः सत्राजितः। साम्परायिकाः प्रेतविषयाः॥ ३२ ॥

व्यूषतुः [1-]प्रवासं चक्रतुः[-1] [2-]प्रयोजकौ शतधन्वनः प्रेरकौ[-2]॥ ३३,३४ ॥

---

1- -1 B omits 2- -2 Ma omits

★ ततोऽपृच्छ द्धरि र्वृद्धा नुग्रसेनपुरोगमान्। कस्मा दिहाऽरिष्टा न्यासन् महता सुचिरेण नः॥
इत्यङ्गोपदिशन्त्येके [1-]विस्मृत्य प्रागुदाहृतम्[-1]।[2-]मुनिवासनिवासे किं घटेताऽरिष्टदर्शनम्[-2]॥ ३५ ॥

देवेऽवर्षति काशीशः श्वफल्कायाऽऽगताय वै[3]।
स्वसुतां गान्दिनीं प्रादा त्ततोऽवर्ष त्स्म[4] काशिषु॥ ३६ ॥

तत्सुत स्तत्प्रभावोऽसा वक्रूरो यत्र यत्र[5] ह।
देवोऽभिवर्षते तत्र नोपतापा न मारिकाः॥ ३७ ॥

इति [6-]वृद्धवचः श्रुत्वा नैतावदिह कारणम्।
इति[-6] [7-]मत्वा[-7] स्समानीय प्राहाऽक्रूरं जनार्दनः॥ ३८ ॥

[8-]पूजयित्वाऽभिभाष्यैनं[-8] कथयित्वा प्रियाः कथाः।
विज्ञाताखिलचित्तज्ञः[9] स्मयमान उवाच ह॥ ३९ ॥

---

★ This extra Verse is found only in MMa editions 1- -1 MMa विस्मिता वै गदाभृतः 2- -2 MMa निवासनिकटे किं वा 3 MMa गाम्।, MIV ताम्। 4 K.W °त्स 5 MMa तत्र सः।, MIV यत्र सः। 6- -6 BGJ मत्वा समानाय्य; K.W दूतैः तमानीय 7- -7 MMa रामाऽक्रूरौ 8- -8 MMa अक्रूर मानय न्कृष्णः 9 MMa तत्त्वज्ञः

**श्रीध०** दूषयति- **इतीति**। अङ्ग! हे राजन्! श्रीकृष्णमाहात्म्यं विस्मृत्येति तदेवाऽऽह-मुनिवासनिवास इति। मुनीनां वासो यस्मिन् स [1]मुनिवासः। श्रीकृष्णः तस्य निवासे सति अक्रूरापगममात्रेण अरिष्टदर्शनं किं घटेत? तदिच्छां विना न घटेतेत्यर्थः॥ ३५ ॥

पुनस्तन्मतमेवाऽनुवर्णयति- **देव** इति। काशिषु [2]काशीदेशेषु देवे मघवति अवर्षति सति॥ ३६,३७ ॥

**इतीति**। इत्येवम्भूत मक्रूरमहिमप्रतिपादनपरं वृद्धाना वाक्यं श्रुत्वा सत्यमेव, तथाऽपि एतावदेव कारणं न भवति [3-]किन्तु मणेरप्यपगम इति मत्वे त्येतदन्तं परमतम्। वस्तुतस्तु कृष्णलीलावशादेव इष्टाऽरिष्टादि दर्शनमिति शुकादिसम्मतमिति[-3] भावः॥ ३८ ॥

**पूजयित्वेति**। विज्ञात मखिलं येन स चाऽसा वत एव चित्तज्ञश्च। अयम्भावः-महाभागवतस्याऽस्य मया दत्तेऽपि मणा वपेक्षा नाऽस्त्येव। यस्मा दाहूतो मणिना सहैवाऽऽगत इति ज्ञात्वेति॥ ३९ ॥

1 BJ omit मुनिवासः 2- -2 BJ omit काशी 3- -3 BJ omit

**वीर० इतीति**। अस्यातोऽक्रूर मानयामासेत्यादिः। एवमन्ये ऋषयः उपदिशन्ती त्यनुवादः। अथ तद्दूषयति- अङ्गेति। अङ्ग! हे राजन्! प्रागुदाहृतं श्रीकृष्णमाहात्म्यं यत्र यत्र भगवा नवसत् न तत्र तापत्रयसम्भावना इत्येवंविधं विरमृ त्येत्थ मुपदिशन्तीत्यर्थः। तदेवाऽऽह मुनिवासनिवास इति। मुनीनां स्वनिवासदेशेषु तापत्रयनिवर्तकानां वासस्य आश्रयभूतस्य श्रीकृष्णस्य निवासे सति अरिष्टदर्शनं दुःखोत्प्रेक्षणं दुःखसम्भावनाऽपीति यावत्, किं घटेत? न घटत एवेत्यर्थः॥ ३५॥

अथाऽन्यदपि ऋषिमतं दूषयितु मनुवदति **देव** इत्यादिना श्रुत्वेत्यन्तेन। श्रुत्वेत्यनन्तर मतोऽक्रूर मानयामासेति शेषः। वृद्धवचः प्रदर्शनमेव-देव इत्यादिना इतीत्यन्तेन। पुरा किल काशिषु काशीदेशेषु देवे पर्जन्ये अवर्षति सति तद्देशाधिपतिः तत्राऽऽगताय श्वफल्काय स्वसुतां गान्दिनीं ददौ। तत स्स पर्जन्यः तद्देशेषु अवर्षत्॥ ३६ ॥

तत्सुतः श्वफल्कस्य सुतः तत्प्रभावः पितृतुल्यप्रभावोऽक्रूरो यत्र यत्र वसति तत्र तत्र देवोऽभिवर्षति, न तत्रोपतापा मारिका अपमृत्युहेतवश्च सन्ति॥ ३७ ॥

इत्येवंविधं वृद्धानां वचः आकर्ण्य अक्रूर मानयामासेति तद्दूषयति-नैतावदिति। सत्यमेवं, तथाऽपि एतावदेव, अक्रूरावस्थानमात्रमेव[1] तत्र वृष्टा वुपतापाद्यभावे च न कारणं, किन्तु मण्यवस्थानञ्चेति, इति दूतै रिति। इत्येवं सति अक्रूरे देशान्तरस्थे सतीत्यर्थः। दूतै रक्रूरं सम्यगानीय प्राह। स्वाभिमत मानयनकारणन्तु वक्ष्यमाणेन"किन्तु माम ग्रजः सम्यक् न प्रत्येति मणिं प्रति" (भाग. 10-57-42) इति भगवद्वचनेनैव स्फुटीभविष्यतीति अत्र नोक्तम्। यद्वा, अद्भुतचेष्टितो भगवान् अक्रूरानयनार्थं व्याजेन स्वनिवासभूतायामपि द्वारकायां तापत्रय मुत्पाद्य अङ्ग! हे आर्य! हे सत्यभामे, अहो अक्रूरे प्रोषिते सति अत्र तापा उपस्थिताः। तथा ह्यन्ये जनाः प्राच्ययोदाहृतं मणिप्रभाव मविस्मृत्यैव मुपदिशन्ति। मुनिः मननशीलोऽक्रूरः, तस्य मणियुक्तस्य निवासः, तन्निवासे तत्समीपनिवासदेशेऽपि मणियुक्ताऽक्रूरनिवाससमीपदेशेऽप्यरिष्टदर्शनं न घटत एव इत्युक्त्वा तथैव, देव इत्यादिरूपं वृद्धवचनं[2] श्रुत्वा अक्रूराऽवस्थानमात्रमेव[3] न कारणं किन्तु, मणेरपी त्येवं रामादिविश्वासार्थं वृद्धवचश्च विमृश्य दूतै रक्रूरमानयामासेत्याह-अक्रूर इत्यादिभिः पञ्चभिः[4]। अस्मिन्पक्षे अविस्मृत्येति छेदः। अरिष्टदर्शन मित्यस्यानन्तर मित्युक्त्वेति शेषः। देवोऽभिवर्षते। तत्रेत्यस्य काशीदेशेष्वित्यर्थः॥ ३८ ॥

कथ मित्यत आह- **पूजयित्वेति**। एन मक्रूर मभिभाष्य सम्बोध्य विज्ञाताखिलचित्तज्ञः सर्वाभिप्रायज्ञा ये पुरुषाः ते येन विज्ञाताः स तथा। बुद्धिमत्पुरुषान्तर्गतवेदी महाभागवतस्याऽस्य मया दत्तेऽपि मणा वपेक्षा नास्त्येव। तस्मा दाहूतो मणिना सहैवाऽऽगत इति जान न्नित्यर्थः॥ ३९ ॥

---

1 B °रानव° 2. K.T.W वचः 3 B omits मात्र 4 KTW omit पञ्चभिः।

**विज॰** इतिशब्दः प्रकारवचनः। अङ्गेति सम्बोधनम्। एके केचित् पूर्वपुरुषैरुक्तं पुराणवचन मुपदिशन्ति प्रवदन्ति। कथमिति तत्राऽऽह - गदाभृत इति। श्रीकृष्णस्य निवासनिकटे अरिष्टदर्शन मशुभदर्शनं घटेत? किञ्च न घटेत॥ ३५॥

स्वराष्ट्रे देवे पर्जन्ये, अवर्षति काशीशः काशीराजः स्वराष्ट्रं प्रति आगताय श्वफल्काय अक्रूरपित्रे गां स्वविषयभूमिं, नाम्ना गान्दिनीं स्वसुताञ्च प्रादात्॥ ३६ ॥

किमनेनेति तत्राऽऽह-**तत्सुत** इति। तत्प्रभावः श्वफल्कप्रभावः, अतोऽक्रूरो यत्र देशे तत्र देवोऽभिवर्षति तस्मिन्देशे उपतापादयो न भवन्ति॥ ३७ ॥

अवर्षणादिसम्भवेऽन्यच्च निमित्त मस्तीति भावेनोच्यते-नैतावदिति[1]। इह अवर्षणादौ एतावत् अक्रूरप्रवसनमेव कारणं न भवति, किन्तु स्यमन्तक[2-]मणेराऽऽगमनञ्च[-2] कारणमिति च वृद्धवचः श्रुत्वा अक्रूरञ्च रामञ्च समानीयाऽऽनयित्वा॥ ३८,३९ ॥

---

1. M.Ma °तेति। 2- -2 B.M °कग°

**ननु दानपते न्यस्त स्त्वय्याऽऽस्ते[1] शतधन्वना।**
**स्यमन्तको[2] मणिः श्रीमान् विदितः पूर्वमेव नः॥ ४० ॥**

सत्राजितोऽनपत्यत्वा द्गृह्णीयु र्दुहितुः[3] सुताः।
दायं निनीयाऽपः पिण्डान् विमुच्यर्णंश्च शेषितम्॥ ४१ ॥

तथाऽपि दुर्धरो[4,5] ह्यन्यैस्त्वय्यास्तां सुव्रते[6] मणिः।
किन्तु मा मग्रज स्सम्यङ् न प्रत्येति मणिं प्रति॥ ४२ ॥

दर्शयस्व महाभाग बन्धूनां शान्ति मावह।
अविच्छिन्ना[7] मखास्तेऽद्य वर्तन्ते रुक्मवेदयः॥ ४३ ॥

एवं सामभि रालब्धः[8] श्वफल्कतनयो मणिम्।
आदाय वाससा छन्नं ददौ सूर्यसमप्रभम्॥
स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः॥ ४४ ॥

---

1 MMa °व्यसौ 2 MIV °क 3 MMa °र्णमशेषितः। 4 MIV °र्भ० 5 BGJKW °रस्त्वन्यै° 6 MMa प्रापितो 7 BGJMMa °व्यु० 8 MMa °र०

**श्रीध०** ततः किमत आह-**सत्राजित** इति। अपः पिण्डांश्च निनीय[1] दत्वा, ऋणञ्च विमुच्याऽपाकृत्य शेषित मवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुरिति शास्त्रम्। तथा च स्मरन्ति- "पत्नी दुहितर श्चैव पितरो भ्रातर स्तथा। तत्सुता गोत्रजा बन्धुः शिष्या स्स ब्रह्मचारिणः॥" (याज्ञ. स्मृ. 2-135) इति॥ ४०,४१ ॥

**तथेति**। अग्रजोऽपि न प्रत्येति न विश्वसितीति॥ ४२ ॥

**दर्शयस्वेति**। नास्तीति च न वक्तव्यम्। यतोऽविच्छिन्नाः[2] सन्तता मखा वर्तन्त इति॥ ४३ ॥

**एवमिति**। आलब्ध उक्तो, हृदि स्पृष्ट इति वा। स्यमन्तक इति। रजो मिथ्याभिशापम्॥ ४४ ॥

1 MIV स्मृतिः 2 BJ °व्यु०

**वीर०** उक्तिमेवाऽऽह-**नन्विति** चतुर्भिः। हे दानपते! अक्रूरस्यैव इदं नामान्तरम्। स्यमन्तकमणिः शतधन्वना त्वयि निहितः अधुना आस्ते च, नोऽस्माकं पूर्वमेव शतधन्वनो वधात् प्रागेव विदितः॥ ४० ॥

ततः किमत आह-**सत्राजित** इति। अनपत्यत्वात् अपुत्रकत्वात् तस्य दुहितुः सुता दौहित्राः तस्य अपः तिलोदकानि पिण्डांश्च निनीय दत्वा ऋणं विमुच्याऽपाकृत्य[1] अवशेषितं सर्वं दायं रिक्थं गृह्णीयुः ऋणापाकरणे यावदपेक्षितं, तदतिरिक्तं सर्व मपुत्रस्य धनं दौहित्राः गृह्णीयु रित्ययं शास्त्रार्थ इत्यर्थः॥ ४१ ॥

**तथापीति।** तथाऽपि एवं शास्त्रार्थेऽपि मणि स्त्वय्येवाऽऽस्तां तत्रैव[2] तिष्ठतु न तु तद्दौहित्रैः गृह्यते इत्यर्थः। तत्र हेतुं वदन् मणिमक्रूरञ्च विशिनष्टि-अन्यैः धर्तुमशक्यः सुव्रते शोभनं व्रतमाचारो यस्मिन् तस्मिन् त्वयि। किन्त्वग्रजो रामः मणिं प्रति सम्यक् न प्रत्येति न विश्वसिति, मणिमहं तिरोधापितवानि त्याशङ्कते इति भावः॥ ४२ ॥

अतो हे महाभाग्यवन्! दर्शयस्व, मणिमिति शेषः। शान्तिं चित्तसमाधि मावह सम्पादय। नाऽस्तीति मा वोचः इत्याह-अविच्छिन्ना इति। यतस्ते स्वर्णवेदयः सन्तता मखा यज्ञाश्च वर्तन्ते प्रवर्तन्ते, अतोऽस्त्येवेत्यनुमिनोमीत्यर्थः॥ ५३ ॥

**एवमिति।** इत्थं सामोक्तिभिः आलब्धः हृदि स्पृष्टः ददौ, कृष्णायेति शेषः।स्यमन्तकमिति। विभुः श्रीकृष्णो ज्ञातिभ्यो रामादिभ्यः आत्मनः स्वस्य रजः मिथ्याभिशापम्॥ ४४ ॥

1. K.T.W omit अयं 2. T.W °थै०

**विज०** किं कृत्वा स्वीकुर्युरिति तत्राऽऽह-निनीयेति। अपः पिण्डांश्च निनीय दत्वा अशेषतः पित्रादिविषयमृणञ्च विमुच्य गृह्णीयुरिति पूर्वेणान्वयः॥ ४०,४१ ॥

तर्हि तथाऽस्त्विति, नेत्याह-किन्त्विति। प्रत्येति विश्वासं करोति। "प्रत्ययस्तु ख्यातिरन्ध्र विश्वासाधीनहेतुषु॥"(वैज.को.7-1-51) इति॥ ४२ ॥

शान्तिं मङ्गलं, "शान्तिः प्रशममङ्गले" (वैज.को.6-2-39) इति वर्तन्ते। तथेति शेषः। रुक्मवेदयः सुवर्णमेखलाः॥ ४३ ॥

आरब्धः उक्तः। रजो मिथ्यावादलक्षणां धूलिम्॥ ४४॥

★मार्जयामास लोकेश अभिभाष्य हलायुधम्।
दृष्ट्वा मणिं हलधर स्तदर्थं प्रोष्य आगतः॥ ४५ ॥

योग्योऽहमिति मन्वान श्चक्रमे कुरुपुङ्गव।
सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम्॥ ४६ ॥

ग्रहीतु मैच्छ द्विसब्ध्यं हरे श्चित्तमजानती।
जाम्बवत्यपि शुल्कार्थं पित्रा दत्त ममेति ह ॥ ४७ ॥

स्पृहाञ्चक्रे मणौ तस्मिन् सर्वं विज्ञाय माधवः।
अक्रूरस्य करे भूयो मणिं प्रत्यर्पय द्विभुः॥ ४८ ॥

△ विमृज्य[1] पाणिना[2] भूय स्तस्मै प्रत्यार्पय[3] त्प्रभुः॥ ४९ ॥

यस्त्वेतद्भगवत ईश्वरस्य विष्णोः वीर्याढ्यं[4] वृजिनहरं सुमङ्गलञ्च।
आख्यानं पठति शृणो त्यनुस्मरे द्वा दुष्कीर्तिं दुरितमपोह्य याति शान्तिम्॥ ५० ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
स्यमन्तकोपाख्याने सप्तपञ्चाशोऽध्यायः॥ ५७ ॥

---

★ These additional four Verses are found in MMa editions only △ This half verse is not found in MMa editions
1--1 KW प्रमृज्य 2 BGJMIV मणिना 3 BGJ MIVW °त्य० 4 MMa °ख्य

**श्रीध० विमृज्येति।** सम्मृज्य अन्यै दुर्धर इत्यादिमिषेण प्रीत्या भूय स्तस्मै प्रत्यर्पितवानिति॥ ४५-४९ ॥

**यस्त्विति।** दुष्कीर्तिं तन्मूलं दुरितञ्चेति॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
सप्तपञ्चाशोऽध्यायः॥ ५७ ॥

**वीर०** प्रमृज्य अपास्य पाणिना स्वहस्तेनैव पुन स्तस्मै अक्रूराय मणिं प्रत्यार्पयत्[1] ददौ॥ ४५-५९ ॥

उक्ताख्यानकथनश्रवणस्मरणादिफलं वदन् निगमयति -**यस्त्विति।** विष्णो वीर्येण प्रभावप्रकाशनेन आढ्यं युक्तं, वदतां शृण्वतां स्मरताञ्च पापहरम्। अनेनाऽनिष्टनिवर्तकत्वमुक्तम्। सुमङ्गलं मङ्गलावहञ्चेत्यनेन इष्टप्रापकत्वम्। यः पुमान् एवंविध माख्यानं वदेत् शृणुयात् अनुस्मरेद्वा, स दुष्कीर्तिं दुरितञ्च निरस्य मनश्शान्तिं मुक्तिसाधनभूतां याति प्राप्नोति॥ ५० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तपञ्चाशोऽध्यायः॥ ५७ ॥

1 BTW °त्य०

**विज०** तदर्थं मणिनिमित्तम्॥ ४५ ॥

स्वात्मना इति तृतीया षष्ठ्यर्थे॥ ४६ ॥

स्नेहा द्विस्रब्धं विश्वस्तम्॥ ४७ ॥

फलमाह-**य** इति। शान्तिं मुक्तिम्॥ ४८-५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
सप्तपञ्चाशोऽध्यायः॥ ५७ ॥

(विजयध्वजरीत्या एकषष्टितमोऽध्यायः)

# अष्टपञ्चाशोऽध्यायः

## (विजयध्वजरीत्या द्विषष्टितमोऽध्यायः)

[1]श्रीशुक उवाच

एकदा पाण्डवा न्द्रष्टुं प्रतीता न्पुरुषोत्तमः।
इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभि र्वृतः॥ १ ॥

दृष्ट्वा त मागतं पार्था मुकुन्द मखिलेश्वरम्।
उत्तस्थु र्युगपद्वीराः प्राणा[2] मुख्य मिवागतम्॥ २ ॥

परिष्वज्याऽच्युतं वीरा अङ्गसङ्गहतैनसः।
सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः॥ ३ ॥

युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्।
[3]फल्गुनं परिरभ्याऽथ यमाभ्यां [4]चाऽभिवन्दितः[-4]॥ ४ ॥

परमासन[5] आसीनं कृष्णा कृष्ण मनिन्दिता।
नवोढा व्रीडिता किञ्चित् शनै रेत्याभ्यवन्दत॥ ५ ॥

---

1- -1 Ml.V. omit 2. M.Ma प्राणं 3. B.G.J M.Ma फा० 4- -4 K.W. अभिवादितः; M.Ma अभिवन्दितः; Ml.V चाभिवादितः 5. K.M.Ma Ml.V.W. ०नमा०

## श्रीधरस्वमिविरचिता भावार्थदीपिका

अष्टपञ्चाशत्तमे तु कृष्णः पञ्च करेऽग्रहीत्। कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम्॥

कालिन्दीं निजलाभाय तपः पर मुपेयुषीम्। परिणेष्यन् प्रियावासम् इन्द्रप्रस्थमथाऽगमत्॥

**एकदेति।** प्रतीतान् नष्टानपि द्रुपदगृहे[1] पुनः सर्वे दृष्टान्। युयुधानः सात्यकिः॥ १ ॥

दृष्ट्वेति। प्राणा इन्द्रियाणि मुख्यं पञ्चवृत्तिं प्राणमिव॥ २,३ ॥

युधिष्ठिरस्येति। ज्येष्ठयोः प्रणामं कृत्वा समेनाऽऽलिङ्गितः कनिष्ठाभ्या मभिवन्दितो बभूव॥ ४ ॥

परमिति। कृष्णा द्रौपदी। [2] अनिन्दिता बहुभार्या सत्यपि निन्दारहिता। पार्थे नव मचिरम् ऊढा परिणीता॥ ५॥

1 MIV गेहे 2 B.J omit अनिन्दिता

## श्रीवीरराघवविदुषा लिखिता

अथ भगवतः कालिन्दीमित्रविन्दानाग्नजितीभद्रालक्ष्मणाणां विवाहं वर्णयति अष्टपञ्चाशत्तमेन। ताव त्कालिन्दी विवाहोपोद्घात माह- **एकदेत्यादिना** अथोपयेमे इत्यतः प्राक्तनेन। प्रतीतान् नष्टा इति श्रुतानपि पुनः द्रुपदगृहे सर्वे दृष्टान् पाण्डवान् द्रष्टुं युयुधानः सात्यकिः आदि र्येषां तैः यदुभिः परिवृतः इन्द्रप्रस्थं ययौ॥ १ ॥

**दृष्ट्वेति।** पृथायाः कुन्त्याः अपत्यानि वीराः युधिष्ठिरादयः तमागतं कृष्णं दृष्ट्वा युगप दुत्तस्थुः यथा प्राणा इन्द्रियाणि आगतं मुख्यं पञ्चवृत्तिप्राण मनूत्तिष्ठन्ति तद्वत्॥ २ ॥

**परिष्वज्येति।** प्रीता स्त मच्युत मालिङ्ग्य अच्युतस्याऽङ्गसङ्गेन हतानि एनांसि पापानि येषां ते पार्थाः तस्यानुरागेण सहितं स्मितं यस्मिन् तत् मुख मवलोक्य मुदं हर्षं प्रापुः॥ ३ ॥

**युधिष्ठिरस्येति।** पादाभिवन्दनं कृत्वा तयो रधिकवयस्कत्वा[1] दिति भावः। फल्गुनं[2] अर्जुनं परिरभ्याऽऽलिङ्ग्य तस्य तुल्यवयस्कत्वात्[3], यमाभ्यां यमलाभ्यां नकुलसहदेवाभ्यां अभिवादितः नमस्कृतः तयो र्न्यूनवयस्कत्वा[4] दिति भावः॥ ४॥

**परमासनमिति।** कृष्णा द्रौपदी नवोढा नव मचिर मूढा विबाहिता, अत एव किञ्चिद्व्रीडिता सती शनैः आगत्य कृष्ण मभ्यवन्दत ननाम॥ ५ ॥

---

1 KW °स्त्वात् 2 B फा० 3 KW °स्त्वात् 4 KW °स्त्वात्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

तत्तदधिकारिणां तत्तद्योग्यगुणोपसंहारार्थं भक्तवात्सल्यादिविशेषं कथयति कतिपये ष्वध्यायेषु। तत्राऽऽदौ हरे र्भक्तवात्सल्यं दर्शयितुमाह- **एकदेति।** एकदा कस्मिंश्चि दवसरे प्रतीतान् शौर्यादिगुणेन प्रख्यातान् कोविदान् वा। भगवद्भक्त्याभरणेन भूषितान्वा। "प्रतीतो भूषिते ख्याते ज्ञाते प्रत्ययिते बुधे" (वैज-को-7-4-16) इति यादवः। "प्रतीते प्रथितख्यातवित्तविज्ञात कोविदाः(विश्रुताः)" (अम.को.3-10) इत्यमरः ॥ १ ॥

मुकुन्दं मुक्तिप्रदं शरीरं प्रति आगतं प्रविष्टं मुख्यप्राणं दृष्ट्वा चक्षुरादीन्द्रियाणि यथोत्तिष्ठन्ति॥ २ ॥

अच्युतस्याङ्गसङ्गेन ॥ ३,४ ॥

कृष्णा द्रौपदी॥ ५ ॥

तथैव सात्यकिः पार्थैः पूजित श्चाभिवन्दितः।
निषसादाऽऽसनेऽन्ये च पूजिताः पर्युपासत[1]॥ ६ ॥

पृथां समागत्य[2] कृताभिवादन[3] स्तयाऽतिहार्दार्द्रदृशाभिरऽम्भितः।
आपृष्टवांस्तां[4] कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः॥ ७ ॥

तमाह प्रेमवैक्लब्य[5] रुद्धकण्ठाश्रुलोचना।
स्मरन्ती तान्बहून्[6] क्लेशान् क्लेशापायात्मदर्शनम्॥ ८ ॥

तदैव[7] कुशलं [8-]नोऽभूत्सनाथास्ते[-8] कृता वयम्।
ज्ञाती[9] न्नः स्मरता कृष्ण भ्राता मे प्रेषित स्त्वया॥ ९ ॥

★ पाञ्चालेषु स्थिता नस्मान् स्वयंवरकृते यदा।
अनुस्मृत्याऽऽगतो यस्त्वं तेन स्माऽऽसं सुखोषिता॥ क ॥

इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम्।
पाञ्चालेषु स्थितानेत्य सुतांस्ते च्छद्मरूपिणः॥ ख ॥

कुम्भकारस्य शालाया मुषिता न्सह भार्यया।
दृष्ट्वा गतोऽहं दिवसे तस्मिन्नेवाऽविलम्बितः॥ ग ॥

निहन्तुं शतधन्वानं सत्यभामापितु र्द्रुहम्।
शतधन्वनि दुर्बद्धौ हते सीरधरोऽग्रजः॥ घ ॥

कुपितो मा मनादृत्य विदेहा न्विमना ययौ।
एतावन्तं महाकालं तदाऽऽगमनकाङ्क्षया॥ ङ ॥

पुर एवाऽवसं क्वापि नाऽऽगच्छं कार्ययन्त्रितः।
इ त्येवंवादिनं कुन्ती प्राह स्नेहपरिप्लुता॥ च ॥

**न तेऽस्ति [10-]स्वपरभ्रान्तिः[-10] विश्वस्य सुहृदात्मनः।**
**तथाऽपि स्मरतां [11]शश्वत् क्लेशा न्हंसि हृदि स्थितः॥ १० ॥**

1 MMa °ते 2 MMa °म्य 3 K.MMaW वन्दन 4 MMa °स्तत्कु० 5 MMa ० °व्य० 6 MIV °हुक्ले० 7 V °दे० 8- -8 MMa ०भूबत्सनाथाः 9 MMa °तु नः ★ These six slokas from क to च are found only in MMa editions 10- -10 MMaW स्वः पर इति 11 MMaW सर्वान्

**श्रीध० पृथामिति।** अतिहार्देन स्नेहेनार्द्रे सजले दृशौ यस्या स्तया परिष्वक्तः। तया परिपृष्टा बान्धवा यस्य सः॥ ६,७ ॥

**तमिति।** प्रेम्णा वैक्लब्यं तेन रुद्धः कण्ठो यस्याः, क्लेशापाये आत्मनि दर्शनं यस्य तम्, भजतां क्लेशापायाय आत्मानं दर्शयतीति वा ॥ ८ ॥

**तदैवेति।** ज्ञातीन् बन्धून् नोऽस्मान्। यदा भ्राताऽक्रूरः प्रेषितः॥ ९ ॥

ज्ञातीनिति वचनात् प्राप्तं मोहं वारयन्ती स्तौति-**न तेऽस्तीति।** तत्र हेतुः- **विश्वस्येति।** सुहृच्च आत्मा च तस्य। हंसि नाशयसि॥ १० ॥

**वीर० तथैवेति।** यथा कृष्णः तथा सात्यकिश्च यथायोग्यं पूजितः बहुमतः अभिवन्दितश्च निषसाद उपविष्टवान्। तथाऽन्ये च यदवः पार्थैः पूजिताः कृष्णं परित उपासत॥ ६ ॥

**पृथामिति।** [1-]ततश्च भगवान्[-1] पृथां कुन्तीं समभ्येत्य कृत मभिवन्दनं येन सः। अतिस्नेहेनार्द्रे सजले दृशौ यस्या स्तया पृथया अभिरम्भितः परिष्वक्तः पितृभगिन्या पृथया परिपृष्टाः कुशलप्रश्नविषयाः बान्धवा वसुदेवादयो यस्य सः. सहस्नुषां पुत्रभार्यासहितां तां पृथा मापृष्टवान् कुशलं पप्रच्छ॥ ७ ॥

**तमिति।** प्रेम्णा वैक्लब्य मधार्ष्टचं, तेन रुद्धः कण्ठो यस्या [3]स्सा, [2]अश्रु लोचनयोः यस्या स्सा पृथा तान् भूतपूर्वान् क्लेशान् स्मरन्ती क्लेशापायायाऽऽत्मानं दर्शयतीति तथा तं कृष्णं प्राह॥ ८ ॥

उक्तिमेवाह- **तदैवेति।** नोऽस्माकं कुशलमभूत्, तथा वयं ते त्वया सनाथाश्च कृताः। कदा? यदा ज्ञातीन् बन्धून् नोऽस्मान् स्मरता त्वया मम भ्राता अक्रूरः प्रेषितः॥ ९ ॥

ज्ञाती नित्यनेन प्राप्तां ममतां वारयितु माह- **नेति।** ते तव स्वः पर इति च भ्रान्ति र्नास्ति। तत्र हेतुः- विश्वस्येति। जगतः सुहृच्च आत्मा अन्तरात्मा च तस्य। कथं तर्हि युष्मान् स्मरामी त्यत आह-तथाऽपीति। स्वपरभ्रान्त्यभावेऽपि स्मरतां भक्तानां हृदि स्थित स्त्वं शश्वत् सदा क्लेशान् हंसि नाशयसि॥ १० ॥

1- -1 KW omit 2 B अश्रूणि 3 BW आह

**विज०** तस्यै कृताभिवन्दनः अभिरम्भितः आलिङ्गितः परिपृष्टबान्धवः, तयेति शेषः ॥ ६,७ ॥

क्लेशापायात्मदर्शनं क्लेशनाशकरस्वरूपदर्शनं, जतुगृहादा वनुभूतान् तांश्च बहून् क्लेशान् स्मरन्ती तं कृष्ण माहे त्यन्वयः॥ ८॥

किमत्राह-**तदैवेति**। हे कृष्ण! यद्यदा स्मरतां नो वृत्तं ज्ञातुं त्वया यदा मे भ्राता अक्रूरः प्रेषितः तदैवास्माकं, कुशल मभूदि त्यन्वयः, कथमेत दत्राह-यदिति। यदि त्युत्तरत्रापि सम्बध्यते हेतुत्वेन, अस्मत्कुशलं स्मरता त्वया सनाथाः स्वामिवन्तः कृता इति य त्पाण्डवाना मुपद्रवो न कर्तव्यः, यत स्ते कृष्णनाथा अस्मान् घ्नन्तीति॥ ९ ॥

किञ्च, यदा स्वयंवरकृते पाञ्चालेषु स्थिता नस्मा ननुस्मृत्य यस्त्व मागतः तदा तेन त्वया त्वद्गुणानसंस्मृत्याऽहं सुखोषिता आसम् इत्यन्वयः॥ क ॥

इदानी मागमनविलम्बः किमिति कृत इति कुन्त्या हार्दशङ्कां परिहर न्नाह- **इतीति**। (ख,ग)

सीरधरो हलधरः बलभद्र इत्यर्थः। (घ,ङ)

कार्ययन्त्रितः कार्यवशः। ईश्वरस्य तव इदं वचनं लोकचेष्टानुसारि, न तु तथ्यमिति भावेन प्रतिवक्ति इतीति। (च)

स्वः स्वकीयः परः परकीयः शत्रुपक्षभवः,शत्रुमित्रविभागाभावे जनार्दनो मुरारिः मधुसूदनः पार्थसारथि रित्यादीनि नामानि विक्रमनिमित्तानि कथम्? अत्राह तथापीति॥ १० ॥

### [1-] युधिष्ठर उवाच [-1]

**★ किं न आचरितं श्रेयो न वेदाऽहमधीश्वर[2] !॥**
**योगेश्वराणां दुर्दर्शो य न्नो दृष्टः कुमेधसाम्॥ ११ ॥**

**इति वै वार्षिका न्मासान् राज्ञा सोऽभ्यर्थित[3] स्सुखम्।**
**जनय न्नयनानन्द मिन्द्रप्रस्थौकसां विभुः॥ १२ ॥**

**एकदा रथ मारुह्य विजयो वानरध्वजम्[4]।**
**गाण्डीवं धनु रादाय तूणौ[5] चाऽक्षयसायकौ॥ १३ ॥**

**साकं कृष्णेन सन्नद्धो विहर्तुं[6] विजनं[7] वनम्।**
**बहुव्यालमृगाकीर्णं प्राविश त्परवीरहा॥ १४ ॥**

**तत्राऽविध्य च्छरै र्व्याघ्रा न्सूकरा न्महि[8]षा न्रुरून्।**
**शरभा न्गवयान्खड्गान्हरिणाञ्छशशल्यकान्॥ १५ ॥**

---

1- -1 MMa omit ★ This Verse is not found in MMa editions 2 MIV °रः। 3 MMa °र्चि० 4 MIV ञ्जः। 5 MIVW तूणी 6 B गहनं, GJMMaMIV विपिन 7 MIV महत् 8 BGJ °ल्ह०

**श्रीध०** **किमिति।** कुमेधसां विषयासक्तचित्तानां दृष्टोऽसि॥ ११ ॥

**इतीति।** सुख मवसदिति शेषः। सुखमभ्यर्थित इति वा क्रियासमाप्तिः॥ १२ ॥

माह- **एकदेति।** अक्षयाः सायका ययो स्तौ तूणौ[2] इषुधी॥ १३-१५ ॥

1 BJ omit स 2 MIV

**वीर०** अथ युधिष्ठिरः प्राह-**किमिति।** हे अधीश्वर! नः[1] अस्माभिः किं पुण्यम् आचरितं कृतमिति न वेद्मि, कृतं पुण्य मीदृशमिति न वेद्मि। किन्तु सामान्यतो महत्पुण्यं कृतमेवेति तु वेद्मीति भावः। **कुतः?** **यत्** यस्मात् योगीश्वराणामपि द्रष्टु मशक्यो भवान् कुमेधसां विषयासक्तचित्ताना मस्माकं दृष्टः॥ ११ ॥

**इतीति।** इति[2] इत्थं राज्ञा युधिष्ठिरेण अभ्यर्थितो बहुमतः स भगवान् वार्षिकान् मासान् सुखं यथा तथा, न्यवस दिति शेषः॥ १२ ॥

कालिन्दीदर्शनप्रसङ्ग माह-**एकदेति।** तदैकदा विजयोऽर्जुनः वानरो हनूमत्प्रतिकृतिः[3] ध्वजे यस्मिन् तं रथ मारुह्य अक्षया अक्षीणाः सायका ययो स्तौ तूणौ इषुधी चाऽऽदाय सन्नद्धः कवचितः कृष्णेन सहितो विहर्तुं निर्जनं वनं प्राविशत्। व्याला स्सर्पाः गजा वा, अयं वक्ष्यमाणकथायाः यदा च "यदैव कृष्ण स्सन्दिष्टः" (भाग. 10-58-24) इत्यदिकायाः पाश्चात्यवृत्तान्तः खाण्डवदहना त्पूर्वं गाण्डीवप्राप्तयनुपपत्तेः॥ १३,१४ ॥

**तत्रेति।** तत्र वने शरैः व्याघ्रादी नविध्य ज्जघान॥ १५ ॥

1 KW omit नः 2 KW omit इति 3 B हनु०

**विज०** इति संलापे वार्षिकान् वर्षाकालसम्बन्धिनः, राज्ञाऽभ्यर्चितः, उवासेति शेषः॥ ११-१३ ॥

विपिनं गम्भीरम्॥ १४ ॥

महिषान् वनमहिषान् रुरून् कृष्णमृगान् शरभान् अष्टपदान् खड्गान् मृगविशेषान् हरिणान् सामान्यमृगान् शल्यकान् शललान्॥ १५ ॥

ता [1-] न्निन्युः किङ्करा राज्ञे मेध्या न्पर्व ण्युपागते।<br>
तृट्[-1]परीतः परिश्रान्तो बीभत्सु र्यमुना मगात्॥ १६ ॥

तत्रोपस्पृश्य विशदं पीत्वा [2-] वारि महारथौ[-2]।<br>
कृष्णौ ददृशातुः कन्यां चरन्तीं चारुदर्शनाम्[4]॥ १७ ॥

ता मासाद्य वरारोहां सु[5]द्विजां[6] रुचिराननाम्।<br>
पप्रच्छ प्रेषितः सख्या फल्गुनः प्रमदोत्तमाम्॥ १८ ॥

का त्वं कस्याऽसि सुश्रोणि[7] कुतो[9] वा[8] किं चिकीर्षसि।<br>
मन्ये त्वां पति मिच्छन्तीं सर्वं कथय शोभने॥ १९ ॥

कालिन्द्युवाच

अहं देवस्य सवितु र्दुहिता पति मिच्छती।<br>
विष्णुं वरेण्यं वरदं तपः परम मास्थिता॥ २० ॥

---

1- -1 K.W. ततः क्षुत्तृट्2- -2 M.Ma मृष्टमणिप्रभम्। 3. J.M.Ma ददर्शतुः 4. MI.V.W लोचनाम् 5 M.Ma. सुदतीं 6 B.G.J.M.Ma फा० 7 MI V. कल्याणि 8 B.G.J °ऽसि 9. K.W कन्ये! M.Ma कन्यां

**श्रीध० तानिति**। राज्ञे युधिष्ठिराय, मेध्यान् कर्मार्हान्, बीभत्सु रर्जुनः॥ १६,१७ ॥

**तामिति**। सख्या श्रीकृष्णेन॥ १८-२० ॥

**वीर० तानिति**। तत्र मेध्यान् कर्मार्हान् मृगान् राज्ञे युधिष्ठिराय किङ्कराः निन्युः प्रापयामासुः। भक्षणार्थत्व[1]शङ्कां व्युदस्यति-पर्व ण्युपागत इति। पर्वप्रयुक्तकर्म ण्युपस्थिते सतीत्यर्थः। ततः क्षुत्तृड्भ्यां अशनायापिपासाभ्यां परिश्रान्तो बीभत्सुः अर्जुनः यमुनां जगाम॥ १६ ॥

उपस्पृश्य स्नात्वा महारथौ कृष्णार्जुनौ विशदं निर्मलं [2]वारि जलं पीत्वा चारु सुन्दरं दृश्यत इति तथा तां चरन्तीं काञ्चि त्कन्यां ददृशतुः॥ १७ ॥

**तामिति**। सख्या कृष्णेन प्रेषितः [3]फल्गुनोऽर्जुनः शोभना द्विजाः दन्ताः यस्याः, रुचिरमाननं यस्या स्तां वरमाका[4]ङ्क्षन्तीम् इव स्थितां [5-]प्रमदोत्तमां[-5] पप्रच्छ॥ १८ ॥

प्रश्नमेवाह- **का त्वमिति**। त्वं[6] कस्याऽसि? कस्य सम्बन्धिन्यसि? किं कर्तु मिच्छसि? अहं तु पति मिच्छन्तीं कन्यां त्वां मन्ये, हे शोभने! कथय॥ १९ ॥

[7-] उत्तरमाह [-7]— **अहमिति** त्रिभिः[8]। सवितु रादित्यस्य दुहितेति कस्याऽसीत्यस्योत्तरम्। किञ्चिकीर्षसी त्यस्योत्तरमाह- [9-] पतिमित्यादि [-9]। वरेण्यं वरणीयं विष्णुं पतिं कामयमाना परमं तप आस्थिता॥ २० ॥

---

1 B omits त्व 2 B omits वारि 3 B फा० 4 B °क्षमाणाम् 5- -5 B omits 6 K.W omit त्व 7- -7 W omits 8 W omits त्रिभिः। 9- -9 B omits

**विज०** राज्ञे युधिष्ठिराय पर्वणि श्राद्धोचिते यजनकाले वा॥ १६ ॥

कृष्णौ यादवेन्द्रार्जुनौ॥ १७ ॥

सख्या कृष्णेन॥ १८ ॥

कन्यां दीप्ता मुत्पन्नरजसम् अत एव पतिं कामयमानां, 'कन दीप्तौ' इति धातुः। "अनवाप्तपतिः कन्या जातवीर्या वरार्थिनी" इत्युत्पलमाला॥ १९ ॥

वरेण्य प्रार्थनीयम्॥ २० ॥

**नाऽन्यं पतिं वृणे वीर तमृते श्रीनिकेतनम्।**
**तुष्यतां मे स भगवान् मुकुन्दोऽनाथसं[1]श्रयः॥ २१ ॥**

**कालिन्दीति समाख्याता वसामि यमुनाजले।**
**निर्मिते भवने पित्रा यावदच्युतदर्शनम्॥ २२ ॥**

**तथाऽवद द्गुडाकेशो वासुदेवाय सोऽपि ताम्।**
**रथ मारोप्य तद्विद्वा न्धर्मराज मुपागमत्॥ २३ ॥**

**★ वसं स्तत्र हृषीकेशः शक्रप्रस्थे यथासुखम्।**
**विश्वकर्माण माहूय शिल्पविद्याविशारदम्॥ क ॥**

**अद्भुतं कारयामास नगरं धर्मसूनवे।**
**स प्रासादपुरद्वारगोपुराट्टालतोरणम्॥ ख ॥**

**पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया।**
**अथ पार्थै रनुज्ञातः सुहृद्भिः स्वजनान्वितः॥ ग ॥**

[2]
● यदैव कृष्णः सन्दिष्टः पार्थानां परमाद्भुतम्।
कारयामास नगरं विचित्रं विश्वकर्मणा॥ २४ ॥

भगवां स्तत्र निवस न्स्वानां प्रियचिकीर्षया।
अग्नये खाण्डवं दातु मर्जुनस्याऽऽस सारथिः॥ २५ ॥

1 M.Ma वत्सलः★ These three extra Verses are found in M.Ma only ● 'यदैव कृष्णः, इत्यारभ्य, अर्जुनस्याऽऽस सारथिः' इति श्लोकपर्यन्तं M.Ma प्रकाशेषु नास्ति। 2. K.W यदा च

**श्रीध०** अयं मां काम[1-]येतेति शङ्कया आह[-1]— **नाऽन्यमिति**॥ ॥ २१,२२ ॥

**तथेति**। आदावेव तद्विद्वान्॥ २३ ॥

प्रसङ्गात् [2]तात्कालिकं चरित्रान्तर माह- **यदैवेति**। पार्थैः यदैव सन्दिष्टो विज्ञापितः श्रीकृष्ण स्तदैव तेषां विश्वकर्मणा देवशिल्पिना नगरं कारयामास॥ २४ ॥

**भगवानिति**। किञ्च, भगवान् निरतिशयैश्वर्यगुणवानपि अर्जुनस्य धनुरादिलाभाय सारथि रास। खाण्डवं नामेन्द्रस्य वनम्॥ २५ ॥

1- -1 B.J ° येदित्याशङ्काया माह 2 B.J तत्कालीनं

**वीर०** बहुषु सत्सु किं विशेषेण विष्णुमेव कामयसे इत्यत आह-**नाऽन्यमिति**। हे वीर! तं विष्णुम् ऋते विना अन्यं न वृणे, तत्र हेतुं वदन्ती तं विशिनष्टि- श्रियो निकेतनम् आश्रयं, श्रीर्हि सर्वोत्तमं तमेवाश्रितवती। अतोऽहमपि तमेव वृणे इति भावः। दुर्लभस्स कथं त्वदिच्छामात्रेण लभ्यत इत्यत आह-तुष्यतामिति। तत्र हेतुः, अनाथाना मनन्यनाथानां संश्रयः॥ २१ ॥

अथ का त्व मित्यस्योत्तरमाह- **कालिन्दीति**। पित्रा सवित्रा याव दच्युतस्य श्रीकृष्णस्य दर्शनं ताव न्निवसामि॥ २२॥

**तथेति**। गुडाकेशोऽर्जुनः वासुदेवार्थं तां कन्यां रथ मारोप्य तद्भगवदभिप्रेतं जानन्॥ २३ ॥

**अथार्जुनाय गाण्डीवादिप्रदानात्मकं भगवच्चेष्टितमाह- यदेति**। सन्दिष्ट आदिष्टः पार्थै रिति विभक्तिविपरिणामः। कृष्णः प्रयोजककर्ता [1-]विश्वकर्मणा प्रयोज्यकर्त्रा[-1] विचित्रं नानाविधशिल्पोपेतं अत्याश्चर्यं नगरं पार्थाना मावासार्थं कारयामास॥ २४ ॥

तदा स्वानां प्रियं कर्तु मिच्छया तत्र नगरे निवसन् अग्नये खाण्डवं नाम वनं दातु मर्जुनस्य सारथि र्बभूव॥ २५॥

1- -1 W. omits

**विज०** अनाथवत्सलः॥ २१,२२ ॥

गुडाकेशः घनकेशः जितनिद्रो वा। यथा कालिन्दी ऊचे तथा सोऽपि वासुदेवाय॥ २३-२५ ॥

**★ सोऽग्नि स्तुष्टो धनु[1]र्[2]ददात् हयान् श्वेतान् रथं नृप।**
**अर्जुनायाऽक्षयौ तूणौ वर्म चाभेद्य मस्त्रिभिः॥ २६ ॥**

**मयश्च मोचितो वह्नेः सभां सख्य उपाहरत्।**
**यस्मि न्दुर्योधनस्यासी ज्जलस्थलदृ[3]शिभ्रमः॥ २७ ॥**

**स तेन समनुज्ञातः सुहृद्भि श्चानुमोदितः।**
**आययौ द्वारकां भूयः सात्यकिप्रमुखै र्वृतः॥ २८ ॥**

**अथोपयेमे कालिन्दीं [4-]सुपुण्यर्त्वृक्ष[-4] ऊर्जिते।**
**● रूपयौवनसम्पन्नां मनोनयननन्दिनीम्॥**
**वितन्वन्परमानन्दं स्वानां परममङ्गलम्॥ २९ ॥**

**विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ।**
**स्वयंवरे स्वभगिनीं [5-]कृष्णे सक्तां[-5] न्यषेधताम्॥ ३० ॥**

★ 'सोऽग्निरित्यारभ्य-स तेन' इति श्लोकार्धपर्यन्तं (सार्धश्लोकद्वयं ) M.Ma प्रकाशयोः नास्ति। 1. K.W. श्चादात् 2. MI.V.W तूणां 3. K.W मति०
4- -4 पुण्ये नक्षत्र० ● This extra half Verse is found only in M Ma editions 5--5 MI.V. कृष्णे रक्तां; M.Ma कृष्णकमां

**श्रीध०** स इति। अक्षयौ अक्षयसायकौ॥ २६ ॥

**मय** इति। खाण्डवदाहका द्वह्नेः। सख्ये अर्जुनाय। यस्मिन्निति सामान्यतो निर्देशः यस्यामित्यर्थः। जलस्थलयो र्दृशेः दृष्टेर्भ्रमः। यद्वा जले स्थलवत् दृक् दृष्टि र्यस्मिं स्तत् जलस्थलदृक् तस्मिन् भ्रम आसीदिति। [1-]मतिभ्रम इति पाठे जले स्थलबुद्धिरूपः, स्थले जलबुद्धिरूपो भ्रम इत्यर्थः[-1]॥ २७,२८ ॥

**अथेति**। सुपुण्य ऋतुः ऋक्षं च यस्मिन्[2]॥ २९ ॥

पञ्चमं मित्रविन्दाविवाह माह- **विन्दानुविन्दाविति** द्वाभ्याम्। आवन्त्यौ अवन्त्याः[3] राजानौ॥ ३०

1- -1 B J omit 2 M I V तस्मिन् 3 M I V अवन्ति

**वीर० स** इति। स दग्धखाण्डवोऽग्निः अत एव तुष्टः हे नृप! अर्जुनाय धनुरादीन् ददौ, अस्त्रिभिरस्त्रधारिभिः अभेद्यं वर्म कवचम्॥ २६ ॥

**मयश्चेति**। मयः खाण्डववनवासी वह्ने स्सकाशा न्मोचितः सख्ये अर्जुनाय सभा मुपाहरत् ददौ। तां विशिनष्टि - यस्यामिति। यस्यां सभायां जलस्थलमतिभ्रमः[1] जले स्थलबुद्धिः स्थले जलबुद्धिः इत्येवंविधो यो भ्रमः स बभूव॥ २७॥

**स** इति। स कृष्णः तेनार्जुनेन समनुज्ञातः सुहृद्भिः युधिष्ठिरादिभिः अनुमोदितश्च भूयः पुनः॥ २८ ॥

**अथेति**। ऊर्जिते ग्रहबलवति सुपुण्य मनुकूल मृक्षं नक्षत्रं यस्मिन् तस्मिन् सुमुहूर्ते स्वानां द्वारकौकसां परमानन्दं[2] विस्तारयन् परमं मङ्गलं यस्य सः विवाहितवान्॥ २९ ॥

अथ पञ्चमं मित्रविन्दाविवाहं प्रस्तौति- **विन्दानुविन्दाविति**। आवन्त्यौ अवन्तिराजौ दुर्योधनवश दुर्योधनाधीनताम् अनुगच्छतः इति तथा, तौ न्यषेधतां न्यवारयताम्॥ ३० ॥

1 B दृशि 2 B परममा०

**विज०** 26 तमश्लोका दारभ्य 30 तमश्लोकपर्यन्तं विजयध्वज व्याख्या नास्ति॥ २६-३० ॥

**राजाधिदेव्यास्तनयां मित्रविन्दां[1] पितृष्वसुः।**
**प्रसह्य हृतवा न्कृष्णो राज न्राज्ञां प्रपश्यताम्॥ ३१ ॥**

**नग्नजि न्नाम कौसल्य[2] आसीद्राजाऽतिधार्मिकः।**
**तस्य सत्याऽभव त्कन्या [3-]देवी[-3] नाग्नजिती नृप॥ ३२ ॥**

**न तां शेकु र्नृपा वोढु मजित्वा सप्त गोवृषान्।**
**तीक्ष्णशृङ्गा न्सुदुर्धर्षा [4-]न्वीरगन्धासहा[-4] न्खलान्॥ ३३ ॥**

**तां श्रुत्वा वृषजिल्लभ्यां भगवा न्सात्त्वतां पतिः।**
**जगाम कौसल्यपुरं सैन्येन महता वृतः॥ ३४ ॥**

स [6]कौसलपतिः [7]प्रीतः [8]प्रत्युत्थायासनादिभिः।
अर्हणेनापि गुरुणा [9]पूजयन्[9][10]प्रतिनन्दितः॥ ३५ ॥

वरं [11]विलोक्याऽभिमतं [12]समागतं नरेन्द्रकन्या चकमे रमापतिम्।
भूया दयं मे पति [13]राशिषोऽमलाः करोतु [14]सत्या यदहं धृतव्रता[14] ॥ ३६ ॥

अर्चितं पुन रित्याह नारायण जगत्पते।
[15]आत्मानन्देन पूर्णस्य करवाणि किमल्पकः॥ ३७ ॥

यत्पादपङ्कजरजश्शिरसा बिभर्ति श्री रब्ज [16]स्स गिरिशः सह लोकपालैः।
लीलातनूः स्वकृतसेतुपरीप्सया [17]यः काले दध त्स भगवा [18]न्मम केन तुष्येत्॥ ३८

श्रीशुक उवाच

तमाह भगवान् [19]कृष्णः कृतासन परिग्रहः।
मेघगम्भीरया वाचा सस्मितं कुरुनन्दन!॥ ३९ ॥

श्रीभगवा नुवाच

★ अन्यत्र काले विदुष स्स्वयंवरा दयाचितारं वर माहु रुत्तमम्।
स हि प्रभूणां पुरुषार्थभागिनां वेलां विनाऽऽह्वायति क्षितीश्वर!॥

नरेन्द्र याच्ञा कविभि र्विगर्हिता राजन्यबन्धो र्निजधर्मवर्तिनः।
तथाऽपि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम्॥ ४० ॥

1 MMa कुन्दा 2 BJMMa °श०3- -3 MMa राजन् नीलेति आह्वया 4- -4 MMa गन्धान् महाघनान्। 5 B.J. °शल्य, MMa °शल 6 BJ कोश० MMa कौश० 7 KW प्राह 8 BGJ MMa °ना० 9- -9 MIV °णाऽपूजयत्प्र० 10 MMa °त्यनन्दत 11 MMa त्रि० 12 MIV धृतव्रता 13 MMa °षा पतिः 14- -14 BGJ सत्या यदि मे धृतो व्रतैः।, MIV सत्या यदिमे धृतो व्रतः, MMa सत्यो यदि मे धृतव्रतः। 15 MMa °त्मना देव 16 MMa W °श्च 17 BGJ °येशः 18 MMa °न्स्वकृतेन तु० 19 BGJ हृष्टः ★ This extra Verse is found only in B.M.Ma editions.

**श्रीध०** षष्ठमाह- **नग्नजिदिति।** कौसल्यः [1]अयोध्यापतिः तस्य सत्या नाम कन्याऽभवत् आसीत्, देवी कान्तिमती नाग्नजितीति पितृनाम्ना प्रसिद्धेत्यर्थः॥ ३१,३२ ॥

**नेति।** वीरस्य गन्धमपि न सहन्त इति [2]तथा तान्। खलान् दुर्वृत्तान्॥ ३३ ॥

**तामिति।** वृषान् जयति यः तेन लभ्याम्॥ ३४ ॥

**स** इति। प्रतिनन्दितः तं प्रतिनन्दितवान्, श्रीकृष्णेन वा स प्रतिनन्दितः॥ ३५-३९ ॥

**नरेन्द्रेति।** हे नरेन्द्र! राजन्यबन्धोः क्षत्रियस्य, शुल्कदाः द्रव्यादिप्रदाः॥ ४० ॥

1 MI.V. °ध्याधिपः 2 MI.V °थाविधान्

**वीर० राजाधिदेव्या** इति। तथा भगवान् पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्याः तनयां राज्ञां पश्यतां सतामेव हे राजन्! प्रसह्य हृतवान्॥ ३१ ॥

अथ षष्ठं नाग्नजितीविवाह मनुवर्णयति- **नग्नजिन्नामेति।** कौसल्यः[1] कोसलदेशाधिपतिः अयोध्याधिपतिरित्यर्थः[2]। तस्य देवी कान्तिमती सत्या नाम कन्या अभूत्। अन्वर्थं[3] नामान्तरमप्याह- नाग्नजितीति। नग्नजितोऽपत्यं स्त्री[4] इति तथा। हे नृप!॥ ३२ ।

**नेति।** खलान् दुर्वृत्तान् वीराणां गन्धमपि न सहन्त इति तथा तान् सोढुमशक्यान् गोवृषान् [5-]वृषभान्[-5] [6-]यो जयति तेन लभ्यां तां[-6] नाग्नजितीं [7-]ताम् गोवृषान्[-7] अजित्वा गा अनुधावमानानिति गोशब्दाभिप्रायः। वोढु मुद्वोढुं न शेकुः न प्रबभूवुः॥ ३३ ॥

**तामिति।** एवं स्थिते भगवान् तां वृषजितैव लभ्यां श्रुत्वा कौसल्यपुर मयोध्यां जगाम॥ ३४ ॥

**स** इति। [8-]स नग्नजित्[-8] प्रत्युत्थाय आसनादिभिः महता अर्हणेन पूजासाधनेन पूजयन् अनुमोदितश्च भगवन्त माह॥ ३५॥

उक्तिं विवक्षु स्तावत् नाग्नजित्युत्साह मनुवर्णयति- **वरमिति।** नरेन्द्रकन्या चकमे अकामयत। किमिति? अयमेव मे[9] मम पतिर्भूयात्, कथम्? मदिच्छामात्रेण भूयादिति स्वयमेवाऽऽशङ्क्य कामयते मे मम आशिषः कामाः अमलाः निर्विघ्नाः सत्याः सतीश्च यथार्था श्च करोतु, भगवानिति शेषः। तत्र हेतु मुद्भावयति- यद्यहं धृतं व्रतं यया सा। कृतपुण्या भवेय मित्यर्थः॥ ३६॥

अथोक्तिमाह- **अर्चितमिति।** यद्यपि सः[10] कोसलपतिः प्राह इत्यनेनैवास्य राजोक्तित्वलाभः तथाऽपि वरमित्यादिना व्यवहितत्वात् अत्र अर्चित माहेत्युक्तम्। पुनश्शब्दो वाक्यालङ्कारे। हे नारायण! हे जगत्पते! स्वानन्देनैव पूर्णस्य तव अल्पकः क्षुद्रोऽहं किं करवाणि, न किमपि प्रियं कर्तुं शक्त इत्यर्थः। यद्वा किङ्करवाणि किङ्करोऽहम्, अत आज्ञापयेत्यर्थः। आत्मनः स्वाभाविककिङ्करतां द्योतयितुं नारायणेत्यादिसम्बोधनम्, आत्मानन्देन पूर्णस्येति विशेषणं च इत्यवगन्तव्यम्॥ ३७॥

अथ परत्वं व्यनक्ति- **यत्पादेति।** अब्जजः[11] [12-]अब्जभवः[-12] ब्रह्मा, सरुद्रः लोकपालैश्च सहितः श्रीः लक्ष्मीश्च शिरसा यस्य तव पादपङ्कजरजो बिभर्ति। एकवचनं प्रत्येकाभिप्रायकम्। नाऽहं नारायणः किन्तु यदुष्वन्यतम इत्यत आह-

लीलातनू रिति। स्वेन त्वया कृताः ये धर्मसेतवो धर्ममर्यादाः तेषां परित्राणेच्छया काले धर्मज्ञानहानिकाले लीलातनूः लीलाविग्रहान्। अनेन अकर्मवश्यत्व मुक्तम्। दधत् बिभ्राणः। अनेन नारायण एव सन् धर्मपरित्राणाय यदुषु त्व मवतीर्ण इति लब्धम्। एवंविधो भगवान् मम केन कैङ्कर्येण तुष्टो भवेत्॥ ३८ ॥

**तमिति।** कृतः आसनपरिग्रहो येन स कृष्णः तं कौसल्यं, हे कुरुनन्दन! [13-] सस्मितं [13-] स्मितेन सहितं यथा तथा प्राह॥ ३९ ॥

उक्तिमेवाह- **नरेन्द्रेति।** हे नरेन्द्र! यद्यपि स्वधर्मनिरतस्य राजन्यबन्धोः क्षत्रियस्य याच्ञा विगर्हिता निन्दिता, प्रतिषिद्धेति यावत्। तथापि सौहृदेच्छया त्वद्बन्धुत्वेच्छया त्वदीयां कन्यां याचे, [14] वयं शुल्कदा द्रव्यादिप्रदाः न भवामः॥ ४० ॥

1 B °शा० 2 B °रीति यावत् 3 B. °र्थक० 4 KW omit इति 5- -5 w omits 6- -6 K omits 7- -7 K omits 8- -8 w omits 9 K.w omit मे 10 KW omit सः 11 B omits अब्जजः 12- -12 KW omit 13- -13 KW omit 14 KW omit वयं

**विज०** राजाधिदेव्याः राजाधिदेवीतिनामधेयायाः॥३१ ॥

नीलेत्याह्वयो नाम यस्यास्सा नीलेत्याह्वया "आ प्रगृह्यः स्मृतौ वाक्येप्यास्तु सन्तापकोपयोः" (वैज.को. 8-7-2) इति यादवः॥ ३२ ॥

वीरान् शूरान् गन्धयन्ति हिंसयन्तीति वीरगन्धाः तान्। "गन्धो लेशे च हिंसायां प्राणग्राहे प्रकीर्तितः" इति। वीरस्य राहो र्गन्ध इव गन्धो येषां ते तथा तान्। "वीरो राहौ हरे शक्रे" (वैज.को.6-5-82) इति वा। महान्तो घना मेघा यथा नीला स्ते तथा तान्। यद्वा महाकठिनान् महामुद्गरानिव स्थितान्वा। "घनाः कठिनसंघाते मेघकाठिन्यमुद्गराः" (वैज.को. 6-5-30) इति॥ ३३ ॥

वृषजिलुप्यां लब्धुं योग्यां, सैन्येन सेनासमूहेन॥ ३४ ॥

गुरुणा बहुमानेन महित्वेन॥ ३५ ॥

अभिमत मभीष्टं वरं बरणयोग्यरूपम्। "वरो ना रूपजामात्रो र्देवादे रीप्सिते वृतौ"(वैज.को.6-5-72) इति। आशिषां भार्याभिलाषाणां पतिः साधकः, "आशी रुगदंष्ट्रायां शुभवाक्याभिलाषयोः" (वैज.को.6-2-2) यदि मे मया व्रतः व्रतसमूहो धृतः अनुपयुक्तत्वेन निधिवत् भवत्कृतः तर्हि स सत्यः सच्चिदानन्दात्मा श्रीकृष्णः करोतु मम पाणिग्रहणं, करोत्विति शेषः। व्रतानां समूह इत्यस्मि न्नर्थे अच्प्रत्ययः। यदि सत्यो धृतो व्रतोऽस्ति तर्हि स व्रतः स्वफलत्वेन कृष्णं नः पतिं करोत्विति वा॥ ३६ ॥

आत्मना स्वलाभेन॥ ३७ ॥

स्वकृतसेतुपरीप्सया स्वकल्पितवर्णाश्रमलक्षणसेतुपालनेच्छया मयि स्थितः स्वेनैव कृतेन कर्मणा॥ ३८,३९॥

★ विदुषो विद्वांसः स्वयंवरा दन्यत्र काले अयाचितारं वर मुत्तम माहुः। पुरुषार्थभागिनां प्रयोजनांशभाजां प्रभूणां मध्ये स अर्थार्थी तां वेलां कालं विनाऽऽह्वाययति, आत्मानमिति शेषः। आह्वानमिति पाठे सा याचिता स्वयंवरकालं विनापि स्वहूतिं प्रभूणा माह्वान मर्हतीति शेषः। वेलेति पाठे प्रभूणा माह्वानं विनापि स एव वेला कालः स्वयंवराख्य इत्याहु रित्यर्थः॥

सामान्यमुक्त्वा विशिनष्टि- नरेन्द्रेति। राजन्यबन्धोः राज्ञां वंशे जातस्य निजधर्मवर्तिनः क्षात्रधर्ममनुवर्तमानस्य, शुल्कदा वेतनप्रदाः॥ ४० ॥

राजोवाच

कोऽन्य स्तेऽभ्यधिको नाथ [1-] कन्यावर [-1] इहेप्सितः।
गुणैकधाम्नो यस्याऽङ्गे श्री र्वस त्यनपायिनी॥ ४१ ॥

किं त्वस्माभिः कृतः पूर्वं समयः सात्त्वतर्षभ।
पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया [2]॥ ४२ ॥

सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः।
एतै र्भग्नाः [3] सुबहुशो भिन्नगात्रा नृपात्मजाः॥ ४३ ॥

[4] यदीमे निगृहीता स्स्युः त्वयैव यदुनन्दन।
वरो भवा नभिमतो दुहितु र्मे श्रियःपते॥ ४४ ॥

[5-] श्रीशुक [-5] उवाच

एवं समय माकर्ण्य बद्ध्वा परिकरं प्रभुः [6]।
आत्मानं सप्तधा कृत्वा न्यगृह्णा ल्लीलयैव तान्॥ ४५ ॥

बद्ध्वा ता न्दामभिः शौरिः [7-] भग्नदर्पान् [-7] हतौजसः।
[8-] व्यकर्ष ल्लीलया बद्धान् [-8] बालो दारुमयान्यथा॥ ४६ ॥

ततः प्रीतः सुतां राजा [9] ददौ कृष्णाय विस्मितः।
तां प्रत्यगृह्णा द्भगवान् विधिव त्सदृशीं प्रभुः॥ ४७ ॥

राजपत्न्य [10] स्स्वदुहितुः कृष्णं लब्ध्वा प्रियं पतिम्।
लेभिरे परमानन्दं जातश्च परमोत्सवः॥ ४८ ॥

शङ्खभेर्यानका नेदु र्गीतवाद्यद्विजाशिषः।
नरा नार्यः प्रमुदिताः सुवासस्स्रगलङ्कृताः॥ ४९ ॥

[11]दशधेनुसहस्राणि[12] पारिबर्हं मदा द्विभुः।
युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससम्॥ ५० ॥

1- -1 K.W °या ईप्सितो वरः। 2 MIV °क्ष० 3 BGJMIV °ह्वो 4 BGJ.MMa यदि मे 5- -5 BGJKMIVW omit 6 KW विभुः 7- -7 B हतदर्पान्, KW भग्नदन्तान्, M.Ma भग्नवीर्यान् 8- -8 KW व्याचकर्ष तदा बद्ध्वा 9 M.Ma राजन्! 10 BGJMIV °श्च 11- -11 MIV शत 12 MIV °णा

**श्रीध० क** इति। गुणाना मेकमेव धाम स्थानं,[1] तथाभूतस्य [2]यस्य तवाऽङ्के॥ ४१,४२ ॥

**सप्तेति**। दुर्दान्ता अशिक्षिताः। दुरवग्रहा अपरायत्ताः। कुत [3]स्तत्राह- एतैरिति। भग्ना भङ्गं प्रापिताः॥ ४३॥

**यदीति**। यद्यदि इमे गोवृषा [4-]निगृहीता दमिता नाथिता इति [-4]यावत्॥ ४४ ॥

**एवमिति**। एतान् यो निगृह्णाति तस्य कन्येति समयः कृतः। तम् [5-]आकर्ण्य आत्मानं[-5] सप्तधा कृत्वेति। [6]बह्वीनामपि योषितां सम्पूर्ण एवाहं सम्भोगयोग्यः स्या मिति सत्यां प्रति, असापत्न्यप्रदर्शनार्थ मात्मनः सप्तधाकरणम्॥ ४५-४९॥

**दशेति**। निष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनां च दासीनां [7-]पारिबर्हं अदात् [-7]दत्तवान्॥ ५० ॥

1 MIV add त्व 2 MIV omit यस्य 3 BJ °दाह 4- -4 MIV omit 5- -5 BJ omit 6 BJ omit अपि 7- -7 BJ omit

**वीर०** इत्थमुक्त[1] आह नग्नजित् **क इति**। हे नाथ। ते त्वत्तः अभ्यधिकः कन्याया ईप्सितो वरः को वाऽस्ति, सन्ति बहव इत्यतो [2-]भगवन्तं[-2] विशिनष्टि-गुणैक इति। गुणानां कल्याण[3]गुणानां एकमेव धाम स्थानं तथाभूतात् यस्येत्यपेक्षया षष्ठयन्तं वा। यस्य तवाङ्के वक्षसि श्रीः लक्ष्मीः अनपायिनी निवसति॥ ४१ ॥

**किन्त्विति**। हे सात्त्वतर्षभ! समयः भाषाबन्धनं, किमर्थम्? पुंसा वरत्वेनागतानाम्।[4] साऽपि किमर्थेत्यत्राह-कन्याया वरः अनुरूपः तत्परीप्सया हेतुभूतया॥ ४२ ॥

कोऽसौ समय इत्यत्र तं वक्तुं तावत् तत्र अन्येषा मसमर्थतामाह- **सप्तेति**। हे वीर! दुर्दान्ताः अशिक्षिताः दुरवग्रहाः अपरायत्ताः, तत्र निदर्शनमाह-एतै रिति। एतैः गोवृषैः भिन्नानि गात्राणि येषां तथा बभूवुः, एतान् यो गृह्णाति तस्येयं कन्येति भावः॥ ४३ ॥

**यदीति**। अतो यदीमे वृषाः त्वया निगृहीता स्युः तर्हि भवानेव मम दुहितुः अभिमतो वरः॥ ४४ ॥

**एवमिति।** परिकर मुत्तरीयादिकम्। लीलयैवेत्यनेन श्रमाभाव उक्तः। तान्वृषान् न्यगृह्णात्॥ ४५ ॥

**बद्ध्वेति।** दामभी रज्जुभिः भग्नाः[5] दन्ता येषाम्। अत एव हतम् ओजो बलं येषां तान् वृषान् बद्ध्वा व्याचकर्ष आकृष्टवान्। यथा बालो बद्धान् दारुमयान् वृषान् विकर्षति, तद्वत्॥ ४६ ॥

**तत** इति। ततो वृषग्रहणात् प्रीतः पूर्वमेव प्रीतः तत स्सुतरां प्रीत इत्यर्थः। विस्मितश्च राजा नग्नजित्, प्रभुः श्रीकृष्णः सदृशीम् अनुरूपां तां कन्यां यथाविधि प्रत्यगृह्णात् उपयेमे इत्यर्थः॥ ४७ ॥

**राजपत्न्य** इति। दुहितुः प्रियं पतिं लब्ध्वा राजपत्न्यः परमानन्दं प्रापुः। तदा महान् उत्सवश्चाऽऽसीत्॥ ४८॥

उत्सवमेव प्रपञ्चयति- **शङ्खेति।** नेदुः दध्वनुः। तदा गीतयुक्तानि वाद्यानि द्विजानाम् आशिष आशीर्वादाश्च नेदुः। शोभनैः वासोभिः स्रग्भिश्चालङ्कृताः, आसन्निति शेषः॥ ४९ ॥

विभु र्नग्नजित् दश धेनूनां सहस्राणि पारिबर्ह मुपायन मदात्, निष्कग्रीवाः सुवाससश्च तासां युवतीनां दासीनां त्रि[6]सहस्रम्, अदादित्यनुषङ्गः॥ ५० ॥

---

1. B °क्तः प्रा० 2- -2 K.W omit 3. K.W °णानां 4 B (परीक्षार्थं) 5.B (काष्ठ) 6. B °सा०

**विज०** कन्यायाः वरपरीप्सया वरेच्छया॥ ४१,४२ ॥

दुर्दान्ताः अशक्यशिक्षाः, दुरवग्रहा ग्रहीतु मशक्याः॥ ४३,४४ ॥

परिकरं चैलोष्णीषादिलक्षणम्॥ ४५-४८ ॥

गीतवाद्यानि द्विजाशिषश्च तथा। प्रमुदिताः, अभूवन्निति शेषः॥ ४९ ॥

पारिबर्हं स्त्रीधननिकायम्॥ ५० ॥

**नवनागसहस्राणि नागा च्छतगुणा न्रथान्।**
**रथा च्छतगुणा नश्वा नश्वा च्छतगुणा न्नरान्॥ ५१**

**दम्पती रथ मारोप्य महत्या सेनया वृतौ।**
**स्नेह[1]प्रक्लिन्न[2]हृदयो यापयामास कोसलः[3]॥ ५२ ॥**

**★ श्रुत्वैत द्रुरुधु र्भूपा नयन्तं पथि कन्यकाम्।**
**भग्नवीर्याः सुदुर्मर्षा[4] यदुभि र्गोवृषैः पुरा ॥ ५३ ॥**

ता नस्यतः शरव्राता न्बन्धुप्रियकृ दर्जुनः।
गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव॥ ५४ ॥

पारिबर्ह[5] मुपागृह्य द्वारका मेत्य सत्यया।
रेमे यदूना[6] मृषभो भगवा न्देवकीसुतः॥ ५५ ॥

श्रुतकीर्तेः सुतां भद्रा मुपयेमे पितृष्वसुः।
कैकेयीं भ्रातृभि र्दत्तां कृष्णः सन्तर्दनादिभिः[7]॥ ५६ ॥

सुतां च मद्राधिपते र्लक्ष्मणां लक्षणै र्युताम्।
स्वयंवरे जहारैकः स सुपर्णः सुधामिव॥ ५७ ॥

अन्या श्चैवंविधा भार्याः कृष्णस्याऽऽसन् सहस्रशः।
भौमं हत्वा तन्निरोधा दाहृता श्चारुदर्शनाः॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे अष्टपञ्चाशत्तमोऽध्यायः॥ ५८ ॥

1. K.W वि० 2. K °यौ 3.B.J. कोशलः; K °तुस्तदा; M.Ma कौशलः★ 43 and 44 Slokas are not found in M.Ma editions
4. K.W °र्धर्षा 5. K.W बर्हमुपानीय; M.Ma बर्हं च सङ्गृह्य 6. MI.V. °नां वृ० 7 MI.V. °न्दर्श०

**श्रीध० नवेति।** नागात् नागेभ्यः शतगुणा न्नव लक्षाणि रथान्,[1] रथाद्रथेभ्यः शतगुणा न्नवकोटीः अश्वान्,[2] अश्वा दश्वेभ्यः शतगुणा न्नवपद्मानि पदातीन्[3]॥ ५१,५२ ॥

**श्रुत्वेति।** यदुभि र्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा [4-]असहनशीला[-4] रुरुधुः॥ ५३ ॥

**तानिति।** अस्यतः क्षिपतः, प्रयुञ्जाना निति यावत्॥ ५४,५५ ॥

सप्तमं विवाह माह-**श्रुतकीर्तेरिति।** श्रुतकीर्ति र्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम। कैकेयीं तद्देशजां [5-]सन्दर्शनादिभिः भ्रातृभिः दत्ताम्[-5]॥ ५६ ॥

अष्टमं विवाह माह-**सुतां चेति।** एक एव स श्रीकृष्णो लक्ष्मणां जहार॥ ५७ ॥

**अन्याश्चेति।** तस्य निरोधोऽन्तःपुरं तस्मात्॥ ५८ ॥

★ भैष्मी जाम्बवती भामा सत्या भद्रा च लक्ष्मणा।
कालिन्दी मित्रविन्दा चेत्यष्टौ पट्टमहास्त्रियः।

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
अष्टपञ्चाशत्तमोऽध्यायः॥ ५८ ॥

---

1 BJ omit रथान् 2 BJ omit अश्वान् 3 BJ omit पदातीन् 4- -4 MIV omit 5- -5 BJ omit ★ श्रीधरीयोऽय श्लोकः।

**वीर०** नागानां गजानां नवसहस्राणि नागात्,नागेभ्यः शतगुणं शतगुणान् नवलक्षाणि रथान्,रथा द्रथेभ्यः शतगुणान् [1-]नवकोटिपरिमितान् अश्वान्.(अश्वात्) अश्वेभ्यः शतगुणान्[-1] [2-]नवपद्मसंख्याकान्[-2] [3-]नरान् भृत्यांश्च प्रादादि त्यनुषङ्गः[-3]॥ ५१॥

**दम्पती** इति। दम्पती नग्नजिद्भार्ये तदा रथ मारोप्य सभार्यं, कृष्ण मिति शेषः। स्नेहेन प्रक्लिन्न मार्द्रं हृदयं ययो स्तौ यापयामासतुः गमयामासतुः [4-]पुं[-4] द्वारकाम्। यापयामास कोसल इति पाठे स्नेहप्रक्लिन्नहृदय इति पाठ्यम्। दम्पती नाग्नजिती श्रीकृष्णौ[5] ॥ ५२ ॥

**श्रुत्वेति।** एत द्भगवतो यानं श्रुत्वा यदुभि र्गोवृषैश्च सप्तभि र्भग्नं वीर्यं येषां तथाभूता अपि दुर्धर्षाः कन्यकां [7-]नाग्नजितीं[-7] नयन्तं श्रीकृष्णं पथि रुरुधुः॥ ५३ ॥

**तानिति।** शरसमूहान् अस्यतः क्षिपतः प्रयुञ्जाना निति यावत्, तान् भूपान् बन्धूनां कृष्णादीना प्रीतिकृ दर्जुनः गाण्डीवी धृतगाण्डीवः[8] कालयामास पलाययाञ्चक्रे यथा क्षुद्रमृगान् सिंहः[9] तद्वत्॥ ५४ ॥

**पारिबर्हमिति।** पारिबर्हं श्वशुरदत्तं[10] एत्य आगत्य सत्यया नाग्नजित्या सह॥ ५५ ॥

अथ सप्तमं विवाह माह- **श्रुतकीर्तेरिति।** सन्तर्दन आदि र्येषां तैः भ्रातृभिः दत्तां कैकयस्याऽपत्यभूतां स्वपितृष्वसुः श्रुतकीर्तेः सुतां भद्रां नाम कान्या मुपयेमे॥ ५६ ॥

अष्टमं विवाह माह- **सुतामिति।** मद्रदेशाधिपतेः सुतां शुभैः[11] लक्षणैर्युक्तां लक्ष्मणां नाम कन्यां स्वयंवरे असहाय एव सन् जहार यथा सुपर्णो गरुत्मान् सुधां तद्वत्॥ ५७ ॥

इत्थं प्रधानपत्नीरुक्त्वा अथाऽन्या अप्याह- **अन्याश्चेति।** का स्ता इत्यत आह-भौममिति। भौमं नरकासुरं हत्वा तन्निरोधात् [12-]अन्तःपुरात्[-12] आनीताः॥ ५८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीविरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिका
व्याख्यायां अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ।

1- -1 K.W omit 2- -2 K.W पद्मान् 3- -3 K.W omit 4- -4 K.W omit 5 B adds इति योज्यम् 6 B °र्भ० 7- -7 KW omit 8 B °वधनुष्कः 9 B adds कालयति 10 B adds इति शेषः। 11 BK omit शुभैः 12- -12 KW omit

**विज०** भौम हत्वा तस्य भौमस्य निरोधात् तत्कारागृहात् आहृताः आनीताः ॥ ५१-५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
टीकाया अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

(विजयध्वजरीत्या द्विषष्टितमोऽध्यायः)

---

# एकोनषष्टितमोऽध्यायः

(विजयध्वजरीत्या त्रिषष्टितमोऽध्यायः)

-: नरकासुरवधारम्भः :-

राजोवाच

यथा हतो भगवता भौमो [1-]येन च ता[-1]: स्त्रियः ।
निरुद्धा [2]एत दाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥

[3-]श्रीशुक उवाच[-3]

★ द्वारवत्यां महाभागे निवस त्यच्युते नृप ।
दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात् ।

[4-]इन्द्रेण हृतच्छत्रेण[-4] हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥

● इन्द्र माश्वास्य गोविन्दः सुसम्पूज्य विसृज्य च ।
सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ २ ॥

[5-]गिरिदुर्गै श्शस्त्रदुर्गै[-5]: जलाग्न्यनिलदुर्गमम् ।
[6-]मुरपाशायुतै घोरैः दृढै स्सर्वत आवृतम्[-6] ॥ ३ ॥

卐 स सम्प्राप्य भटै र्गुप्तं दानवेन्द्रपुरं महत् ।
गदया निर्बिभेदाद्रीन् [8-]शस्त्रदुर्गाणि सायकैः[-8] ॥

❁ तान्नि र्भिद्य प्रविश्याऽन्तः शस्त्रदुर्गाणि सायकैः ।
[9-]चक्रेणाऽग्निं जलं वायुं मुरपाशां स्तथाऽसिना[-9] ॥ ४ ॥

▫ चकर्त मौरवं पाशं चक्रेणाऽमन्दमच्छिनत् ।
क्षुरमालां तथा घोरां निचकर्ताऽसिना हरिः ॥

वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम्।
हरि र्निमिषमात्रेण नाशयामास भारत॥

शङ्खनादेन [10-] यन्त्राणि हृदयानि [-10] मनस्विनाम्।
[11-] प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः [-11]॥ ५ ।

1- -1 M.Ma नीता यथा 2 M.Ma या स्तदा० 3- -3 W.omits ★ This extra verse is found in B.M.Ma editions only. 4- -4 B.M.Ma हतच्छत्रेण शक्रेण ● An extra half verse is found in B.M.Ma editions only 5- -5 B.M.Ma हिमाद्रौ तुङ्गशिखरे 6- -6 B.omits, M.Ma गिरिदुर्गै श्शस्त्रदुर्गैः मुरपाशायुतै र्वृतम् 卐 An extra half verse is found in B.M.Ma editions only. 7.M.Ma °द्रिं 8- -8 M.Ma प्राकाराकारसंस्थितम् ❀ An extra half verse is found in M.Ma editions only; B.G.J K.MI V.W omit 9- -9 M.Ma omit □ These four extra half verses beginning with चकर्त and ending with भारत are found only in B.M.Ma editions. 10- -10 M.Ma तीव्रेण मनांसि च 11- -11 M.Ma omit

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनषष्टितमे भौमं हत्वा तेनाऽऽहृता हरिः। कन्याः सहस्रशः प्राप[1] पारिजातं दिवोऽहरत्॥

परिणीय तत स्ताभिः तन्मनोरथपूरणैः। आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत्॥

**यथेति।** येन ताः स्त्रियो निरुद्धाः, स भौमः चकारात् येन कारणेन हत स्त दाचक्ष्वेति॥ १ ॥

**इन्द्रेणेति।** इन्द्रेण भौमविचेष्टितं वि[2]ज्ञापितस्सन् प्राग्ज्योतिषपुरं भौमनगरं यया वित्यन्वयः। क[3]थम्भूतेन? हृतं छत्रं यस्य तेन लोकपालप्रधानत्वा दिन्द्रस्य। वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम्। हृते कुण्डले यस्यास्सा अदिति र्बन्धु र्माता यस्य, तेन हृत ममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेन, सत्यभामाया गृहे भगवन्त मिन्द्र आगत्य विज्ञापितवान्। तदा तस्याः कौतुकाय तया भार्यया सह ययाविति। यद्वा त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति इतिहासोक्तं भूम्यै वरं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात् तया सह ययौ। यद्वा नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुत मिति हरिवंशे प्रसिद्धम्। तदर्थं तां नीतवा निति ज्ञेयम्[4]॥ २ ॥

**गिरिदुर्गैरिति।** गरुडेन याने[5]न कारणम्- गिरिदुर्गै रित्यादि। तैरु पलक्षितम्। जलान्यनिलैश्च सर्वतो वर्तमानैः दुर्गमम्॥ ३-५॥

1. MI.V. प्राप्य 2. B.J. omit वि 3 B.J. किम्भू० 4 B.J. omit ज्ञेयम् 5. B.J. omit न

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"भौमं हत्वा तन्निरोधा दाहृताः" (भाग. 10-58-58) इत्युक्तम्। तद्विस्तरबुभुत्सया पृच्छति राजा- **यथेति**। येन भौमेन ताः स्त्रियो निरुद्धाः स भौमः यथा येन प्रकारेण हतः, चकाराद्येन कारणेनेत्यपि बोद्धव्यम्। तदाचक्ष्वाऽऽख्याहि॥ १ ॥

आचष्टे **इन्द्रेणेति**। इन्द्रेण भौमचेष्टितं प्रति[1] ज्ञापितस्सन् प्राग्ज्योतिषपुरं ययौ इति सम्बन्धः। कथम्भूतेन? हृतं भौमेन हृतं छत्रं यस्य तेन। लोकपालप्रधानत्वा दिन्द्रस्य वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम्। हृते कुण्डले यस्या स्सा. बन्धु र्माता अदितिः यस्य तेन, हृत ममराद्रिस्थानं मणिपर्वतात्मकं यस्य तेन। सत्यभामागृहे भगवन्त मिन्द्र आगत्य विज्ञापितवां स्तदा तस्याः कौतुकाय तया[2] सह ययाविति। यद्वा, त्वदनुज्ञयैव त्वत्सुत हनिष्यामीति इतिहासेनोक्तं भूम्यै वरं दत्तं सत्यापयितुं सत्यभामाया भूम्यंशत्वा त्तया सह ययाविति। यद्वा नारदानीतपारिजातैककुसमे[3] रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयितुं, तुभ्यं पारिजाततरुमेव दास्यामीति प्रतिश्रुतमिति हरिवंशे प्रसिद्धम्। तदर्थं तां नीतवानिति। गरुडारूढ इत्यत्र हेतुं वदन् पुरं विशिनष्टि-गिरीति। गिरिदुर्गै श्शास्त्रदुर्गै श्चोपलक्षितम्। जलाग्न्यनिलैश्च परितो वर्तमानैश्च दुर्गमम्, घोरैर्दृढैश्च मुरस्य पाशैः परित आवृतम्॥ २,३ ॥

**गदयेति**। चक्रेण सुदर्शनेन अग्निजलवायून् निर्बिभेद, असिना खड्गेन॥ ४ ॥

मनस्विनां स्वैरिणां मुरादीनां हृदयानि यन्त्राणि च शङ्खनादेन॥ ५ ॥

1 KTw omit प्रति 2 TW add भार्यया 3 BTW °तकु°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यथाकथं पृष्टं तत्सर्वम्॥ १ ॥

हृते कुण्डले यस्य स हृतकुण्डलः हृतकुण्डलो बन्धु र्माता यस्य स तथा तेन नरकेण हृत ममराद्रौ मेरौ स्थानं यस्य स तथा। प्राग्ज्योतिषपुरं नरकस्य नगरम्॥ २ ॥

कुत्र तन्नगर मत्राह - **हिमाद्राविति**। जलेन अग्निना[1] अनिलेन वायुना दुर्गमं गन्तुमशक्यं मुरपाशानामयुतैः अनेकैः षट्सहस्रै रित्यर्थः। यद्वा मुरपाशैः अयुतैः असम्बद्धैः पृथक्कृतैः शस्त्रदुर्गैः, दुर्गमपि गिर्यादिक्रमेण॥ ३,४ ॥

**अमन्द मनलम्**॥ ◻ ॥ ५ ॥

1 B omits अग्निना

पाञ्चजन्यध्वनिं श्रुत्वा[1] युगान्ताशनिभीषणम्।
मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात्॥ ६ ॥

त्रिशूल मुद्यम्य सुदुर्निरीक्षणो[2] युगान्तसूर्यानिलरोचिरुल्बणः[3]।
ग्रसं स्त्रिलोकीमिव[4] पञ्चभि र्मुखै रभ्यद्रव त्तार्क्ष्यसुतं यथोरगः॥ ७ ॥

आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रै र्व्यनद त्स पञ्चभिः।
स[5] रोदसी सर्वदिशोन्तरं[6] महान् आपूरय न्नण्डकटाह मावृणोत्॥ ८ ॥

★ तदापतद्वै त्रिशिखं गरुत्मते हरिः शराभ्या मभिन[7- -7] त्त्रिधौजसा।
मुखेषु तञ्चापि शरै रताडय त्तस्मै गदां सोऽपि रुषा व्यमुञ्चत॥ ९ ॥

ता मापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा।
उद्यम्य बाहू नभिधावतो[8]ऽजितः शिरांसि चक्रेण जहार लीलया॥ १० ॥

1 MMa कृत्वा 2 MMa °क्ष्यो 3--3 MMa रुज्ज्वलः, MIV रुल्वणम् 4 MMa °कानिव 5 BGJ स 6 BKW °म्बर ★ MMa read thus- तमापतन्त त्रिशिख गरुत्मते चकर्त बाणद्वितयेन केशवः। मुखेषु तस्यापि शरा न्समर्पयन् पुन र्गदा सोऽप्यमुच न्मधुद्विषे॥ 7- -7 MIV शरौघै रभिन° W शराभ्यामहन० 8 MMa °तो दिशः

**श्रीध०** **पाञ्चजन्येति।** युगान्ताशनेः ध्वनिव द्भीषणम्। परिखाया जलात्॥ ६,७ ॥

**आविध्येति।** आविध्य आतोल्य स महान्नाद इत्यन्वयः॥ ८ ॥

**तदिति।** तस्मै श्रीकृष्णाय गदा व्यमुञ्चत्[1] व्यक्षिपत्[2]॥ ९,१० ॥

1 BJ °त 2 MIV omit व्यक्षिपत्

**वीर०** **पाञ्चजन्येति।** युगान्ताशने र्ध्वनिव द्भीषणं पाञ्चजन्यध्वनि माकर्ण्य॥ ६ ॥

**त्रिशूलमिति।** युगान्ते सूर्याग्न्योरिव रोचि र्दीप्ति र्यस्य स मुरासुरः अत एवोल्बणः दुस्सहो[1] दुर्निरीक्षस्सन् त्रिशूल[2] मुद्धृत्य, पञ्चभि र्मुखैः त्रिलोकीं ग्रसन्निवाऽभ्यधावत् यथोरग स्सर्पः तार्क्ष्यसुतं गरुडं, तद्वत्॥ ७ ॥

**आविध्येति।** स मुरः शूल माविध्याऽऽलोल्य तरसा बलेन गरुडाय प्रयुज्य पञ्चभि र्वक्त्रैः व्यनदत् ननाद। किं कुर्वन्? रोदसी द्यावापृथिव्यौ खमन्तरिक्षं लोकोपरितनमाकाशं सर्वेषां श्रोत्रबिलं (स्थानं) वा दिगन्तरञ्चाऽऽपूरयन्, नादेनेति[3- -3] शेषः। स नादः कृत्स्नम प्यण्डकटाह मावृणोत्॥ ८ ॥

**तद्दिति।** तिस्रः शिखाः यस्य तत् गरुडायाऽऽगच्छत् त्रिशूलम् ओजसा बलेन शराभ्यां त्रिधा चिच्छेद तं मुरञ्च मुखेषु [4] शरै स्ताडयामास। सोऽपि मुरोऽपि रुषा तस्मै कृष्णाय गदां व्यमुञ्चत् प्रायुङ्क्त ॥ ९ ॥

**तामिति।** गदाग्रजो भगवान् स्वगदया तां मुरप्रयुक्ता मापतन्तीं गदां मृधे युद्धे सहस्रधा निर्बिभेद। ततो बाहू उद्धृत्य अभिधावतो मुरस्य पञ्च शिरांसि चक्रेणाऽजितो भगवां श्चिच्छेद॥ १० ॥

---

1 T. omits दुस्सहः 2 K °द्ध° 3- -3 K.T.W omit 4. T.W. omit शरैः

**विज०** निरस्य मुक्त्वा आपूरयन्, नादेनेति शेषः॥ ६-१० ॥

व्यसुः पपाताऽम्भसि कृत्तशीर्षो[1] निकृत्तशृङ्गोऽद्रि[2] रिवेन्द्रतेजसा।
★ पपात विष्णोः शिरसि प्रमोदिनी प्रसूनवृष्टि र्निहते मुरेऽसुरे।
तस्याऽऽत्मजा स्सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः[-3]। ११ ॥

[4-]ताम्रोऽन्तरिक्षः[-4] श्रवणो विभावसु [5-]र्वसु[-5] र्नभस्वा नरुणश्च सप्तमः।
[6-]पीठं पुरस्कृत्य[-6] चमूपतिं मृधे भौमप्रयुक्ता [7-]निरगु[-7] र्धृतायुधाः॥ १२ ॥

[8-]प्रायुञ्जताऽऽसाद्य[-8] शरा [9]नसीन् गदाः शक्त्युष्टिशूला [10]न्यजिते रुषोल्बणाः[11]।
तच्छस्त्र[12]कूटं भगवा न्स्वमार्गणै[13] रमोघवीर्य स्तिलश श्चकर्त ह ॥ १३ ॥

[14-]ता न्पीठमुख्या ननय[-14] [15]द्यमक्षयं निकृत्तशीर्षोरुभुजाङ्घ्रिव[16]र्म्मणः।
□ ततो द्रुततरं गत्वा भटा राजपुरं महत् हता न्मुरसुता न्सर्वान् नरकाय न्यवेदयन्॥

स्वानीकपा नच्युतचक्रसायकैः [17-]त[-17]था [18-]निरस्तान्नर[-18]को धरासुतः॥ १४ ॥

निरीक्ष्य [19-]दुर्मर्षण[-19] आस्रवन्मदै र्गजैः पयो[20]धिप्रभवै र्निराक्रमत्।
० रथै रनेकसाहस्रै र्गजैश्च बहु भि र्वृतः।
महत्या सेनया युक्त श्चाऽऽया दायोधनं बली॥

दृष्ट्वा सभार्यं गरुडोपरिस्थितं सूर्यो[21]परिष्टात् सतटिद्धनं यथा।
△ गृहीतकोदण्ड मुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजम्॥

नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम्।
शङ्ख माध्माय गोविन्दः सिंहनादं व्यनीनदत्॥

वरूथिनी दैत्यपतेः सुघोरान् शरा न्ववर्षाऽच्युतमूर्ध्नि दुर्जया।
[22-] कृष्णं स तस्मै [-22] व्यसृज च्छतघ्नीं [23-] यो धाश्च सर्वे [-23] [24] युगप त्प्रविव्यधुः॥ १५॥

$ अनेक बाणान्निर्मुक्तान् नरकेण स्मयन्निव।
चकर्त बाणै र्युगपत्तदद्भुत मिवाऽभवत्॥

---

1 MMa कन्धरो, MIV शीर्षको 2 MMa पक्षो ★ This extra half verse is found in M.Ma editions only 3- -3 MMa चिकीर्षवस्तस्य रणे प्रतिक्रियाम् 4- -4 MMa ध्रुवश्च विष्णुः 5- -5 नभो वसुस्वा नरुणश्च सप्त 6- -6 MMa रथा न्समारुह्य वृषप्रयुक्तान्। 7- -7 BGJ निरगन् धृतायुधाः, MMa भवना न्निराक्रमन्। 8- -8 MMa अयुञ्जतासज्य शरासनान् भटाः 9 BGJW °क्त्यृष्टि। MMa क्त्यर्ष्टि 10 MMa °न्न० 11 MMa °णान् 12 MMa °त्तृ० 13 MMa °न्स० 14- -14 M.Ma तान् योद्धुमिच्छून०, तान् वीरमुख्यान० 15 B °द्यमालय 16 BGJ वर्मणः, MMa कार्मुकान् □ This extra verse is found in M.Ma editions only 17- -17 MMa हतान्निशम्याऽऽशु, MIV मृधेहतास्ता न्न० 18- -18 MMa चुकोपभूमिजः 19 K.W °र्धर्षण आ०, MMa °र्मर्षणमा० 20 MMa °ब्धि० o This extra verse is found in MMa editions only 21 BGJMMa °ड्ि० △ These four extra half verses are found in MMa editions only 22- -22 MMa कृष्णे स भौमो 23- -23 MMa लोहायसीं तेन भृशा 24 BGJ त्स्म विव्यधुः, MMa स विव्यथे। $ This extra verse is found in MMa editions only

श्रीध० व्यसुरिति। इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षजुषः॥ ११ ॥

ताम्र इति। पीठं पीठनामानं निरगुः[1] निरगमन्॥ १२,१३ ॥

तानिति। निकृत्तानि शीर्षादीनि येषां तान्॥ १४ ॥

वरूथिनीति। शतघ्नीं शक्तिविशेषम्॥ १५ ॥

---

1 BJ निरगन्

वीर० व्यसु रिति। निकृत्तानि शीर्षाणि शिरांसि यस्य स अत एव व्यसु र्गतप्राणोऽम्भसि जले पपात। यथा इन्द्रतेजसोपलक्षितेन वज्रेण निकृत्त शृङ्गो गिरिस्तद्वत्। तस्य मुरस्य आत्मजाः सप्त पितुर्वधात् दुःखिताः प्रतिक्रियायै अमर्षजुषः क्रोधाविष्टाः भौमेन प्रेषिताः धृतान्यायुधानि यैस्ते च मृधे युद्धे निमित्ते पीठनामानं चमूपतिं पुरस्कृत्य समुद्यताः आयत्ताः निरगुः[1] निर्गता बभूवुरिति सम्बन्धः। तानेव सप्त निर्दिशति ताम्र इति॥ ११,१२ ॥

प्रायुञ्जतेति। उल्बणा स्ते ताम्रादयः आसाद्य अभ्येत्य रुषा क्रोधेन अजिते श्रीकृष्णे शरादीन् [2-] प्रायुञ्जत [-2] प्रयुक्तवन्तः। तदा भगवान् स्वमार्गणैः स्वशरै स्तच्छस्त्रजालं तिलप्रमाणश श्चिच्छेद। हेति विस्मये॥ १३ ॥

**तानिति।** निकृत्तानि छिन्नानि शीर्षादीनि येषां तान् ताम्रादीन् यमसदन मनयत्। वर्ष्म शरीरं तच्चोपात्तातिरिक्तप्रदेशपरम्। इदमर्धं पृथगन्वेतव्यम्। स्वानीकपानिति। स्वान् कांश्चि दनीकपान् सेनापतीन् अच्युतस्य सायकै र्हतानिति शेषः। तथा कांश्चि न्निरस्तान् दूरतः पातितांश्च दृष्ट्वा धरासुतो नरकः दुस्सहः[3] स्रव न्मदो येषां तैः पयोधिप्रभवैः पयोध्यन्तर्द्वीपजैः गजैस्सह निराक्रमत् निर्गतवान्। दृष्ट्वेति। यथा[4] सूर्यस्योपरिष्टात् तटिता सहितं घनं नीलमेघं तद्वत्। सभार्यं गरुडोपरि स्थितं कृष्णम्। तत्र[5] सूर्यस्थानीयो गरुडः, तटित्स्थानीया भार्या, घनस्थानीयस्तु कृष्ण शति विवेकः । स भौम स्तस्मै कृष्णाय शतघ्नीं शक्तिविशेषं व्यसृजत् प्रायुङ्क्त। तथा योधाश्च भौमसम्बन्धिनः युगप त्प्रविव्यधुः ताडयामासुः, स्वस्वायुधैरिति शेषः॥ १४,१५ ॥

---

1 B निरगमन् 2- -2 KTW omit 3 B °ड़ि० 4 B °ड़ि० 5 B शस्त्र

**विज०** प्रमोदिनी सन्तोषजननी॥ (११) ॥

भौमेन प्रयुक्ताः प्रेरिताः निराक्रम न्निर्गताः॥ १२ ॥

आसज्य ज्या मारोप्य कूटम् समूहम्॥ १३ ॥

आयोधनम् युद्धस्थानम्। सूर्योपरिष्टात् स्थितं तडिता सहितं घनं मेघम्। लोहेनायसा निर्मितं, तेन शतघ्नी प्रयोगेण विव्यथे 'व्यथ-ताडने' इति धातोः, ताडितोऽभूत्॥ १५ ॥

[1]तद्भौमसैन्यं भगवा न्गदाग्रजो वि[2]चित्रवाजै र्नि[3]शितै श्शिलीमुखैः।
निकृत्तबाहूरुशिरो[4]ध्रविग्रहं चकार [5-]तर्ह्येव[-5] हताश्वकुञ्जरम्॥ १६ ॥★

इति विजयध्वजरीत्या त्रिषष्टितमोध्यायः॥ ६३ ॥

## ॥ अथ विजयध्वजरीत्या चतुष्षष्टितमोध्यायः आरभ्यते ॥

○ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह।
[6-]हरि स्तान्यच्छिन त्तीक्ष्णैः[-6] शरै रेकैकश स्त्रिभिः॥ १७ ॥

उह्यमान स्सुपर्णेन पक्षाभ्यां नि[7]घ्नता गजान्।
गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः॥ १८ ॥

□ [8-]तुरङ्गमाश्च दुर्धर्षाः पेतु रुर्व्यां गतासवः।[-8]
पुरमेवाऽविश न्नार्तो नरको युध्ययुध्यत।
दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम्॥ १९ ॥

तां भौमः प्राहर च्छक्त्या [9-]वज्रः प्रतिहतो यतः[-9]।
[10-]ना ऽकम्पत तया विद्धो मालाहत इव द्विपः[-10]॥ २० ॥

तान्विसृज्य हरिर्देवान् स्वयमेव जगत्पतिः।
प्राविशत् भौम सदनं पुरन्दर पुरोपमम्॥

[4]ततश्च भूः कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे।
□ [5]सा वैजयन्त्या वनमालयाऽऽर्पयत् प्राचेतसं छत्र मथो महामणिम्॥ २३॥

अस्तौषीदथ विश्वेशं [6]देवी देववरार्चितम्।
प्राञ्जलिः प्रणता राजन् भक्तिप्रवणया धिया॥ २४॥

★ These 14 extra half verses are found in M.Ma editions only 1. B.G.J. °णं 2. B.G.J. बभौ 3. B.G.J M.Ma MI.V. समुज्ज्व
● These 4 extra Verses are found in M.Ma editions only. 4. M.Ma ततो धरा कृ० □ This half verse reads in M.Ma editions thus पौत्रं च वीरं भगदत्तसंज्ञितं निवेद्य मालामपि वैजयन्तीम्। 5. B.G.J. स वै० 6 K.W. देव

**श्रीध० शूलमिति।** गरुडे वितथोद्यमस्सन् [1-]शूलं त्रिशूल माददे धृतवान्[-1]॥ २१,२२॥

**तत** इति। प्रतप्ते जाम्बूनदे यानि रत्नानि तै र्भास्वरे। मेर्वंशभूतं [2-]मन्दरशिखरं[-2] महामणिञ्च आर्पयदिति॥ २३,२४॥

1- -1 MI.V omit 2- -2 B. मन्दरं

**वीर० शूलमिति।** गरुडे व्यर्थोद्यमस्सन् शूल माददे स्वीकृतवान्। तद्विसर्गात् शूलप्रयोगात् पूर्वमेव हरि र्नरकस्य शिर श्चक्रेण चिच्छेद। कथम्भूतेन? क्षुरस्येव नेमिः धारा यस्य तेन॥ २१॥

**सकुण्डलमिति।** कुण्डलाभ्यां सहितं सुन्दरेण किरीटेन भूषितं शिरः पृथिव्यां पतितं सत् सम्य [1]गज्वलत्। नरकसम्बन्धिनो हाहेति, ऋषयस्तु साधु साध्विति ऊचुः। सुरेश्वरास्तु कुसुमै र्विकिरन्तो मुकुन्दं तुष्टुवुः॥ २२॥

**ततश्चेति।** (सा) भू र्भूमिः नरकस्य माता प्रतप्ते जाम्बूनदे यानि रत्नानि तै र्भास्वरे कुण्डले तथा वैजयन्त्या वनमालया सह प्राचेतसं वारुणं छत्रं, मेर्वंशभूतं मन्दरशिखरं महामणिञ्च कृष्णायाऽर्पयामास॥ २३॥

**अस्तौषीदिति।** हे राजन्! देवो देववै रर्चितश्च तं कृष्णं भक्त्या प्रवणा या धी स्तयोपलक्षिता तुष्टाव॥ २४॥

---

1. B °गुज्ज्व०

विज० आक्रष्टुकामं आकर्णपूर्णम् आकर्षणेच्छुम्॥ क-ग

नाम्ना क्षुरप्रेण शरेण॥ घ-छा॥

क्षुरनेमिना निशितनेमिना॥ २१-२३ ॥

भक्त्या प्रवणया सततया धिया बुद्ध्या॥ २४ ॥

-: भूमिकृत श्रीकृष्णस्तुतिः :-

[1-]भूमि रुवाच[-1]

नमस्ते देवदेवेश शङ्खचक्रगदाधर।
भक्तेच्छोपात्तरूपाय परमात्म न्नमोऽस्तु ते॥ २५ ॥

नमः पङ्कजनाभाय नमः पङ्कजमालिने।
नमः पङ्कजनेत्राय नम स्ते पङ्कजाङ्घ्रये॥ २६ ॥

नमो भगवते तुभ्यं वासुदेवाय विष्णवे।
पुरुषायाऽऽदिबीजाय पूर्णबोधाय ते नमः॥ २७ ॥

अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये।
[2-]परावरात्मन्[-2] [3]भूतात्मन् परमात्मन् नमोऽस्तु ते॥ २८ ॥

त्वं वै सिसृक्षू रज [4]उत्कटं प्रभो तमो निरोधाय [5]बिभर्ष्यसंवृतः।
स्थानाय सत्त्वं जगतो [6]जगत्पते [7-]कालः प्रधानं पुरुषो भवा न्परः[-7]॥ २९ ॥

अहं पयो [8]ज्योतिरथानलोऽनिलो मात्राणि देवा मनइन्द्रियाणि [9]।
कर्ता महानि त्यखिलं [10]चराचरं त्वय्यद्वितीये भगव न्नयं भ्रमः॥ ३० ॥

तस्यात्मजोऽयं तव पादपङ्कजं भीतः [11-]प्रपन्नार्तिहरोपसादित[-11] ः।
[12]त त्पालयैनं कुरु हस्तपङ्कजं शिर स्यमुष्याऽखिलकल्मषापहम्॥ ३१ ॥

1- -1 K.W. धरोवाच; M.Ma पृथिव्युवाच 2- -2 M.Ma चराचरा०; Ml.V परापरा० 3. M.Ma लोकेश 4. M.Ma °त्कटः 5. M.Ma °र्षि संवृतम्। 6. M.Ma °त्प्रभो 7- -7 M.Ma ०नः पुरुषोऽस्य पारः। 8 B.G.J. M.Ma Ml.V. °थाऽनिलो नभो 9. Ml.V. add च 10. M.Ma तु कारणं 11- -11 M.Ma °रं प्रसादितुम् 12. K.W. तं पा०

श्रीध० ऐश्वर्यं ज्ञात्वा भूमिः स्तौति- **नमस्त** इति। परमात्मन्! देवाद्यन्तर्यामिन्! भक्तानुग्रहार्थं इच्छया स्वीकृतनानारूपाय[-1]॥ २५ ॥

येन मन्त्रेण कुन्त्याः प्रसन्नः पूर्वमासी त्तेन मन्त्रेण नमस्यति- **नम** इति। **पङ्कजं नाभौ यस्य तस्मै जगत्कारणायेत्यर्थः**। अत एव सत्कीर्तिमयी पङ्कजानां[2] माला विद्यते यस्य तस्मै। एवम्भूतं ध्यायतां पङ्कजव त्सुप्रसन्ने तापोपशमने नेत्रे यस्य तस्मै, पङ्कजवत् सुसेव्यौ पङ्कजाङ्कितौ वाऽङ्घ्री यस्य तस्मै नम इति॥ २६ ॥

**नम** इति। किञ्च, भगवते निरतिशयैश्वर्याय, कुतः[3]? वासुदेवाय सर्वभूताश्रयाय, अत एव विष्णवे व्यापिने। न हि सर्वभूताश्रयत्वं परिच्छिन्नस्य सम्भवतीति, [4-]कुत स्सर्वाश्रयत्वम्[-4]? तत्राऽऽह - पुरुषाय सर्वस्मात्कार्या त्पूर्वमेव सते "पूर्व मेवाऽह मिहाऽऽसम्" इति, "तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः। एतदपि कुतः? आदिबीजाय आदे र्जगत्कारणस्यापि कारणाय। एवंमपि न मृदादिवच्चाऽयमित्याह-पूर्णबोधायेति॥ २७ ॥

नन्वेवमपि स्वस्य[5] कारणात्पूर्वं सत्त्वं न स्या दत आह- **अजायेति**। स्वय मजाय अस्य च जगतो[6] जनयित्रे। उभयत्राऽपि क्रमेण हेतुद्वयम्। ब्रह्मणे बृहते अनन्तशक्तय इति च। बृहत्त्वा दजत्व मनन्तशक्तित्वा त्तज्जनयितृत्व[7] मित्यर्थः। ननु पित्रादयः पुत्रादीनां जनकाः, तेषाञ्च तत्पूर्वे तेषाञ्च तथा[8] भूतानि, तेषाञ्च स्वकर्मद्वारेण जीवाः, किं मत्राऽहम् तत्राऽऽह-परावरात्म न्नित्यादि। पित्राद्यात्मकत्वा त्त्वमेव जनक इत्यर्थः॥ २८ ॥

ननु गुणा विश्वोत्पत्त्यादिहेतवः ते च प्रधानस्यैव, तस्य च पुरुषः क्षोभकः, तत्र च कालो निमित्त मिति प्रसिद्धम्। किं मत्राऽऽहं, तत्राऽऽह **त्वं वै** इति। तमसो धारणेऽप्यसंवृत एव। स्थानाय पालनाय, जगतः सृष्ट्याद्यर्थ मुत्कटं रज आदि त्वमेव बिभर्षि सृजसीत्यर्थः। कालप्रधानपुरुषाश्च त्वद्व्यतिरिक्ता न सन्ति। त्वन्तु परः सर्वव्यतिरिक्तः, अत स्त्वमेव जनयितेत्यर्थः॥ २९ ॥

कार्यकारणप्रपञ्चस्य तदव्यतिरेकं तस्य च सर्वव्यतिरेक मुपपादयति- **अहमिति**। अहं भूमिः मात्राणी[9]ति देवा मन इन्द्रियाणीति च त्रिविधाहङ्कारकार्याणि, कर्ताऽहङ्कारः॥ ३० ॥

एवं स्तुत्वा प्रार्थयते - **तस्येति**। हे प्रपन्नार्तिहर! तस्य नरकस्य आत्मजः[10] अयं भगदत्तो नाम भीतोऽत एव मया तव पादपङ्कज मुपसादितः [11-]अभयप्रदानार्थम्[-11]॥ ३१ ॥

---

1- -1 BJ omit 2 B.J. °जमा० 3 B.J. omit कुतः? 4- -4 MI.V. omit 5.MI.V. स्व का० 6. MI.V. omit जगतो 7. MI.V. omit तत् 8 B.J omiit तथा 9. MIV omit इति 10 B.J omit आत्मजः 11- -11 B.J. omit.

**वीर०** स्तुति मेवाऽऽह- **नमस्त** इति। ताव त्परत्वभक्तानुग्रहशीलत्वसर्वान्तरात्मत्वादिविशिष्टं स्तुवन्ती नमस्करोति। देवाना मिन्द्रादीनां देवो ब्रह्मा तस्येश! [1-]भक्तेच्छया[-1] भक्तानुग्रहेच्छया उपात्तरूपाय गृहीतविग्रहाय तुभ्यं हे परमात्मन्! नमः॥ २५॥

पङ्कजनाभायेति। मन्त्रविशेषेण नमस्करोति **नम** इति। पङ्कजं चतुर्मुखोत्पत्तिस्थानभूतं नाभिः यस्य तस्मै जगत्कारणभूतायेति भावः। अत एव सत्कीर्तिमयी पङ्कजमाला यस्य तस्मै। पङ्कजनेत्राय पङ्कजवत्प्रपन्नजनतापत्रयोपशमननेत्राय पङ्कजव त्सौगन्ध्यसौकुमार्यादियुक्ताङ्घ्रये। अनेन भक्तैः ध्येयत्व मुक्तम्॥ २६॥

अथ ध्येयत्वसमनियतकारणत्वविशिष्टं नमस्करोति- **नमो भगवते** इति। भगवत इति कारणत्वोपयुक्तगुणपूर्ति रुच्यते। आदिबीजाय कारणकारणाय अनेन सृष्टिकारणत्व मुक्तम्। अथ स्थितिकारणत्व माह- वासुदेवाय विष्णवे पुरुषायेति। स्थितिर्हि मन्वाद्यन्तःप्रवेशस्वावतारादिभिःतत्र वासुदेवायेत्यनेन वसुदेवपुत्रत्वादिरूप स्वावतारेण स्थितिरभिप्रेता। पुरुषायेत्यनेन मन्वादिपुरुषशरीरान्तः प्रवेशेन। विष्णवे इत्यनेन कृत्स्नजगदन्तरात्मतया च अभिप्रेता। पूर्णबोधायेत्यनेन लयकारणत्वं सूचितम्। प्रलयदशायां स्वानन्दानुभवपूर्णाय असहायत्वेन स्थितायेत्यर्थः॥ २७ ॥

अथ कारणत्वप्रयुक्तविकारादिदोषप्रसङ्गं वारयन्ती नमस्करोति- **अजायेति**। अस्य जगतो जनयित्रे, अनेन निमित्तकारणत्वमुक्तम्। उपादानकारणत्वन्तु आदिबीजायेति पुरस्ता देवोक्तम्। तथऽप्यजाय कार्यगतोत्पत्यादिविकाररहिताय विकाराणां स्वशरीरभूतप्रकृतिपुरुषगतत्त्वा दिति भावः। न हि लोके किञ्चि देवं दृष्टमि त्येवंविधदुर्घटत्वशङ्कां व्यावर्तयति-अनन्तशक्तय इति। अनन्ताः अपरिमिताः शक्तयः स्वासाधारणाः अग्न्यादेः दाहकत्वादय इव यस्य तस्मै। ब्रह्मणे इति दृष्टान्तार्थम्। यथा स्वरूपेण गुणैश्च निरतिशयबृहत्त्वं त्वदसाधारणम्। तथा कारण त्वमजत्वञ्चेति। तर्हि जगदुपादानत्वं केनाऽऽकारेणे त्यपेक्षायां नामरूपयो र्निर्वहिता "ते यदन्तरा तद्ब्रह्म" इति श्रुत्युक्तविधया चिदचिद्गतनामरूपनिर्वाहकत्वोपयुक्तान्तरात्मत्वेने त्यभिप्रेत्य सम्बोधयति- परावरात्मन्! उच्चावचजीवान्तरात्मन्! भूतात्मन् अचिदन्तरात्मन् अचिदन्तरात्मत्वं जीवसाधारणमिति तद्विशेषे पर्यवसाययति परमात्मन्निति। परमात्मशब्दश्च गीताचार्येण निरुक्तः"यो लोकत्रय माविश्य बिभ र्त्यव्यय ईश्वरः" (भगी. 15-17) इति। जीव आत्माऽपि स्वभावेन व्ययः त्वन्तु स्वस्वरूपतः स्वभावतश्चाऽव्ययः इत्यभिप्रेतम्॥ २८॥

उक्तनामभि रभिप्रेतमेव कारणत्वं सुव्यक्तमाह- **त्वं वा** इति। हे विभो! ताव त्त्वं स्रष्टुमिच्छुः उत्कटं रजो बिभर्षि रजोगुणप्रधानचतुर्मुखाख्यदेहानुप्रवेशेन सृजसीत्यर्थः। जगतां विनाशाय संहाराय तमःप्रधानकालाग्निरुद्रादी ननुप्रविशसि, तथात्वेन विनाशयसीत्यर्थः। स्थानाय स्थितये तु हे जगत्पते! उत्कटं सत्त्वं बिभर्षि सत्त्वप्रधानमन्वादिशरीरको भूत्वा पालयसीत्यर्थः। न केवलं सृष्ट्यादिवत् पालनमपि सद्वारकमेव, अपि तु अद्वारकमपी त्यभिप्रायेण विशिनष्टि। असंवृतः असंवृतोऽपि जीवादिसंवरणरहितोऽपि केवलस्वावताररूपेणाऽपि पालयसीत्यर्थः। उपादानकारणत्वप्रयुक्तं कार्याऽनन्यत्वं वक्तुं, कारणत्वं न स्वरूपेण अपि तु प्रकृतिपुरुष कालवैशिष्ट्यरूपेणे त्यभिप्रेत्य कारणत्वावस्थायां प्रकृत्यादिशरीरकत्व माह-काल इत्यादि। इदं सामानाधिकरण्यं शरीरात्मभावनिबन्धनम्, अत एव स्वरूपतादात्म्यनिबन्धनत्वाऽऽशङ्कानिरासाय विशिनष्टि पर इति। परोऽन्यः सन्निहितत्त्वा त्कालादे रन्यः इत्यर्थः। "ऐतदात्म्य-मिदं सर्वं तत्सत्यम् स आत्मा" (छान्दो.उ 6-8-7) इतिव दयं निर्देशः॥ २९॥

अथ कार्यानन्यत्वमाह- **अहमिति**। अहं पृथिवी; पयो जलं, ज्योतिष एव प्रदर्शनार्थ मनल इत्युक्तम्, अनिल इति तत्कारणस्य आकाशस्याप्युपलक्षणम्। मात्राणि गन्धादितन्मात्राणि। देवाः इन्द्रियाधिष्ठितारः दिग्वातादयः, इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च दश, कर्ता देहोऽहम्बुद्धिहेतुत्वात् कर्तेत्यहङ्कारो विवक्षितः। यद्वा महानिति तत्कार्यस्याऽ-हङ्कारस्याऽऽप्युपलक्षणम्। कर्ता जीवः "कर्ता शास्त्रार्थवत्त्वात्" (ब्र.सू. 2-3-33) इति सूत्रम्। इत्येवंविधमखिलं चराचरात्मकं जगदद्वितीये स्वतुल्यवस्त्वन्तररहिते त्वय्येव प्रकृतिपुरुषकालशरीरके त्वय्येव मृदि घट इव वर्तते इति शेषः। अतो मृ दयं घटः इतिवत् त्वदभिन्नमेवेत्यर्थः। यद्वा, उपादानत्वं कालादिवैशिष्ट्यरूपेणे त्यभिप्रायेण कालादितादात्म्य माह-काल इत्यादि। तच्च तादात्म्यं न स्वरूपाभेदनिबन्धन मित्यभिप्रायेणतेभ्योऽन्यत्वमाह पर इति। तर्हि किन्निबन्धन मिति जिज्ञासायां

शरीरात्मभाव[6]निबन्धनमि त्युपपादयति-अहमिति। त्वय्ये वान्तःप्रविश्य धारके आत्मन्यवतिष्ठत इत्यर्थः। पृथिव्यादिषु स्वतन्त्रबुद्धिस्तु[7] भ्रमात्मिकेत्याह अयं भ्रम इति। अयं पृथिव्यादिषु भ्रमः भ्रमात्मक इत्यर्थः। व्यासार्ये स्तु "देहानां जीवाभिमाने भ्रमहेतुत्वात् पृथिव्यादितत्त्वजातं भ्रम इत्युच्यते" इति व्याख्यातम्॥ ३० ॥

एवं स्तुत्वा किञ्चि त्प्रार्थयते-तस्येति। अयं भगदत्तनामा तस्य भौमस्याऽऽत्मजः भीतस्सन् हे प्रपन्नार्तिहर! तव पादपङ्कज मुपसादितः [8-] मया प्रापितः [-8]। तं प्रपन्न मेनं पालय अमुष्य भगदत्तस्य शिरसि अखिलाशुभहन्तृ त्वत्करपङ्कजं कुरु निधेहि॥ ३१ ॥

---

1- -1 B. omits 2. KTW. omit कारण 3. T °ता चाऽ० 4 B °नाऽव० 5- -5 K. omits 6. T.W. omit भाव 7. B. omits भ्रम 8- -8 K.T.W. omit.

**विज०** भक्तेच्छया उपात्तं स्वीकृतं रूपम्॥ २५,२६ ॥

वासुदेवाय सर्वत्र स्थित्वा द्योतमानाय विष्णवे सच्चिदानन्दरूपाय पुरुषाय पूर्णषड्गुणाय आदे ब्रह्मणो बीजाय व्यञ्जकाय॥ २७ ॥

अस्य प्रपञ्चस्य जनयित्रे उत्पादकाय ब्रह्मणे वेदादिशब्दराशिवेद्याय। सर्वशब्दवाच्यत्वे हेतुमाह-अनन्तेति, "अनन्ता वै वेदाः" इति श्रुतेः। चराचरात्मन् चराचरमात्मा देहः प्रतिमास्थानीयो यस्य स तथा। परमात्मन् प्रत्यक्स्वरूप॥ २८॥

सिसृक्षुः स्रष्टुकामः उत्कट स्त्वं रजोगुणं बिभर्षि उपादत्से। निरोधाय संहाराय संवृतं ज्ञानसंवरणकारणं तमोगुणं, स्थानाय जगत्स्थित्यै सत्त्वगुणम्। कालः प्राणिना मदृष्टपाचकः, एवंविधः क इति तत्राऽऽह प्रधान इति। प्रधानः पुरुषोऽसि पुरुषोत्तमोऽसीत्यर्थः। "उत्तमः पुरुष स्त्वन्यः" (भगी. 15-17) इति स्मृतेः। पुरुषत्वेऽपि परिच्छिन्नत्वं नास्तीत्याह-अपार इति। यद्वा, जगत्कारणं प्रधानपुरुष इति केचि त्सङ्गिरन्ते, तदाशङ्कां निवारयति प्रधान इति। प्रधानशब्दवाच्यः पुरुषशब्दवाच्यश्च त्वमेव। तर्हि परिशिष्यमाणः कः, इत्यत्राऽऽह अस्येति। अस्य प्रपञ्चस्य पारः परिशिष्यमाणः संसारनदीपारः तीरान्तरशब्दवाच्य-स्त्व मित्यर्थः॥ २९ ॥

सृष्ट्यादिकर्ता त्व मित्युक्त्यैव अखण्डकर्तृत्वप्रतीतावपि धात्रादिशब्दाभ्यां विरिञ्चादेरपि कर्तृत्वशङ्का मिदानीं निवारयति-**अहमिति**। अहं नाम्ना पृथिवी, मीयन्त इति मात्राणि, शब्दादिविषयाः, मानं स्वविषयज्ञानं स्वसत्त्वेन त्रायन्त इति वा, देवा इन्द्रियाभिमानिनः, कर्ता अहङ्काराभिमानी, महान् महत्तत्त्वाभिमानी विरिञ्चः, तुशब्द एवार्थे। इतिशब्दः समाप्तिवचनः। महदाद्यभिमान्यन्त मखिलकारणम् अद्वितीये च त्वय्येव। त्वमेव धारयसीत्यर्थः। आतिथ्यव त्कदाचिन्नेत्याह भगवन्निति। हे ऐश्वर्यादिगुणार्णव, अयं जगद्भ्रमः चक्रभ्रमणव द्विवस्य परिवर्तनं त्वन्नियत मित्यर्थः। भ्रमशब्दस्याऽऽरोपार्थत्वाङ्गीकारे अर्थक्रियानुपपत्ति रिति॥ ३० ॥

साम्प्रतं तव किं विधेय मित्यत्राऽऽह- **तस्येति**। अयं पुरोवर्ती तस्य नरकस्याऽऽत्मजः औरसः पुत्र इति, जानीहीति शेषः। तर्हि किमिति मत्प्रणामं न करोती त्यत्राह तवेति। तव प्रपन्नार्तिहरं पादपङ्कजं प्राप्य त्वां प्रसादयितुं भीत स्त्रस्तः इत्यन्वयः। ततः किं मत्राऽऽह- तदिति। यतो भीतः त त्तस्मात् तत्पालनं चैत देवेत्याह- कुर्विति।

अनेन किं फलं स्या दित्याशङ्क्य पापनिमित्तं सर्व मनर्थजातं, तन्नाशे सर्वसुखं स्यादिति भावेनाऽऽह- अखिलेति। यद्वा, प्रपन्नार्तिहरं भगवन्तं प्रसादयितुं तव पादपङ्कजं 'भीतः सञ्चलितः' प्राप्त इत्यर्थः। "भीति भयसञ्चलनयोः" इति धातुः। अतो रक्षेत्याह-तदिति॥ ३१ ॥

-: भगवतो नरकासुरान्तःपुरगतराजकन्यकाद्याहरणम् :-

## श्रीशुक उवाच

इति भूम्यार्चितो[1] वाग्भि र्भगवा न्भक्तिनम्रया।
[2-]दत्त्वाऽभयं भौमगृहं प्राविश त्सकल[-2]र्द्धिमत्॥ ३२ ॥

★ राज्ये नियोज्य तं वंश्ये तदमात्यांश्च तत्पदे।
भौमावरोधकान्तानां श्रेणीं सम्प्राविश द्धरिः॥

तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम्।
भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः॥ ३३ ॥

तं प्रविष्टं स्त्रियो वीक्ष्य △ नरवीरं[3] विमोहिताः।
मनसा वव्रिरेऽभीष्टं पतिं दैवोपपादितम्[4]॥ ३४ ॥

भूया त्पति रयं मह्यं धाता त[5] दनुमोदताम्।
इति [6-]सर्वाः पृथक् कृष्णे[-6] भावेन हृदयं दधुः॥ ३५ ॥

---

1. B.G.J. °र्थि 2- -2 M.Ma प्रसन्नः प्रददौ तस्मै भगदत्ताय चाभयम्। ★ This extra verse is found in M.Ma editions only △The following three quarter verses are read thus in M.Ma editions: ता स्सर्वा नवयौवनाः। स्वलङ्कृता विचित्राङ्ग्यो नरवर्यविमोहिताः। 3. K.W. वरवर्यं; M.I.V. नरवर्यं 4.B.G.J.W. सा० 5.M.Ma °म 6- -6 M.Ma सर्वेश्वरे कृष्णे ता नार्यो ?

**श्रीध० इतीति**। अभयं दत्वा॥ ३२ ॥

**तत्रेति**। शताधिक मित्यपि ज्ञातव्यम्। यथा[1]ऽऽह श्रीपराशरः-"कन्यापुरे स कन्यानां षोडशाऽतुलविक्रमः। शताधिकानि ददृशे सहस्राणि महामते" इति। राजभ्य इत्युपलक्षणम्, सिद्धादिभ्यश्चेति। तथा च तेनैवोक्तम्- "देवसिद्धासुरादीनां नृपाणाञ्च जनार्दन। हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे" इति॥ ३३-३५ ॥

---

1. M.I.V. °दा०

**वीर० इतीति**। भक्त्या नम्रा प्रणता तया भूम्या कर्त्र्या वाग्भिः साधनभूताभिः अर्चितः सकला ऋद्धयः भोग्यभोगोपकरणादिसमृद्धयो यस्मि न्सन्तीति तत् भौमस्य गृहं प्राविशत्॥ ३२ ॥

-: नरकान्तःपुराहृतराजकन्यकोद्वाहादिवृत्तान्तः:-

अथो[1] मुहूर्त एकस्मि न्नानागारेषु ताः स्त्रियः।
यथोपयेमे[2] भगवां स्तावद्रूपधरोऽव्ययः॥ ४२ ॥

गृहेषु तासा मनपाय्यतर्क्यकृ न्निरस्तसाम्यातिशयेष्ववस्थितः।
रेमे रमाभि र्निजधाम सम्प्लुतो[3] यथेतरो गार्हकमेधिकां श्चरन्॥ ४३ ॥

★ स्वदारेषु पृथग्भावो भक्तचित्तानुवर्तिनः।
अनन्तस्याऽप्रमेयस्य[4] किन्नु चित्रं मुरद्विषः। क ॥

योगेश्वरेश्वरः कृष्णो भक्तै रद्यापि लक्ष्यते।
अन्त र्बहि स्समन्ताच्च शतधा च सहस्रधा॥ ख ॥

इत्थं रमापति मवाप्य पतिं स्त्रि यस्ता ब्रह्मादयोपि न विदुः पदवीं यदीयाम्।
भेजु र्मुदाऽविरत[5] मेधितयाऽनुरागहासावलोकनवसङ्गमजल्पलज्जाः॥ ४४ ॥

प्रत्युद्गमासन[6-] वरार्हण[-6]पादशौचताम्बूलविश्रमण[7]वीजनगन्धमाल्यैः।
केशप्रसाध[8]शयनस्नपनोपहार्यै[9] र्दासीशता अपि विभो र्विदधुः स्म दास्यम्॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे
पारिजातहरणनरकवधो नाम एकोनषष्टितमोऽध्यायः॥ ५९ ॥

---

1 KW अतो 2 K. तं० 3 BGJ काम ★ These extra two Verses are found in BKW and also commented by Veeraraghava only 4 KW °ऽद्वितीयस्य 5 KW °ह० 6- -6 MIV °मादरभयासन 7 KW °व० 8 BGJ MIV °र० 9 KW हारै०

**श्रीध०** सेन्द्रान् विबुधान् निर्जित्येति इन्द्रकृष्णयोः सङ्ग्राम उक्तः। तत्र ननु कथं प्रसाधितस्वमनोरथेन श्रीकृष्णेन सहेन्द्रस्य[1] सङ्ग्राम इत्याशङ्क्याह[2-] **ययाच**[-2] इति। अच्युत मर्थसाधनम् इति च कर्मद्वयं याचति धातोः। विगृह्यते विग्रहं करोति महानपि, तमः क्रोधं आढ्यतां धनिकतां धि[3] गिति॥ ४१ ॥

**अथो** इति। यथा यथावत्। अनेन देवक्यादिबन्धुजनसमागमोऽपि प्रतिगृहं **यौगपद्येन** **सूचितः**। **अव्ययः** सर्वत्राऽपि सम्पूर्ण[4] एव॥ ४२ ॥

अहो भाग्यं नारीणा मित्याह त्रिभिः-**गृहेष्विति**। अतर्क्याणि कर्माणि करोति तथा सः निरस्तं साम्य मतिशयश्च यैः, अन्येषां तेषु गृहे ष्वनपायी अवस्थितः रमाभि र्लक्ष्म्या अंशभूताभिः, निजकामसंप्लुतः स्वानन्दपरिपूर्णः गार्हकमेधिकान् गृहस्थधर्मान्॥ ४३ ॥

**इत्थमिति**। अनुरागहाससहित मवलोकञ्च तत्पूर्वकं नवसङ्गमञ्च तद्गतं जल्पञ्च तस्मिन् लज्जाञ्च भेजुः॥ ४४॥

**प्रत्युद्गमेति**। विश्रमणं पादसंवाहनं[5] केशप्रसारः केशप्रसाधनं दासीनां शतानि विद्यन्ते यासां तथाभूता अपि स्वयं विभो र्दास्यं विदधुः॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां व्याख्यायां
एकोनषष्टितमोऽध्यायः॥ ५९ ॥

---

1. B.J महे० 2--2 B J इत्याह 3 MI V. omit धिगिति 4. MI.V. omit एव 5 MI V omit पाद

**वीर०** नन्विन्द्रः पराजितः किमकरोत् त[1]दाह-**ययाच** इति। आनम्य इन्द्रो मूर्धानमिति कर्तृकर्मपदाध्याहारः। किरीटाग्रैः पादौ स्पृशन् अर्थसाधन माश्रितजनाभिमत प्रयोजननिष्पादकं कल्पतरुं ययाचे। तमेवङ्कृतवन्तमिन्द्रं निन्दति- सिद्धार्थ इति। तावन्निष्पन्न स्वप्रयोजनः समनन्तरमे[2]तेन स्वप्रयोजनसाधकेन भगवता विगृह्यते विरुध्यते तत्समनन्तरमेव महान् याच्ञया प्राप्तकल्पतरुत्वेन आढ्यो बभूव। तस्मा दहो सुराणां तमः अहङ्कार माढ्यताञ्च धिक्, तदुभयं निन्द्यमित्यर्थः॥ ४२॥

**अत** इति। अत स्ततः एकस्मिन्नेव मुहूर्ते नाना बहुषु अगारेषु यावत्यः स्त्रियः तावत्सु गृहेषु इत्यर्थः। तथा तावन्ति रूपाणि शरीराणि धरतीति तथाभूतः ताः षोडशसहस्रसंख्याकाः स्त्रियः स्त्रीः उपयेमे उदवोढेति भगवन्महिमातिशयोक्तिः॥ ४२॥

अहो तासां भाग्य मित्याह- **गृहेष्विति। अतर्क्याण्यचिन्त्यानि चेष्टितानि करोतीति** तथा स भगवा न्निजधाम्ना स्वतेजसा उपात्तमनुजरूपत्वेऽपि अपरित्यक्तासाधारणप्रभावेनेत्यर्थः। सम्प्लुतो व्याप्तोऽपि स्वानन्दानुभवपूर्णोऽपि ता निरस्त साम्यातिशयेषु भोग्यादिसमृद्ध्या समाभ्यधिकरहितेषु तासां गृहेषु अनपायी विश्लेषरहितोऽवस्थितः प्राकृतजनवत् गार्हकमेधिकान् [3-](गार्हधर्मवान्[-3] [4-]गृहस्थधर्मवान्[-4]) गृहस्थधर्मान् चरन् अनुतिष्ठन् रमाभिः रमणीयाभिः स्त्रीभिः सह रेमे॥ ४३ ॥

अतिचित्र मेत देक स्यानेकधा भवनमिति विस्मयमानं प्रत्याह-**स्वदारेष्विति**। अपरिच्छिन्नस्य समाभ्यधिकरहितस्य स्वभक्तचित्तानुवर्तिनो मुरारेः पृथग्भावः स्वदारेषु एकदैव तत्तद्दाराभिमतरूपधारणं किं चित्रं तदद्भुतचेष्टितेषु नेदं चित्र मित्यर्थः॥ (क)

भक्तचित्तानुवर्तिन इति विशेषणाभिप्रेतं व्यनक्ति। अद्याऽपि, न केवलं तदैव, अपि त्वधुनाऽपि योगे[5]श्वरेश्वरः योगनिर्वाहकः कृष्णो अन्त र्हृदि बहि स्तत्रापि समन्ताच्च भक्तैः परिपूर्णभक्तियोगैः शतधा सहस्रधा च लक्ष्यते। (ख)

अथाऽहरहस्तासां वृत्तिक्रम माह- **इत्थमिति** द्वाभ्याम्। रमापतिं श्रीकृष्णं तं विशिनष्टि- यस्य श्रीकृष्णस्य सम्बन्धिनीं पदवीं महिमानं ब्रह्मादयोऽपि न विदुः। तं पति मवाप्य अविरह मविच्छिन्नं, सन्तत मिति यावत्। तद्यथातथा वर्धितया मुदा अनुरागसहितो हासः, तत्पूर्वकावलोकश्च तत्पूर्वको नवसङ्गमश्च तत्र जल्पाः नर्मवचनानि तेषु लज्जां भेजुः प्रापुः॥ ४४ ॥

किञ्च **प्रत्युद्गमेति**। [6] दासीनां शतानि यासां तथाभूता अपि स्वयमेव विभो भर्तुः प्रत्युद्गमादिभिः दास्यं विदधु श्चक्रुः। तत्र प्रत्युद्गमः प्रत्युत्थानम्, आसनवरार्हणम् आसनश्रेष्ठसमर्पणम्, पादशौचं पादप्रक्षालनं,विश्रमणं पादसंवाहनादिना श्रमापहरणम्॥ ४५॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनषष्टितमोऽध्यायः॥ ५९ ॥

---

1 TW अत्राऽऽह 2 adds एव 3- -3 K omits 4- -4 TW omit 5 B °गी० 6 KTW दास्यः: विज 41 **तमश्लोकादारब्धस्य** 45 तमश्लोकपर्यन्तस्य ग्रन्थभागस्य व्याख्या नास्ति।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
एकोनषष्टितमोऽध्यायः॥ ५९ ॥

(विजयध्वज़तीर्थरीत्या चतुष्षष्टितमोऽध्यायः)

# श्रीमद्भागवतम्

## दशमस्कन्धः

॥ अयं एकोनषष्टितमाध्यायानन्तरं योजनीयः ॥

इत आरभ्य विजयध्वजतीर्थीयः अध्यायदशकात्मकः अधिकपाठः

अथ विजयध्वजरीत्या पञ्चषष्टितमोऽध्यायः

(अधिकपाठे प्रथमोऽध्यायः)

श्रीशुक उवाच

हत्वा नरक मत्युग्रं दानवं दानवान्तकः ।
आरुह्य गरुडं प्राया त्प्राग्ज्योतिष पुरा न्नृप ॥ १ ॥

सगच्छन् गगने विष्णुः वन्दितुं देवमातरम् ।
जगाम त्रिदशावासं सहितः सत्यभामया ॥ २ ॥

स्वर्गद्वारं गतो विष्णु र्दध्मौ शङ्खं महास्वनम् ।
उपाजग्मु स्तदाकर्ण्य सार्घ्यपाद्या दिवौकसः ॥ ३ ॥

पूजित स्तै स्सुरैः कृष्णो भक्तिनम्रैर्गतज्वरैः ।
सुरेन्द्रभवनं दिव्यं प्रविवेश मनोरमम् ॥ ४ ॥

तत्र शक्र स्समं शच्या पूजयामास केशवम् ।
रत्नैराभरणै र्दिव्यै र्गन्धमाल्यैश्च शोभनैः ॥ ५ ॥

ततः प्राया त्पुरीं मातु रदित्या स्सह भार्यया ।
दृष्ट्वोपतस्थे तं देवी पुत्रमायान्त मच्युतम् ॥ ६ ॥

ववन्दे तां हरिस्तं सा पूजयामास भामिनी
आशीर्भिः परमप्रीता चिरंदृष्टं यदूत्तमम् ॥ ७ ॥

कर्हिचिदिति। स्वतल्पस्थं स्वपर्यङ्कस्थम्॥ १ ॥

वक्ष्यमाणं रुक्मिण्याः प्रियः[1] श्रीकृष्णे परमं[2] प्रेम सम्भावयितुं तस्योक्तमेवत्त्वमनुस्मारयति-यस्त्विति॥ २ ॥

आदौ तावत् त्रिभिः श्लोकैः मन्दिर मनुवर्णयति- तस्मिन्निति । तच्छब्देनाऽतिप्रसिद्धमाह-भ्राजन्ति मुक्तादामानि तेषां विलम्बाः सन्ति यस्मिं स्तेन वितानेन विराजिते। तृतीयान्तानां विराजितपदेनान्वयः॥ ३ ॥

मल्लिकेति। सुगन्धितया द्विरेफकुलै र्नादिते। प्रविशद्भिः चन्द्ररश्मिभिः॥ ४ ॥

पारिजातेति। निर्गच्छद्भिः अगुरुसम्भवै[3] र्धूपै[4] श्चातिमनोहरत्वं दर्शितम्॥ ५ ॥

---

1 BJ omit प्रियः 2 MIV °मप्रे° 3 MIV °ग° 4 MIV °धू°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ भगवतो रुक्मिण्या सह प्रेमकलहं वर्णयति षष्टितमेन - कर्हिचिदिति। भैष्मी रुक्मिणी जगद्गुरुं स्वपर्यङ्कस्थं तऽत्रापि सुखं यथा तथा आसीनं सखीजनै स्सहिता व्यजनेन चामरेण पर्यचर दुपचचार॥ १ ॥

एतदेव प्रपञ्चयति-यस्त्वित्यादिना, उपासाञ्चक्रे ईश्वर मित्यन्तेन।तावत् जगद्गुरुत्वं प्रपञ्चयति-यस्त्विति। सृजति स्वाराधनोपयुक्तकरणकलेबरादिप्रदानेन हितं करोति, अत्ति संहरति संसरतां जीवानां प्रलयमुखेन विश्रान्तिरूपहितं करोति, अवति पालयति अनिष्टनिरसनेष्टप्रापणरूपहितं करोतीति भावः। किञ्च स्व[1]सेतूनां स्वकृतधर्ममार्यादानां गोपीथाय रक्षणाय यदुषु जातः। कथम्भूतोऽपि ? अजोऽपि कर्मायत्तोत्पत्तिरहितोऽपि स्वेच्छया यदु ष्ववतीर्ण इत्यर्थः। गुरुत्वं हितैककारित्वम्। एवं जगद्गुरु रिति भावः। य एवंविधः तमीश्वर मुपतस्थे इति यच्छब्दस्य सम्बन्धः॥ २ ॥

अथ स्वतल्पस्थ मित्युक्ततल्पं वर्णयितुं तावत् तत्[2]तल्पाश्रय मन्तर्गृहं[3- -3] वर्णयति-तस्मिन्निति त्रिभिः। तच्छब्दः प्रसिद्धिपरः। तृतीयान्तानां विराजित इत्यनेनान्वयः। भ्राजन्ति भ्राजमानानि मुक्तादामानि तेषां विलम्बो[4] यस्मिन् तेन वितानेन उल्लोचेन, मणिमयैरपि दीपै रित्यर्थः॥ ३ ॥

द्विरेफाणां भ्रमराणां कुलेन समूहेन नादितैः मल्लिकादामभिश्च विराजित इत्यन्वयः। नादिते। इति पाठान्तरम्।तदा सौरभलोभभ्रमद्भ्रमरकुलैः नादिते तत्र हेतुः मल्लिकादामभि र्धूपैश्च विराजित इति। अरुणैः औदयकालिकत्वादिति भावः। जालरन्ध्रद्वारा अन्तःप्रविष्टैः चन्द्रमसो गोभिः किरणैश्च॥ ४ ॥

उद्यानवने शोभते रोचते इति तथा तेन पारिजातवनामोदयुक्तेन वायुना अगरुजै रगरुकाष्ठजैः गवाक्षरन्ध्रविनिर्गतैः, धूपैश्च हे राजन्! ॥ ५ ॥

---

1 KTW omit स्व 2 KTW omit तत् 3- -3 B.omits 4 B.T.W °म्बाः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्वस्या रुक्मिण्याः तल्पे तलिमे स्थितम्॥ १ ॥

राजन्! हरिचरित मतिचित्रमिति भावेन तत्स्वरूपलक्षणमाह- थ इति ॥ २ ॥

यद्वह रुक्मिण्यै क्लृप्त तस्मि न्नन्तर्गृहे पर्यङ्के दन्तविहितमङ्के कशिपूत्तमे तलिमे मृदुवस्त्रप्रावरणास्तरणे सुखासीन पति मुपतस्थे इत्यन्वयः। मुक्तादाम्ना विलम्बोऽस्यास्तीति मुक्तादामविलम्बि तेन उपरिबद्धचित्रपटेनेत्यर्थः॥ ३ ॥

अरुणै रित्यनेन चन्द्रोदयकालभवा गावो लक्ष्यन्ते ॥ ४ ॥

पारिजातानां मन्दाराणा वनस्य काननस्याऽऽमोदेन युक्तेन वायुना शोभिते। कीदृशेन? उद्यान इव शालिना मनोहरेण पारिजातवनस्य सम्भजनीयस्य सेव्यस्याऽऽमोदस्य सम्बन्धिना वायुना वा आगरवैः अगु[1]रुसपृक्तैः॥ ५ ॥

---

1 B °ग°

पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे।
उपतस्थे सुखासीनं जगता मीश्वरं पतिम्॥ ६ ॥

वालव्यजन मादाय रत्नदण्डं सखीकरात्।
तेन वीजयती देवी उपासाञ्चक्र ईश्वरम्॥ ७ ॥

सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता।
वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासा नितम्बधृतया च परार्ध्यकाञ्च्या॥ ८ ॥

तां [1]रूपिणीं श्रिय मनन्यगतिं निरीक्ष्य या लीलया धृततनो रनुरूपरूपा।
प्रीतः स्मय न्नलककुण्डलनिष्ककण्ठ वक्त्रोल्लसत्स्मितसुधां हरि राबभाषे॥ ९ ॥

[2]श्रीभगवानुवाच[2]

राजपुत्रीप्सिता भूपै र्लोकपालविभूतिभिः।
महानुभावैः श्रीमद्भी रूपौदार्यबलो[3]र्जितैः॥१०॥

---

1 M.Ma.V रूक्मिणीं 2- -2 M.V श्रीकृष्णः 3 W °र्ज्रितैः

श्रीध० पय इति। पयसः क्षीरस्य फेन इव मृदुनि [1-]पर्यङ्के तत्स्थितकशिपूत्तमे[-1] हंसतूलिकायाम्। उपतस्थे असेवत॥ ६॥

तदेवाऽभिनयति- वालव्यजनमिति॥ ७॥

सेति। उपाच्युतम् अच्युतस्य समीपे सा मणिनूपुराभ्यां [2-]रेजे। कथं रेजे?[-2] क्वणयती मणिमयौ नूपुरौ कूजयन्ती[3]ति। तथा। अङ्गुलीयवलयव्यजना न्यग्रहस्ते हस्ताग्रे यस्यास्सा। वस्त्रान्ते[4] गूढौ स्थगितौ कुचौ तयोः कुङ्कुमं तेन शोणो हार स्तस्य भासा, तथा[5] नितम्बे धृतया, परार्घ्या अमूल्या काञ्ची तया च रेजे ॥ ८॥

तामिति । तां निरीक्ष्य प्रीतस्सन् स्मयमानो हरिः आबभाषे। कथम्भूताम्? या लीलया धृतनरतनोः[6] तस्या[7]नुरूपरूपा अनुरूपं रूपं यस्यास्सा। यथोक्तं श्रीपराशरेण- "देवत्वे देवदेहेऽयं मनुष्यत्वे च मानुषी। विष्णो र्देहानुरूपां वै करो त्येषाऽऽत्मन स्तनुम्" (वि.पु. 1-9-145) इति। किञ्च, अलकैः कुण्डलाभ्यां निष्केण पदकेनाऽलङ्कृतकण्ठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितसुधा यस्यास्ताम् ॥ ९॥

सर्वगुणयुक्ताया अपि तव बुद्धिः मन्देत्याशयेनाह- राजपुत्री त्याद्येकादशभिः। हे राजपुत्रि! लोकपालानामिव विभूति रैश्वर्यं येषां ते स्तथा महाप्रभावै राढ्यै रूपादिभि रूर्जितैश्च पूर्वमीप्सिताऽसि॥ १०॥

1- -1 B.J पर्यङ्कस्थे 2- -2 B.J omit 3 B.J omit इति 4 B.J -°न्तेन 5 B omits तथा 6 MI V Omit नर 7 MI V स्वस्या०

वीर० अथ तल्पं वर्णयति- पयःफेनेति। दुग्धफेनव न्मृदुले धवले च पर्यङ्के यत्कशिपूत्तम मास्तरणश्रेष्ठं तस्मिन् सुखं यथा तथा आसीनं पतिम् उपतस्थे सन्निधिमवापेत्यर्थः॥ ६॥

रत्नमेव दण्डस्थानीयं तदाकारं च यस्य तत् वालव्यजनं चामरं सख्याः करात् हस्ता दादाय तेन वालव्यजनेन वीजयती देवी रुक्मिणी उपासाञ्चक्रे तमेव पश्यन्ती अवतस्थे इत्यर्थः॥ ७॥

तादात्विकीं ता मनुवर्णयति-सेति। सा रुक्मिणी उपाच्युतम् अच्युतसमीपे मणिमयनूपुराभ्यां क्वणयती ध्वनिमुत्पादयन्ती अङ्गुलीयादयोऽग्रहस्ते हस्ताग्रे यस्यास्सा, वस्त्राञ्चलेन गूढयोः स्थगितयोः कुचयोः कुङ्कुमेन शोणो यो हारः [1-]मुक्ताहारः[-1] तस्य भासा दीप्त्या, नितम्बयोः धृतया परार्ध्यया [2-]अनर्घ्यया[-2] काञ्च्या च रेजे ॥ ८॥

तामिति। तां रुक्मिणीं निरीक्ष्य प्रीतो हरिः स्मयन् ईषद्धसन् आबभाषे उवाचेति सम्बन्धः। कथम्भूताम्? रूपिणीं मनुष्यरूपधारिणीं श्रियं महालक्ष्मीं, न विद्यते अन्यः पतिः प्रत्यवतारं यस्यास्ताम् । अनन्यगतिमिति पाठान्तरम्। तदा न विद्यते अन्या गतिः प्राप्तिः यस्यास्ताम् अनन्यप्राप्यामित्यर्थः। धृततनोः उपात्तमनुष्यरूपस्य हरे र्या अनुरूपा ताम्। अलकैः [3-]कुन्तलैः[-3] कुण्डलाभ्यां निष्केण पदकाख्यभूषणेन अलङ्कृतेन कण्ठेन चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती[4] स्मितमेव सुधा यस्यास्तां, यद्वा अलककुण्डलनिष्काणि यथास्थानं कण्ठवक्त्रयोः यस्यास्ताम्। अनेन अनपायिनोः श्रीश्रीपत्यो र्वक्ष्यमाणो विवादः केवलं नृलोकविडम्बनायेति सूच्यते ॥९॥

भाषणमेवाह -राजपुत्रीत्यादिभिः एकादशभिः। तात्पर्यत स्ता मुपचरन्ती मभिनन्दयन्नेव शाब्दवृत्त्या[5] कोपयन्निव कूटवचांसि प्रयुङ्क्ते - हे राजपुत्रि! लोकपालानामिव विभूति रैश्वर्यं येषां, महान्प्रभावो येषां, भोम्यादिसमृद्धिमद्भिः लोकपाल विभूतिभि रित्यस्यैव प्रपञ्चः। श्रीमद्भिः रूपादिभि रुच्छ्रितैः उत्कृष्टैः भूपैः त्व मीप्सिता, रूपं सौन्दर्यम्। औदार्यं वदान्यत्वम्। बलं शत्रुपरिभवसामर्थ्यम्। इत्थं सर्वं वस्तुगत्या आत्मनिष्ठमि त्यभिप्रेतम्। शब्दत स्त्वपरित्याज्यत्वे तात्पर्यम् ॥ १० ॥

---

1- -1 K.T.W. omit 2- -2 B. omits 3- -3 B. omits 4. B. श्रियः प० 5 K शा०

विज० पयःफेननिभे जलबुद्बुदवन्मसृणे॥ ६ ॥

किं कर्मेति तत्राह- वालव्यजनमिति॥ ७ ॥

उपाच्युतं अच्युतस्य समीपे उन्नमदवनमतोः पादयो र्मणिनूपुराभ्यां क्वणयती अङ्गुलीयाख्यवलयेन व्यजनेन च युक्तं हस्ताग्रं यस्या स्सा तथा। पृथक्कृते वलये हस्तमूलेति वक्तव्यं न तु हस्ताग्रेति। वस्त्रान्तेन वस्त्राञ्चलेन गूढयोः कुचयोः लिप्तकुङ्कुमचूर्णसम्बन्धेन शोणस्य रक्तस्य हारस्य मुक्तादाम्नो भासा युक्ता उपलक्षणे तृतीया। नितम्बधृतया कटिप्रदेश वेष्टितया पराध्यकाञ्च्या अनर्घ्यरशनया च युक्ता॥ ८ ॥

हरिः नीलनीरदकान्तिः श्रीकृष्णः या लीलया धृततनोः भगवतः अनुरूपरूपा अनुकूलसौन्दर्या अनुगुणवृत्ता वा तां रुक्मिणीं आबभाषे इत्यन्वयः। निष्कं ग्रैवेयकं अलककुण्डलाभ्यां निष्कालङ्कृतकण्ठेन च युक्तवक्त्रे उल्लसत् स्मितमेव सुधा यस्या स्सा तथा ताम्॥ ९ ॥

ईप्सिता प्रार्थिता श्रीमद्भिः श्रीकटाक्षविषयैः, हे राजपुत्रि! ॥ १० ॥

**ता न्प्रामा नर्थिनो हित्वा[1] चैद्यादीन् स्मरदुर्मदान्।**
**दत्ता भ्रात्रा स्वपित्रा च [2-]कस्मा न्नो ववृषेऽसमान्[-2]॥ ११ ॥**

**राजभ्यो बिभ्यतः सुभ्रु[3] ! समुद्रं शरणं गतान्।**
**बलवद्भिः कृतद्वेषा न्प्राय स्त्यक्तनृपासनान्॥ १२ ॥**

**अस्पष्टवर्त्मनां पुंसा मलोकपथ मीयुषाम्।**
**आस्थिताः पदवीं सुभ्रु[4]! प्रायः सीदन्ति योषितः॥ १३ ॥**

**निष्किञ्चना वयं शश्व न्निष्किञ्चनजनप्रियाः।**
**तस्मा त्प्रायेण न[5] ह्याढ्या माँ[6] भजन्ति सुमध्यमे॥ १४ ॥**

**ययो रात्मसमं वित्तं जन्मैश्वर्याकृति र्भवेत्[7]।**
**तयो र्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्॥ १५ ॥**

---

1 K.W. भूपान् 2- -2 K.W. कस्मा न्न ववृषे समान्; M.Ma कस्माद्देववृषोपमान् 3. B.G.J. °भ्रूः 4 B.G.J. °भ्रूः 5 M.Ma. नो 6 M.Ma न 7 B.G.J.M.Ma °वः

**श्रीध० तानिति।** तान् हित्वा नोऽस्मा नसमान् कस्मा द्वव्रे वृतवती त्वम्॥ ११ ॥

**राजभ्य इति।** किञ्च प्रायशो राजभ्यो जरासन्धादिभ्यो बिभ्यतो भयं प्राप्नुवतः॥ १२ ॥

**अस्पष्टेति।** अस्पष्टवर्त्मना मविज्ञाताचाराणाम्। अलोकपथं [1-]अशास्त्रपारतन्त्र्यं अस्त्रीपारतन्त्र्यं[-1] वा[2]। पदवीं मार्गं आस्थिता अनुसृताः॥ १३ ॥

किञ्च, **निष्किञ्चना** इति॥ १४॥

**ययोरिति।** आत्मसमं परस्पर मनुरूपम्। जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जाति र्वा समा[3] ॥ १५॥

---

1- -1 BJ omit 2 BJ omit वा 3 BJ add भव आयतिः

**वीर० तानिति।** तानेवंविधा नर्थिनो याचमानान् प्राप्ता नागतान् स्मरेण कामेन दुष्टो मदो येषां तान् चैद्यादीन् त्वं पित्रा भ्रात्रा च दत्ता सती समाननुरूपान् कस्माद्धेतोः न वव्रुषे न वृतवत्यसि। नो वव्रुषे इति पाठे अर्थिनो हित्वेति पाठ्यम्। तान् हित्वा नोऽस्मान् कस्माद्धेतोः वृतवत्यसीत्यर्थः। अतस्त्वं मन्देति भावः। तत्र हेतुं वदन् आत्मानं विशिनष्टि- असमानिति अननुरूपानित्यर्थः। बहुवचनं कोपापादनार्थम्। अस्मासु त्वदनुरूपः कोऽधुना वा वरणीयोऽस्तीति। "न तत्समश्चाभ्यधिक श्च दृश्यते" (श्वेता उ6-8) इति श्रुत्युक्तविधया सर्वोत्तमं मां कस्माद्धेतोः वृतवत्यसि? तं हेतुं आवयोः लक्ष्मीनारायणयो रनपायित्वरूपं त्वं[1] जानास्येवेति हार्दो भावः ॥ ११ ॥

असमत्वमेव प्रपञ्चयितुं विशिनष्टि-**राजभ्य** इति। हे सुभ्रु! राजभ्यो जरासन्धादिभ्यो बिभ्यतः भीतान् अत एव समुद्रं शरणं गृहं प्राप्तान् समुद्रान्तर्द्वीप मावासस्थानत्वेनाऽऽश्रिता नित्यर्थः। हार्दभावपक्षे तु अबिभ्यत इति च्छेदः। ममाभीतत्वं त्वदानयनकाले किं त्वया न दृष्ट मिति भावः। समुद्रं शरणं गता नित्यस्यायं भावः- त्वत्पितृक्षीरसागरगतसमुद्रत्व धर्मयोगित्वमात्रप्रयुक्तप्रेमातिशयेन लवणार्णवान्तर्द्वीप माश्रितानां, किं पुनः साक्षा त्त्वत्पितरि दुग्धार्णवे साक्षा च्छ्वशुरे अस्माकं प्रीतिः, किंतरां साक्षा त्त्वयि-इति। बलवद्भिरिति बलशालिभिः जरासन्धादिभिस्सह कृत उत्पादितो द्वेषो यै स्ता निति शाब्दोऽर्थः। पक्षान्तरे तु बलवद्भि रिति निन्दायां मतुप्। "भूमनिन्दा प्रशंसासु"(वार्तिकम् 3183 under अष्टा० 5-2-94) इत्यनुशासनात्। बलं धारणसामर्थ्यम्। तथा च बलवद्भिः निन्दितबलैः इन्द्रिया प्यात्मवश्यतया धर्तु मसमर्थैः अजितेन्द्रियै रिति यावत्। कृतः द्वेषो येषु तान् अजितेन्द्रियाणा मेकमातृप्रसूतानामपि त्वद्भ्रातॄणां मयि द्वेषः। तव तु जितेन्द्रियायाः अत एव मद्याथात्म्याभिज्ञाया स्त्वयि ममेव मयि प्रीतिः अभ्यधिकैवेति प्रकृतोपचारप्रशंसायां तात्पर्यम्। प्रायः प्रायशः त्यक्त नृपासनं यैस्तान् शापवशात् सिंहासनानर्हवंशप्रभवत्वादिति भावः। पक्षान्तरे तु उभयविभूतिनायकस्य परमेष्ठिनो मम केवलप्राकृतजनाधिष्ठेय नृपासनस्याऽयोग्यत्वादिति भावः। मम भर्ता नारायण इत्थे इदं मत्पुत्रस्थापदोऽपो नृपासन मधितिष्ठे देवेत्यनारायणत्वसम्भावनानिरासा येद मुक्तम्। नृपासनपरित्यागस्याऽभिनयमात्रत्वा त्कोऽपि तात्पर्यम्॥ १२ ॥

किञ्च, सत्कुलप्रसूतानां त्वादृशीना मनिर्धारितकुलोत्पथवर्त्मकमादृशानुवर्तनं दुःखहेतु रित्याह-अस्पष्टेति। वर्त्म गतिः प्रकारः जातिरिति यावत्। किमयं वसुदेवसुतः क्षत्रियः , उत नन्दात्मजः तृतीयवर्णप्रसूत इत्येव मस्पष्टं संशयविषयं वर्त्म येषां तेषां, अलोकपथं लोकविरुद्धपथं उत्पथमित्यर्थः। ईयुषा मुन्मर्यादाना मित्यर्थः । एवंविधानां मादृशां पुंसां पदवी मास्थिता अनुवृत्ताः स्त्रियः त्वद्विधाः हे सुभ्रु! प्रायशः सीदन्ति क्लिश्यन्ति। पक्षान्तरे तु अस्पष्टवर्त्मनां दुर्ज्ञेयस्वरूपस्वभावानामपि [2]अलोक[2] पथम् [3]ईयुषाम्[3] अकर्मवश्याना माचारं चेष्टित मिति यावत्। प्राप्तानां कुर्वतामपीत्यर्थः । पुंसा मस्माकं पदवीं याथात्म्य मास्थिताः मा मनुवर्तमाना एव स्त्रियः प्रायशः सीदन्ति। "षद्लृ गतौ", गत्यर्था बुद्ध्यर्थाः विदन्त्येवेत्यर्थः मा मननुवर्तमानास्तु एवं विधाना म प्यस्माकं पदवीं न विदुरेव। अतः मा मनुवर्तमानायाः मद्याथात्म्याभिज्ञाया स्तव मदुपचरणं युक्तमेवेति॥ १३ ॥

किञ्च, लोके कुरूपोऽप्याढ्य एव स्त्रीणा मभिमतः , अहं त्वनाढ्यः न त्वादृश्या वरणीय इत्याह-निष्किञ्चना इति। नास्ति किञ्चन स्वं येषां ते निष्किञ्चनाः निर्धना इति यावत्, पृषोदरादित्वात् साधुः। तर्हि यूयं केषां प्रियाः के च युष्माकं प्रिया इत्यत्राह- निष्किञ्चनेति। मादृशा[4]मेव जनानां वयं प्रिया स्ते च प्रिया येषां तथाभूताश्चेत्यर्थः। [5]तथाहि तस्मादेव हेतोः हे सुमध्यमे! नोऽस्मान् प्रायश आढ्याः सम्पन्ना न भजन्ति नानुवर्तन्ते। ★पक्षान्तरे तु नास्ति किञ्चनाऽनवाप्यं येषां ते निष्किञ्चनाः [6]अवाप्तसमस्तकामा इत्यर्थः। निष्किञ्चनाना मनन्यप्रयोजनाना मेकान्तिजनानां प्रियाः तस्मा दाढ्याः अभिजनादिमदैः आढ्यम्मन्या जनाः न मां भजन्ते, अनन्यार्हशेषत्वानन्यशरण्यत्वानन्यभोग्यत्वरूपाकारत्रयशालिनी त्वं मामेव भजसे इ त्युचितमेवे त्यभिप्रेतम्॥ १४ ॥

किञ्च, "विवाहश्च तथा मैत्री समयोरेव शोभते" इति न्यायेनाऽसमयोः आवयो स्सम्बन्धो न शोभत एवे त्यभिप्रायेणाह- ययोरिति। ऐश्वर्येण सहिता आकृतिः ऐश्वर्याकृतिः , ऐश्वर्यमाकृतिश्चेत्यर्थः । तत्र जन्म कुलम्। आकृति स्सौन्दर्यम्, ययो रात्मसमं परस्परानुरूपं वित्तादिकं भवे दस्ति तयोरेव विवाहो मैत्री च, उत्तमाधमयो रस्मादृशयोस्तु क्वचि त्कदाचिदपि न, नोचित इत्यर्थः । पक्षान्तरे तु वित्तदिभि रसमयोरपि स्वभावतः शेषशेषिणो रावयो स्सम्बन्धोऽनुरूपः, न तु विषमयोः त्वच्चैद्ययोरिति॥ १५ ॥

---

1. K.T.W. omit त्वं 2- -2 B.T.W.अलौकिक 3--3 B.T.W. omit 4. B. °शानामेव 5. K. omits तथाहि ★'पक्षान्तरे तु' इत्यारभ्य 'न मां भजन्ते' इत्यन्तो भागः B प्रकाशे न लभ्यते। 6. T.W.आप्त

विज० वरणे गुणानाह-प्राप्तानिति। वाचा दत्ता, देववृषोपमान् देवश्रेष्ठसमानान्॥ ११ ॥

स्ववरणाङ्गीकारे दोषा नाह-राजभ्य इति। अर्थित्वादिगुणोपेतान् नृपा न्हित्वा, राजभ्य इत्यदिदोषयुक्ता नस्मान् कस्मात् प्राप्तेत्यन्वयः॥ १२ ॥

एवंविधपुरुषप्राप्तौ योषितां भयं भवतीत्याह-पुंसामिति। अलोकपथ मीयुषां लोकविलक्षणमार्गवर्तिनां पुंसां पदवी मास्थिताः योषितः प्रायः सीदन्तीत्यन्वयः॥ १३ ॥

अस्मा द्दोषाच्च वयं न वरणीया इत्याह-निष्किञ्चना इति। आढ्या राजकुमार्यः॥ १४ ॥

अयं चैको हेतुः लोके विवाहे इत्याह-ययोरिति। ऐश्वर्याकृतिः ऐश्वर्ययुक्ताकारः, भवः सौन्दर्यम्॥ १५॥

वैदर्भ्येत दविज्ञाय त्वयाऽदीर्घसमीक्षया।
वृता वयं गुणै र्हीना भिक्षुभिः श्लाघिता मुधा[1] ॥ १६ ॥

[2-]अथाऽऽत्मनोऽनुरूपं[-2] वै भजस्व क्षत्रियर्षभम्[3]।
येन त्व माशिषः सत्या इहाऽमुत्र च लप्स्यसे॥ १७ ॥

चैद्य[4]साल्वजरासन्धदन्तवक्त्रादयो नृपाः।
[5-]मम द्विषन्ति वामोरु[-5] रुक्मी चाऽपि तवाग्रजः॥ १८ ॥

तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये।
आनीताऽसि मया तन्वि[6] तेजोऽपहरताऽसताम्[7]॥ १९ ॥

उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः।
आत्मलब्ध्याऽऽस्महे पूर्णा [8-]गेहयोर्ज्योतिरक्रियाः[-8] ॥ २० ॥

---

1 MI.V °दा 2- -2 K. अथात्ममनोऽरूप 3 MIV पुरुषर्ष० 4 B.G.J.M.Ma शा० 5- -5 M.Ma द्विषन्ति मां वरारोहे 6 B.G.J. भद्रे, M.Ma हृपद्मा, MIV त्वद्य 7 K.W तेजसा ह० 8- -8 M.Ma नेहात्मसदृशाः क्रियाः

**श्रीध० वैदर्भीति।** न दीर्घा समीक्षा विचारो यस्या स्तया॥ १६ ॥

**अथेति।** अथ इदानीमपि॥ १७ ॥

तर्हि किमि त्यानीताऽह मिति चे त्तत्राह-**चैद्येति।** मम मां द्विषन्ति॥ १८ ॥

**तेषामिति।** स्मयनुत्तये गर्वापनयनाय॥ १९ ॥

स्त्रीणा मतिदुस्सह मौदासीन्य मकामत्वं चाह-**उदासीना** इति। गेहयोः देहगेहयोः उदासीना अत एव ज्योतिरक्रियाः ज्योतिः प्रदीपादि तद्वत् साक्षिमात्रतया क्रियारहिता आस्महे वर्तामहे इति॥ २० ॥

**वीर०** सर्व मेत द्वैषम्य मविचार्यैव त्वया वृता वयमित्याह-**वैदर्भीति।** हे वैदर्भि ! अदीर्घा अदूरा समीक्षा विचारो यस्या स्तया त्वया एत न्मदुपन्यस्त मनानुरूप्य मविदित्वा वयं वृताः। कथम्भूताः? गुणै र्वरणीयत्ता हेतुभूतैः श्लाघ्यै र्गुणैः रहिताः अत एव भिक्षुभिः मुधा मिथ्या असद्गुणारोपेणेति भावः। श्लाघिताः न त्वाढ्यैः। पक्षान्तरे तु दीर्घसमीक्षयेति च्छेदः। अविज्ञाय अविचार्य जगन्मातुर्मम चैद्यादयः पुत्रस्थानीया इति तद्वत्तं वित्तजन्मादिसाम्य मविचार्य इति यावत्, दीर्घा भगवदसाधारणगुणान्वेषणपरा समीक्षा विचारो यस्याः, तया त्वया गुणैः परमात्मासाधारणैः कल्याणगुणै र्हीनाः 'ओहाङ्गतौ' सङ्गता इत्यर्थः। अत एव भिक्षुभिः नारदादिभिः मुधा व्यर्थं प्रयोजनान्तरनिरपेक्षं श्लाघिताः वयं वृताः॥ १६ ॥

किमत इत्यत आह-अथेति। अथ अधुनेत्यर्थः। क्षत्रियर्षभं चैद्यादन्यतमं भजस्व। तं विशिनष्टि -येन सेव्यमानेन क्षत्रियर्षभेण हेतुना इहाऽमुत्र च लोके सत्याः सती राशिषः कामान् लप्स्यसे[2] । पक्षान्तरे तु क्षत्रियर्षभं क्षत्रियश्रेष्ठत्वेनावतीर्णं मामित्थं भजस्व। इह लीलाविभूतौ अमुत्र नित्यविभूतौ च येन मया सेव्यमानेन सह सत्याः आशिषः कामान् मदनुभवात्मकान् लप्स्यसे इत्यर्थः॥ १७॥

तर्हि मां किमर्थ मानीतवा नसी त्यत आह- चैद्येति। हे वामोरु! शोभनोरु! मम द्विषन्ति मां द्विषन्तीत्यर्थः॥ १८॥

ततः किमत आह-तेषामिति। वीर्यमदेनान्धानां विवेकशून्यानां गर्वितानां च तेषां चैद्यादीनां च स्मयनुत्तये गर्वापाकरणाय मया त्व मानीता। कथम्भूतेन? असतां खलानां, तेजसामिति कर्मणि षष्ठी, तेजांसि हरता। पक्षान्तरे तु यद्यपि मदनपायिनी त्वं केनाप्युपायेन मामेव प्राप्तवत्यसि, तथापि तेषां स्मयनुत्तये मयाऽऽनीताऽसीति प्रासङ्गिकोक्तिः। युक्तं चैत दित्यभिप्राये णात्मानं विशिनष्टि-असतां तेजांसीति पूर्ववत्। हरता "लक्षणहेत्वोः" (अष्ट. 3-2-126) इति शत्रादेशः, हर्तुम्, अवतीर्णेनेति शेषः॥ १९ ॥

क्षीणा मतिदुस्सह मौदासीन्यमकामुकत्वं चात्म न्याह-उदासीना इति। गेहयोः उदासीनाः गृहशब्दपर्यायो गेहशब्दोऽप्यत्र कलत्रवेश्मोभयपरः, अत एव द्विवचनान्तनिर्देशः,अत एव न स्त्र्यपत्यार्थकामुकाः दारेषणापुत्रेषणाधनेषणारहिताः। तत्र हेतुः-आत्मलब्ध्या स्वात्मानुभवलाभेनैव पूर्णाः अलम्पटाः ज्योतिषा स्वयंप्रकाशस्वात्मस्वरूपस्फुरणेन हेतुना अक्रियाः[3-] निष्क्रियाः[-3] प्राकृतचेष्टारहिताः आस्महे गृहे[4] वर्तामहे इत्यर्थः। पक्षान्तरेऽर्थस्तु यथोक्त एव। तात्पर्यन्तु असतां स्मयनुत्तये अवतीर्णस्य मम गृहमेधिधर्मानुवर्तनं विडम्बनमात्रम्। अन्यथैवंविधस्य एत न्न घटते इति॥ २० ॥

1. B. adds एव 2. B. adds प्राप्स्यसे 3- -3 T.W.omit 4. B. omits गृहे

विज० एतद्गुणागुणसर्वस्वं अदीर्घसमीक्षया अल्पबुद्ध्या, मुधा वृथा॥ १६-१८ ॥

स्मयनुत्तये अहङ्कारनिरासाय असतां दुरात्मनां तेजोपहरता अभिमानलक्षणप्रभावप्रणाशं कुर्वता मया नीताऽसीत्यन्वयः॥ १९॥

स्वभावं सूचयति-उदासीना इति। उदासीना विषयव्यापारशून्याः खपुष्पा दिव दप्रसिद्धा वा। न स्त्र्यपत्यार्भकामुकाः कलत्रपुत्रधनलोलुपा न। आत्मलब्ध्या स्वरूपलाभेन पूर्णा अलम्बुद्धयः आस्महे। इह क्रियाश्च आत्मसदृशाः, कर्माणि जीवकर्मतुल्यानि न भवन्ति अतिमानुषाणीत्यर्थः॥ २०॥

[1-] श्रीशुक उवाच [-1]

एताव दुक्त्वा भगवा नात्मानं वल्लभामिव।
मन्यमाना मविश्लेषात् तद्दर्पघ्न उपारमत्॥ २१ ॥

इति त्रिलोकाधिपते[2] स्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम्।
आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह॥ २२ ॥

पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभि रञ्जनाऽसितैः[3]।
आसिञ्चती कुङ्कुमरूषितौ[4] स्तनौ तस्था वधोमुख्यतिदुःखरुद्धवाक्॥ २३ ॥

तस्याः सुदुःखभयशोकविनष्टबुद्धे र्हस्ताच्छ्लथद्वलयतो व्यजनं पपात।
देहश्च विक्लवधियः [5-]सहसैव मुह्यन्[-5] रम्भेव वातविहता[6] प्रविकीर्य केशान्॥ २४ ॥

[7]तद्दृष्ट्वा भगवा न्कृष्णः प्रियायाः प्रेमबन्धनम्।
हास्यप्रौढि मजानन्त्याः[8] करुणः सोऽन्वकम्पत॥ २५ ॥

---

1- -1 M.Ma omit, K.W बादरायणिरुवाच 2 B,G,J,M,Ma °केश 3 BG.J.M Ma °ऽसितैः; MI.V °ऽऽवृतैः 4 MI V °त 5- -5 M Ma सहसैव विम्यत्, MI V सहसा विमुह्यन् 6 BGJ वायुवि०, MI V वातनि० 7 MI V त द० 8 B.G.J M Ma.MI V W °न्त्याः

**श्रीध० एतावदिति।** अविश्लेषाद्धेतोः आत्मानमेव वल्लभा मिति, एवार्थे इवशब्दः, [1-]आत्मानमेव वल्लभाम् सर्वासु अहमेव वल्लभा नाऽन्येति मन्यमाना गर्विता इत्यर्थः[-1]॥ २१,२२ ॥

चिन्तालक्षणमाह- **पदेति।** नखैररुणा श्रीः कान्तिर्यस्य तेन [2-]सुजातेन[-2] सुकोमलेन पदा॥ २३ ॥

**तस्या इति।** सुदुःख मप्रियश्रवणात्, भय त्यागशङ्कया, शोको[3]ऽनुतापः, तै र्विनष्टा बुद्धिः यस्या स्तस्याः। श्लथन्ति पतन्ति वलयानि यस्मात् हस्तात्। देहश्च पपात। विक्लवा विवशा धीः यस्या स्तस्याः॥ २४ ॥

**तदिति।** हास्यस्य प्रौढिं गाम्भीर्यम्। [4-]अन्वकम्पत दया कृतवान् एतस्या अबलायां परिहास मजानन्त्या किमर्थं मच्चतुरत्व मिति विररामेत्यर्थः[-4]॥ २५ ॥

---

1- -1 BJ omit 2- -2 MI V omit 3 BJ अ० 4- -4 BJ omit

**वीर० एतावदिति।** अविश्लेषात् विश्लेषाभावाद्धेतो रात्मानमेव वल्लभाम् इतरपत्न्यपेक्षया भगवतो निरतिशयप्रीतिविषया मन्यमाना रुक्मिणीं तद्दर्पघ्न इव तस्या दर्प मपनेतुकाम इवेत्यर्थः। एताव दुक्त्वा उपारमत् तूष्णीमास्त। इवशब्दस्य व्यवहितेनापि दर्पघ्न इत्यनेन सम्बन्धः स्वारस्यात्, दर्पघ्न इवेत्यनेन वस्तुत स्ता मुपचरन्ती मभिनन्दितु मुक्त्वेति सूच्यते॥ २१ ॥

ततः किमासी दित्यत्राह-**इतीति।** देवी रुक्मिणी आत्मनः [1]स्वस्य प्रियस्य त्रिलोकाधिपतेः तदश्रुतपूर्वं कदाप्यश्रुतम् इति एवविध मप्रियं वच आकर्ण्य भीता त्यागसम्भावनाभीता अत एव हृदि जातवेपथुः सञ्जातकम्पा रुदती च अपारां चिन्ताम् अवाप, यद्यप्यभिप्रायान्तरेणैव प्रयुक्तानि वचांसि, यद्यपि च साक्षा ल्लक्ष्म्यवतारभूता सापि तदभिप्राय जानात्येव, तथाऽपि किमय रामावतारे इवाऽत्रापि केनापि व्याजेन मां जिहासति, किं वाऽभिलषती [illegible] सम्भावनामात्रेणैव जातवेपथुः रुदती च चिन्ता मवापेति तात्पर्यम्॥ २२ ॥

चिन्तालक्षणमाह- **पदेति**। नखैः अरुणा श्रीः कान्ति र्यस्य तेन सुकोमलेन पादेन वामपादाङ्गुष्ठेन भुवं लिखन्ती अञ्जनेनाऽऽविलैः व्याप्तै रश्रुभि श्चन्दनचर्चितौ स्तनौ सिञ्चती दुःखेन रुद्धा वा म्यस्या स्सा अधोमुखी च अवतस्थे॥ २३॥

**तस्या** इति। सुदुःखम् अप्रियश्रवणजन्यं भयं त्यागसम्भावनाजन्यं शोकश्च तै र्विनष्टा स्फुरणरहिता बुद्धि र्यस्या स्तस्याः रुक्मिण्याः श्लथन्ति तात्कालिकदुःखप्रभवकार्श्येन भ्रश्यन्ति वलयानि यस्मात् तस्मा द्धस्ता द्व्यजनं पपात, भूमा विति शेषः। तथा विक्लवा अधृष्टा[2] धीर्यस्या स्तस्याः, हेतुगर्भ मिदम्। तस्चात् तस्याः देहः मुह्यन् मोहं प्राप्नुवन् केशा न्विकीर्य पपात केशपाशविश्लथनपूर्वकं पपातेत्यर्थः। यथा वातेन चण्डमारुतेन विहता रम्भा कदली पतति तद्वत्॥ २४॥

**तदिति**। स भगवा न्कृष्णः हास्यप्रौढिम् चातुर्यम्[3] अजानत्या[4] इव लक्षितायाः प्रियायाः तत्प्रेमबन्धनं प्रेमपाश मवलोक्य करुणावान् अन्वकम्पत अनुपदमेव भीत इव अकम्पतेत्यर्थः॥ २५ ॥

---

1 BTW स्वस्याः 2 B omits न 3 K.T W omit चातुर्यम् 4 BTW °न्त्याः

**विज०** अविश्लेषात् निरन्तरसाहित्येन स्थिते आत्मानं वल्लभामिव मन्वानां प्रियतमाम्॥ २१ ॥

यदा हरिणा एतादृशं दुःखकरं वचन मुक्त्वोपरतं, तदा देवी आत्मनः प्रियस्य त्रिलोकेशपते रश्रुतपूर्व मप्रियं वचन माश्रुत्य दुरन्तां चिन्तां जगाम। "प्रत्ययारम्भे प्रतिवचनोपक्रमे द्वौ" इति वचनात्। इति वचनोपक्रमभीता, अत एव हृदि जातवेपथुः उत्पन्नकम्पा। तल्लक्षणमाह-रुदतीति॥ २२ ॥

एतदेव विवृणोति-**पदेति**। रक्तनखप्रभया अरुणा श्री र्यस्य स तथा। तेन सुजातेन[1] कोमलेन पदा भुवं लिखन्ती अञ्जनासितैः कृष्णैः अश्रुभिः कुङ्कुमरूषितौ स्तनौ आसिञ्चती[2] अधोमुखी भूत्वा तस्था वित्यन्वयः॥ २३ ॥

सुखदुःखादिभि र्विनष्टा इदं कर्तव्य मित्यपश्यन्ती बुद्धि र्यस्या स्सा तथा। श्लथद्विगलत् वलयो यस्य स तथा तस्मात्। केशा न्प्रविकीर्य देहश्च पपात। कीदृशः? बिभ्यत् सञ्चलन् कम्पमान इत्यर्थः। रम्भा कदली॥ २४॥

हास्यं नाम शृङ्गारादिष्वेको रसः, नस्य प्रौढिं समुद्रेकं, करुणः करुणारसं प्राप्तः, अस्य विवरण मन्वकम्पतेति॥ २५॥

---

1. B.omits सुजातेन 2 B °न्ती

**पर्यङ्का दवरुह्याऽऽशु ता मुत्थाप्य चतुर्भुजः।**
**केशा न्समूह्य[1] तद्वक्त्रं प्रामृज त्पद्मपाणिना॥ २६ ॥**

**प्रमृज्याऽश्रुकले नेत्रे स्तनौ चोपहतौ शुचा।**
**आश्लिष्य बाहुना राज न्ननन्यविषयां सतीम्॥ २७ ॥**

सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः।
हास्यप्रौढ[2] भ्रमच्चित्तामतदर्हां सतां गतिः॥ २८ ॥

[3]श्रीभगवानुवाच[3]

मा मा वैद भ्र्यसूयेथा जाने त्वां मत्परायणाम्।
त्वद्वचः श्रोतुकामेन क्ष्वेल्या[4]ऽऽचरित मङ्गने॥ २९ ॥

मुखं च प्रेमसंरम्भस्फुरिताधर मीक्षितुम्।
कटाक्षेपा[5]रुणापाङ्ग[6] सुन्दरभ्रुकुटीतटम्॥ ३० ॥

---

1 BGJ °मु० 2 BGJ °ढिभ्र० 3- -3 KW omit, Ml श्रीकृष्णः, V श्रीकृष्ण उवाच 4 M.Ma °लाऽऽ० 5 B.M.Ma °णा० 6 M.Ma °ङ्ग

श्रीध० पर्यङ्कादिति। चतुर्भुज इति उत्थापनाऽऽश्लेषणवक्त्रपरिमार्जनाद्यर्थ माविष्कृतचतुर्भुज इत्यर्थः। समूह्य[1] निबध्य॥ २६॥

प्रमृज्येति। अश्रुकले[2] अश्रुभिः कले[3] शोभिते। शुचा शोकाश्रुभिः॥ २७॥

सान्त्वयामासेति। सान्त्वयामास अनुनीतवान्॥ २८ ॥

मेति। मा माम्। त्वद्वचः किं नु वदिष्यसीति श्रोतुकामेन श्रोतुमिच्छता क्ष्वेल्या नर्मणा एव माचरित मुक्तं, नतु तत्त्वतः। हे अङ्गने! हे सुन्दरि! ॥ २९ ॥

मुखश्चेति। प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कम्पितोऽधरो यस्मिंस्तत्। कटशब्देन कटाक्षाः तै राक्षेपैः अरुणा वपाङ्गौ यस्मिं स्तत्। अत एव सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिं स्तत्॥ ३० ॥

---

1 B.J °मु० 2 MlV omit अश्रुकले 3 BJ omit कले

वीर० चतुर्भुजः उत्थापनाऽऽश्लेषणवक्त्रपरिमार्जनार्थम् आविष्कृतचतुर्भुज इत्यर्थः। केशान् समूह्य[1] निबध्य पद्मतुल्येन पाणिना वक्त्रं प्रामृजत्॥ २६ ॥

किञ्च प्रमृज्येति। अश्रूणां कलाः बिन्दवो ययो स्ते नेत्रे तथा शुचा शोकाश्रुणा उपहतौ स्तनौ[2] च परिमृज्य, हे राजन्! बाहुना आलिङ्गय सान्त्वज्ञः सतां गतिः प्राप्यः श्रेयःप्राप्त्युपायभूतो वा विभु[3] र्भगवान् हास्यप्रौढेः भ्रम च्चित्तं यस्या स्ताम्, अतदर्हाम् इत्य मपहसितु[4] मनर्हां, तत्र हेतु रनन्यविषयां न विद्यते अन्यः पुरुषान्तरं विषयः ज्ञानविषयो यस्या स्तां दीनां सतीं रुक्मिणीं सान्त्वयामास॥ २७,२८ ॥

सान्त्वनप्रकार मेवाह-मा मेति। हे वैदर्भि! मां माऽसूयेथाः मह्य मसूयां मा कृथा इत्यर्थः। त्वाम् अहमेव परायणं परमप्राप्यं यस्याः तथाभूतां जाने, तर्हि किमर्थ[5] मित्थ मुक्त मित्यत आह- त्वद्वच इति। तव वचः श्रोतुमिच्छता किन्तु वदिष्यति तत् शृणोमीत्येवं कामयमानेन मया, हे अङ्गने! क्ष्वेल्या नर्मणा एव माचरितं कृत मुक्त मिति यावत्॥ २९॥

किञ्च, मुखञ्चेति। प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कम्पितोऽधरो यस्मिन्। कटशब्दोऽत्र अपाङ्गसामीप्या द्गण्डस्थलपरः, कटयोः गण्डस्थलयोः अधिकरणयोः आक्षेपाः कोपावेशेन चञ्चलनेत्राघाता स्तै रुणावपाङ्गौ नेत्रान्तौ यस्मिन् तत्, सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिन् तत्, तव मुखञ्चेक्षितुं द्रष्टु माचरित मिति पूर्वेण सम्बन्धः॥ ३० ॥

---

1. B. °मु० 2. B. adds प्रमृज्य 3. B. °ढ्वा 4. B °व 5. K. omits इत्थम्

विज० चतुर्भुजः कृष्णः द्वाभ्यां भुजाभ्यां उत्थाप्य द्वाभ्यां केशा न्समूह्य[1] एकीकृत्य बद्ध्वा वक्त्रं प्रामृजत् इति द्योतनाय चतुर्भुज इति प्रत्युक्तम्॥ २६ ॥

अश्रूणां कला ययो स्ते तथा। शुचोपहतौ कृशौ स्तनौ च, अनन्यविषयाम् अन्यस्पर्शनायोग्याम्॥ २७ ॥

अतदर्हां प्रेमगर्भविषादवचनायोग्याम्॥ २८ ॥

मा मां प्रति माऽसूयेथाः गुणे दोषदर्शनं न कुरु। तस्या तव वचः श्रोतुकामेन मया क्ष्वेल्या नर्मलक्षणलीलया आचरितं कृतम्॥ २९ ॥

प्रेमसहितसंरम्भेण स्फुरिताधरं कम्पमानाधरोष्ठं कटाक्षेण तिर्यक्दर्शनेनाऽरुणापाङ्गेन रक्तनेत्रप्रान्तेन सुन्दर भ्रुकुटीतटम्॥ ३०॥

---

1. B. °मु०

अयं हि परमो लाभो गृहेषु गृहमेधिनाम्।
य न्नर्मै[1] र्नीयते यामः प्रियया भीरु भामिनि॥ ३१ ॥

[2-]श्रीशुक उवाच[-2]

सैवं भगवता राजन् वैदर्भी परिसान्त्विता।
ज्ञात्वा त[3]त्परिहासोक्तिं प्रियत्यागभयं जहौ॥ ३२ ॥

बभाष[4] ऋषभं पुंसाम् ईक्ष[5]ती भगवन्मुखम्।
सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत!॥ ३३ ॥

[6-]रुक्मिण्युवाच[-6]

[7-]न न्वेत देव म[-7]रविन्दविलोचना[8]ऽहं यद्वै भवा [9-]न्न भवत[-9] स्स[10]दृशी विभूम्नः।
क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाऽहं गुणप्रकृति[11] रज्ञगृहीतपादा॥ ३४ ॥

सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा।
[12-]नित्यं क[-12]दिन्द्रियगु[13]णैः कृतविग्रह स्त्वं त्व[14]त्सेवकै र्नृपप[15]दं विधुतं तमोऽन्धम्॥ ३५ ॥

---

1 MMa माषिणि 2- -2 K.M.Ma.W omit 3 MMa ता परि 4 M.Ma.W °षे 5 B.G.J.M.V वीक्षन्ती 6- -6 K.W वैदर्भ्युवाच 7- -7 B.G.J.M.V नन्वेवमेतदर० 8 B.G.M.Ma.M.V °नाऽऽह 9- -9 B.G.J.M.Ma °न् भगवतोऽस० 10 M.Ma °शो 11 M.Ma °रन्य 12- -12 M.Ma यो नित्य के० 13 B.G.J.M.V गणैः 14 M.Ma त्वत्सेवया नृ० 15 B पदे

श्रीध० ननु कलहे त[1]व किं कौतुकं सुख वाऽत आह-अयं हीति। नर्मै नर्मभिः। यामः कालः॥ ३१,३२॥

बभाष इति। भगवत स्तस्य ऐश्वर्ययुक्तं मुखं सव्रीडेन हासेन रुचिरेण स्निग्धेन च अपाङ्गेन वीक्षमाणा॥ ३३॥

★"असमत्वं भयं दुर्गाश्रयणं प्रबलैः कलिः। अराजत्व मवि[2]ज्ञत्वालौकिकेहावसादनम्॥निष्किञ्चनत्वं तत्प्रीति राढ्यानादरणीयता। अनौचित्यं निर्गुणत्वं वृथाश्लाघा च भिक्षुभिः॥ औदासीन्य मकामत्वं स्वदोषा न्[3]षोडशाऽसतः। अज्ञत्वादीर्घदर्शित्वे भैष्म्या राज्ञां बहू न्गुणान्। कृष्णनर्मोदितान् भैष्मी न्यषेध त्तद्गुणस्तवैः॥" भगवतः स्वनिन्दापराणीव यानि वा[4]क्यानि[5] तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते स्म। तत्र यदुक्तं - "कस्मा न्नो ववृषेऽसमान्"(भाग.10-60-11) इति तत्राऽसाम्यं सत्यमेवेत्याह-नन्वेवमिति।हे अरविन्दविलोचन! त्र्य[6]धीशः त्रयाणां ब्रह्मादीनाम प्यधीशो नियन्ता त्वं क्व। क्व चाऽहं गुणप्रकृति स्त्रिगुणस्वभावा प्राकृतगुणमयी प्रकृतिर्वा। ननु त्वमेवाऽधीश्वरी श्रीः सर्वै रुपास्यत्वा [7-]दिति चे द[-7]त आह-अज्ञैः सकामैः गृहीतौ पादौ अ[8]ज्ञैः यस्या स्सा॥ ३४ ॥

यदुक्तं "राजभ्यो बिभ्यतः सुभ्रु[9]! समुद्रं शरणं गतान्" (भाग.10-60-12) इति तत्राह- सत्यमिति। हे उरुक्रम! इति भयाभावं दर्शयति-गुणाः शब्दादय एव राजन्त इति राजान स्तेभ्यो भयादिवेति। अन्तर्हृदये समुद्रे तद्वदगाधे विषयाकारै रपरिच्छिन्ने इत्यर्थः। शेते निश्चलतया प्रकाशते। उपलम्भनमात्र श्चैतन्यघन आत्मा भवा निति। "बलवद्भिः कृतद्वेषान्" (भाग.10-60-12) इति यदुक्तं तदपि सत्य मित्याह- नित्यमिति। कदिन्द्रियगणैः। वृत्त्यभिप्रायेण बहुवचनम्। कुत्सित इन्द्रियगणो येषामिति वा। तै स्त्वं नित्यं कृतविग्रहः, तेषु तवाऽप्रतीतेः। यदुक्तं 'त्यक्तनृपासनान्' इति, तद[10]पि युक्तमेवेत्याह-त्वत्सेवकैरिति। नृपाणां पद मासन मन्धं गाढं तम एव तत्। अविवेकबहुलत्वात्। त्वत्सेवकैरेव त[11] त्यक्तं किं पुन र्वक्तव्यं त्वया त्यक्तमिति॥ ३५ ॥

---

1 BJ omit तव ★ इमे श्रीधरीयाः श्लोकाः 2 B.J °ज्ञाता 3 B.J °ता 4 B.J वचनानि 5 B.J add वचनानि 6 B.J °ता गु० 7- -7 M.V °दित्यत 8 B.J omit अज्ञैः 9 B.J °भ्रूः 10 M.V omit अपि 11 M.V. omit तत्

**वीर०** ननु कलहे किं कौतुकं सुखं वा, अत आह -**अयं हीति**। कोऽसौ? हे भीरु! हे[1] भामिनि! कोपिनि! प्रियया सह नर्मैः प्रणयकलहैः यामो नीयत इति यत् एष परमो लाभ इत्यर्थः। सुखमेवेति भावः। यामग्रहणं घटिकाद्युपलक्षणम्॥ ३१॥

**सैवमिति**। त द्भगवदुक्तं परिहासार्थोक्तिरूपमेव ज्ञात्वा प्रियकर्तृकत्यागसम्भावनाप्रयुक्तं भयं तत्याज॥ ३२॥

किञ्च- **बभाष** इति। हे भारत! सव्रीडहासेन रुचिरेण स्निग्धेनाऽपाङ्गेन भगवतो मुखं वीक्षमाणा तं पुंसा मृषभं पुरुषोत्तम माबभाषे उवाच॥ ३३॥

भाषणमेवाह- **नन्विति** पञ्चदशभिः[2]। तत्र ताव द्यदुक्तं "कस्मा न्नो ववृषेऽसमान्" (भाग.10-60-11) इति त दनुभाष्य प्रतिभाषते- नन्विति। ननु हे अरविन्दलोचन! तिष्ठतु ताव दसाम्यं गुणान्तरैः, लोचनसौन्दर्येणैव त्वं स्वतुल्यरहित इति तत्सम्बोधनाभिप्रायः। अहं भवतः असदृशी असमानेति यद्भवानुवाचे त्यनुवादः, यद्य प्यसमानिति भगवदुक्त्या भवत्या अह मसम इति प्रतीयते, एवं च मम भवा नसम इति य दित्येव मेवाऽनुवदितव्यम्। तथापि भगवदभिप्रायक्रोडीकारेणानूदितम्। अनुवादमुखेनापि मया सह भवा नसम इति वक्तु मनुचित मित्यभिप्रायेण च, यद्भवा नुवाच त त्तात्त्विक मेवेति वाक्यशेषः। तदे[3] वोपपादयति- भूम्नः स्वरूपस्वभावाभ्याम् अपरिच्छिन्नस्य, हेतुगर्भ मिदम्। क्वेत्यादि-भगवान् षाड्गुण्यपूर्णः त्र्यधीश स्त्रिलोकनायकः स्वे महिम्नि स्वासाधारणायां नित्यविभूता वभिरत स्त्वं क्व? गुणप्रकृतिः त्वद्गुणानुवर्तिस्वभावा त्वच्छन्दानुवर्तिनी त्वत्परतन्त्रेति यावत्। ननु त्वमपि स्वतन्त्रा ब्रह्मादिभि रुपास्यमाना तदभिमतफलप्रदा चे त्यत आत्मानं विशिनष्टि-अज्ञगृहीतपादेति। अज्ञैः मम त्वत्पारतन्त्र्यमजानद्भिः गृहीतौ उपासितौ पादौ यस्या स्साऽहं क्व? अभिज्ञा स्तु न मां स्वतन्त्रा मुपासते। किन्तु मां त्वत्परतन्त्रां पुरुषकारमात्रं कृत्वा मद्विशिष्टं त्वामे वोपासते इति भावः॥ ३४॥

यदुक्तं "राजभ्यो बिभ्यत स्सुभ्रु समुद्रं शरणं गतान्" (भाग० 10-60-12) इति, तत्र प्रतिभाषते **सत्यमिति**। हे उरुक्रम! उरवः विपुला स्त्रिलोकीसङ्ग्राहकाः क्रमाः पादविन्यासाः यस्य तथाभूत! पादक्रमैरेव त्रिलोकीं सङ्कृतस्तव कथं राजभ्यो भयमिति तदभिप्रायः। भयादिवेति भगवदुक्त्यनुवादः, राजभ्यो भयात् समुद्रं शरणं गत इत्येतत्सत्यमेवेत्यर्थः। वस्तुतो भयाभावसूचकेनेवशब्देन राजभ्यो बिभ्यत इति त्वदुक्ता बबिभ्यत इति च्छेदो यावदभिमत इति सूच्यते। तर्हि कुत श्शरणं गत इत्यत्राह-गुणेभ्य इति। मत्पितृदुग्धाब्धिगतसमुद्रत्वागाधत्वादिधर्मेभ्यः, समुद्रत्वादिधर्मयोगा[4] ल्लवणार्णवं[4] शरणं गत इत्यर्थः। तदपि किमर्थ मित्यत आह-उपलम्भनमात्रे इति। सप्तम्यन्तमिदम्। उपलम्भनमात्रे प्रदर्शनमात्रे निमित्ते मयि प्रीत्यतिशयप्रदर्शनार्थं शरणं गत इत्यर्थः। मात्रशब्देन न तु स्वपरित्राणार्थमिति सूच्यते। अन्त श्शेते समुद्र इति दृष्टान्तार्थम्। अन्त रित्यव्ययं मध्ये वर्तते। यथोपलम्भनमात्रे निमित्ते भवा नन्तस्समुद्रे क्षीराब्धिमध्ये शेते, तद्व ल्लवणार्णवं शरणं गत इत्यर्थः। युक्तं चैतदि त्यभिप्रायेण विशिनष्टि-आत्मेति। ममेति शेषः। आत्मा निरतिशयप्रीतिविषयः, यो यस्य प्रियतमः, स तस्यात्मेति तथा, तथा चोक्तं भगवता- "प्रियो हि ज्ञानिनोऽत्यर्थ महं, स च मम प्रियः" (भ.गी. 7-17) "ज्ञानी त्वात्मैव मे मतम्" (भ.गी 7-18) इति च। एवञ्च त्वत्प्रियतमाया मम प्रियतमत्वा न्मत्सम्बन्धिगुणाश्रये तव प्रीति रुचितैवेति भावः। "बलवद्भिः कृतद्वेषान्" (भाग० 10-60-12) इत्यत्र प्रतिभाषते-नित्यं कदिन्द्रियगुणैः कृतविग्रह स्त्वमिति। कच्छब्देन बलवद्भि रित्यत्र मतुप् निन्दार्थकत्वेन व्याख्यातः। कदिन्द्रियाणां गुणा विषयाः शब्दादयो येषां तैः कुत्सिता

नीन्द्रियाणि गुणाः तद्विषयाः शब्दादयश्च येषा तै रिति वा, त्व नित्य कृतो विग्रहः यस्य सः कृतद्वेषः कृता प्रीति रिति यावत्। "प्राय स्त्यक्तनृपासनान्" (भाग 10-60-12) इत्यत्र प्रतिभाषते-त्वत्सेवकैरिति। नृपाणा पद मासनम् अन्ध गाढ तम एव। तमश्शब्दोऽत्र नरकपर्याय स्तद्धेतुपरः, नरकावहमित्यर्थः। हेतुगर्भमिदम्। तत्त्वात् नृपपद त्वत्सेवकैरेव विधुत तुच्छीकृत्य त्यक्तम्, किं पुन स्त्वयोभयविभूतिनायकेन त्यक्त मिति॥ ३५ ॥

---

1 B °काक्षणाद्यु° 2 KTW omit ननु 3 B ° °की 4 -4 KTW omit

विज० कामिव ज्जनविडम्बन मयाऽकारी त्याशयेनाह- अयमिति। प्रियया सह नर्मैः स्नेहगर्भपरिहासवचनै र्यामैः कालावयवो नीयत इति य दयमेव गृहस्थाना गृहेषु परमो लाभो हीत्यन्वयः॥ ३१ ॥

द्विविध वाक्य - इष्टसाधनावबोधकमेक,एक दुःखपरिहारात्मक, तत्र पश्चादुक्त दुःखविनाशकमिति भावेनाह-सैवमिति॥ ३२॥

पूर्वोक्त मभीष्टसाधनावबोधकत्वे नोपादेयमिति सूचयितुमाह-बभाष इति॥ ३३॥

देववृषोपमान् नृपान् हित्वा अस्मान् कस्मा द्वृतवती त्यत्राह-नन्विति। यद्वा, इह जीवराशौ आत्मसदृशा न सन्ति अस्माक क्रियाश्च ने[1] त्यस्योत्तरमाह[1]-नन्विति। वा इत्यय कृष्णोक्तवाक्यार्थारम्भे वर्तते। नन्वि त्यनुमतार्थे, भवान् यदाह समो नास्तीति एत देव ननु अनुमत, कथ तत्राह- नेति। विभूम्नः देशतः कालतो गुणतश्च अपरिच्छिन्नस्य व्याप्तस्य भवतः सदृशोऽन्यो नास्ति, किन्तु भवानेव। रामरावणयोः युद्ध मितिवत् मत्सदृशी त्वमसीति नेत्याह-क्वेति। भगवा नैश्वर्यादिगुणसामग्रीसमुद्रो भवान् क्व? राजादिव दन्याधीनत्व किं न स्यादिति तत्राह स्व इति। अनेन स्वार्था क्रिया नास्ती त्युक्त भवति। सत्त्वादिगुणप्रवर्तकत्वेन प्रकृतिशब्दवाच्याऽह क्व? तर्हि त्रिलोक्या कश्चि न्मत्समः स्यादि त्यतो नेति भावेनाह त्र्यधीश इति। त्रयाणा लोकाना त्रयाणा वेदाना त्रयाणा गुणाना वा। ईश इत्यनेन इन्द्रादिनिरासोऽभूदित्येत ल्लोकपालविभूतिभि रित्यस्योत्तरम् ब्रह्माद्यन्यतमोऽपि नेति भावेनाह-अन्येति। अन्यैः ब्रह्मादिभिः। अनेन महानुभावै रित्यस्योत्तर, क्वाह मित्यमुना श्रीमद्भि रित्यादेः॥ ३४ ॥

"राजभ्यो बिभ्यतः सुभ्रु!" (भाग 10-60-12) इति यदुक्तं तदर्धाङ्गीकारेण परिहरति-सत्यमिति। हे उरुक्रम! बाल्यादे रभिमानिजनशिरोरत्नराजिराजितमहापादन्यास! समुद्रेऽन्त श्शेते इति सत्यम्। किन्तु राजभ्यो बिभ्यत इति असत्यम्। तर्हि तद्व्यर्थ मुक्त, नेत्याह भयादिति। राजृ-दीप्ताविति धातोः कार्ये प्रकाशमानेभ्यः स्वशक्तिद्योतकेभ्यः सत्त्वादिगुणेभ्यो भयादिव, सज्जनशिक्षार्थ इवशब्दः। ससारावृत्तिहेतुभ्यो गुणेभ्यो बिभ्यज्जनः समुद्रिवत्सुलार्थी समुद्रादिजलवासेन यथा तपस्यति तथाऽहमिति। यद्वा पञ्चभूतमुद्रासहितत्वात् समुद्रे शरीरेऽन्तर्हृदि शेते य त्सत्यं तत् बिभ्यत् शब्दादिगुणेभ्यो भयादिव अङ्गुष्ठमात्रः "अङ्गुष्ठमात्रः पुरुषः" (म०ना० 16-5) इति श्रुतेः। शरीरान्तःस्थस्य जीवा दपिदोषा जननादिकमपि स्यादिति

तत्राह-उपलम्भनमात्र इति। केवलचिन्मयः, अतो न देहधर्मा अस्य स्युरिति भावः। एकत्र स्थितयोः जीवेशयोः विशेषः कथ मत्राह-आत्मेति। आत्मा तथाविधस्वभावः किंनामधेयो भवा नित्यतो वाऽऽह आत्मेति। आत्मा सुखमेवाऽऽददाति नाण्वपि दुःख मित्यात्मा। जीवस्तु शरीर मादाय शरीरान्तराणि निर्मिमीते इति तच्छब्दवाच्यः। "बलवद्भिः कृतद्वेषान्" (भाग. 10-60-12) इत्यस्य तात्पर्यं वक्ति य इति। यः अनित्ये केन्द्रियगुणैः कृतविग्रहः स त्वं तादृङ्माहात्म्यः "बलवा निन्द्रियग्रामः" (भार .1.APP. 114. 51A-2pr) इति स्मृतेः। बलवन्ति परिवर्तनवन्ति नानायोनि ष्वित्यतो नित्यानीन्द्रियाणि इत्युच्यन्ते। नियन्तु मशक्यत्वा द्बलवन्तीति भवत्प्रसादा दितरेषां इन्द्रियजयो भवतस्तु स्वत इति। "पराञ्चि खानि व्यतृणत् स्वयम्भूः" (कठ.उ 4-1) इति श्रुतेः। 'प्राय स्त्यक्तनृपासना नित्यत्राह-त्वत्सेवयेति। तव सेवा यस्याः साऽहं त्वत्सेवा तया त्वत्सेवया मया नृपासनं नृपपदं नृपशब्दवाच्यमात्रं, न तु नॄन् पान्तीति नृपालनरक्षणार्थेपितम्। अन्धं तमः प्रतिविधुतं तत्यजनं कृतमित्यर्थः। तस्मा द्भवानेव नृपशब्दमुख्यार्थत्वा त्तत्त्वज्ञैः सर्वै स्त्यक्तं दत्तं नृपासनं यस्मै स त्यक्तनृपासनः। शिशुपालादय एव त्यक्त मुज्झितं नृपासनं यै स्ते तथा त्वत्सेवया हेतुना वा ते त्यक्ताः॥ ३५॥

1- -1 Ma नेति तत्राह

त्वत्पादपद्म मकरन्दजुषां मुनीनां [1]वर्त्माऽस्फुटं नृपशुभि र्ननु दुर्विभाव्यम्।
यस्मा द[2]लौकिक मिवेहित मीश्वरस्य [3]भूम्न स्तवेहित मथो [4-]अनु ये भवन्त[-4]म्॥ ३६ ॥

निष्किञ्चनो ननु भवा न्न यतोऽस्ति किञ्चि द्यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः।
न त्वा[5] विद न्त्यसुतृपो[6]ऽन्तक माढ्यतान्धाः [7]प्रेष्ठो भवान् बलिभुजा मपि [8-]तेऽपि तुभ्य[-8]म्॥ ३७ ॥

त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम्।
तेषां विभो समुचि[9]तो भवत [10-]स्समाजः पुंसः स्त्रियाश्च[-10] रतयोः सुखदुःखिनो र्न॥ ३८ ॥

त्वं न्यस्तदण्डमुनिभि र्गदितानुभाव आत्माऽऽत्मदश्च जगता मिति मे वृतोऽसि।
[11-]हित्वा भवद्भ्रुव[-11] उदीरितकालवे[12]गध्वस्ताशिषोऽब्जभवनाकपती न्कु[13]तोऽन्ये॥ ३९ ॥

[14]जाड्यं वच स्तव गदाग्रज [15]यस्तु भूपा न्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम्।
सिंहो यथा स्वबलि [16]मीश [17]पशू न्स्वभागं तेभ्यो भया द्य दुदधिं शरणं प्रपन्नः॥ ४० ॥

1. M.Ma वर्त्म॰ 2. M.I.V. °मपी॰ 3 B.G.J.M.Ma भूमं॰ 4- -4 M.Ma अनु मे मवन्ति; M.I.V. °ऽनुनये भवन्तम् 5. B. त्वां 6. M.Ma °न्ति॰ 7 M.Ma प्रेष्ठसतां 8- -8 M.Ma योऽन्तरास्से 9 M.Ma °दि॰ 10 M.Ma °तः प्रसादस्त्वयांश्च यश्च॰ 11- -11 M.Ma मुक्त्वा भवद्भ्रुवद्॰ 12 M.Ma गन्ध 13. M.Ma °ऽन्यान् 14. M.Ma सत्यं 15 M.Ma M.I.V. यस्त्व 16 M.Ma °मात्मु 17 M.Ma °शुं स्व॰

श्रीध० "अस्पष्टवर्त्मनां पुंसा मलोकपथ मीयुषाम्" (भाग 10-60-13) इति यदुक्तं तदपि तवैवेत्याह- त्वत्पादेति। नृपशुभि र्नराकारैः पशुभिः। किं पुन र्वक्तव्यं तव वर्त्माऽस्फुटमिति। किञ्च, यस्मा द्ये भवन्त मनुवर्तन्ते तेषा मपीहित मलौकिकमिव[1]। अथो अतः किमु वक्तव्यं तवेश्वर स्येहित मलौकिक मित्यर्थः[2]। "आस्थिताः पदवीं सुभ्रु[3] प्रायः सीदन्ति योषितः" (भाग. 10-60-13) इत्यस्य परिहारं वक्ष्यति-यद्वाञ्छया-इति पञ्चमश्लोकेन[4]॥ ३६ ॥

"निष्किञ्चना वयं शश्व न्निष्किञ्चनजनप्रियाः। तस्मा त्प्रायेण न ह्याढ्या मां भजन्ति[5] सुमध्यमे" (भाग. 10-60-14) इत्येतत्च्छ्लोकोक्तं दोषत्रयं परिहरति -निष्किञ्चन इति। दरिद्रतालक्षणं निष्किञ्चनत्वं तु तव न घटत इत्याह-यस्मा इति। अन्यतो बलिभुजः पूज्या अपि ब्रह्मादयो यस्मै भवते बलिं हरन्ति तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः। 'निष्किञ्चनजनप्रियाः' इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निन्दा स्यादिति स्वयम प्युभयथा स्तौति-प्रेष्ठो भवानिति। बलिभुजां ब्रह्मादीनां[6] लोकेश्वराणां त्वं प्रेष्ठ स्तेऽपि तुभ्यं[7] तवेति। "तस्मा त्प्रायेण[8] न ह्याढ्या मां भजन्ति" (भाग 10-60-14) इति तस्योत्तरं न त्वा विदन्तीति। आढ्यतयाऽन्धाः त्वा त्वामन्तकं न विन्दन्ति । अत स्ते असुतृपः असूनेव तर्पयन्ति, न त्वां भजन्तीत्यर्थः॥ ३७ ॥

बलिभुजामपि भवा न्प्रेष्ठ इत्यत्र हेतुं[9] वदन्ती 'ययो रात्मसमं वित्तम्' (भाग 10-60-15) इत्यनेनोक्त मनौचित्यं परिहरति-त्वं वै इति। परमात्मा परमानन्दस्वरूपः[10]- "एतस्यैवानन्दस्याऽन्यानि भूतानि मात्रा मुपजीवन्ति" (बृह.उ.4-3-32) इति श्रुतेः। समाजः सेव्यसेवकभावलक्षणसम्बन्धो, न तु पुंसः स्त्रियाश्च मिथो रतयोः। अत एव तत्कृतसुखदुःखिनोः, तदाकुलयोरित्यर्थः॥ ३८ ॥

"भिक्षुभिः श्लाघिता मुधा[11]" (भाग 10-60-16) इत्यस्य परिहारः-त्वमिति। भिक्षुपदव्याख्यानं न्यस्तदण्डै र्मुनिभिरिति। मुधेत्यस्य परिहारः-आत्मेति। यदर्थे सर्वं प्रियं भवति तस्य जगता मात्मन स्तव वरणं न वृथेत्यर्थः। किञ्च अत्मद इति। "वैदर्भ्ये तदविज्ञाय त्वयाऽदीर्घसमीक्षया" (भाग 10-60-16) इति स्वस्मि न्नुक्तं दोषद्वयं परिहरति-इतीति। इति ज्ञात्वैव मे मया वृतोऽसीत्यज्ञानपरिहारः, हित्वे त्यदीर्घसमीक्षा[12] त्वपरिहारः। भवतो [13]भ्रुवः[13] सकाशा दुदीरितो यः काल स्ततोस्य वेग स्तेन ध्वस्ता आशिषो येषां ता न्ब्रह्मादीनपि विहाय। कुतोऽन्ये वराका इत्यर्थः॥ ३९ ॥

स्वाज्ञनं परिहृत्य पुरुषान्तरगुणवर्णनप्रदीप्तकोपसंरम्भेण तस्मि न्नेवाज्ञान मापादयति - जाड्यमिति। सिंहो यथा पशू न्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनदेनैव जरासन्धादी न्विद्राव्य मां स्वभागं श्रियं य स्त्वं हृतवा नसि तस्य तव राजभ्यो भया दुदधिं प्रपन्न इति य द्वचो भाषणं त ज्जाड्यं मान्यं न घटत इत्यर्थः॥ ४० ॥

---

1 MIV °मेव 2 MIV omit अर्थः3 BJ सुभ्रूः 4 BJ श्लोके 5 B.J add एतत् 6 MIV अ० 7 B त्वां 8 MIV add इति 9 B.J omit स्व 10 B.J omit भाव 11 BJ °र्थे 12 B.J °क्षापरि० 13- -13 MIV इति भावः

वीर० अस्पष्टवर्त्मना मित्यत्र प्रतिभाषते-त्वत्पादेति। तव पाद पद्मयोर्योभिकरन्दः अनुभवरसात्मकः तं सेवमानानां मुनीनामेव तव वर्त्म याथात्म्यम् अस्फुटम्। किं पुन रितरेषा मिति भावः। तदेवाह-नृपशुभि रिति। ननु हे भगवन्!

नृपशुभिः नर एव पशव स्तैः पशुतुल्यै र्नृभिः पशुव जिह्वोपस्थसुखमात्राभिज्ञैः नृभि रित्यर्थः। दुर्विभाव्यं दुःखेनापि विभावयितुं चिन्तयितुम् अशक्यम् इति। अलोकपथ मीयुषा मित्यत्र प्रतिभाषते-यस्मादिति। यस्मात् ये त्वा मनुवर्तन्ते तेषा मपीहितं चेष्टितं अलौकिकमेव। अथो अतः किमु वक्तव्यं भूम्न स्तवेश्वरस्य ईहित मलौकिकमिमिति अर्थः॥ ३६ ॥

"आस्थिताः पदवीम्"(भाग.10-60-13) इत्यादौ प्रतिभाषयते 'यद्वाञ्छया' इत्यष्टमेन। तावत्, निष्किञ्चनाः, इत्यत्र प्रतिभाषते- निष्किञ्चन इति। ननु हे विभो! त्वं निष्किञ्चिन इति सत्यमेव, कुतः? यतः किञ्चिद प्यनवाप्यं नास्ति यस्य, तथाभूत स्त्वं निष्किञ्चन इत्यर्थः। दरिद्रतालक्षणनिष्किञ्चनत्वं तु तव न घटत इत्याह-यस्मात् इति। बलिभुजः बलिं पूजां भुञ्जते इति तथा। अन्येभ्यः पुजार्हा अपि ब्रह्मादयो यस्मै तुभ्यं बलिं पूजां हर न्त्यर्पयन्ति कुर्वन्तीत्यर्थः। तस्य सर्वेश्वरस्य भवतः दरिद्रता न घटते इत्यर्थः। निष्किञ्चनजनप्रिया इत्यस्योत्तरं प्रेष्ठो भवानित्यादि। निष्किञ्चनजनप्रिया इत्यत्र बहुव्रीहितत्पुरुषान्यतरत् उभावपि वा, सर्वदा चेदृश एव भवा नित्याह- प्रेष्ठ इति। बलिभुजां पूजार्हाणां नारदादीनाम्, अकिञ्चनानाम् अनन्यप्रयोजनानां प्रेष्ठो भवान्, तथा तेऽपि बलिभुजोऽपि तुभ्यं तव प्रेष्ठाः। तस्मात् प्रायेण इत्यस्योत्तरमाह नत्वेति। आढ्यतया अभिजनादिभिराढ्यत्वाभिमानेनान्धाः विवेकशून्याः, अन्तकं अन्तं करोतीत्यन्तकः तथाविधं त्वा त्वां न विदन्ति न भजन्ते, असुतृपः असू निन्द्रियाण्येव तर्पयन्तीति तथा अन्तकमित्यस्य कालरूपेणाऽऽयुर्हरन्त मित्याशयः॥ ३७॥

प्रेष्ठः इत्यत्र हेतुं वदन्ती "ययो रात्मसमं वित्तम्" (भाग. 10-60-15) इत्यादिनोक्तम् अनौचित्यं परिहरति-त्वं वै इति। समस्तपुरुषार्थस्वरूपः फलात्मा अभीप्सितफलरूपः आत्मा च। यद्वा, अभीष्टतपःफलरूपः सर्वेषा मिष्टतमं हि फलं सुखं, त्वं तु निरवधिकानन्दरूपः। चतुर्विधपुरुषार्थनिर्वाहकत्वस्वरूपस्य निरतिशयानन्दरूपस्य च तव सुखलेशसाधनभूतवित्तादिमद्भिः साम्यं दूरापास्त मेवेति भावः। तर्हि निस्समत्वादेव मम त्वया असमया सह विवाहोऽनुचित एव जात इत्यत आह-यद्वाञ्छयेति। यस्मिन् त्वद्दास्ये वाञ्छया कृत्स्नं त्वद्दास्यव्यतिरिक्तं सर्वं विसृजन्ति त्यजन्ति नेच्छन्तीति यावत्। अत एव ते जनाः सुमतय स्तेषां तव च समाजः सङ्गति रुचित एव, न हि तारतम्येऽपि स्वभावतः शेषशेषिणो स्सम्बन्धो नोचितः। अतः त्वद्दास्यमात्राकाङ्क्षिण्याः मम तव य सम्बन्धः सूचित एवेति भावः। ममाऽन्येन तु सम्बन्धोऽनुचित इत्यभिप्रेत्याह-पुंस इति। रतयो र्मिथोरतयो रत एव तत्कृतसुखदुःखिनोः पुंसः स्त्रियाश्च समाजो नोचित इत्यर्थः। यः केवलमैथुन्यततप्रयुक्त सुखदुःखानुभवार्थ स्समाजः स तु नोचितः। य स्त्वावयो श्शेषशेषिलक्षण स्समाजः स उचित एवेति भावः॥ ३८ ॥

"भिक्षुभिः श्लाघिता मुधा" (भाग. 10-60-16) इत्य स्योत्तरमाह- त्वमिति। भिक्षुपदव्याख्यानं न्यस्तदण्डैरिति, भिक्षुभिः सर्वभूतसुहृ त्त्वां प्रार्थयमानैः न्यस्तदण्डै रित्यस्यापि अयमेवार्थः। गदितः श्लाघितः प्रभावो यस्य तथाभूतः, तत्र हेतुं वदन्ती मुधे त्यस्योत्तरमाह-आत्मेति। त्रिजगता मात्मा आत्मदः आत्मपर्यन्तप्रदः। "य आत्मदा बलदा" (ऋक्.सं. 10-121-2) इति श्रुतेः। आत्मत्वा दात्मपर्यन्तवदान्यत्वाच्च गदित इत्यर्थः। आत्मद इत्यनेन मुक्तप्राप्यत्वं विवक्षितम्। न ह्यात्मनः प्राप्यस्य च श्लाघा प्रयोजनान्तरापेक्षा, किन्तु स्वसत्तालाभार्था प्राप्यप्राप्त्यर्था चेति। मुधेवेति सत्यमुक्त मित्यर्थः। आत्मन श्शरीरादि विलक्षणतया स्तुतौ हि शरीरसत्तासिद्धिः, अथ "वैदर्भ्ये तदविज्ञाय त्वयाऽदीर्घसमीक्षया" (भाग० 10-60-16) इत्य स्योत्तरमाह- इतीति। इतीत्थम्भूतं भवन्तं, ज्ञात्वेति शेषः। अब्जभवनाकमतीन् ब्रह्मेन्द्रादीन् भवतो भ्रुव स्सकाशादुदीरितो यः काल स्तस्य वेगेन ध्वस्ता आशिषो येषां तथाभूतान् हित्वा विहाय एवंविधत्वा न्मम तेषां पुत्रस्थानीयत्वाच्च

तद्गतवित्तादिप्रयुक्त साम्य मविचार्यमेवेति भावः। एव हित्वे त्यनेन अविज्ञायेति व्याख्यातम्। ये मया त्वं वृतोऽसि, अजयोन्यादय एवाविचार्याः कुतोऽन्ये चैद्यादयो विचार्याः स्यु रित्यर्थः॥ ३९ ॥

पुन स्सिंहावलोकितन्यायेन "राजभ्यो बिभ्यतः" (भाग.10-60-12) इत्य स्योत्तरं वक्तु मात्मानयनदृष्टान्तेन निर्भयत्वं स्थापयन्ती स्पष्ट मबिभ्यत इत्येव प्रयोक्तव्ये संशयापादकेन ' राजभ्योऽ बिभ्यतः' इति पूर्वरूपात्मक सन्धिना प्रयुक्तं वचः शृण्वतां जाड्यावह मित्याह-जाड्यमिति। हे गदाग्रज! य स्त्वं शार्ङ्गनिनदेन शत्रून् भूपान् विद्राव्य पलाय्य मां जहर्थ हृतवानसि, तस्येदं वचो जाड्यं शृण्वतां सन्धिविशेष मजानतां त्वयि भयसम्भावनात्मका ज्ञानरूपजाड्यावह मित्यर्थः, हरणे दृष्टान्तः- यथा सिंहः पशून् महिषादीन् विद्राव्य स्वभागं हरति, तद्वदिति। किन्तद्वचो यज्जाड्यं तदाह-तेभ्य इत्यादि। तेभ्यः शत्रुभूतेभ्यो भया दुदधिं समुद्रं शरणं प्रपन्न इति यत् तत्॥ ४० ॥

---

1 B adds वर्त्म 2 B.T.W omit इति 3 K.T.W omit तव 4 K.T.W omit भवतः 5- -5 T.W omit 6 B त्वामिति। 7 K omits अन्तक 8 K.T.W omit इति 9 B omits तथा 10 K.T.W प्रेष्ठम् 11 K.T.W °युक्तम् 12 TW omit त्व 13 K.T.W omit असमया 14 TW भगवन्त 15 BTW पलाययित्वा 16 BTW ०के ज्ञान

विज० अस्पष्टवर्त्मनाम् इत्यस्यार्थमाह-त्वत्पादेति। तव पादपद्ममकरन्दसेविनां मुनीनां वर्त्म स्वरूपं स्फुटं स्पष्टं तथापि त्वदुक्तं सत्यं नृपशुभि रज्ञानिभि र्दुर्विभाव्यं दुर्ज्ञेयं तस्मात्, अस्पष्ट मित्युच्यते, यद्वा मुनीनां वर्त्म नृपशुभिः स्फुटं दुर्विभाव्यं, किमु तव वर्त्मेति। अलोकपथ मीयुषा मित्यस्या प्ययमर्थ इत्याह-यस्मादिति। हे भूमन्! ईश्वरस्य तवेहित मलौकिकमिव यस्मात् अथो तस्मात् तवेहित मनु अनुकूलानि मम ईहितानि भवन्ति, अलौकिकानीति शेषः। तवेहित मनु क्रियमाणानि ममेहिता न्यलौकिकानि यस्मा त्तस्मात् किमु तवेहित मलौकिक मिति वा॥ ३६ ॥

'निष्किञ्चना वयमिति' इदं निबोधयतः किञ्चि त्किञ्चिन्मात्रं नास्ति किन्तु सर्वमेवास्ति अतो भवान् निष्किञ्चन इत्युच्यते न त्वनाढ्यत्वं निष्किञ्चनत्वम् इत्याह- यस्मा इति। सर्वप्राणिदत्तबलिभुजो प्यजाद्या यस्मै बलिं हरन्ति स भवा न्निष्किञ्चन इति विदुषां परिषदि, न शोभत इति शेषः। तस्मात् प्रायेण नो ह्याढ्या न भजन्ती त्यत्राऽ वधारयामहे न त्वेति आढ्यतान्धाः ऐश्वर्यमदान्धाः त्वा त्वां न विदन्ति न जानन्ति न लभन्ते चेत्यन्वयः। दूरस्थत्वा न्न विदन्तीति नेत्याह-अन्तिकमिति। "नेदिष्ठ मन्तिकतमम्"(अम.को.3-69)इत्यमरः। अत्र हेतुः असुतृप इति स्वेन्द्रियपोषणपरत्वात्। अन्तिकस्थत्वं स्पष्टयति बलिभुजामिति। य स्त्वं बलिभुजां ब्रह्मादीनाम प्यन्त रास्से तिष्ठसि किमुतेतरेषां, नियन्तृत्वेनेति शेषः। अत्र प्रमाणमाह प्रेष्ठ इति। सतां प्रियतमः। "प्रियो हि ज्ञानिनोऽत्यर्थ महं स च मम प्रियः" (भ० गी० 7-17) इत्यतो ज्ञानिदर्शनं प्रमाणम्। "कस्मै देवाय हविषा विधेम" (श्वेता० उ० 4-13) "इमा रुद्राय स्थिरधन्वने गिर" इत्यादि श्रुतिः॥ ३७ ॥

"ययो रात्म(रेव) समं वित्तम्" (भाग० 10-60-15) इत्याद्युक्त मनुवदति- त्वं वै इति। वैशब्दो हेत्वर्थः। त्वं फलात्मा सुखात्मा परमानन्दस्वरूपो वै यस्मात् तस्मात् समस्तपुरुषार्थमयोऽसि इत्यर्थः। मयट्प्रत्ययः प्रधानार्थः। सर्वस्मा त्प्राधान्यस्वरूपः समस्तपुरुषै रर्थ्यमानस्वरूप इत्यर्थः। ये सुमतयः सम्यग्ज्ञानिनो यस्यै तव अभिलाषया अनुग्रहेच्छया कृत्स्नं पुत्र मित्रवित्तादिसर्वं विसृजन्ति मुञ्चन्ति त्यक्तसर्वैषणा इत्यर्थः। अनेन प्रभृते किमपेक्ष मत्राह- तेषामिति। हे

विभो! तेषां सुमतीनां भवतश्च प्रसादः पूर्णसुखलक्षणो गुणः समुदितः सम्यगुक्तः। समानो वा नास्तीत्यस्य कोऽभिप्रायः इत्यत उक्तं यश्चेति। चोऽप्यर्थे, यश्च कोऽपि नास्तीत्यर्थः। ननु युवयोः कोऽपि गुणः समो नास्ति किं, मत्राह-त्रय्यां चेति। त्रय्यां चशब्दात् स्मृतिष्वपि च तयोः युवयोः यश्च कोऽपि गुणोऽस्ति स क इत्यतो रतयो रित्यनेन सूचितः "अग्निष्टोमेन स्वर्गकामो यजेत" इति वेदोक्तकर्मकर्तृत्वेन सुमतीनां त्रयीरतत्वं भवतो वेदप्रतिपाद्यत्वेन च इति, एवमाकारेण समत्वम्। ननु जीवस्य चेतनत्वेन ज्ञानानन्दादिगुणोऽस्त्येव, अतः कथं समो गुणो नास्तीत्यत्राहसुखदुःखिनो रिति। सुखदुःखिनोः युवयोर्मध्ये केवलपरिपूर्णसुखो भवान्, ते सुमतयो भवज्ज्ञानपर्यन्तं दुःखिन इति। ननु पश्चात् समगुणत्व मापन्नं, "यो वानन्दा द्विमुक्तः ज्ञानानन्दी भवति" इति श्रुतेः, इतीयमाशङ्का "अल्पसम्पूर्णशक्तित्वा दल्पपूर्णसुखत्वतः" इति स्मृतिवचनेन परिहरणीया। यद्वा ये सुमतयः कृत्स्नं विसृजन्ति तेषां भवतः पुंसां भवदीयपुरुषाणां य स्त्वं फलात्मा परमानन्दमोक्षरूपः समुदितः सम्य गुक्तः। त्रय्यां त्रिवेदविहितमार्गे वर्तमानयोः सुखदुःखिनोः धर्माधर्मानुष्ठानेन तत्तत्फलभुजो र्विहितप्रतिषिद्धकर्त्रो र्य स्त्वं फलत्मा न समुदितः स त्वं मे वृतोऽसीत्यन्वयः॥ ३८ ॥

'भिक्षुभिः श्लाघिता मुधे'त्यस्योत्तरं शृणु- त्वमिति। न्यस्तो वाङ्मनःकायलक्षणो दण्डो यैस्ते न्यस्तदण्डाः तै र्मुनिभिः वाचंयमैः निर्जितेन्द्रियग्रामैः यतिभि रित्यर्थः। गदितानुभावः स्पष्टीकृतप्रभावस्त्वम्, अदीर्घसमीक्षयेति यदुक्तं तत्राह-आत्मेति। जगता मात्मा स्वामी भजता मात्मदः सायुज्यमुक्तिप्रदश्चेति दीर्घसमीक्षया निश्चित्य मे मया त्व मभिहितः वृतोऽसि। "हि हेतावववधारणे" (वैज.को. 8-7-9) इति यादवः। भवतः भव ञ्जायमान मुदीरणं प्रेरणं यस्य स भवद्भवदुदीरितः स चाऽसौ कालः भवद्भवदुदीरितकालः तस्य गन्धेन ध्वस्ताशिषः निरस्तसम्पदः, अद्भ्यो जातोऽब्जः ब्रह्मा "सोऽद्भ्य एव पुरुषं समुद्धृत्याऽमूर्छयत्" इति श्रुतेः। भवो रुद्रः नाकपति रिन्द्रः, एता न्मुक्त्वा अन्यां श्चैद्यादीन् मुक्त्वेति कुतः किमु वक्तव्य मित्यर्थः। एषा मदीर्घसमीक्षया वृतोऽसीत्यर्थः॥ ३९ ॥

"राजभ्यो बिभ्यतः" (भाग. 10-60-12) इत्येतत् प्रकारान्तरेणाऽऽक्षिपति- सत्यमिति। हे गदाग्रज! चशब्द एवार्थे। य स्त्वमेव शार्ङ्गनिनदेन भूपा न्विद्राव्य मां जहर्थ हृतवानसि। कथमिव? यथा सिंहः स्वभागं पशुलक्षणं स्वबलिं स्वस्य भरणे योग्यं हरति तथा तेभ्यो राजभ्यो भयात् य दुदधिं शरणं प्रपन्न इति य त्तत् तव वचः सत्यं साधुभावं त्यजतीति अस्मद्व्यामोहनार्थ मुक्त मिति भावः॥ ४० ॥

यद्वाञ्छया नृपशिखामणयोऽङ्ग वैन्यजायन्तनाहुषगयादय[1] ऐकपत्यम्।
राज्यं विसृज्य विविशु र्वनमम्बुजाक्ष सीदन्ति तेऽनुपदवीं[2] त इहाऽऽस्थिताः किम्॥ ४१ ॥

काऽन्यं[3] श्रयेत[4] तव पादसरोजगन्ध माघ्राय सन्मुखरितं जनताऽपवर्गम्।
लक्ष्म्यालयं त्वविगणय्य[5] गुणालयस्य[6] मर्त्यं[7] सदोरुभय मर्थविविक्तदृष्टिः[8]॥ ४२ ॥

तं त्वाऽनुरूप मभजं जगता मधीश मात्मान मत्र च परत्र च कामपूरम्[9]।
स्या न्मे[10] तवाङ्घ्रि[11] ररणं सृतिभि र्भ्रमन्त्या[12] यो[13] वै भजन्त[14] मुपयात्यनृतापवर्गः[15]॥ ४३ ॥

तस्याः[16] स्यु रच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः।
यत्कर्णमूल[17] मरिकर्शन नोपयाया द्युष्मत्कथा[18] मृडविरिञ्चि[19]सभासु[20] गीता॥ ४४ ॥

त्वक्श्मश्रुरोमनखकेशपिनद्ध मन्त[21]र्मांसास्थिरक्तकृमिविट्कफपित्तवातम्[-21] ।
जीवच्छवं भजति का[22]न्तमति र्विमूढा या ते पदाब्जमकरन्द मजिघ्रती स्त्री[23] ॥ ४५ ॥

1 MMa °दा° 2 M.Ma ना° 3 MMa कास्त्री 4 K श्रयीत, M.Ma.w वृणीत 5 M.Ma ०याद्वम् 6 B.G.J M Ma मर्त्या° 7 M, Ma °ऽशिषोरु 8 K विवेक 9 MMa रूपम्, W पूर्णम् 10 M.Ma शरण 11 MMa ग्रु० 12 M.Ma °त्या 13 M.Ma ये; w या 14- -14 M.Ma °न्ति उत यान्त्य० 15 MMa °र्गम्० 16 MMa क० 17 BG.J र्षण 18 MIV हर 19 BG.J.M Ma °श्च 20 w °ताः 21- -21 M.Ma °ड्भरितान्त्रवीतम् 22 M.Ma काम 23 MIV सा

**श्रीध०** यच्चान्यत् 'अस्पष्टवर्त्मनाम्' इत्यादिना, अर्था त्वां भजन्तः सीदन्ती त्यवसादनं श्रमावहत्व मुक्तं तदपि मन्द मेवेत्याह- **यद्वाञ्छयेति**। यस्य तव भजनवाञ्छया नृपोत्तमाः- अङ्गो वेनस्य पिता, वैन्यः पृथुः जायन्तो भरतः, नाहुषो ययातिः, गयश्चाऽऽदिः येषा ते। य[1] एते[2] तव अनु[3]पदवीं मार्गम् आस्थिताः[4] आश्रिता स्ते किं सीदन्ति, न सीदन्त्येव। अपि तु त्वत्पदं प्राप्ता इत्यर्थः। एवं च कोपावेशेनाऽवसादनस्य परिहारादस्पष्ट वर्त्मना मित्येत दानन्तर्यं विहायात्रोत्कर्षः॥ ४१॥

यच्चोक्तं "अथाऽऽत्मनोऽनुरूपम्" (भाग.10-60-17) इति[5] तत्राह- **काऽन्यमिति** श्लोकद्वयेन। गुणाना मालयस्य तव पादसरोजगन्धं जनताया अपवर्गं मोक्षरूपं लक्ष्म्या आलयं सत्सेव्यं सद्भि र्मुखरितं वर्णित माघ्राय त मविगणय्य मर्त्यं[6] मरणधर्मकं[7] सदा उरुभयं यस्य त मन्यं का स्त्री श्रयेत सेवेत। अर्थे विविक्ता दृष्टिर्यस्याः सा। गुणालयस्येत्यनेन गुणै र्हीना इति यदुक्तं त दपास्तम्॥ ४२ ॥

अत स्त्वामेवाऽभज मित्याह-**तंत्वेति**। किञ्च प्रार्थयते- स्यादिति। अरणं शरणम्। सृतिभि र्देवतिर्यगादिभि[8] र्जन्मभिः। [9-]श्रुतिभिरिति[-9] पाठान्तरे त्वर्थवादबहुलकर्मश्रवणै रित्यर्थः। कथम्भूतस्य तव? य स्त्व मनृतस्य संसारस्याऽपवर्गो[10] नाशो यस्मात् सः भजन्त मुपयाति आत्मसात्करोति तस्य तवाङ्घ्रिरिति। भीतस्य हि शरणमेवाऽनुरूपं भजनयोग्यं, अतः त्वाम् अह[11] मभज मित्यर्थः॥ ४३॥

ये चोक्ता राज्ञां बहवो गुणाः "राजपुत्रीप्सिता भूपै र्लोकपालविभूतिभिः" (भाग.10-60-10) इत्यादिना, तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गं चाह द्वाभ्याम्- **तस्याः स्युरिति**। खरा इव केवलं भारवाहाः, गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः, श्वान इवाऽवमताः बिडाला इव कृपणा हिंस्राश्च, भृत्या इव किङ्करा नृपाः, तस्या दुर्भगायाः पतयः स्युः, यस्याः कर्णपथं त्वत्कथा न प्राप्नुयादिति॥ ४४ ॥

**त्वगिति**। तथाहि-ते पदाब्जमकरन्द मजिघ्रती सती या स्त्री विमूढा सा कान्तोऽय मिति मतिः यस्या स्सा कान्तमतिः जीवच्छवं भजति। त्वगादिभि र्बहिः पिनद्धं छन्नम् अन्त र्मांसादिमय मिति॥ ४५ ॥

1 MI omits ये 2 V omits एते 3 B.J omit अनु 4 B.J omit आस्थिताः 5 J.omits इति 6 B.J मर्त्यं 7 B.J धर्मिकं 8 MIV °दिजo 9- -9 B.J omit 10 MIV add त्वा 11 MIV omit अहम्

**वीर०** "आस्थिताः पदवीं सुभ्रु प्राय स्सीदन्ति योषितः" (भाग.10-60-13) इत्य स्योत्तरमाह- **यद्वाञ्छयेति।** यस्मिन् त्वद्दास्ये वाञ्छया ये अङ्गादयो नृपोत्तमाः ऐकपत्यं, ततो मत्वर्यीयोऽच्, तद्राज्यं त्यक्त्वा वनं विविशुः, तत्राऽङ्गो वेनस्य पिता, वैन्यः पृथुः, जायन्तो[1] भरतः, नाहुषो ययातिः ते नृपशिखामणयो हे अम्बुजाक्ष[2-]! तव[-2] पदवीम् आस्थिताः इह सीदन्ति किम्[1]? क्लिश्यन्ति किम्, अपि त्विह पदवीं याथात्म्यं सीदन्ति उपासिषते। उपासिषुः उपासनादशायामपि त्वदनुभवात्मकं सुखम् अनुबभूवुः, इह लोके आस्थिताः अवस्थिताः किं? किं तु त्वत्साधर्म्यम् अवापुरि त्यावृत्त्याऽन्वयः॥ ४१ ॥

"अथाऽऽत्मनोऽनुरूपम्" (भाग.10-60-17) इत्य स्योत्तरमाह-**काऽन्यमिति** श्लोकद्वयेन। गुणानां कल्याणानामाश्रयस्य तव पादसरोजयोः गन्धं, कथम्भूतम्? जनताया जनसमूहस्यापवर्गं निरतिशयफलरूपं लक्ष्म्याः ममाऽऽलयम् आश्रयं सेव्यमिति यावत्, सद्भिः मुखरित माघ्रातम् अविगणय्याऽनादृत्य मर्त्यं मरणशीलं सदा उरु भयं यस्य सः, तमन्यं पुरुषं का वा स्त्री अर्थविवेकदृष्टिः स्वहिताहितविभागपरिशीलनपरा चे दाश्रयेत? गुणाश्रयस्येत्यनेन गुणैर्हीना इत्येत त्पूर्वोक्तविधया व्याख्येय मित्यभिप्रेतम्॥ ४२ ॥

अत स्त्वामेवाऽहमभजमित्याह- **तमिति।** त मुक्तविधं' किञ्चाऽनुरूपं शेषित्वादिति भावः। एवंविधं त्वा त्वामेव अभजम्, किञ्चि त्प्रार्थयते-स्यादिति। सृतिभिः गतिभि र्जन्म भिरिति यावत्। "राघवत्वेऽभव त्सीता रुक्मिणी कृष्णजन्मनि, देवत्वे देवदेहेयं मनुष्यत्वे[3] च मानुषी"(वि.पु.1-9-144,145) इत्युक्तावतारविशेषै रित्यर्थः। भ्रमन्त्याश्चरन्त्याः त्वत्सहचारिण्या मम तवाङ्घ्रिरेव अरणं शरणं गृह्याश्रय इति यावत्, स्यात्। कथम्भूतस्य? योऽनृतस्य पापस्य तन्मूलसंसारस्य वा अपवर्गोऽवसानं यस्मा त्तथाभूतः भजन्त मुपयाति अनुभजते, तस्य तवेति सम्बन्धः॥ ४३ ॥

ये राज्ञां गुणाः "राजपुत्रीप्सिता भूपैः (भाग.10-60-10) इत्यादिनोक्ता स्तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गं चाह द्वाभ्यां-**तस्या स्स्युरिति।** हे अच्युत! ये नृपाः स्त्रीणां गृहेषु स्त्रीप्रधानकेषु गृहेषु खरा इव केवलं भारवाहाः, गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः श्वान इव अवमताः गृहपालनाद्यर्थं द्वारस्थाश्च, बिडाला इव कृपणाः पदा ताड्यमाना अपि पुनःपुनः अनुवर्तमानाश्च भृत्या आज्ञाधारकाश्च ते तस्या दुर्भगायाः पतय स्स्युः, तामेव विशिनष्टि- यदित्यादिना। हे अरिकर्शन! शत्रुहन्! त्वं यस्याः कर्णमूलं कर्णपथं नोपयायाः नोपगतवान्, तथा मृडविरिञ्चादिभिः सभायां तेषां सभायां वा गीता स्तव कथाश्च नोपाययुः, या त्वां त्वत्कथाश्च कदाऽपि न श्रुतवती, तस्याः पतय स्स्यु रिति सम्बन्धः॥ ४४॥

तथा हीत्याह- **त्वगिति[4]।** या स्त्री तव पदाब्जमकरन्दम् अजिघ्रती नाघ्रातवती कदाप्यश्रुतत्वत्कथा अत एव विमूढा[5-] अत[-5] एव कान्तः प्रियतमोऽयं ममेति मति र्यस्या स्सा बहिः त्वगादिभिः पिनद्धं छन्न मन्त मांसादयो यस्मिन् तत्, जीवदपि शवतुल्यं कलेबरं यस्य तं पुरुषाधमं भजते, विट् मलम्, त्वगादयः प्रसिद्धाः॥ ४५ ॥

---

1. K.T.W omit किम्? 2- -2 K.T.W omit 3. K omits शरणं 4. K.T.W. omit अयं 5- -5 K.T.W. जीवित

**विज०** "प्रायः सीदन्ति योषितः" (भाग.10-60-13) इत्यत्र वक्ति - **यद्वाञ्छयेति।** नृपशिखामणयोऽङ्गादयो यस्य तव श्रीपादनिषेवणवाञ्छया ऐकाधिपत्यं राज्यं साम्राज्यं विसृज्य वनं विविशुः। ते राजानः सीदन्ति किम्? तवानुपदवीं नाऽऽस्थिताः किम्? आस्थाय न सीदन्तीत्यर्थः। अम्बुजाक्ष! इत्यनेन नयनयोः स्निग्धं गुणं सूचयति॥ ४१,४२ ॥

स्थिरबुद्धित्वेन पुरुषाणां विषादाभावेऽपि भीरूणां स्त्रीणां स स्यादिति मन्दाशङ्कां श्लोकद्वयेन परिहरति- केति। का स्त्री सततरमणकाङ्क्षिणी जनतायाः जनसमूहस्याऽपवर्गो मोक्षो यस्मात् स तथा तं, सद्भिः मुखरितं मुख्यत्वेन ईरितं दत्तमुपदिष्टं प्रधानीकृतमित्यर्थः॥ एवंविधं तव पादसरोजगन्ध माघ्राय निषेव्य पुन रत्र परत्र च कामरूपं त्वा मविगणय्य मर्त्याशिषा नाशशिरस्कसम्पदा कारणेन उरुभयं गुरुतरभीतिमन्तं जनं वृणीतेत्यन्वयः। कीदृशम्? त्वां लक्ष्म्याः सकलसम्पद आलयं शौर्यादिगुणाना मालयम् अत एव आढ्यं च य स्त्व मविशेषेण स्त्रीपुरुषाणा मर्थनीयगुणरत्नाकरः तं त्वा मह मभजं चैद्यादीन्, हित्वेति शेषः । कथंविधं त्वाम्? अनुरूपम् अनुकूलसौन्दर्यम् जगता मधीशं जगता मीश्वराणां ब्रह्मादीनामपि सम्पत्प्रदं अत एवाऽऽत्मानं तेषां स्वामिनं कीदृश्यहं च अर्थविविक्तदृष्टिः अर्थोऽयमिति विवेकीकृतदृष्टिः अव्यक्त ज्ञानेत्यर्थः। किं बहुनेत्याशयेनाह- स्यादिति। कीदृश्याः? भ्रमत्याः भ्रमः तिः अन्तं यस्याः सा भ्रमतिः तस्या विपरीतज्ञानिना मशित्र्या[1] इत्यर्थः। के नेय मवगम्यत इत्यत उक्तम्- श्रुतिभिरिति। श्रुतिप्रमाणेन, सिद्धाया इति शेषः। "अभ्रमा भ्रमता मन्त्री। या वेदै रधिगम्यते" 'नारदीये' इत्यादिस्मृत्या च। "मुखं तु वदने मुख्ये" (वैज.को.6-3-25) इति यादवः। "तीत्यन्तम्" इति श्रुतिः। पारत्रिककामरूपत्व दर्शयति- य इति। ये त्वां भजन्ति त उत एवाऽनृतापवर्गं संसारा न्मोक्षं यान्तीत्यन्वयः। "तमेवं विद्वा नमृत इह भवति" (पु.सू.1-7) इति श्रुतिः वैशब्देन गृहीता॥ ४३ ॥

नृपाणां हेयत्वे दोषान्तरमाह- कस्या इति। हे अच्युत! स्वतः परतो वा च्युतिरहित! भवतोपदिष्टा नृपा श्चैद्यादयः कस्याः स्त्रियाः स्युः? न कस्या अपि भवन्तीत्यर्थः। सर्वदोषेष्वधिको दोषोऽयमिति भावेनाह-यत्कर्णमूलमिति। हे अरिकर्शन! मृडो रुद्रः रुद्रविरिञ्चसभासु गीता युष्मत्कथा येषां नृपाणां कर्णमूलं नोपयायात् नोपगच्छति, त इति शेषः। 'तासां' स्युरिति पाठे यासां कर्णमूलं तासां स्त्रीणां ते नृपाः स्यु रित्यर्थः॥ ४४ ॥

एतदेव स्पष्टयति-त्वक्श्मश्रुरोमेति। या स्त्री तव पदाब्जमकरन्द मजिघ्रती असेवमाना सा जीवच्छवं जीवन्मृतं पुरुषं भजति। तत्र निमित्त काममति रिति। अस्य सम्पदमाह-बहिः त्वगादिभिः पिनद्धं बद्धम् अन्तर्मांसादिभिः संवृतम्। ननु विग्रहोप्येतादृशः कृष्णस्य किं न स्या दविशेषा दिति चे न्न। "आनन्दश्मश्रु रानन्दकेशः" (माध्यन्दिनश्रुतिः) इत्यिदिश्रुतेः हेतोः कालात्यायन (यादु) दिष्टत्वात्॥ ४५ ॥

---

1 Mla. °मी०

[1] अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः।
यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मा मीक्षसे तदु ह नः परमानुकम्पा॥ ४६ ॥

नैवालीक[2-] महं मन्ये[-2] वच स्ते मधुसूदन!
अम्बाया इव हि[3] प्रायः कन्यायाः[4-] स्याद्रतिः[-4] क्वचित्॥४७॥

[5] व्यूढाया श्चाऽपि पुंश्चल्या मनोऽभ्येति नवं नवम्।
बुधोऽसतीं न बिभृया त्तां बिभ्र दुभयच्युतः॥ ४८ ॥

श्रीभगवानुवाच

साध्व्येत[6] च्छ्रोतुकामेन[7] राजपुत्रि[8] प्रलम्भिता।
मयोदितं य[9] दन्वात्थ सर्वं त त्सत्यमेव हि॥ ४९ ॥

या[10] न्यान्कामयसे कामा[11] [12-]न्मय्यकामाय[-12] मानिनि[13]।
सन्ति ह्येकान्तभक्ताया स्तव कल्याणि नित्यदा॥ ५० ॥

---

1 M.Ma अस्त्य० 2- -2 M.Ma °कं भरत्येव 3. V. मे 4- -4 M.Ma °वादरतिः 5 K.W. ऊढाया; M.Ma मुग्धाया० 6. M.Ma साध्वे० 7. B-G-J.M.Ma कामै स्त्वं 8. MI.V °त्री 9. M.Ma °न्वर्थं 10 M.Ma यं यं 11. M.Ma कामं 12- -12 M.Ma मयि कामय 13. B.G.J भामिनि; M.Ma.W. कामिनि

**श्रीध०** यदुक्तं 'उदासीना वयम्' इत्यादिना[1], तत्राह - **अस्त्विति**। यद्यपि त्वं निरपेक्षः तथापि मम ते चरणानुरागोऽस्तु। मयि च मय्यपि[2] [3-]अनतिरिक्ता[-3] अनतिशयवती दृष्टि र्यस्य तस्य ते। आत्मन् आत्मन्येव रतस्य। तर्हि तव तेन को लाभः। त्वच्चरणानुराग एव महान् लाभः। किञ्च यर्ह्यस्य विश्वस्य वृद्धये उपात्ता रजसोऽतिमात्रा औत्कट्यं येन स तथाभूतस्सन् माम् ईक्षसे[4]। उ एवार्थे। ह हर्षे। तदेव नः परमानुकम्पा अत्यनुग्रह इति॥ ४६ ॥

त देवं सर्वं तदुक्तं प्रति व्याख्याय प्रसन्नचित्ता मन्त्र मुपदिश न्त्याह द्वाभ्याम्-**नैवेति**। 'अथाऽऽत्मनोऽनुरूपम्'[5] इत्यादि ते वचोऽलीकं मिथ्येति नैव मन्ये। यतो लोके कन्याया एव क्वचि द्रतिः भवति। यथा काशिराजकन्यानाम् अम्बाम्बाल्यम्बिकानां[6] तिसृणां मध्ये अम्बायाः कन्याया एव साल्वे[7] रति र्जाता तद्वत्॥ ४७ ॥

**व्यूढाया** इति। व्यूढायाः परिणीताया अपीति, उभयस्मा दिहपरलोकद्वयात् च्युतो भ्रष्ट इति॥ ४८ ॥

**साध्विति**। प्रलम्भिता उपहसिता[8]। अन्वात्थ अन्वाख्यातवती[9]॥ ४९ ॥

**यानिति**। मयि एकान्तभक्तायाः ते कामाः सन्त्येव। अकामाय कामनिवृत्तये मोक्षपर्यवसायिने इत्यर्थः॥ ५० ॥

---

1 MI.V.omit ना 2. MI.V. omit अपि 3- -3 B.J न अतिरिक्ता अति० 4 MI.V. समीक्षसे 5. MI.V. °शी० 6 B.J °लिकाम्बि० 7. B.J शा० 8. MI.V. add असि 9. B. आख्या०

**वीर०** यदुक्तम् 'उदासीना वयम्' इत्यादि, तत्राह-**अस्त्विति**। हे अम्बुजाक्ष! आत्मन्[2] आत्मनि रतस्य आत्मारामस्येत्यर्थः। अनेन निरपेक्षत्वरूपमुदासीनत्व मनूदितम्। मय्यनतिरिक्ता अनतिशयिता दृष्टि र्यस्य , अनेनाकामुकत्वम्। तस्य तव चरणयोः अनुरागः प्रेमा अस्तु, ममेति शेषः। यद्यप्युदासीनोऽकामुकश्च[3] सन् गृहमेधिधर्मा नभिनयसि, तथाऽपि मयाऽपि त्वच्चरणानुरागमात्रमेव प्रार्थनीयं न तु ततोऽधिकमिति भावः। सन्तु वा तव वचां स्यापातप्रतीतनिष्ठुरार्थपराणि

तथापि कदाचि त्समयविशेषे तव मय्यनुकम्पस्यदुर्निवारैवे त्याभिप्रेत्याह- यर्हीत्यर्धेन। यर्हि यदा अस्य [5] विश्वस्य वृद्धये समृद्धये उपात्ता रजसः सृष्ट्युपयुक्तरजोगुणस्याऽतिमात्रा औत्कट्यं येन तथाभूतस्सन् मा मीक्षसे इति यत् तदुह तदेव परमा निरतिशया अनुकम्पा कृपा, विचित्रं जगत् सृष्ट्वा तत्र मदनुमोदनार्थं मा मीक्षसे इत्येव महती कृपेत्यर्थः॥ ४६॥

तदेवं सर्वं तदुक्तं प्रतिभाष्य प्रसन्नचित्ता मन्त्र मुपदिशन्ती प्राह-नैवेति द्वाभ्याम्। हे मधुसूदन! तव यद्वचः "अथाऽऽत्मनोऽनुरूपं वै" (भाग 10-60-17) इत्यादि तदलीक मनृतं इति न मन्ये नाऽसत्य मित्यर्थः। कुतः? यतो लोके कन्याया एव कचित्पुरुषविशेषे रति र्भवति, यथा अम्बायाः काशिराजपुत्रिकायाः अम्बाख्याः, तद्वत् अम्बाया कन्याया एव साल्वे रति र्बभूवे तीतिहासोऽत्र विवक्षितः॥ ४७ ॥

तथा ऊढायाः परिणीताया अपि पुंश्चल्या मनो नवं नवं पुरुष मभ्येति, ततः किमत आह- बुध इति। बुधो बुद्धिमान् असती मुक्तविधां स्त्रियं न बिभृयात्। विपर्यये अनर्थमाह-बिभ्रत् पुष्णन् उभयच्युतः उभयस्मा देतल्लोका त्पर लोकाच्च प्रच्युतो भवति, इहाऽमुत्र च न सुखी किन्तु दुःखी भवतीत्यर्थः॥ ४८ ॥

अथैवं क्रोडीकृतस्वाभिप्रायो भगवा निदमेव मदभिप्रेतम्, कूटवचांसि तु त्वद्वचश्शुश्रूषया प्रयुक्तानीत्याह- साध्वीति। हे साध्वि! हे राजपुत्रि! श्रोतुकामेन मया, एतद्वच इति शेषः। प्रलम्भिता इत्थ मुपहसितेत्यर्थः, य न्मयोदितं सर्व मन्वात्थ तात्पर्यक्रोडीकारेण प्रतिभाषितवत्यसि, तत्सर्वं सत्यमेव मदभिप्रेतमेव॥ ४९ ॥

अतीव तुष्टोऽनुगृह्णाति- याऽन्यानिति। हे मानिनि! याऽन्यान्कामान् "स्या न्मे तवाङ्घ्रि रणम्"(भाग. 10-60-43) "अस्त्वम्बुजाक्ष मम ते चरणानुरागः" (भाग. 10-60-46) इत्येवं काम्यमानान् अकामाय कामा न्निवृत्त्यै मदनपायित्वव्यतिक्रमनिवृत्तये कामयसे, ते कामा मय्येकान्तभक्ताया अनन्यप्रयोजनभक्तियुक्तायाः तव हे कल्याणि! नित्यदा सन्त्येव, न त्वया प्रार्थ्या मया देया इचेत्यर्थः॥ ५० ॥

---

1 BTW °क्षरूप 2 B adds इति 3 B omits वा 4 K °ति 5 TW यावत् 6 K.T.W omit इति 7 B adds एव

विज० अहमपि एतादृशी नेत्याह-अस्त्वीति। चरणयोरनुरागः परा भक्तिः अस्तीति भक्तेः सर्वदैकप्रकारत्वं कथयति। मया तव न कोऽप्यर्थ इति भावेनाह-आत्मन्निति। आत्मन् आत्मनि मम तु त्वत्तो महा नर्थोऽस्तीति भावेनाह-मयि चेति। मयि महाधिकारिण्यां भक्तेः न अतिरिक्ता दृष्टिः अनुग्रहलक्षणा यस्य स तथा भक्त्यनुकूलानुग्रह इत्यर्थः। तस्य चशब्दो भक्ते रन्वयव्यतिरेकसूचकः तत्कुत इति चे न्न। "य एष देवः परोऽक्षरोऽमर स्तं वा एनमाहुः भक्ताः" इत्यादि श्रुतिसिद्धत्वात्। अनेनैव तारतम्यं सूचयति- "अथातो भक्तिमीमांसा" इति श्रुतिविहितत्वात् अन्योन्यं हेतुहेतुमद्भावं च "मिलितौ वाव एतौ एतौ भक्तो यदनुग्रहश्च भक्तिश्च" इति श्रतिसिद्ध मनुवदति? मिलिताबन्योन्यं हेतुहेतुमद्भावोपेतौ, भक्त्यनुकूलानुग्रहविशेष कथयति यर्हीति। यर्हि यदाऽस्य जगतोऽभिवृद्धये सृष्टिलक्षणायै उपात्तं स्वीकृतं रजोऽतिमात्रं केवलं रजो येन स तथा। यद्वा उपात्ताः प्रलये मूलरजसि अतीताः सङ्गताः मात्रा अंशा येन स तथा। मूलरजोगुणोपादानवान् इत्यर्थः। तदु तदेव मा मीक्षसे, ह विशेषत इत्यर्थः। यदा स्थितिलक्षणायै उपात्ता रजसोऽतिरिक्ता मात्रा सत्त्वलक्षणा येन स तथा। तदा मा मीक्षसे। यदाऽतिवृद्धिरहितो वर्धनं छेदनं संहारः तस्मै उपात्ता रजोऽतिक्रान्ता मात्रा तमोलक्षणा येन स तथा। अत्रेक्षणं नाम तत्तत्कार्य मनुस्मृत्य रजआदिमदधीनतत्तद्गुणाभिवर्धन मभिप्रेतम्। तदुक्तम्- "अथ त्रिगुणा ह्येव प्रकृति रगुणो वा वा विष्णुः स यदा ह्यरजा रजोऽस्या उद्धर्धयति" (चाक्रायण श्रुतिः) इत्यादि श्रुतौ नैत त्स्वप्रयोजन मुद्दिश्येति। नः अस्मा नुद्दिश्य कृता परमकृपेति भावः॥ ४६ ॥

भगवती भगवदुक्ते रेवं तात्पर्यं प्रकाश्य निगमयति- **नैवेति**। हे मधुसूदन! ते तव वचः अलीकम् असत्यलक्षणं भारं न भरति न तु बिभर्त्येव। भृञ् भरणे इति धातुः। कथमिव? अम्बायाः कन्यावादरति रिव, यथा मातुः कन्याप्रदानकथायां रतिः तात्पर्याभिनिवेशलक्षणा नाऽलीकं भवति। प्राय एवाऽयमर्थोऽनुमतो हि। "समुच्चयेऽनुमत्यां चा प्येव साम्येऽवधारणे" इति यादवः। क्वापि मातूरति रलीकं भरति तव वचः क्वाप्यलीकं न भवत्येवैतदुक्तं क्वचिदिति। क्वचित्क्वापि॥ ४७॥

इदानीं कृष्णस्य नियतदारत्व मात्मनो नियतपातिव्रत्यं च ध्वनयन्ती देवी **पुंश्चली इममर्थं वादयति - मुग्धाया** इति। अस्यार्थ आचार्योक्तोऽत्र लिख्यते यामसतीं बुधो न बिभृयात्, याचतां **बिभ्रद्दृष्टादृष्टच्युतो भवति तस्या** अपि पुंश्चल्या स्त्वयि मनो नवं नव मभ्येतीति मूर्छया मोहिन्या मूढत्वं युवयोरपि तत्र तत्र सुलभ मुपलब्धमिति मन्दाशङ्का। "अमुग्धैव तु मुग्धेव त्वदुःखा दुःखितेव च। श्रीर्दर्शये द्धरिश्चैव नैवैतौ मोहदुःखिनौ" (कापिलेये) इत्यादिस्मृत्या परिहर्तव्या॥ ४८॥

भगव त्योक्तं भगवता किं मनुमतं विमत मिति विकल्पं परिहरति- **साध्विति**। एतद्वचः प्रलम्भिता प्रस्तोभिता। अन्वर्थ मनुकूलार्थम्॥ ४९ ॥

हे ईश्वरि! यं यं कामं कामयसे सर्वे त्वयि नित्यदा सन्ति, हि यस्मात् तस्मात् कां विभूतिं कामयसे न कामपीत्यर्थः। यद्वा यं यं कामं कामयसे ता न्मयि कामयस्व तेषा मभावा द्वच्मीत्याह- सन्तीति। तस्मा त्प्रियवचनमुक्तं कामयति॥ ५०॥

**उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे।**
**य द्वाक्यै[1] श्चाल्यमानाया न धी र्मय्यपकर्षिता॥ ५१ ॥**

**ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया।**
**कामात्मानोऽपवर्गेशं मोहिता मम मायया॥ ५२ ॥**

**मां प्राप्य मानि न्यपवर्गसम्पदं वाञ्छन्ति ये सम्पद एव[2] तत्पतिम्।**
**ते मन्दभाग्या निरयेऽपि ये[3] नृणां मात्रात्मकत्वा[4] न्निरयः स्सुसङ्गमः॥ ५३ ॥**

**दिष्ट्या[5-] गृहेश्व र्यसकृ न्मयि[-5] त्वया कृता नुवृत्ति र्भवमोचनी खलैः।**
**सुदुष्करासौ सुतरां दुराशिषो ह्यसुम्भराया[6] निकृतिंजुषः[7] स्त्रियाः॥ ५४ ॥**

**न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले।**
**प्राप्ता[8] न्नृपा[9-] नवगणय्य[-9] रहस्करो मे प्रस्थापितो द्विज उपश्रुत[10]सत्कथस्य॥ ५५ ॥**

**भ्रातु र्विरूपकरणं युधि[11] निर्जितस्य प्रोद्वाहपर्वणि च तद्वध मक्षगोष्ठ्याम्।**
**दुःखं समुत्थ मसहोऽस्मदयोगभीत्या नैवाऽब्रवीः किमपि तेन वयं जिताः[12] स्मः॥ ५६॥**

दूत स्त्वयाऽऽत्मलभने सुविमक्तमन्त्रः[13] प्रस्थापितो मयि चिरायति शून्य मेतत्।
मत्वा जिहास[14] इद मङ्ग मनन्ययोग्यं [15-]तिष्ठेत तत्त्वयि[-15] वयं प्रतिनन्दयामः॥ ५७ ॥

श्रीशुक उवाच

एवं सौरतसल्लापै[16] र्भगवान्[17] देवकीसुतः।
स्वरतो रमया रेमे नरलोकं विडम्बयन्॥ ५८ ॥

[18]तथाऽन्यासामपि स्त्रीणां[19] गृहेषु गृहवानिव।
आस्थितो गृहमेधीया[20] न्धर्मान् लोकगुरु[21] र्हरिः॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्याया पारमहंस्यां संहितायां
दशमस्कन्धे उत्तरार्धे षष्टितमोऽध्यायः॥ ६० ॥

---

1 MMa °श्चोद्य° 2 MMa सत्प° 3 MMa स्युः 4 MMa °ये सु° 5- -5 MMa गृहेश्वर्ययुते मयि 6 M.Ma वि° 7 MMa °यः 8 MMa MIV °वि° 9- -9 BGJ रहोहरो, MMa रहोरहो, MIV रहो अहो, 10 MMa °स्थित 11 MMa °हा° 12 BGJ MMa जिता स्ते। 13 BGJMMaW °वि° 14 MMa °सुरिद° 15- -15 MMa तिष्ठे स्तत स्त्वयि 16 BGJMMa सलापै° 17 BGJ जगदीश्वरः। 18 MIV अ° 19 BGJMIV विभुः 20 BGJMMa धर्माल्लोक° 21 MMa °र्जुषन्

**श्रीध०** अनुवादेन वरान् दत्त्वा ता मभिनन्दति- **उपलब्धमिति।** **यत्त्वस्मा** न्मयि वर्तमाना धी र्नापकर्षिता नाऽन्यविषया जाता॥ ५१॥

एकान्तभक्ति मभिनन्द्य तामेव दृढीकर्तुं सकामान् भक्तान्निन्दति- **ये मामिति।** **दाम्पत्ये** दम्पत्युपभोग्यसुखार्थम्[1]॥ ५२॥

मायामोहितत्वमे वोपपादयति- **मां प्राप्येति।** अपवर्गेण सह सम्पदो यस्मिं स्तं मां प्राप्य प्रसाद्य ये केवलं सम्पद एव विषयान् वाञ्छन्ति न तु मां तत्पतिं तासां सम्पदामपि योऽहमेव पति स्तम्। तथा[2] ये विषयाः निरयेऽपि [3]अतिनिकृष्टयोनावपि स्यु स्तान्। किञ्च तेषां पुंसां[4] मात्रात्मकत्वा द्विषयात्मकत्वा **न्निरयः** **सुसङ्गमः** शोभनसङ्गम एव स्यात्, अतो मन्दभाग्या [5-]एव ते[-5] इत्यर्थः॥ ५३ ॥

**दिष्ट्येति।** तस्मात् हे गृहेश्वरि! त्वया मयि भवमोचनी निष्कामानुवृत्तिः कृता। **एत** **द्दिष्ट्या** **भद्रं!** कथम्भूता? खलैः सुदुष्करा, दुराशिषो दुरभिप्रायाया अत एव असुम्भरायाः प्राणतर्पणपराया निकृतिंजुषो वञ्चनपरायाः स्त्रियाः सुतरा मसौ अनुवृत्तिः सुदुष्करेति॥ ५४ ॥

**किञ्च**, सन्ति निष्कामाः प्रेम्णैव मय्यनुवर्तमाना बह्व्यः, किन्तु त्वया सदृशीं[6] क्वापि न पश्यामीति तस्या भक्तिं बहुमानेनाऽभिनन्दति-न त्वादृशीमिति त्रिभिः। उपश्रुताः सत्यः कथा यस्य मे॥ ५५ ॥

**भ्रातुरिति**। प्रोद्वाहपर्व ण्यनिरुद्धविवाहे। अक्षगोष्ठ्यां द्यूतसभायाम्। तस्य भ्रातु र्वधम्। तस्मिन् काले कालान्तरे[7] वा त दनुस्मरणतः पुनः पुनः समुत्थं दुःखम् अस्माभि र्योगो वियोग स्तद्भीत्या असहः सोढवत्यसि। अनेनैवाऽनिरुद्धविवाहानन्तर्य मस्य ज्ञातव्यम्॥ ५६ ॥

अपि च **दूत** इति। आत्मलभने मत्प्राप्त्यर्थं मयि चिरायति 'श्वो' भाविनि विवाहे आगन्तव्य मिति कृते समये कथञ्चि दप्राप्तवति स त्येतद्विश्वं शून्यं मत्वा इद मनन्ययोग्य मङ्गं जिहासे त्यक्तुमिच्छामि[8] इत्येवं दूतः प्रस्थापितः। तथा ह्युक्तं त्वया - "य र्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्या मसून् व्रतकृशान् शतजन्मभिः स्यात्"[10] (भाग 10-52-43) इति। यद्वा अजिहास इति च्छेदः। त्यक्तुमैच्छ[11] इत्यर्थः।[12] तत्तव कर्म त्वय्येव तिष्ठेत्।[13] न त त्प्रतिकर्तुं शक्यमित्यर्थः। किन्तु केवलं वयं[14] त्वां प्रतिनन्दयामो हर्षयाम इति॥ ५७ ॥

**एवमिति**। सौरतसँल्लापैः सुरतनर्मगोष्ठीभिः॥ ५८, ५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्टितमोऽध्यायः॥ ६० ॥

---

1. MI.V. भोग 2. MI.V omit तथा 3. MI.V omit अति 4. MI.V omit पुंसां 5- -5 MI.V omit 6 MI adds कामपि; V adds चापि 7. MI.V. omit वा 8. B.J. add त्यक्ष्यामि 9 MI.V °च० 10. B.MI.V स्याम् 11. V. °मैच्छत 12 MI.V add ततः 13. B.MI.V. °त 14 B.J omit वयं

**वीर०** अभिनन्दति- **उपलब्धमिति**। हे अनघे! पत्यौ[1] मयि प्रेम्णा[2] य त्पातिव्रत्यं पतिपारार्थ्यं त दुपलब्धं दृष्टं, मयेति शेषः। कुतः? य द्यतो वाक्यैः उक्तविधै र्मद्वाक्यैः चाल्यमानाया अपि तव धी र्बुद्धिः मयि नापकर्षिता नापनीता नाऽन्यविषया जाता॥ ५१ ॥

एकान्तभक्ति मभिनन्द्य तामेव दृढीकर्तुं सकामा न्भक्ता न्निन्दति[3] **-ये मामिति**। ये जनाः कामात्मानः क्षुद्रमनोरथाऽऽविलचित्ताः मोक्षाधिपतिमपि मां दाम्पत्ये दम्पत्योः कर्मणि दम्पत्युपभोग्यसुखार्थ मित्यर्थः। तपसा मनःप्रणिधानात्मकेन व्रतचर्यया अनशनादिव्रतानुष्ठानेन च भजन्ति, ते मम मायया मोहिताः॥ ५२ ॥

तदेवोपपादयति- **मामिति**। अपवर्गः मोक्षः स एव सम्पत् लक्ष्मीः यस्मा त्तं तासा मपवर्गेतरसम्पदामपि पतिं मां प्राप्य प्रसाद्य, तपआदिभिरिति शेषः। सम्पदः अपवर्गेतरकामानेव वाञ्छन्ति, ते जनाः मन्दभाग्याः। कुतः? यद्यस्मा द्ये नृणां विषयाः ते निरये[4] नरकेऽपि स्युः। कुत श्शब्दादिविषयसुखानां केवलदुःखात्मकनरके सम्भवः? तत्राह-मात्रात्मकत्वा त्तेषां सुखलेशात्मकत्वा न्नरकेऽपि सम्भव इति भावः। अतो निरयः सुसङ्गमः शोभनरूपतया प्रतीयमानो दम्पत्योः सङ्गमः निरयो नरकप्राय एव। अत स्ते मन्दभाग्या इत्यर्थः॥ ५३ ॥

पुनर प्यभिनन्दति- **दिष्ट्येति**। हे गृहेश्वरि! त्वया मयि भवमोचनी निष्कामा **अनुवृत्तिः** कृता, एतत् दिष्ट्या। आनन्दः। वृत्तिं विशिनष्टि। - असा वनुवृत्तिः खलैः दुर्जनैः दुःखेनापि कर्तु मशक्या, दुराशिषो दुरभिप्रायाः अत एव असुम्भरायाः इन्द्रियतर्पणपरायाः निकृतिंजुषः वञ्चनपरायाः स्त्रियास्तु सुतरां दुष्करा॥ ५४ ॥

**न त्वामिति**।[5] हे मानिनि! प्रणयिनीं प्रेमवतीं न पश्यामि। तत्र निदर्शनं वदन् तां विशिनष्टि- ययेति। यया त्वया अवगणय्य अनादृत्य श्रुताः सत्कथा स्त्वदीयाः येन तस्य मे मह्यं रहस्करः रहस्यवार्ताहर्ता द्विजः प्रेषितः, अत स्त्वादृशीं भार्यां न पश्यामीत्यर्थः॥ ५५ ॥

किञ्च, त्वद्गुणै रेवाऽहं वशीकृत इत्याह-**भ्रातुरिति**। युद्धे मया निर्जितस्य भ्रातुः रुक्मिणो विरूपकरणं, तथा प्रोद्वाहपर्वण्यनिरुद्ध विवाहोत्सवे तत्रा प्यक्षगोष्ठ्यां द्यूते तस्य रुक्मिणो वधम्, इदं समनन्तराध्याये स्फुटीभविष्यति। समुत्थं तद्वधश्रवणजं दुःखं च अस्मदयोगभीत्या अस्मद्विश्लेषभीत्या हेतुभूतया असहः सोढवत्यसि, किमपि नाऽब्रवीः नोक्तवत्यसि, तेनैवंविधगुणजातेन[6] वयं जिताः स्मः वशीकृता[7] बभूविम। यद्यप्यस्य प्रणयकलहस्याऽनिरुद्धविवाहानन्तर्यम्, अतो ज्ञायते, तथाप्यत्र व्युत्क्रमेणोक्तिः प्रश्नानुगुण्येनेत्यवगन्तव्यम्॥ ५६ ॥

किञ्च- **दूत** इति। आत्मलभने मत्प्राप्त्यर्थं सुविभक्तः "य र्ह्यम्बुजाक्ष न लभेय तव प्रसादं जह्या मसू[8] न्व्रतकृशान् शतजन्मभि स्स्यात्' (भाग 10-52-43) इत्येवं विविच्य ज्ञापितो मन्त्रो यस्य सः दूतः प्रेषितः, तदाऽपि मयि[9] चिरायति ईषद्विलम्ब कुर्वीति सति एतद्विश्वं शून्यं मत्वा इदमनन्यार्ह मङ्ग शरीरं जिहासे हातु मिच्छामी त्येवं भवती तिष्ठेत स्थितवतीति यत्, तत्[10] त्वयि वयं केवलं प्रतिनन्दयामः प्रतिकर्तु मशक्नुवन्तः केवलं हर्षयाम इत्यर्थः। यद्वा जिहासे इत्येवं विभक्तमन्त्रो दूतः प्रस्थापित इति सम्बन्धः॥ ५७ ॥

**एवमिति**। नरलोकं विडम्बयन् अनुकुर्वन्, हेतुगर्भ मिदम्, तत्त्वा दित्थं सौरतसल्लापैः सुरतनर्मगोष्ठीभिः स्वरतः आत्मारामोऽपि रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह रेमे॥ ५८ ॥

**तथेति**।[11] अन्यासामपि पत्नीनां गृहेषु गृहाश्रमीव गृहस्थाश्रमयुक्तान् धर्मान् आस्थितस्सन्नेव रेमे॥ ५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्टितमोऽध्यायः॥ ६० ॥

---

1 TW कृष्णे 2 TW omit प्रेम्णा 3 BTW भोग 4 KTW omit अपि 5 B. °मि 6 TW °म० 7 K. गम्यते 8 TW omit अपि 9 B omits मयि 10 TW omit तत् 11 KW अ०

**विज०** भर्तुः स्नेहः पातिव्रत्यं चाभीष्टसम्पत्प्राप्तौ निमित्तं त त्तवाऽस्तीत्याह- उपलब्धं दृष्टं, तत्र हेतुः यद्वाक्यै रिति। मयि संलग्ना धी र्नापकर्षिता अन्यत्र न नीता, य द्यस्मा न्नित्यमुक्तत्वा दावयोः दाम्पत्यं नित्यम्॥ ५१ ॥

तत्र मुक्तिमन्तरेण दाम्पत्यापेक्षयाऽस्मद्भजन मयुक्त मित्याशयेनाह-**य इति**॥ ५२ ॥

ननु तर्हि सम्पदर्थे भगवद्भजनं युक्तं हीति तत्राह-**मामिति**। **सतः** सत्यस्य मोक्षस्य पतिं ये सम्पल्लक्षणभोगाः, कथं तेषां भोगानां निरये सत्त्वमिति तत्राह-मात्रात्मकत्वादिति। मात्रात्वात्तेषां भोगानां शब्दादिविषयाविनाभूतत्वात् निरये **सुसङ्गमः** सुलभः सङ्गमः इत्यर्थः॥ ५३ ॥

सर्वभक्तेषु त्वमेव मुख्यभक्ते त्याशयेनाह-**दिष्ट्येति**। हे गृहैश्वर्ययुते देवि! त्वया मय्यनुवृत्तिः भक्तिः कृतेति य त्त दिष्ट्या त्वदन्येषां भवमोचनी वा! असा वनुवृत्तिः खलैः सुदुष्करा, दुराशिषः दुष्टेच्छायाः पत्या सह दुर्वाक्यायाः वा। असुम्भरायाः स्वप्राणपोषणपरायाः विकृतिंजुषः जारलक्षणव्याजसेवमानायाः स्त्रियः सुतरां सुदुष्करा। दिष्ट्या गृहं मङ्गलमन्दिरं च ऐश्वर्ययुतश्च दिष्ट्या गृहैश्वर्ययुतः तस्मि न्निति वा॥ ५४ ॥

श्लोकत्रयेण देव्याः पूर्वोक्तां भक्तिं लालयति-**न त्वादृशी** मित्यादिना। उपस्थिता समीपं प्रापिता त्वत्सत्कथा यस्य स तथा, तस्य रहो रहः अतिरहसि॥ ५५ ॥

विरूपकरणं केशवपनं प्रोद्वाहपर्वणि विवाहलक्षणोत्सवदिवसे अक्षगोष्ठ्यां द्यूतविशेषक्रीडायां तस्य भ्रातु र्वधं अस्मदयोग-भीत्या अस्मद्विरहभयेन॥ ५६ ॥

आत्मलभने स्वलाभार्थं सुष्ठु विविक्तमन्त्रः स्पष्टीकृतरहोवचनः, चिरायति विलम्बनं कुर्वति सति एतत् जगत् शून्यं अस दमङ्गलं मत्वा अनन्ययोग्यं अन्यपुरुषसंयोगायोग्य मिदम् अङ्गं जिहासुः तिष्ठे रिति यावत्॥ ५७ ॥

देव्या गुणा ब्रह्मायुषापि वक्तुं न शक्या इति सङ्क्षिपतीत्याह-श्रीशुक इति। सौरतसंलापैः सुरतसम्बन्धि मिथोभाषणैः नरलोकं मनुष्यजनं विडम्बयन् अनुकुर्वन्॥ ५८ ॥

इद मन्यत्राऽतिदिशति-**तथेति**। गृहवान् गृहस्थ इव आस्थितः उद्गतश्च प्रकाशितः। "आङ उद्गमने" (अष्टा 1-3-40) इति सूत्रम्॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां दशमस्कन्धे उत्तरार्धे
टीकायां षष्टितमोऽध्यायः॥ ६० ॥

श्रीविजयध्वजतीर्थरीत्या पञ्चसप्ततितमोऽध्यायः॥ ७५ ॥

---

# श्रीमद्भागवत दशमस्कन्धस्थ द्वितीयभागस्य
# श्लोकपादानुक्रमणिका (29 to 60)

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| **अ** | | | |
| अकल्यं नृपतिं प्रजाः | 47 | 7 | b |
| अकल्यै पोषरक्षणे | 45 | 22 | d |
| अकिञ्चन प्रार्थ्यतमाद्वरं विभो | 51 | 56 | b |
| अकिञ्चनोऽपि सन्तुष्टः | 52 | 32 | c |
| अकुर्वतो वां शुश्रूषाम् | 45 | 9 | c |
| अकूपाराय बृहते | 40 | 19 | a |
| अकृतज्ञा गुरुद्रुहः | 32 | 20 | d |
| अक्रूर आगतः किं वा | 46 | 48 | a |
| अक्रूर इत्येतदतीव दारुणः | 39 | 26 | b |
| अक्रूरकृतवर्माणौ | 57 | 3 | c |
| अक्रूरप्रियकाम्यया | 48 | 13 | d |
| अक्रूर भवनं कृष्णः | 48 | 13 | a |
| अक्रूरमुपसृत्य तम् | 49 | 7 | b |
| अक्रूरश्चोदयामास | 39 | 32 | c |
| अक्रूरस्तावुपामन्त्र्य | 39 | 40 | a |
| अक्रूरस्य करे भूयः | 57 | 48 | c |
| अक्रूरं जगदीश्वरः | 41 | 9 | b |
| अक्रूरं व्रजमागतम् | 39 | 13 | d |
| अक्रूरं सस्मितं प्राह | 48 | 29 | c |
| अक्रूरः कृतवर्मा च | 57 | 33 | a |
| अक्रूरः परिपृष्टेन | 38 | 43 | c |
| अक्रूरे प्रोषितेऽरिष्टा | 57 | 34 | a |
| अक्रूरोऽपि च तां रात्रिम् | 38 | 1 | a |
| अक्रूरो यत्र यत्र ह | 57 | 37 | b |
| अक्षिण्वंस्तद्बलं सर्वम् | 50 | 43 | a |
| अक्षिपच्छम्बरोऽसुरः | 55 | 13 | b |
| अक्षीण वासनं राजन् | 51 | 61 | c |
| अक्षौहिणीनां निधनम् | 37 | 22 | c |
| अक्षौहिणीभिर्विंशत्या | 50 | 4 | a |
| अक्षौहिणीभिस्संख्यातम् | 50 | 8 | a |
| अक्षौहिणीशतवधेन सुरेतराणाम् | 48 | 25 | c |
| अक्षौहिण्यां वृतो बली | 54 | 18 | d |
| अखिलदेहिनामन्तरात्मदृक् | 31 | 4 | b |
| अगमत् स्वेन पाप्मना | 56 | 40 | d |
| अग्नये खाण्डवं दातुम् | 58 | 25 | c |
| अग्निर्मुखन्तेऽवनिरङ्घ्रिरीक्षणम् | 40 | 14 | a |
| अग्न्यार्कातिथिगोविप्र | 46 | 12 | a |
| अग्रजायाऽददात्प्रीत्या | 34 | 32 | c |
| अग्रन्यस्तविषाणाग्रः | 36 | 10 | a |
| अङ्गप्रसूता शतशोऽसृगापगाः | 50 | 26 | b |
| अङ्गरागार्पणेनाऽहो | 48 | 9 | c |
| अङ्ग वासांसि चार्हतोः | 41 | 33 | b |
| अङ्गसङ्गहतैनसः | 58 | 3 | b |
| अङ्गान्न च्यवते क्वचित् | 47 | 48 | d |
| अचिरान्मा मुपैष्यथ | 47 | 36 | d |
| अचीक्लृपन्नासनमात्मबन्धवे | 32 | 14 | d |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अजादयोऽनात्मतया गृहीताः | 40 | 4 | b |
| अजानन्तौ तयोर्बलम् | 44 | 18 | d |
| अजानमाना साऽभ्येत्य | 36 | 36 | c |
| अजाय जनयित्रेऽस्य | 59 | 28 | a |
| अजित्वा सप्त गोवृषान् | 58 | 33 | b |
| अजोऽनुबद्धस्स्वगुणैरजायाः | 40 | 4 | c |
| अञ्जन्त्यः काश्मलोचने | 29 | 7 | b |
| अटति यद्भवानह्निकाननम् | 31 | 15 | a |
| अतदर्हां सतां गतिः | 60 | 28 | d |
| अतप्यंस्तमचक्षाणाः | 30 | 1 | c |
| अतस्त्वामाश्रितः सौम्य! | 36 | 61 | a |
| अतिविलङ्घ्यते ह्यच्युतागताः | 31 | 16 | b |
| अतो न बन्धस्तव नैव मोक्षः | 48 | 23 | c |
| अत्र प्रसूनापचयः | 30 | 33 | c |
| अत्राऽवरोपिता कान्ता | 30 | 33 | a |
| अथ कृष्णाविनिर्दिष्टः | 53 | 28 | a |
| अथ कृष्णश्च रामश्च | 43 | 1 | a |
| अथ गोपीरनुज्ञाप्य | 47 | 64 | a |
| अथ तत्रासितापाङ्गी | 55 | 30 | a |
| अथ तर्ह्यागतो गोष्ठम् | 36 | 1 | a |
| अथ तान् दुरभिप्रायान् | 42 | 20 | a |
| अथ ते कालरूपस्य | 37 | 22 | a |
| अथ नन्दं समासाद्य | 45 | 20 | a |
| अथ वा मदभिस्नेहात् | 29 | 23 | a |
| अथ विज्ञाय भगवान् | 48 | 1 | a |
| अथ व्रजन् राजपथेन माधवः | 42 | 1 | a |
| अथ शूरसुतो राजन् | 45 | 26 | a |
| अथ सोऽपि महामात्रः | 36 | 27 | a |
| अथात्मनोऽनुरूपं वै | 60 | 17 | a |
| अथाऽपराह्णे भगवान् | 41 | 19 | a |
| अथावरूढः सपदीशयोरथात् | 38 | 15 | a |
| अथो गुरुकुले वासम् | 45 | 31 | a |
| अथोद्धवस्साधुतयाऽभिपूजितः | 48 | 5 | a |
| अथोद्धवो निशाम्यैवम् | 47 | 22 | a |
| अथोपयेमे कालिन्दीम् | 58 | 29 | a |
| अथो मुहूर्त एकस्मिन् | 59 | 42 | a |
| अदर्शनं स्वशिरसः | 42 | 28 | a |
| अदीर्घदर्शनं क्षुद्रम् | 56 | 42 | c |
| अदृष्टपूर्वान्सुव्यक्तम् | 57 | 13 | a |
| अदृष्ट्वा निर्गमं शौरेः | 56 | 34 | a |
| अद्भिर्गन्धाक्षतैर्धूपैः | 53 | 47 | a |
| अद्भुतानीह यावन्ति | 41 | 4 | a |
| अद्य तावन्महाबलः | 50 | 47 | b |
| अद्य ध्रुवं तत्र दृशो भविष्यते | 39 | 25 | a |
| अद्याहं निशितैर्बाणैः | 54 | 22 | a |
| अद्येश नो वसतयः खलु भूरिभागाः | 48 | 26 | a |
| अधरसीधुनाऽऽप्याययस्वनः | 31 | 8 | d |
| अधर्मोपचितं वित्तम् | 49 | 22 | a |
| अधिपति मगृहाणामग्रतो नः पुराणम् | 47 | 14 | b |
| अधीतविद्या आचार्यम् | 47 | 7 | c |
| अधुनापि वयं सर्वे | 54 | 15 | a |
| अधुनाऽऽसनमास्थितः | 49 | 17 | d |
| अधुना साध्वसाधुवा | 48 | 36 | b |
| अनन्तत्वान्मयाऽपि हि | 51 | 37 | d |
| अनन्तरं भवाञ्छ्रीमान् | 51 | 34 | c |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अनन्तं वीरभूषणम् | 50 | 41 | b |
| अनन्तायादिभूताय | 57 | 21 | c |
| अनन्यविषयां सतीम् | 60 | 27 | d |
| अनमीवमनामयम् | 39 | 4 | d |
| अनयत्सानुजोगृहम् | 38 | 37 | d |
| अनयाऽऽराधितो नूनम् | 30 | 28 | a |
| अनागसां त्वं भूतानाम् | 44 | 47 | a |
| अनार्द्रधीरेष समास्थितोरथाम् | 39 | 27 | a |
| अनिच्छतोऽपि यस्य श्रीः | 47 | 48 | c |
| अनिच्छन्त्यो ययुर्गोप्यः | 33 | 39 | c |
| अनित्यानात्मदुःखेषु | 40 | 26 | a |
| अनुकम्प्याः प्रजा हि वः | 48 | 30 | d |
| अनुक्रमन्तो नैवन्तं | 51 | 39 | c |
| अनुक्रोशस्मितेक्षणौ | 38 | 30 | d |
| अनुगृह्णातु गृह्णातु | 53 | 38 | c |
| अनुग्रहाय भक्तानाम् | 33 | 37 | a |
| अनुचक्रुस्तदात्मिकाः | 30 | 14 | d |
| अनुचरैः समनुवर्णितवीर्य | 35 | 8 | a |
| अनुजानीहि मां कृष्ण | 34 | 16 | c |
| अनुतप्यमानो भवनम् | 56 | 40 | c |
| अनुद्वास्याऽपराययुः | 29 | 5 | d |
| अनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् | 47 | 16 | b |
| अनुप्रस्थापितात्मानः | 39 | 36 | c |
| अनुभुक्तेऽप्यसत्यर्थे | 54 | 48 | c |
| अनुरागस्मितेरिताः | 39 | 16 | b |
| अनुलोमस्तु कञ्जाक्षि | 36 | 44 | a |
| अनुव्रज्यानुरञ्जिताः | 39 | 34 | b |
| अनुसृत्य नृलोकताम् | 57 | 9 | b |
| अनुस्मरन्त्यो मां नित्यम् | 47 | 36 | c |
| अनेकशोऽश्वाः शरवृक्णकन्धराः | 50 | 25 | b |
| अनोभिरनडुद्युक्तैः | 34 | 1 | c |
| अन्तर्गृहगताः काश्चित् | 29 | 9 | a |
| अन्तर्जलचरः कृष्ण | 45 | 40 | c |
| अन्तर्हिते भगवति | 30 | 1 | a |
| अन्तर्हृदिसभूतानाम् | 46 | 36 | c |
| अन्तस्समुद्रे नगरम् | 50 | 50 | c |
| अन्तःपुरचरीं देवीम् | 53 | 28 | c |
| अन्तः पुरवरं राजन् | 55 | 26 | a |
| अन्तः पुरान्तरचरीमनहत्य बन्धून् | 52 | 42 | a |
| अन्धेन तमसाऽऽवृतम् | 56 | 19 | b |
| अलं बहुगुणं मेध्यम् | 38 | 39 | c |
| अन्यथा गोव्रजे तस्य | 47 | 5 | a |
| अन्यथा त्वाचरँल्लोके | 49 | 19 | a |
| अन्यानि चेत्थम्भूतानि | 42 | 31 | a |
| अन्याभिर्वा महात्मनः | 47 | 46 | b |
| अन्याश्च तदनुध्यान | 39 | 15 | a |
| अन्याश्चैवं विधा भार्याः | 58 | 58 | a |
| अन्यांश्च तदुपाश्रयान् | 36 | 52 | d |
| अन्याः शंसन्ति साध्विति | 30 | 18 | d |
| अन्ये च संस्कृतात्मानः | 40 | 8 | a |
| अन्येष्वर्थकृतामैत्री | 47 | 6 | a |
| अन्योन्य मभिजघ्नतुः | 44 | 3 | d |
| अन्योन्यं प्रत्यरुन्धताम् | 44 | 4 | d |
| अन्योन्याबद्धबाहुभिः | 33 | 2 | d |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अन्योऽपि धर्मरक्षायै | 50 | 10 | a |
| अन्वगुर्भ्रमराः स्वर्गात् | 59 | 40 | c |
| अन्वधावज्जिघृक्षुस्तम् | 51 | 6 | c |
| अन्वधावत् रथानीकैः | 52 | 9 | c |
| अन्वपद्यत नागरैः | 56 | 17 | d |
| अन्वयातां महावेगैः | 57 | 23 | c |
| अन्वाविश्य स्वशक्तिभिः | 48 | 20 | b |
| अन्विच्छन्त्योऽग्रतोऽबलाः | 30 | 26 | b |
| अन्विच्छन्त्यो भगवतः | 30 | 41 | a |
| अन्वीयभूतेषु विलक्षणस्य | 46 | 31 | c |
| अन्वीयमान इह वस्तरवः प्रणामम् | 30 | 12 | c |
| अन्वीयुर्धृतकार्मुकाः | 54 | 1 | d |
| अपचक्रतुरात्मनः | 44 | 5 | d |
| अपराऽनिमिषद्दृग्भ्याम् | 32 | 8 | a |
| अपश्यत्कुवलयापीडम् | 43 | 2 | c |
| अपश्यदाद्यं पुरुषम् | 52 | 27 | c |
| अपश्यन्त्यो बह्वहानि | 45 | 50 | c |
| अपश्यन् भ्रातरं भ्राता | 56 | 15 | c |
| अपास्य शत्रवे क्रुद्धः | 55 | 20 | c |
| अपाहरत् गजस्थस्य | 59 | 21 | e |
| अपिच कृपणपक्षे ह्युत्तमश्लोकशब्दः | 47 | 15 | d |
| अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते | 47 | 21 | a |
| अपि बत हृतचेता उत्तमश्लोकजल्पैः | 47 | 13 | d |
| अपि मय्यनवद्यात्मा | 53 | 24 | a |
| अपि स्मरति नः कृष्णः | 46 | 18 | a |
| अपि स्मरति नस्साधो | 47 | 42 | a |
| अपि स्मरन्ति नस्सौम्य | 49 | 8 | a |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अपि स्वज्ञातिबन्धूनाम् | 39 | 4 | c |
| अपीच्यवयसं मत्तः | 51 | 26 | c |
| अप्रत्यूह्य च रुक्मिणीम् | 54 | 20 | b |
| अप्रत्यूह्य यवीयसीम् | 54 | 52 | b |
| अप्रमादाय विद्धि तत् | 51 | 60 | b |
| अप्राप्तिं च मणेः प्राह | 57 | 31 | c |
| अप्यङ्घ्रिमूले पतितस्य मे विभुः | 38 | 16 | a |
| अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिम् | 38 | 19 | a |
| अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा | 30 | 10 | c |
| अप्यद्य विष्णोर्मनुजत्वमीयुषः | 38 | 10 | a |
| अप्यायास्यति गोविन्दः | 46 | 19 | a |
| अप्याश्लिष्टा वनस्पतेः | 30 | 13 | b |
| अप्येणपत्न्युपगतः प्रिययेहगात्रैः | 30 | 11 | a |
| अप्येष्यतीह दशार्हः | 47 | 44 | a |
| अब्रुवन् विब्रुवन्नज्ञः | 44 | 10 | c |
| अभयमृतमशोकं पाहि माऽऽपन्नमीश | 51 | 58 | d |
| अभिप्रायं स यादवः | 49 | 30 | b |
| अभिभाष्य हलायुधम् | 57 | 45 | b |
| अभिमृश्यारविन्दाक्षः | 56 | 30 | a |
| अभिवाद्य महायशाः | 51 | 21 | b |
| अभीतौ भीरुभीतवत् | 52 | 8 | b |
| अभूदनन्य भावानाम् | 54 | 54 | c |
| अभ्यज्यमाना अकृतोपमज्जनाः | 41 | 26 | b |
| अभ्यद्रवत्तार्क्ष्यसुतं यथोरगः | 59 | 7 | d |
| अभ्यधावन्नभिक्रुद्धाः | 44 | 40 | c |
| अभ्यनन्दन् बहूनब्दान् | 55 | 37 | c |
| अभ्ययात्तूर्यघोषेण | 53 | 32 | c |

| | अध्याय | श्लोक | पाद |
|---|---|---|---|
| अवस्थाप्य बहिः प्रजाः | 56 | 19 | d |
| अविच्छिन्ना मखास्तेऽद्य | 57 | 43 | c |
| अवितृषषडभिज्ञोऽलब्धशान्तिः कथञ्चित् | 51 | 58 | b |
| अविदूर इवाभ्येत्य | 34 | 31 | a |
| अविश्रममहर्निशम् | 56 | 24 | d |
| अविषह्यैस्तमाक्षेपैः | 55 | 17 | c |
| अविस्मितोऽयत्न हतारिरुत्स्त्रियैः | 37 | 9 | c |
| अव्यग्रस्तमपृच्छत | 52 | 29 | d |
| अव्यग्रात्मगतिं सती | 53 | 29 | b |
| अव्ययस्याऽप्रमेयस्य | 29 | 14 | c |
| अशयिष्ट गुहाविष्टः | 51 | 21 | c |
| अश्नन्त्य एकास्तदपास्य सोत्सवाः | 41 | 26 | a |
| अश्नन्त्योऽपास्य भोजनम् | 29 | 6 | d |
| अश्रुकण्ठोऽभवत्तूष्णीम् | 46 | 27 | c |
| अश्रुमुख्योऽच्युताशयाः | 39 | 18 | d |
| अश्वपृष्ठे गजस्कन्धे | 54 | 3 | a |
| अश्वाच्छतगुणान् नरान् | 58 | 51 | d |
| अश्वाश्वतरनागोष्ट्र | 54 | 8 | c |
| अश्विनां गजिनां भुवि | 54 | 7 | b |
| अश्वै राजन् गुरुद्रुहम् | 57 | 23 | d |
| अष्टभिश्चतुरो वाहान् | 54 | 27 | a |
| अष्टादशपदानि सः | 36 | 11 | d |
| अष्टादशमसङ्ग्रामे | 50 | 44 | a |
| अष्टौ निधिपतिः केशान् | 50 | 56 | g |
| अष्टौ स सृजति प्रभो | 56 | 11 | b |
| असत्त्वात्कुमतिर्ह्यसौ | 48 | 12 | d |
| असत्यपि द्वितीये च | 42 | 28 | c |
| असन्तुष्टोऽसकृल्लोकान् | 52 | 32 | a |
| असाध्विदं त्वया कृष्ण | 54 | 37 | a |
| असावप्यनवद्यात्मा | 53 | 37 | c |
| असावहं त्वित्यबलास्तदात्मिकाः | 30 | 3 | c |
| असिद्धार्थो विशत्यन्धम् | 49 | 24 | c |
| असुम्भराया निकृतिं जुषः स्त्रियाः | 60 | 54 | d |
| असुराणां क्षयाय च | 51 | 40 | f |
| असुरेभ्यः परित्रस्तैः | 51 | 15 | c |
| असुरैर्नतकन्धरैः | 39 | 44 | d |
| असृग्वमन् मूत्रशकृत्समुत्सृजन् | 36 | 14 | a |
| अस्तिः प्राप्तिश्च कंसस्य | 50 | 1 | a |
| अस्तौषीदथ विश्वेशम् | 59 | 24 | a |
| अस्त्रैरुपात्तमणिभिः कुचकुङ्कुमानि | 29 | 29 | c |
| अस्त्वम्बुजाक्ष मम ते चरणानुरागः | 60 | 46 | a |
| अस्त्वेव नित्यदा तुभ्यम् | 51 | 62 | c |
| अस्त्वेवमेतदुपदेशपदेत्वयीशे | 29 | 32 | c |
| अस्पृष्टवर्त्मनां पुंसाम् | 60 | 13 | a |
| अस्प्राक्ष्म तत्प्रभृतिनाऽन्यसमक्षमङ्ग! | 29 | 36 | c |
| अस्फुरन् प्रियशंसिनः | 53 | 27 | d |
| अस्मरत् स्वसुतं नष्टम् | 55 | 30 | c |
| अस्माकं नरपुङ्गव | 51 | 31 | b |
| अस्मान् पालयतो वीर | 51 | 17 | c |
| अस्माभिरीडितमनोज्ञकथः कदाचित् | 47 | 43 | d |
| अस्यैव भार्या भवितुम् | 53 | 37 | a |
| अस्वर्ग्यमयशस्यञ्च | 29 | 26 | a |
| अहश्चात्मात्मजागार | 40 | 25 | a |
| अहतांशुकयुग्मेन | 53 | 11 | c |
| अहत्वा दुर्मतिं कृष्णम् | 54 | 52 | a |
| अहत्वा समरे कृष्णम् | 54 | 20 | a |
| अहन्परिघमुद्यम्य | 44 | 41 | c |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| अहमार्यसमन्वितः | 41 | 17 | b |
| अहम्ममेत्यसद्ग्राहः | 40 | 24 | c |
| अहंतेऽधिकृतापत्नी | 55 | 12 | c |
| अहं देवस्य सवितुः | 58 | 20 | a |
| अहं पयो ज्योतिरथानिलो नभः | 59 | 30 | a |
| अहं भर्तू रहस्करः | 47 | 28 | d |
| अहं विद्याधरः कश्चित् | 34 | 12 | a |
| अहं वै देहमिच्छामि | 57 | 28 | a |
| अहीयमानः स्वाद्धर्मात् | 52 | 31 | c |
| अहो अस्मदभूद्भूरि | 39 | 6 | a |
| अहो त्रियामान्तरितः | 53 | 23 | a |
| अहो धिगस्मद्यशआत्तधन्विनाम् | 53 | 56 | c |
| अहो नः परमं कष्टम् | 57 | 9 | c |
| अहो मृत इवाऽऽयातः | 55 | 39 | c |
| अहो यदूनां वृजिनम् | 50 | 46 | c |
| अहो यूयं स्म पूर्णार्थाः | 47 | 23 | a |
| अहो रात्रैश्चतुष्षष्ट्या | 45 | 36 | a |
| अहो वराहवपुषः परिरम्भणेन | 30 | 10 | d |
| अहो विधातस्तव न क्वचिद्दया | 39 | 19 | a |
| अहो सुराणां च तमो धिगाढ्यताम् | 51 | 41 | d |
| अंशेन जगदीश्वरः | 33 | 27 | d |
| अंसन्यस्त प्रकोष्ठायाः | 30 | 27 | c |
| अंसन्यस्त विषाणोऽसृक् | 43 | 15 | c |
| अंसे चन्दनरूषितम् | 32 | 5 | d |
| **आ** | | | |
| आकर्ण्य द्वारकौकसः | 55 | 39 | b |
| आकर्ण्य व्रजयोषितः | 47 | 38 | b |
| आकल्पैरनुरूपतः | 41 | 40 | d |
| आकाशात्सूर्यवर्चसौ | 50 | 11 | b |
| आकीर्यमाणो दिविजैः | 55 | 25 | a |
| आकृत्यावयवैर्गत्या | 55 | 33 | c |
| आक्रीडानीक्षमाणानाम् | 46 | 22 | c |
| आक्षिप्तचित्ताः प्रमदा रमापतेः | 30 | 2 | c |
| आख्यानं पठति शृणोत्यनुस्मरेद्वा | 57 | 50 | c |
| आगच्छयाम गेहान्नः | 41 | 12 | a |
| आगता ह्युपपन्नं तत् | 29 | 23 | c |
| आगत्य नेत्राञ्जलिभिः | 53 | 36 | c |
| आगत्य भगवांस्तस्मात् | 57 | 10 | a |
| आगमिष्यत्यदीर्घेण | 46 | 34 | a |
| आगमिनि तदन्तरा | 50 | 44 | b |
| आघ्राय सन्मुखरितं जनतापवर्गम् | 60 | 42 | b |
| आचख्यौ सर्वमेतस्मै | 49 | 6 | c |
| आचितकोमल वालुकम् | 32 | 13 | d |
| आजगाम जरासन्धः | 52 | 6 | c |
| आजग्मुरन्योन्यमलक्षितोद्यमाः | 29 | 4 | c |
| आजग्मुर्भूभुजस्सर्वे | 53 | 19 | c |
| आजग्मुश्चैद्यपक्षीयाः | 53 | 17 | c |
| आतिथ्यं विदधे यथा | 53 | 34 | d |
| आतुरस्य मुमूर्षतः | 50 | 20 | d |
| आत्मजेष्वात्मनोऽपि हि | 45 | 21 | d |
| आत्मजो भगवान्हरिः | 46 | 42 | b |
| आत्मना च धनेन च | 45 | 6 | b |
| आत्मनाऽऽत्माश्रयः पूर्वम् | 37 | 13 | a |
| आत्मनो मणिनाऽमुना | 56 | 31 | d |
| आत्मन्यविद्यया क्लृप्तः | 54 | 45 | c |
| आत्मन्येवाऽऽत्मनाऽऽत्मानम् | 47 | 30 | a |
| आत्मव्रतस्य मयि चानतिरिक्तदृष्टेः | 60 | 46 | b |

| | अध्यायः | श्लोकः | पादः | | अध्यायः | श्लोकः | पादः |
|---|---|---|---|---|---|---|---|
| आपूर्णकुम्भैर्दधिचन्दनोक्षितैः | 41 | 23 | a | आशीर्भिर्भिद्यते क्वचित् | 51 | 60 | d |
| आपृच्छे शापनिर्मुक्तः | 34 | 15 | c | आश्रुत्य भीता हृदि जातवेपथुः | 60 | 22 | c |
| आपृष्टवांस्तां कुशलं सहस्नुषाम् | 58 | 7 | c | आश्लिष्य बाहुना राजन् | 60 | 27 | c |
| आप्तकामो यदुपतिः | 33 | 29 | a | आसज्जमानस्य दुरन्तचिन्तया | 51 | 48 | d |
| आप्नोत्यपि सुरेश्वरः | 52 | 32 | b | आसन् कृष्णस्य वार्तया | 47 | 55 | d |
| आब्रह्मस्थावरादयः | 40 | 12 | d | आसन् वै द्वारकौकसाम् | 57 | 34 | b |
| आययौ द्वारकां भूयः | 58 | 28 | c | आससादाऽथचाणूरम् | 44 | 1 | c |
| आयातौ स्वपुरं तात | 45 | 49 | e | आसाते ताविहानेन | 36 | 62 | c |
| आयादायोधनं बली | 59 | 15 | f | आसाद्य देवीसदनम् | 53 | 44 | a |
| आयास्य इति दौत्यकैः | 39 | 35 | d | आसामहो चरणरेणुजुषामहं स्याम् | 47 | 61 | a |
| आयास्ये भवतो गेहम् | 41 | 17 | a | आसिञ्चती कुङ्कुमरूषितौस्तनौ | 60 | 23 | c |
| आयुधानि च दिव्यानि | 50 | 12 | a | आसीच्छलोक्योबलिर्महान् | 41 | 14 | b |
| आयुधाश्मद्रुमैर्दोर्भिः | 56 | 23 | c | आसीत्तदष्टविंशाहम् | 56 | 24 | a |
| आयोधनगतं वित्तम् | 50 | 41 | a | आसीत् राजाऽतिधार्मिकः | 58 | 32 | b |
| आरभ्यतां धनुर्यागः | 36 | 58 | a | आसीत् सत्राजितः सूर्यः | 56 | 3 | a |
| आराद्वीक्ष्य स्वबान्धवान् | 48 | 14 | b | आसीनं काञ्चनासने | 52 | 27 | d |
| आराधितो यदिगदाग्रजएत्यपाणिम् | 52 | 40 | c | आसीनौ पुनरेव सः | 39 | 43 | b |
| आराध्य कस्त्वां ह्यपवर्गदं हरेः | 51 | 56 | c | आसेदतुस्तं तरसा | 34 | 28 | c |
| आरुह्य स्यन्दनं शौरिः | 53 | 6 | a | आस्ते कुशल्यपत्याद्यैः | 46 | 16 | c |
| आरुह्यैका पदाऽऽक्रम्य | 30 | 21 | a | आस्ते ज्योतिरिवैधसि | 46 | 36 | d |
| आरोप्य सेन्द्रान् विबुधान् | 59 | 39 | c | आस्ते तेनाऽऽहृतोनूनम् | 45 | 41 | a |
| आलक्ष्य लक्षणाभिज्ञा | 53 | 29 | c | आस्थिताः पदवीं सुभ्रूः | 60 | 13 | c |
| आवयोर्युध्यतोरस्य | 50 | 48 | a | आस्थितो गृहमेधीयान् | 60 | 59 | c |
| आविध्य शूलं तरसा गरुत्मते | 59 | 8 | a | आस्थूरिकावर्तभयानका महा | 50 | 27 | c |
| आविष्टपारावतबर्हिनादिताम् | 41 | 22 | b | आह चाऽस्मान्महाराज | 45 | 13 | a |
| आवेदयामास तस्यै | 53 | 30 | a | आह चोर क्षणं तिष्ठ | 54 | 24 | c |
| आशासताऽऽशिषक्रता मधुपुर्यभूवन् | 42 | 24 | b | आहूतप्रेष्ठभू भुजाम् | 54 | 57 | b |
| आशांधृतां त्वयि चिरादरविन्दनेत्र | 29 | 33 | d | आहूतस्तेन गोविन्दः | 57 | 12 | a |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| इत्यास्फोट्याऽच्युतोऽरिष्टम् | 36 | 8 | a |
| इत्युक्त उद्धवो राजन् | 46 | 7 | a |
| इत्युक्तस्तं प्रणम्याऽऽह | 51 | 45 | a |
| इत्युक्तस्तेन देवेशः | 45 | 45 | e |
| इत्युक्तस्तौ परिष्वज्य | 45 | 25 | a |
| इत्युक्तःस्वां दुहितरम् | 56 | 32 | a |
| इत्युक्त्वा चोदयामास | 41 | 6 | a |
| इत्युक्त्वा तत्रावसत् रुषा | 54 | 52 | d |
| इत्युक्त्वाऽऽन्तरधीयत | 36 | 48 | d |
| इत्युक्त्वा मिथिलां राजन् | 57 | 28 | c |
| इत्युक्त्वा रथमारुह्य | 54 | 21 | a |
| इत्युक्त्वैकेन हस्तेन | 30 | 20 | c |
| इत्युन्मज्ज्य व्यचष्ट सः | 39 | 42 | d |
| इत्युन्मत्तवचो गोप्यः | 30 | 14 | a |
| इत्येते गुह्यसन्देशाः | 52 | 44 | a |
| इत्येवं प्रलपन्त्यस्ताः | 30 | 35 | c |
| इत्येवं वादिनं क्रुद्धा | 36 | 46 | a |
| इन्द्रध्वज इवाऽपतत् | 44 | 23 | d |
| इन्द्रप्रस्थं गतः श्रीमान् | 57 | 1 | c |
| इन्द्रप्रस्थौकसांविभुः | 58 | 12 | d |
| इन्द्रमाश्वास्य गोविन्दः | 59 | 2 | e |
| इन्द्रमुक्तोऽशनिर्यथा | 36 | 10 | d |
| इन्द्रश्च विमदः कृतः | 43 | 26 | d |
| इन्द्रस्य च पराजयम् | 37 | 17 | d |
| इन्द्राद्यै रात्मरक्षणे | 51 | 15 | b |
| इन्द्रेण हृतच्छत्रेण | 59 | 2 | a |
| इमानतिक्रम्य महीजलाग्नि | 36 | 41 | a |
| इमान्यधिकमग्नानि | 30 | 32 | a |
| इह चार्थो न विद्यते | 33 | 33 | b |
| इह प्राप्तो भवान् प्रभो | 55 | 13 | d |
| इहामुत्र च लप्स्यसे | 60 | 17 | d |
| **ई** | | | |
| ईक्षती भगवन्मुखम् | 60 | 33 | b |
| ईदृशान्येव वासांसि | 41 | 35 | a |
| ईयतुः स्वपितुर्गृहान् | 50 | 1 | d |
| ईयसे बहुधाब्रह्मन् | 48 | 20 | c |
| ईशयोरप्रमाणवित् | 52 | 9 | d |
| ईशितुश्चेशितव्यानाम् | 33 | 34 | c |
| ईश्वरस्य विधिंकोनु | 49 | 28 | a |
| ईश्वरस्यापवर्गिकात् | 49 | 12 | d |
| ईश्वरस्याप्रमाणवित् | 54 | 23 | a |
| ईश्वराणाञ्च साहसम् | 33 | 30 | b |
| ईश्वराणां वचस्सत्यम् | 33 | 32 | a |
| ईहते सुखदुःखयोः | 54 | 12 | d |
| **उ** | | | |
| उक्तं च सत्यवचनम् | 53 | 30 | c |
| उक्तं पुरस्तादेतत्ते | 29 | 13 | a |
| उग्रसेनश्च दुर्बुद्धिम् | 36 | 52 | a |
| उग्रसेनञ्च मत्पितरम् | 36 | 66 | a |
| उग्रसेनवपुर्बिभ्रत् | 36 | 35 | c |
| उग्रसेनः पिताचाऽपि | 44 | 33 | c |
| उच्चै र्जगृहुर्नृत्यमानाः | 33 | 9 | a |
| उच्छिलीन्ध्रमिवाऽर्भकः | 57 | 20 | d |
| उज्जिहानमिवोडुपम् | 51 | 1 | b |
| उत्तमश्लोक आगमत् | 55 | 35 | d |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| एवं प्रबोधितो मित्रैः | 54 | 17 | a |
| एवं प्रभाषमाणासु | 44 | 17 | a |
| एवं प्रियतमाऽऽदेशम् | 47 | 38 | a |
| एवं प्रेमकलाबद्धाम् | 53 | 39 | a |
| एवं ब्रुबाणा विरहातुराभृशम् | 39 | 31 | a |
| एवं भगवतः कृष्णात् | 29 | 47 | a |
| एवं भगवता तन्वी | 54 | 50 | a |
| एवं भवान्केवल आत्मयोनिषु | 48 | 21 | c |
| एवं भिन्नमतिस्ताभ्याम् | 57 | 5 | a |
| एवं मदर्थोज्झितलोकवेद | 32 | 22 | a |
| एवं मीमांसमानायाम् | 55 | 35 | a |
| एवं यदुपतिं कृष्णम् | 37 | 25 | a |
| एवं राज्ञां समेतानाम् | 53 | 35 | a |
| एवं वध्वा प्रतीक्षन्त्या | 53 | 27 | a |
| एवं विकत्थमाने वै | 44 | 34 | a |
| एवं विक्रीडतोः स्वैरम् | 34 | 25 | a |
| एवं व्यवसितो बुद्ध्या | 56 | 44 | a |
| एवं व्रजस्त्रियो राजन् | 35 | 26 | a |
| एवं शशाङ्कांशुविराजिता निशाः | 33 | 26 | a |
| एवं सप्तदशकृत्वः | 50 | 42 | a |
| एवं सभाजितोगोपैः | 47 | 68 | a |
| एवं समयमाकर्ण्य | 58 | 45 | a |
| एवं सम्पृष्टसम्प्रश्नः | 52 | 36 | a |
| एवं सम्भाषितो राज्ञा | 51 | 36 | a |
| एवं सम्मन्त्र्य दाशार्हो | 50 | 15 | c |
| एवं सान्त्वय्य भगवान् | 45 | 24 | a |
| एवं सामभिरालब्धः | 57 | 44 | a |
| एवं सौरतसंलापैः | 60 | 58 | a |
| एवं स्त्रिया याच्यमानः | 42 | 11 | a |
| एष आयाति सविता | 58 | 7 | a |
| एष किल देवक्याम् | 43 | 24 | a |
| एष क्रीडन देहभाक् | 33 | 36 | d |
| एष ते रथ आयातः | 50 | 13 | c |
| एष त्वानिर्दशं सिन्धौ | 55 | 13 | a |
| एष हि प्रभवाप्ययः | 44 | 48 | b |
| एषां राजसभासदाम् | 44 | 7 | b |
| एष्यामि ते गृहं सुभ्रु | 42 | 12 | a |
| एहि वीर गृहं यामः | 42 | 10 | a |
| **ऐ** | | | |
| ऐक्यं सौहृदमेवच | 29 | 15 | b |
| ऐक्ष्वाकाः क्षत्रबन्धवः | 51 | 32 | b |
| ऐरावतकुलेभांश्च | 59 | 37 | a |
| ऐश्वर्यमतुलं लेभे | 41 | 14 | c |
| **औ** | | | |
| औत्सुक्यनिभृतात्मनाम् | 33 | 4 | f |
| औपपत्यं कुलस्त्रियाः | 29 | 26 | d |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| **क** | | | |
| क उत्सहेत सन्त्यक्तुम् | 47 | 48 | a |
| ककुद्मचलशङ्कया | 36 | 4 | d |
| कङ्कन्यग्रोधकादयः | 44 | 40 | b |
| कच्चित्कुरबकाशोक | 30 | 6 | a |
| कच्चित्तुलसि कल्याणि | 30 | 7 | a |
| कच्चिदङ्ग महाभाग | 46 | 16 | a |
| कच्चिद्गदाग्रजः सौम्य | 47 | 40 | a |
| कच्चिद्वः कुशलं ब्रह्मन् | 52 | 34 | a |
| कच्चिद्द्विजवर श्रेष्ठ ! | 52 | 30 | a |
| कटाक्षिप्याद्रवत्तूर्णम् | 36 | 10 | c |
| कटाक्षेपारुणापाङ्गम् | 60 | 30 | c |
| कटिसूत्रब्रह्मसूत्र | 39 | 51 | c |
| कण्ठसूत्रफलेक्षुभिः | 53 | 48 | d |
| कण्ठे स्वनिकटं स्त्रियः | 33 | 4 | b |
| कथञ्चिदव्यङ्गमयत्नतोऽनघ | 51 | 47 | b |
| कथयित्वा प्रियाः कथाः | 57 | 39 | b |
| कथं जुगुप्सिता मेताम् | 34 | 11 | c |
| कथं तं विस्मराहे | 47 | 51 | d |
| कथं त्वनेन सम्प्राप्तम् | 55 | 33 | a |
| कथं पुनर्नः प्रतियास्यतेऽबलाः | 39 | 24 | c |
| कथं मया निहन्तव्यम् | 36 | 27 | c |
| कथं मृजा म्यात्मरजः | 56 | 41 | c |
| कथं रति विशेषज्ञः | 47 | 41 | a |
| कथं स्थ निरनुग्रहे | 38 | 41 | b |
| कथ्यतां यदि रोचते | 51 | 31 | d |
| कदाचित्कमलेक्षणा | 36 | 30 | b |
| कदाचिदथ गोविन्दः | 34 | 20 | a |
| कदाचिद्भगवाऽनृषिः | 36 | 50 | d |
| कन्याचान्तः पुरात् प्रागात् | 53 | 39 | c |
| कन्यायाः स्यात् रतिः क्वचित् | 60 | 47 | d |
| कन्यारत्नं विगृह्य नः | 57 | 4 | b |
| कन्यावर इहेप्सितः | 58 | 41 | b |
| कन्यावर परीप्सया | 58 | 42 | d |
| कन्यां कलहशङ्कितः | 53 | 20 | d |
| कन्यां चैद्याय साधितुम् | 53 | 18 | b |
| कन्यां जाम्बवतीं मुदा | 56 | 32 | b |
| कन्यां त्वदीयां नहि शुल्कदा वयम् | 58 | 40 | d |
| कन्यैका च वरानना | 52 | 21 | d |
| कपटरुचिरहासभ्रूविजृम्भस्ययाःस्युः | 47 | 15 | b |
| कम्पयन् खुर विक्षताम् | 36 | 1 | d |
| कम्बुकण्ठं निम्ननाभिम् | 39 | 48 | c |
| करभा ऊरवोऽङ्घ्रयः | 54 | 8 | b |
| करभोरुद्वयान्वितम् | 39 | 49 | b |
| करवाणि किमल्पकः | 58 | 37 | d |
| करवाम प्रियं नित्यम् | 43 | 37 | c |
| करसरोरुहं कान्तकामदं | 31 | 5 | c |
| करस्पर्शेन माधवः | 30 | 8 | d |
| करा द्विगलित स्सोऽमुम् | 43 | 6 | c |
| करारोपितमुद्गरः | 36 | 26 | b |
| करिण्य इव यूथपम् | 30 | 1 | d |
| करीन्द्रस्त मभिद्रुत्य | 43 | 6 | a |
| करुणः सोऽन्वकम्पत | 60 | 25 | d |
| करुणानाथ वत्सल | 44 | 45 | b |
| करुणाः पितरो यथा | 32 | 19 | b |
| करेणतपसाऽग्रहीत् | 43 | 6 | b |

|  | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| कंसाय प्राह भगवान् | 36 | 16 | c |
| कंसे जीवति दाशार्हे | 38 | 41 | c |
| कंसेनाधर्मतो हताः | 45 | 28 | d |
| कंसे प्रकुपितोऽव्ययः | 44 | 34 | b |
| कंसे मातुलनाम्न्यङ्ग | 39 | 5 | c |
| कंसे बताद्याऽकृत मेऽत्यनुग्रहम् | 38 | 7 | a |
| कंसो मनस्व्यपि तदा | 43 | 18 | c |
| कः पण्डित स्त्वदपरं शरणं समीयात् | 48 | 27 | a |
| काङ्क्षन्त्यश्चावतस्थिरे | 39 | 34 | d |
| काङ्क्षन्त्यागमनं हरेः | 53 | 22 | b |
| काचित्कराम्बुजं शौरेः | 32 | 5 | a |
| काचित्समं मुकुन्देन | 33 | 10 | a |
| काचिदञ्जलिनाऽ गृह्णात् | 32 | 6 | a |
| काचि द्दधार तद्बाहुम् | 32 | 5 | c |
| काचिद्रासपरिश्रान्ता | 33 | 11 | a |
| काचिन्मधुकरं दृष्ट्वा | 47 | 11 | a |
| कातर्यविस्रंसित हेममालया | 54 | 34 | c |
| का त्वं कस्याऽसि सुश्रोणि | 58 | 19 | a |
| का त्वं वरोर्वेतदिहाऽनुलेपनम् | 42 | 2 | a |
| का त्वा मुकुन्द महती कुलशीलरूप | 52 | 38 | a |
| कान्ताङ्गसङ्गकुचकुङ्कुम रञ्जितायाः | 30 | 11 | c |
| कान्त्या तुष्ट्येलयोर्जया | 39 | 55 | b |
| काऽन्यंश्रयेत तव पादसरोजगन्ध | 60 | 42 | a |
| कामकर्महतं मनः | 40 | 28 | b |
| कामदेवं शिशुं बुध्वा | 55 | 8 | c |
| काममार्गणसमर्पितचित्ताः | 35 | 3 | c |
| कामयानां पतिव्रताम् | 36 | 36 | b |
| कामशास्त्रश्रुतालेख्यैः | 48 | 3 | c |
| कामस्तुवासुदेवांशः | 55 | 1 | a |
| कामं क्रोधं भयं स्नेहम् | 29 | 15 | a |
| कामात्मानोऽपवर्गेशं | 60 | 52 | c |
| कामानामवशिष्यते | 45 | 48 | d |
| कामार्दिताः शशाङ्कश्च | 33 | 19 | c |
| कामास्तेसर्व उज्झिताः | 51 | 17 | d |
| कामिनां दर्शयन् दैन्यम् | 30 | 36 | c |
| कामिन्याः कामिनाकृतम् | 30 | 34 | d |
| कामेस्मरेऽक्षिविषये किमुतान्यनार्यः | 55 | 40 | d |
| कामोपायोपबृंहितम् | 48 | 2 | b |
| कायस्तत्प्रह्वणादिषु | 47 | 66 | d |
| कारयामास नगरं | 58 | 24 | c |
| कारयामास मन्त्रज्ञैः | 53 | 14 | c |
| कारयामासवैकंसः | 42 | 32 | c |
| कार्यगौरवसाधनम् | 36 | 61 | b |
| कार्ष्णिर्व्यधमयत् स ताः | 55 | 23 | d |
| कार्ष्णी वैहायसोऽ सुरः | 55 | 21 | d |
| कालआत्मानुसारिणि | 54 | 16 | b |
| कालकल्पेन हस्तिना | 36 | 64 | b |
| कालः कलयतामीशः | 56 | 27 | c |
| कालत्रयोपपन्नानि | 51 | 39 | a |
| कालनेमि र्हतः कंसः | 51 | 42 | a |
| कालमृत्यू इवोद्विजन् | 34 | 29 | b |
| कालमेतं वसन्गूढः | 43 | 24 | c |
| कालान्तकयमोपमम् | 43 | 5 | d |
| कालिन्दीति समाख्याता | 58 | 22 | a |
| कालिन्दीमघनाशनीम् | 39 | 38 | d |
| कालिन्द्याःकृष्णभावनाः | 30 | 45 | b |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| कालिन्द्याह्रद मागत्य | 39 | 40 | c |
| कालियोदमितस्सर्पः | 43 | 26 | c |
| कालेदधत्सभगवान् मम केन तुष्येत् | 58 | 38 | d |
| कालेन दैवयुक्तेन | 54 | 14 | c |
| कालेन व्रज मच्युतः | 46 | 34 | b |
| काले नृसिह नरलोक मनोऽभिरामम् | 52 | 38 | d |
| कालेनैव सुषाव माम् | 36 | 50 | b |
| काले प्रभवतः क्वचित् | 50 | 10 | d |
| कालो बलीयान् बलिनाम् | 51 | 19 | a |
| कालः प्रधानं पुरुषोभवान् परः | 59 | 29 | d |
| कशिपुर्याश्च दीपनम् | 37 | 20 | b |
| काश्चित्कृष्णान्तिकं ययुः | 29 | 7 | d |
| काश्चित्तत्कृतहृत्ताप | 39 | 14 | a |
| काश्चिद्विपर्यकृतवसत्रभूषणाः | 41 | 25 | a |
| काश्चिन्महानीह स्तस्मिन् | 34 | 5 | a |
| काश्य सान्दीपनिं नाम | 45 | 31 | c |
| कास्त्यङ्गतेकलपदायत मूर्छितेन | 29 | 40 | a |
| किङ्किणीनाञ्च योषिताम् | 33 | 6 | b |
| किञ्चाऽग्रजोमावनत यदूत्तमः | 38 | 23 | a |
| किञ्चिच्चिकीर्षयन् प्रागात् | 48 | 13 | c |
| किञ्चित्किञ्चिच्छकृन्मुञ्चन् | 36 | 2 | e |
| किञ्चित्सुचरितं यन्नः | 53 | 38 | a |
| कितव योषितः कस्त्यजेन्निशि | 31 | 16 | d |
| किन्तु मामग्रजः सम्यक् | 57 | 42 | c |
| किन्तेजो यवनार्दनः | 51 | 13 | d |
| किन्ते दृष्टमिहाद्भुतम् | 41 | 3 | b |
| किन्नुस्वित्प्रजानां वः | 38 | 42 | c |
| किमभिप्राय एतं नः | 33 | 29 | c |
| किमलभ्यं भगवति | 39 | 2 | a |
| किमस्माभिर्वनौकोभिः | 47 | 46 | a |
| किमहं करवाणि वाम् | 41 | 48 | b |
| किमिहबहुषडङ्घ्रेगायसि त्वं यदूनां | 47 | 14 | a |
| किमु जायात्मजादिभिः | 49 | 20 | d |
| किमुताखिलसत्त्वानाम् | 33 | 34 | a |
| किमुताधोक्षजप्रियाः | 29 | 13 | d |
| किमुतान्ये नराधिपाः | 45 | 14 | d |
| किम्मे दृष्टमिहाद्भुतम् | 41 | 5 | d |
| किम्मे दृष्टं विपश्यतः | 41 | 4 | d |
| किरीटकटकाङ्गदैः | 39 | 51 | b |
| किरीटजुष्टामलपादरेणोः | 38 | 25 | b |
| किशोरान् पाण्डुनन्दनान् | 57 | 12 | d |
| किशोरौ नामयौवनौ | 44 | 8 | d |
| किशौरौ श्यामलश्वेतौ | 38 | 29 | a |
| किं कार्यं करवाम ते | 52 | 35 | d |
| किं कृत्वा साधुमह्यं स्यात् | 56 | 42 | a |
| किंतप्तं परमं तपः | 38 | 3 | b |
| किंतेकृतक्षितितपो बत केशवाङ्घ्रि | 30 | 10 | a |
| किंत्वस्माभिः कृतं पूर्वं | 58 | 42 | a |
| किंनआचरितं श्रेयः | 58 | 11 | a |
| किंन श्यत रामस्य | 44 | 12 | a |
| किंनु नः कुशलं पृच्छे | 39 | 5 | a |
| किंनोऽकरिष्यत्कुल वृद्धबान्धवाः | 39 | 28 | b |
| किं ब्रह्मजन्मभिरनन्तकथारसस्य | 47 | 58 | d |
| किं मयाऽऽचरितं भद्रम् | 38 | 3 | a |
| किं मां सान्त्वयसे भूयः | 36 | 40 | c |

|  | अध्यायः | श्लोकः | पादः |  | अध्यायः | श्लोकः | पादः |
|---|---|---|---|---|---|---|---|
| किंवाऽथाऽप्यर्हति दत्तम् | 38 | 3 | c | कुम्भान् गोरससम्भृतान् | 39 | 33 | d |
| किंवाऽभिनन्दति चरन् प्रणयावलोकैः | 30 | 12 | d | कुररीव गतप्रजा | 55 | 15 | b |
| किंवाऽवशिष्टं युवयोस्तुकृत्यम् | 46 | 33 | d | कुरुसृञ्जय कैकेय | 54 | 58 | a |
| किंसाधयिष्य त्यस्माभिः | 46 | 49 | a | कुरूणां कीर्तिवर्धन | 49 | 17 | b |
| किंस्वित्तेजस्विनां तेजः | 51 | 29 | a | कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन् | 29 | 33 | a |
| कीर्तनं शूद्रजन्मनः | 38 | 4 | d | कुर्वन्नभोहेषितभीषिताखिलः | 37 | 1 | d |
| कीर्तिर्वामस्तु पावनी | 45 | 49 | b | कुर्वत्युच्चैः पदानि यत् | 30 | 30 | b |
| कुक्षिर्मरुत्प्राणबलंप्रकल्पितम् | 40 | 14 | d | कुर्वाणौ प्रभया स्वया | 38 | 33 | b |
| कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः | 47 | 12 | b | कुलिकरुतमिवाज्ञाः कृष्णवध्वोहरिण्यः | 47 | 19 | b |
| कुजगतिं गमिता न विदामः | 35 | 17 | c | कुशलं विमृशामहे | 38 | 42 | d |
| कुञ्जरेणबलीयसा | 36 | 54 | b | कुशलाकुशलान्वयः | 33 | 34 | d |
| कुञ्जरेन्द्रोत्यमर्षितः | 43 | 12 | b | कुशलाचरितेनैषाम् | 33 | 33 | a |
| कुटिल कुन्तलं श्रीमुखञ्च ते | 31 | 15 | c | कुशल्यास्तेऽच्युतोऽधुना | 47 | 39 | d |
| कुण्डलत्विषमण्डितम् | 33 | 13 | b | कुहक नो मनः क्षोभयन्ति हि | 31 | 10 | d |
| कुण्डिनं न प्रवेक्ष्यामि | 54 | 20 | c | कूजत्कोकिलसंयुते | 36 | 31 | d |
| कुण्डिनं न प्रवेक्ष्यामि | 54 | 52 | c | कूजन्नूपुरमेखला | 33 | 14 | b |
| कुतश्च कस्याऽच्युतवेषभूषणः | 47 | 2 | b | कूटस्थायाऽऽत्मने नमः | 57 | 21 | d |
| कुतो वा किं चिकीर्षसि | 58 | 19 | b | कूर्पादिभिर्भ्रमतिधीर्भवदायुषां नः | 31 | 19 | d |
| कुत्र यासि स्वसारं मे | 54 | 25 | a | कृच्छ्रान्नन्दश्च मोचितः | 34 | 18 | d |
| कुन्तीञ्च कुल्यकरणे | 57 | 1 | c | कृणु कुचेषुनः कृन्धिहृच्छयम् | 31 | 7 | d |
| कुन्ददामकृतकौतुकवेषः | 35 | 20 | a | कृतकौतुकमङ्गलाम् | 53 | 11 | b |
| कुन्दस्रजः कुलपतेरिह वातिगन्धः | 30 | 11 | d | कृतकौतुकमङ्गलाम् | 56 | 10 | b |
| कुपितः कोपितं गजम् | 43 | 5 | b | कृतश्चधार्तराष्ट्रैर्यत् | 49 | 6 | a |
| कुपिता आततायिनः | 42 | 19 | b | कृत मस्मिञ्जुगुप्सितम् | 54 | 37 | b |
| कुपितो देवकीसुतः | 41 | 37 | b | कृतमैत्रादिको रथम् | 39 | 32 | d |
| कुपितो नानुभाववित् | 56 | 22 | d | कृतवान्द्रोह मुल्बणम् | 44 | 47 | b |
| कुमुदामोद वायुना | 29 | 45 | d | कृतवान्वै जुगुप्सितम् | 33 | 29 | b |
| कुम्भकारस्य शालायाम् | 57 | 14 | a | कृत शौचो परन्तप | 43 | 1 | b |
|  |  |  |  | कृतसंक्रन्दनी पुत्री | 44 | 51 | c |

